# भगवद्बादरायणप्रणीतं ब्रह्मसूत्रम्

## आनन्दतीर्थभगवत्पादप्रणीतं तद्भाष्यम्



## त्रिविक्रमपण्डिताचार्य्यकृतस्तत्वप्रदीपः

## आचार्य्यगोविन्दकृता तत्वचन्द्रिका

# भगवद्बादरायणप्रणीतं ब्रह्मसूत्रम्

## आनन्दतीर्थभगवत्पादप्रणीतं तद्भाष्यम्

## त्रिविक्रमपण्डिताचार्य्यकृतस्तत्वप्रदीपः

## आचार्य्यगोविन्दकृता तत्वचन्द्रिका

(प्रथमः पादः)



संशोधयिता सम्पादकश्च
विद्यावाचस्पतिः, विद्यारत्नाकरः
डा. बन्नञ्जे गोविन्दाचार्य्यः



द्वैपायनप्रतिष्ठानम्
बेङ्गळूरु
2016

**BRAHMASŪTRAS** by **Bhagavān Bādarāyaṇa,**
**SŪTRABHĀṢYA** by **Bhagavatpāda Ānandatīrtha,**
**TATVAPRADĪPA** by **Trivikrama-Paṇḍitācārya &**
**TATVACANDRIKĀ** by **Ācārya Govinda**

Critically edited by **Dr. Bannañje Govindācārya**



Published By : **Dwaipāyana-Pratiṣṭhāna [R.]**
#523, 2nd Main, 2nd Cross,
Malleshwaram, Bengaluru-560003
Cell: 99452 71641

First Edition : 1000 Copies (2016, Nov.)

Pages : 562 (60 + 502)

Price : ₹1000/-. $50 [Outside India]

Cover Page Art & Inner Artwork : **Ujjvala Nīlamaṇi, Ukraine [ उक्रयीन ]**

Cover Page Layout : **Śeṣagiri K M**

Computer Typeset : **Badarīnārāyaṇācārya Kaḍḍi**
Pūrṇaprajña Vidyāpīṭha
Email: bnkaddi@gmail.com

Printers : **Sri Anirudh Creations**
#144, 6th Main, Gururaja Layout,
Bengaluru-560028
Cell: 98800 77876
srikant.nsil@gmail.com

‘शुभमरतकवर्ण्णो रक्तपादाब्जनेत्राधर-
‘करनखररसनाग्रश्चक्रशङ्खाब्जरेखः ।
‘रविकरवरगौरं चर्म्म चैणं वसानः
‘तटिदमलजटासन्दीप्तजूटं दधानः’ ॥ (स्वराण्मालिनी)
(म.भा.ता.नि.१०.५३)

त्रेधाऽवतारमवनाय सतां बळित्थे-
त्याद्या श्रुतिर्भगवती गुरुमेनमाह ।
मुख्यानिलोऽतिबलवान् मतिरीशधेना-
नेतेति पृक्ष इति मध्व इति क्रमेण ॥ (त.प्र.)



त्रिविक्रमपण्डिताचार्यः

चित्रकारः - उज्ज्वलनीलमणिः

कळभाषण एव सूरिपोतः कविरासीदनवद्यपद्यवादी ।
अवभाति ननु प्रभाप्रभावी भगवान् बालतरोऽपि तिग्मभानुः ॥
(म.वि.१३.४७)

नारायणार्य्यः सुषुवे सत्यभामा च यं सुतम् ।
सोऽयमाचार्य्यगोविन्दो वितेने तत्वचन्द्रिकाम् ॥

# सङ्केताक्षराणि

| | | | |
|---|---|---|---|
| अ.सू. | अष्टाध्यायी | ब्र.सू. | ब्रह्मसूत्राणि |
| उत्तरकां. | रामायणे उत्तरकाण्डम् | भ.गी. | भगवद्गीता |
| ऋ.सं. | ऋग्वेदसंहिता | भाग.नि. | भागवततात्पर्यनिर्णयः |
| ऐ.आ. | ऐतरेयारण्यकम् | म.वि. | मध्वविजयः |
| का.उ. | काठकोपनिषत् | म.वि.भा.प्र. | मध्वविजयभावप्रकाशिका |
| छं.उ. | छन्दोगोपनिषत् | म.भा.नि. | महाभारततात्पर्यनिर्णयः |
| तै.आ. | तैत्तरीयारण्यकम् | मऐ.उ. | मऐतरेयोपनिषत् |
| तै.ब्रा. | तैत्तरीयब्राह्मणम् | माण्डूक. | माण्डूकोपनिषत् |
| बृ.आ. | बृहदारण्यकम् | शान्तिप. | शान्तिपर्व |
| बृ.उ. | बृहदारण्यकोपनिषत् | स.प. | सन्न्यासपद्धतिः |
| | | हृ.ती.पाठः | हृषीकेशतीर्थपाठः |

—o—

# विषयानुक्रमणिका

—o—

महानन्दतीर्थस्य ये भाष्यभावं
मनोवाग्भिरावर्त्तयन्ते स्वशक्त्या ।
सुराद्या नरान्ता मुकुन्दप्रसादाद्
इमं मोक्षमेते भजन्ते सदेति ॥

(म.वि.११.७७)

## बादरायणभारती

भगवान् बादरायणः प्रणिनाय ब्रह्मसूत्रम् । यः स्वयं वेदादप्युत्तमं महाभारतं विरचयामास । येन 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत्' इति सभक्त्युन्मेषमुज्जगार मूकविस्मितः किल मुनि-सार्थः । सत्यम्, महाभारतवंशकृच्च सः । महाभारतग्रन्थकृच्च । स किल सर्वज्ञानमूलम् । 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्' । यस्याऽस्यकमलगलितं वाङ्मयममृतं जगत् पिबति । यदुच्छिष्टं जगत् सर्वम् । स किल जगद्गुरूणां गुरुः । एवमेव तुष्टाव भगवत्पादः श्रीमध्वः–

'प्रादुर्भूतो हरिर्व्यासो विरिञ्चभवपूर्वकैः ।
'अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ।
'गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः' इति ॥

तमेतं बादरायणं कृष्णद्वैपायनं हैमवते तटान्तरे तदाश्रमे सन्दर्श्य भगवत्पाद एवं वर्णयामास–

'द्वीपे भगिन्याः स यमस्य विश्वकृत् प्रकाशते ज्ञानमरीचिमण्डलः ।
'प्रभासयन्नण्डबहिस्तथाऽन्तःसहस्रलक्षामितसूर्यदीधितिः ॥

(यमस्य भगिन्या द्वीपे जातस्तेन द्वैपायनः । बदर्यामुवासेति बादरायणः । अथच वादे तत्ववादे रतानामयमयन इति वादरायण एव बादरायणः । कृष्णो वर्णतो नामतश्च । 'कृष्णस्तु भगवान् स्वयम्' इति च कृष्णः । केषाञ्चित् सहस्रसूर्यदीधितिः । केषाञ्चिल्लक्षसूर्यदीधितिः । केषाञ्चिदमित-सूर्यदीधितिरिति यथानुगुणम् । केषाञ्चित् सामान्यमनुष्याकृतिः ।)

'अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः ।
'अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥

‘शुभमरतकवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः ।
‘रविकरवरगौरं चर्म चैणं वसानः तटिदमलजटासन्दीप्तजूटं दधानः’ ॥

(प्रथमपादे द्वितीये वा द्व्यक्षराधिकेति स्वराण्मालिनी । स्वराडयं स्वयं बादरायण इति सूचयन् स्वराण्मालिनीं निबबन्ध । मरं मरणं तकति परिहसतीति मरतकं नीलमणिः । मरकतमित्यर्वाचीनाः ।)

‘विस्तीर्णवक्षाः कमळायताक्षः बृहद्भुजः कम्बुसमानकण्ठः ।
‘समस्तवेदान् मुखतः समुद्गिरन् अनन्तचन्द्राधिककान्तिसन्मुखः’ ॥

(अयमद्भुततमः सर्वलोकातिगो भगवतः सुषमातिशयः– यदनन्तसूर्यदीधितिरप्यनन्तचन्द्राधिककान्तिकान्तः ।)

‘प्रबोधमुद्राभयदोर्द्वयाङ्कितो यज्ञोपवीताजिनमेखलोल्लसन् ।
‘दृशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत’ ॥ (म.भा.ता.नि.१०.५१-५५)

तन्त्रविदोऽप्येवं व्यासरूपमाचक्षते–

‘विज्ञानरोचिःपरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम् ।
‘तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि’ ॥ (तं.सा.सं.४.४५)

तमेतं भगवतो ज्ञानावतारमजानन्तः कश्चिदयमृषिरिति मन्यन्ते । स सत्त्वगुणावेशे भारतं भागवतं ब्रह्मसूत्राणि च चकार । रजोगुणावेशे राजसपुराणानि चकार । तमोगुणावेशे तामसपुराणानीति च वदन्ति । एवंवादिनामेव रजस्तमोगुणावेशः, नतु भगवत इति युक्तम् ॥

दौर्भाग्यमिदं लोकस्य यत् त्रिगुणातीतेऽपि गुणत्रयप्रभावनिरूपणम् । यदि सोऽपि गुणत्रयबद्धः, तदा कथं विश्वासस्तद्रचितेषु ब्रह्मसूत्रेषु । मूलच्छेदोऽयम् ॥

तदिदं स्वयं पण्डिताचार्येण तत्वप्रदीपे स्फुटतरं निराकारि–

नच बुद्धरूपे विप्रलम्भकत्वं विष्णोराशङ्क्यम् । तत्र श्रोतॄणामसुराणामयोग्यत्वादन्यथामतिर्जाता । नान्यथावचननिमित्ता । इतरेषां रागादिमत्त्वादन्यथामतिर्युक्ता । विष्णोस्तु

तदभावश्रुतेर्न वक्तृदोषकृतो मोहः । स एव हि तानि सूत्राणि तत्वविषयाणि प्रशान्त-संहितायामञ्जसा देवेभ्यो व्याचख्यौ । नच पुराणादिष्वन्यथोक्तिः । यतः सूत्रकर्ता भगवान् व्यास एव पुराणादिकर्त्ताऽपि । नच तद्वाक्यं क्वचिदप्रमाणमाशङ्क्यम् । आप्तिसाम्यात्' इत्यादि ॥

एतेन पुराणादीनामप्रामाण्यवादिनो दयानन्दसरस्वतीप्रभृतयोऽपि व्याख्याताः ॥

एवं परमात्मा लोकगुरूणामपि गुरुतमो भगवान् बादरायणो मूलकृतिं सर्वशास्त्रोत्तमं ब्रह्ममीमांसाशास्त्रं निबबन्धेति स्थितम् ॥



सोऽयमष्टादशपुराणानां कर्ता सत्यवतीसुतः, वेदान् विव्यास, ब्रह्मसूत्राणि प्रणिनाय, महाभारतं चानुपममितिहासं निर्मम इतीयानुपलब्धो ग्रन्थभागः । ब्रह्मतर्कनिरुक्तादयोऽपूर्वप्रमेयप्रतिपादका ग्रन्थाः श्रूयन्त एव, नच दृश्यन्ते, ऋते भगवत्पादोद्धृतेभ्यः कतिभ्यश्चन श्लोकेभ्यः ॥

तदप्युक्तं म.भा.ता.निर्णये–

'द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः ।
'उद्धृत्य वेदानखिलान् सुरेभ्यो ददौ मुनिभ्यश्च यथाऽऽदिसृष्टौ ॥

'सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार ।
'तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ॥

'समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् ।
'वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम्' ॥ (१०.५७-५९)

'ततो नृणां कालबलात् सुमन्दमायुर्मतिं कर्म च वीक्ष्य कृष्णः ।
'विव्यास वेदान् स विभुश्चतुर्धा चक्रे तथा भागवतं पुराणम्' ॥ (६२)

(भागवतम्, क्वचित् स्फुटं क्वचिन्निगूढं भगवत्परमष्टादशपुराणजातं च ।)

'ततस्त्वरण्या स्म स बभूव पुत्रकः शिवोऽस्य सोऽभूच्छुकनामधेयः ।
'शुकी हि भूत्वाऽभ्यगमद् घृताची व्यासं विमथ्नन्तमुतारणी तम्' ॥ (७१)

'शुकं तमाशु प्रविवेश वायुर्व्यासस्य सेवार्थमथास्य सर्वम् ।
'ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणम् ॥

'शेषोऽथ पैलं मुनिमाविशत् तदा वीशः सुमन्तुमपि वारुणिं मुनिम् ।
'ब्रह्माऽविशत् तमुत वैशपायनं शक्रश्च जैमिनिमथाविशद् विभुः' ॥ (७३-७४)

'ऋचां प्रवर्तकं पैलं यजुषां च प्रवर्तकम् । वैशम्पायनमेवैकं द्वितीयं सूर्यमेव च ॥
'चक्रेऽथ जैमिनिं साम्नामथर्वाङ्गिरसामपि । सुमन्तुं भारतस्यपि वैशम्पायनमादिशत् ॥
'प्रवर्तने मानुषेषु गन्धर्वादिषु चाऽत्मजम् । नारदं पाठयित्वा च देवलोकप्रवृत्तये ॥
'आदिशत् ससृजे सोऽथ रोमाञ्चाद् रोमहर्षणम् । तं भारतपुराणानां महारामायणस्य च ॥
'पञ्चरात्रस्य कृत्स्नस्य प्रवृत्त्यर्थमथादिशत् । तमाविशत् कामदेवः कृष्णसेवासमुत्सुकः'
इत्यादि ॥ (७६-८०)

म.भा.ता.निर्णयस्य समग्रो दशमोऽध्यायो व्यासचरितं विस्तरतो विशदयति; महाभारतादिषु च स्वयमेव भगवान् व्यासः ॥

## मूलकृदाज्ञया भाष्यकरणम्

तदिदं विस्मयावहम्– यन्नरनारायणाश्रमे भगवता बादरायणेन च नारायणेन चाऽज्ञप्तो भगवत्पादो भाष्यमिदं प्रबबन्ध । तथाहि तत्वविदो वदन्ति–

'विविधा विधाय किल तत्र सङ्कथा वदनं मुनीन्द्रतनयस्य सुन्दरम् ।
'अवलोक्य लोकपतिरानतं महासुखतीर्थमाह रहसि स्म गामिमाम् ॥ (म.वि.८.४३)

'अपिधाय सूत्रहृदयं सतां प्रियं प्रविधाय भाष्यमधुना निजेच्छया ।
'अपरैः श्रुतिस्मृतिनिजार्थदूषकैः सुतरां तिरोभवति संविदाहता ॥

'अपनेतुमेनमनयं कृतं खलैः प्रतिनेतुमात्मजनतां शुभां गतिम् ।
'कुरु सूत्रभाष्यमविळम्बितं व्रजेः सुमतेन योजय कवे श्रुतिस्मृतीः' इति ॥ (४५-४६)

तस्मात् साक्षात् सूत्रकृतो विष्णोराज्ञामवाप्यैव भाष्यमिदं प्रणीतं प्राणावतारेण भगवत्पादेन ।

तदेतत् स्वयमुज्जुघोष भगवत्पादः–

'वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः ।
'मध्वो यत्तु तृतीयमेतदमुना भाष्यं कृतं केशवे' इति ॥

अपूर्वोऽयं ग्रन्थत्रयीयोगः– यद् व्यासस्य सूत्रप्रणेतुराज्ञया भाष्यं बभाषे भगवत्पादः । भाष्यकर्तुः स्वगुरोर्मध्वस्यैवाऽज्ञया भाष्यहृदयं विववार तत्वप्रदीपाचार्य इति ॥

अहो जगद्गुरूणां गुरुर्बादरायणः साक्षात् शिष्येण जगद्गुरुणा श्रीमध्वेन भाष्यं कारयामास । तदिदं सूत्रकर्तुराज्ञया प्रणीतं सूत्रभाष्यम् । स च भगवत्पादः साक्षात् स्वस्य प्रियतमशिष्येण त्रिविक्रम-पण्डितेन स्वभाष्यटीकामित्यैतिहासिकमपूर्वमिदं संविधानम् ॥ ✻ ॥

आचार्यमध्वस्यापूर्वं चरितं त्रिविक्रमपण्डिताचार्यतनयेन नारायणपण्डितेन श्रीमध्वविजये साधु निरूपितमिति तत एवावगन्तव्यम् । नात्र पुनराम्रेड्यते ॥

## इदमुपहरणं सप्तशतीमहोत्सवे

भीमसेनस्यावतारसमाप्त्यनन्तरं कलौ त्रिशतोत्तरे चतुःसहस्रे समतीते वत्सराणां भगवत्पादावतारः । कलौ षट्त्रिंशद्वत्सरान् देशमनुशासद् भीमसेनो भूमावेवाभूत् । ततः प्रायो मानुषं वत्सरत्रयं नाके भ्रातृभिः साकमुवास । ततः ४३३९तमे वर्षे मध्यगेहजायायामजायत मध्वो भूत्वा । तदुक्तमभियुक्तैः–

'त्रिशतोत्तरचतुःसहस्राब्देभ्य उत्तरे । एकोनचत्वारिंशेऽब्दे विलम्बिपरिवत्सरे ।
'आश्वीनशुद्धदशमीदिवसे भुवि पावने ।...जातो मध्याह्नवेलायां बुधवारे मरुत्तनुः' इति ॥

तत एकोनाशीतिवर्षाणि मानुषदृष्टिगोचरः सन् धरायां चचार । एतदप्युक्तम्–

'एकोनाशीतिवर्षाणि भूत्वा मानुषगोचरः । पिङ्गळाब्दे माघशुद्धनवम्यां बदरीं ययौ' इति ॥

प्रवचनकाले देवैर्वृष्टे पुष्पवारे तस्मिन् कुसुमनिचये निलीनोऽदृश्यत्वं ययाविति प्रचलिता कथा भ्रम-मूला । किन्तु सर्वदृश्यो बदरीं ययाविति वास्तवम् ॥

ततश्च भगवत्पादस्य बदरी स्थानं ४४१८तमे कलिवत्सरे (क्रि.श.१३१७) इति स्थितम् । ततः सप्तशती समानां गतप्राया । अतीते दुर्मुखे आजिगमिषता हेमलम्बेन साकं सप्तशतीसमागममहोत्सवः समेष्यति । तस्मिन्नवसरे भवत्विदमुपहरणं भगवत्पादचरणनळिनयोर्नश्चञ्चरीकताम् ॥ ✻ ॥

## आनन्दतीर्थभारती

आचार्यः 'शतग्रन्थकर्ता' इत्यस्तूयत प्रमेयनवमालिकायाम् । शतमिति 'ನೂರಾರು' इति भाषायाम् । तेन शताधिकग्रन्थकर्तेति विज्ञायते । सम्प्रत्युपलब्धा इमे–

**ब्रह्मसूत्रमागूर्य चत्वारः–**

१. ब्रह्मसूत्रभाष्यम्
२. सर्वशास्त्रार्थसङ्ग्रहः (सङ्ग्रहभाष्यम्)
३. अनुव्याख्यानम्
४. न्यायविवरणम्

**गीतामागूर्य द्वौ–**

५. गीताभाष्यम्
६. गीतातात्पर्यनिर्णयः

**इतिहासमागूर्य द्वौ–**

७. महाभारततात्पर्यनिर्णयः
८. महाभारततात्पर्यम् (यमकभारतम्)

**पुराणप्रस्थाननिर्णयायैकः–**

९. भागवततात्पर्यनिर्णयः

**श्रुतिप्रस्थाने द्वादश–**

१०. ऋग्भाष्यम्
११. खण्डार्थनिर्णयः(कर्मनिर्णयः)
१२-२१. दशोपनिषद्भाष्याणि

**प्रमेयसङ्ग्रहायैकः–**

२२. विष्णुतत्वनिर्णयः

**प्रमाणसङ्ग्रहाय द्वौ–**

२३. वादलक्षणम्
२४. मानलक्षणम्

**प्रकरणानि षट्**

२५. वादः (तत्वोद्योतः)
२६. मायावाददूषणम्
२७. उपाधिदूषणम्
२८. मिथ्यात्वानुमानदूषणम्
२९. तत्वविवेकः
३०. तत्वसङ्ख्यानम्

**आचारप्रस्थानानि सप्त–**

३१. तन्त्रसारसङ्ग्रहः
३२. सदाचारस्मृतिः
३३. कृष्णामृतमहार्णवः
३४. ओन्तत्सत्प्रणवकल्पः (यतिप्रणवकल्पः)

३५. न्यासपद्धतिः ३६. तिथिनिर्णयः (सम्प्रत्युपलब्धौ द्वौ ग्रन्थौ)

३७. जयन्तीकल्पः

**स्तोत्रग्रन्थाः चतुर्दश–**

३८–४९ यात्राकाले रचितानि स्वतन्त्राणि स्तोत्राणि । (एषामध्यायकल्पना भ्रान्तिमूला । एकं स्तोत्रं तत्वसङ्ख्यानशेषतया पठ्यते ।)

५०. नखस्तुतिः ५१. कन्दुकस्तुतिः (बाल्ये रचितं पद्यम्)

अद्यत्वे नखस्तुतित्वेन पठ्यमाना लक्ष्मीकान्तस्तुतिरत्र न परिगणिता । मूलकोशेष्वदर्शनात् । एवं हृषीकेशतीर्थलिखिते मूलकोशे, तत्रतत्र ग्रन्थान्ते कानिचित् प्रासङ्गिकानि पद्यानि पठ्यन्ते । स्युस्तान्यपि भगवत्पादकृतानि । अथापि नात्र परिगणितानि अनिर्णयादेव । एतेषु प्रकृतं भाष्य-चिन्तनमधिक्रियते ।

## इति शुश्रुम धीराणाम्

शुश्रुम, आचार्यमध्वस्य सूत्रभाष्यप्रणयनात् पूर्वमेव एकविंशतिभाष्याण्यासन्निति । एतदपि न ज्ञायते– किमाचार्यात् पूर्वं एकविंशतिरेव भाष्याण्यासन्, आहो कुभाष्याण्येकविंशतिरिति ॥

यद्यपि तानि सर्वाणि नोपलभ्यन्ते । प्रायस्तेषु बहूनि सर्वथा प्रनष्टान्येव । केवलमङ्गुलिगणनीयानि कानिचिदेवावशिष्टानि । भाष्याणामनुपलम्भेऽपि दिष्ट्या भाष्यकृतां नामधेयान्युपलभ्यन्ते । तानि च लिपिबन्धेन संरक्षितानि तत्रभवता नारायणपण्डिताचार्येण । तथाहि स्वकृतायां मध्वविजयटीकायां भावप्रकाशिकायाम्–(म.वि.९.१२)

‘भारतीविजय-संविदानन्द-(सच्चिदानन्द)-ब्रह्मघोष-शतानन्द-उद्वर्त-विजय-रुद्रभट्ट-वामन-यादवप्रकाश-रामानुज-भर्तृप्रपञ्च-द्रविड-ब्रह्मदत्त-भास्कर-पिशाच-वृत्तिकार-विजयभट्ट-विष्णुक्रान्त-वादीन्द्र-माधवदास-सङ्करकृतान्येकविंशतिकुभाष्याणि’ ॥

कुभाष्याणीतिवचनात् अन्यानि साधुभाष्याण्यपि आसन्निति सम्भाव्यते । तथाहि रामानुजभाष्ये– ‘भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते’ इति । प्रायः सोऽयं बोधायनऋषिः एकविंशतौ न प्रविष्टः । एवमन्ये केचन पूर्वाचार्याः

साधवः स्युरिति भाति । अथवा एकविंशतिगणप्रविष्टः वृत्तिकार एव बोधायननामा कश्चिद् पण्डितः स्यात् । सर्वथा ऋषिरिति प्रथितः सोऽपि कुभाष्यकृदेव । तमेतं केचन पूर्वाचार्याः ऋषित्वेन बभ्रमुरित्यपि स्यात् ॥

यत्किमपि स्यात् । अस्माकं तु कुभाष्यविषय एव विवक्षा । सत्स्वप्येतावत्सु भाष्येषु नैकमपि साधुलोकवैयाकुल्यं शमयामास । तेन बादरायणहृदयमाविष्कुर्वत् किमपि भाष्यमनिवार्यमासीत् । तदर्थं भगवदाज्ञया भगवत्पादोऽवततार । अवतीर्य चासुकरमकरोद् ब्रह्मसूत्रस्य भाष्यम्, यच्छ्रुतिचितवचनैः सद्युक्तिभिश्च सर्वाणि कुभाष्याणि निरास्यत् । तदुक्तं श्रीमध्वविजये–

'व्यासदेवहृदयातिवल्लभं वासुदेवमगणय्यसद्गुणम् ।
'साधयत् सकलदोषवर्जितं ज्ञानभक्तिदमनन्तसौख्यदम् ॥

'उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः ।
'व्यञ्जयत् स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमत् ॥

'बालसङ्घमपि बोधयद् भृशं दुर्निरूपवचनं च पण्डितैः ।
'अप्रमेयहृदयं प्रसादवत् सौम्यकान्ति च विपक्षभीषणम् ॥

'अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समम् ।
'माननीयमपि नाकिनायकै रूपमन्यदिव धन्यमात्मनः ॥

'एकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
'अप्यदूष्यमतनोदनन्तधीर्भूतभाविभवदात्मभिः क्वचित्' ॥ (म.वि.९.८–१२)

एवमनुपममद्भुतं सूत्रम् । तस्य चानुपममद्भुतं भगवत्पादकृतं भाष्यम् । तस्य पुनरनुपममद्भुतं व्याख्यानं पण्डिताचार्यकृतम् । सत्स्वप्यन्येषु ग्रन्थेषु हारमणयत्सु तत्वप्रदीपोऽयमतरळोऽपि नायकति । माध्वानां दुर्लभो निधिरयम् । भागधेयस्य पुण्यपाकोऽयम् ॥

उक्तं च स्वयमेव भगवत्पादेनानुव्याख्याने–

'ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
'बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः' इति ॥

## रामायणे मध्वावतारोल्लेखः

अद्भुतमिदमत्र यद् रामायणे वाल्मीकिर्मुनिरहो हनूमद्गुणवर्णनव्याजेन तस्य भाविनं मध्वावतारं प्रकटयामास–(उत्तरकां.३६.४२.)

‘ससूत्रवृत्त्यर्थपदं महार्थं ससङ्ग्रहं साध्यति वै कपीन्द्रः ।
‘नह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव’ इति ।।

अयं वाल्मीकिवचनार्थः–

अयं कपीन्द्रो हनूमान्, ससूत्रवृत्ति ससङ्ग्रहं महार्थं अर्थपदं साध्यति वै– इत्यन्वयः । सूत्राणां वृत्त्या अनुव्याख्यासमाख्यया सहितं ससूत्रवृत्ति । सङ्ग्रहभाष्येण, नामैकदेशग्रहणं वा, नाम्ना सर्व-शास्त्रार्थसङ्ग्रहेण सहितं ससङ्ग्रहम् । महार्थं चार्थपदम्, ससूत्रपदानां स्वपदानां चार्थवर्णनं यत्र, सूत्रार्थः पद्यते अवगम्यतेऽनेनेति वा अर्थपदं भाष्यम्, साध्यति साधयिष्यति । नहि हनुमता किमपि सूत्रभाष्यं ग्रथितमिति क्वापि प्रथितम् । तेनेदं हनूमतो भाविनमवतारं कटाक्षीकृत्यैव वाल्मीकिर्जगादेति स्फुटम् । वायिति श्रुतिस्मृतिप्रसिद्धमेतदित्याह ।।

तथ्यमेतद् वाल्मीकिवचनमिति स्वयं भगवत्पादोऽप्याह– ‘यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम्’ इति ।।

एवं बहुगुणवतो महार्थस्यास्य भाष्यस्य व्याख्यानमपि न सर्वसुकरम् । ‘दुर्निरूपवचनं च पण्डितैः’ इत्युक्तत्वात् । तस्मादस्यार्थगाहन्यं लोकान् वेदयितुं कश्चिदासीद् भगवत्पादशिष्यस्त्रिविक्रमपण्डिताचार्य इति । प्रायः सोऽयमाचार्यरचितभाष्यं व्याख्यातुमेवावन्यामजनिष्टेव । एतद् विदन् भगवत्पादस्तमेव पण्डिताचार्यं स्वभाष्यव्याख्यानकर्मणि न्ययुनक् ।।

तस्येयमुद्धपण्डितस्य स्वतातस्य जनिकथा निरूपिता नारायणपण्डिताचार्येण श्रीमध्वविजये । तत् किञ्चिदिवात्र उपस्थाप्यते ।। ✻ ।।

## त्रिविक्रमपण्डिताचार्यचरितम्

अस्ति किल पुरा कश्चिद् विपश्चितामपश्चिमः शालिवाहनशकस्य द्वादशे च त्रयोदशे च शतके । यदा श्रीमध्वस्तौळवमण्डलमलञ्चकार ।।

योऽध्युवास तौळवमण्डलराजधानीं जयसिंहेन भूपतिना पालिताम्, तदात्वे कबेनाडु इति ख्याताम्, सम्प्रति कासरगोडु इति व्यवह्रियमाणाम् ।।

यं जगति जगदुः स्वाधीनवाचामग्रण्यं कविकुलतिलक इति, विद्वत्तल्लजं पण्डिताचार्य इति ॥

येन च जातेन तौळवमण्डलं स्वात्मानं धन्यममन्यत, विशेषतश्च लिकुचवंशः ॥

यस्मै स्वीकृततत्ववादाध्वने श्रीमध्वः स्वयं प्रकाममप्रीयत ॥

यस्माद् रविरिव भगवच्चक्षुषोऽजायत वाङ्मयं भासयन् पण्डितमण्डलमण्डनो नारायणपण्डितः ॥

यस्यास्खलितवादवैदुष्येण मूकीबभूव समग्रा स्वभावोग्रा मायावादसमर्थनव्यग्रा विद्वत्समितिः ॥

यस्मिन् स्वभाष्यटीकारचनधुरामारोपयामास श्रीमध्वो विहायान्यान् प्राध्वान् सन्न्यासिशिष्यानपि । सोऽयं प्रबन्धाऽस्य प्रबन्धरत्नस्य तत्वप्रदीपाख्यस्य श्रीलस्त्रिविक्रमपण्डिताचार्यः 'पेजत्ताय' (लिकुच)कुलमण्डनः कविवर्यः सकलविद्यावल्लभो विपश्चित्तल्लजः ॥

पण्डिताचार्योऽयं श्रीमध्वमुखादेव समधिगतसमस्ततत्ववादरहस्यः, श्रीमध्वानुग्रहादेव सम्प्रत्यनुपलब्धानां श्रुतिपुराणमूलपाठानां बोद्धा, मूलरामायणार्णवे कृतमज्जनः । तस्मादयमेव श्रीमध्वहृदयवित् साक्षादन्तेवास्यग्रणीश्चेत्ययमधिकृततमः श्रीमध्वकृतस्य श्रीसूत्रभाष्यस्य भावाविष्करणे ॥

तदुक्तम्–

'तमोनुदाऽऽनन्दमवाप लोकस्तत्वप्रदीपाकृतिगोगणेन ।
'यदास्यशीतांशुभुवा गुरूंस्तांस्त्रिविक्रमार्यान् प्रणमामि वर्यान्' इति मध्वविजये ॥
'सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
'विहरन्तो महीयांसः प्रीयन्तां गुरवो मम' इति सङ्ग्रहरामायणे ॥ ✻ ॥

पण्डिताचार्यवृत्तसङ्ग्रहस्तत्पुत्ररत्नेन स्वरचिते श्रीमध्वविजये त्रयोदशे सर्गे निरूपितः षड्विंशत्या पद्यैः । ततोऽनुवृत्तश्चतुर्दशे पञ्चदशेऽपि । तस्य सारोऽयम्–

कविरासीत् कश्चित् सूरिः सुब्रह्मण्यपण्डितनामाऽऽङ्गिरसगोत्रः लिकुच(पेजत्ताय)कुलमण्डनस्तौळवमण्डले (१३.४३) । सुगुणा च साध्वी तस्य भार्या बभूव कृष्णभक्ता । सा पुनर्मुहुर्मुहुर्मृतवत्सा सत्सन्तानार्थं हरिहरौ उपासामास । (४४) । हरिहरयोः प्रसादात् सुषुवे च सा पुत्ररत्नम् । विपश्चितोऽप्यस्य रत्नस्य मूल्यमेतावदिति न निश्चेतुं प्राभवन् (४५) । यो हरिरिव त्रिविक्रमाख्यः प्रख्यातः, कवितायां वेदे वेदान्ते च व्यक्रामदयमिति । महेश्वरइव त्रिलोचनश्च । यस्य त्रीणि विलोचनानीव ज्ञानभक्तिवैराग्याणि (४६) । यो वटुरेव कवित्वे पटुर्बभूव बालभानुरिव परितः

प्रसृतप्रतिभाप्रभाप्रभावः (४७) । बाल एवायं सषडङ्गान् वेदानधिजगे । अनङ्कुरितकूर्च एवायं विरचयामास चोषाहरणाख्यं महाकाव्यं रसरम्यम् (४८) । स्वयं मायावादानुयायिनि कुले जातोऽपि तत्र स्वयमुद्भावितां अनुपपत्तिमालां परिहर्तुमप्रभवति च स्वगुरौ गलितश्रद्धो बभूव । अथापि केवलं वयस्यानुरोधेन शुश्राव (४९) । तस्य प्रतिभया प्रतिवादिप्रतिभयया प्रतिहतप्रभाप्रसराः भानुप्रभृतयः प्रतिवादिनः कीटमणिप्रभत्वमाशु प्रययुः (५०) । सपादलक्षे मायावादवाङ्मये परिणतम्, विद्वत्प्रपञ्चे अद्वितीयोऽयं पण्डितपुङ्गव इति संस्तुतम्, त्रिविक्रमपण्डितं तज्जनकः कदाचिदुपह्वरे समाहूयोवाच (५१) । 'वत्स, निर्गुणब्रह्मोपासना न नूनं सुखाय । तस्मात् गुणाढ्यं वासुदेवमेवोपास्व स्वरूपसुखावाप्तये' इति (५२) । पूर्वमेव स्वमते सन्दिहानस्तातवचनेन पुनश्च विचचाल । अथापि दार्ढ्याय पुनरपि परेभ्यो मायामतमध्यजिगांसत (५३) । निसर्गान्निशितमनाः पण्डिताचार्यः कदाचिदेवमालोचयामास (५४) । 'ब्रह्मसूत्राण्येव परमं प्रमाणमिति निर्विवादम् । परं तु तेषां भाष्याणि परस्परव्याहतव्याहाराणि कथं प्रमाणपदवीं गच्छेयुः (५५) । विहाय दुराग्रहं परिशीलने सर्वमसङ्गतं भाति । अथापि स्वमतमिति शाङ्करीयं सिद्धान्तं पठन्त एव वर्तामहे (५६) उपनिषदो दुर्गमार्थाः । किन्तु भगवदुपास्तिमृते न मुक्तिरिति तु सर्ववेदान्तसारः (५७) । ज्ञानानन्दमयो हि भगवानुपास्यः । स निरवयवश्चेत् ज्योतिर्मयत्वमपि न स्यात् (५८) । एवं चेदन्धकारमयत्वं भगवतोऽवसितम् । तेन तत्फलं च तम एव स्यात् (५९) । यथावबोधं वेदपुराणादिपर्यालोचनया गुणपूर्णो नारायण एवोपास्य इति प्रतीयते' (६०) । यदा स स्वयमेवं निश्चिकाय तदैव शुश्राव मध्वस्य विततां कीर्तिम् (६१) । तदैव च मायावादानुयायिनस्तमागत्याभ्यर्थयामासुः– कश्चन कर्मन्दी वाग्मी नः सम्प्रदायं खण्डयन्नप्रतीकारश्चरति । त्वमेव तं वादेन निरसितुं समर्थः । तत् तं जहि (६२) । त्वं तु वादीन्द्रद्विरदः । तव प्रतिवारणः कोऽपि न जज्ञे (६३) । अतस्त्वमेव तं निराकुरु । मायावादिकुलस्य प्राप्तं भयं च' ६४) । एवमर्थयमानं स्वात्मानमेव नायकं मन्यमानमनुवर्तमानं मायिजनं बहिः सान्त्वयन्नपि अन्तः सशङ्को बभूव (६५) । मध्ववचःसृणिप्रयोक्तॄनप्ययं कवीभो विषादयन् तानलक्षयन्निवावर्तत (६६) । तदैव नक्तं स्वगृहे इतराविदितः माध्वं ग्रन्थजातं विमृशन् स्वशङ्कासर्वस्वस्य तत्रोत्तरमुपलभमानः विदधौ विस्मयमान्तरं महान्तम् (६७) । एवं माध्वं दर्शनमेव सुदर्शनमिति कृतनिश्चयोऽपि न सहसा मध्वशिष्यतां भेजे (६८) । ततः कदाचिद् विष्णुमङ्गलमाजगाम श्रीमध्वः । श्रुतमध्वमहिमातिशयः पण्डिताचार्यस्तद्दिदृक्षया स्वयमपि तत्र जगाम । गत्वा च ववन्दे तच्चरणयोः (६९) ॥

अथ चतुर्दशे सर्गे कथा काचिदनुवर्तते–

कार्त्तिकमासः प्रावर्तत । मध्वस्य पुस्तकजातं कश्चन चोळजो यतिश्चोरयामास नारायणपण्डितपितृव्यस्य श्रीमध्वग्रन्थपालस्य शङ्करपण्डितस्य सकाशात् । विदितवृत्तान्तो राजा तत् समानाययामास । ग्रामप्रमुखानां राज्ञश्चाभ्यर्थनया मध्वस्याऽऽज्ञया च समग्रं ग्रन्थजातं स्वीचकार ग्रन्थपालः शङ्करपण्डितः (१४.२) ॥

राज्ञा जयसिंहेन सहाऽसीनं श्रीमध्वं दृष्ट्वा भक्तिनम्रः त्रिविक्रमपण्डितः भूपालमाशिषाऽऽयोजयामास (३)–

'स्वःसुन्दरीभुजलतापरिरम्भणी धूः पौरन्दरी भवति यं भजतां भुजिष्या ।
'आनन्दतीर्थभगवत्पदपद्मरेणुः स्वानन्ददो भवतु ते जयसिंह भूप' इति ॥ (४)

पुनः कथा पञ्चदशेऽपि सर्गेऽनुवर्तते–

ततः कदाचिन्मध्वः तत्ववादमधिकृत्य प्रवचनमारेभे 'कूडूलु'(ಕೂಡ್ಲು) इति सम्प्रति प्रथिते देवालये । विशिष्य पुरःस्थितं त्रिविक्रमपण्डितं निशाम्य शमयन्निव तन्मनोगतं शङ्काशङ्कुम् । भगवत्पादावतरणात् पूर्वमत्र प्रचलितानां सर्वसमयानाम्, तत्रापि विशेषतो मायावादस्यासारतां तत्ववादस्य वैदिकतां च प्रदर्शयन्ती प्रवृत्ता सोपन्यासभारती (१५.१-६३) । सा च व्याख्या प्रत्यहं त्रिविक्रमपण्डितेन सकुतूहलं शुश्रुवे (६४) । ततो वादः प्रववृते । पण्डिताचार्यो यान्यान् कर्कशांस्तर्कशरान् महता संरम्भेण प्रायुङ्क्त तान् सर्वानपि ततोऽतिशयिभिस्तर्कसायकैरेव लीलया चिच्छेद भगवत्पादः (६५-६) । तदा पण्डिताचार्यो वेदास्त्राणि प्रयुयोज । बलीयोभिर्वैदिकैर्वचोभिस्तान्यप्यस्त्राणि सन्न्यवर्तयद् वेदप्रवचनाचार्यः (६७-८) । एवं सप्ताष्टानि (सप्त वाऽष्टौ वा) दिनानि वादः प्रचचाल । (नतु यथा साम्प्रदायिकैरुच्यते सप्त चाष्टौ च दिनानीति विगृह्य पञ्चदशदिनानि वादः प्रावर्ततेति । तदा तु सप्ताष्टेति सप्ताष्टाविति वा रूपं स्यात् । नतु सप्ताष्टानीति । एतेन सप्तगुणितान्यष्टौ दिनानीति मध्यमपदलोपेन समस्यन्तः षट्पञ्चाशद् दिनानीति च व्याचक्षाणाः केचिदर्वाचीनाः डा. नागराजशर्मप्रभृतयो दूरतः परास्ताः । व्याकरणविरोधादेव ।) अन्ते च भगवत्पादस्तं निरुत्तरं चक्रे (६९) । ततः त्रिविक्रमपण्डितः श्रीमध्वशिष्यतामाप (७०) । ततो भगवत्पादः स्वकृतस्य सूत्रभाष्यस्य पाठमारेभे । शिष्यस्त्रिविक्रमपण्डितः शुश्राव । (तत्र

श्रुतमेवार्थं किल तत्वप्रदीपे किञ्चिदिव भगवत्पादाज्ञया प्रकटयामास) (७१) । गुर्वाज्ञागौरवाद् भाष्यस्य दुष्करां टीकां कुर्वन् गुरुमेवं प्रार्थयत– (७२) । 'अद्भुतं खलु सूत्रभाष्याब्धेर्गाम्भीर्यम् । यत्र न्यायरत्नानि सञ्चयंसञ्चयं कदाऽपि न समाप्यन्ते (७३) । दशोपनिषदां च भाष्याणि वेदहृदयमाविष्कुर्वन्ति लक्ष्यन्ते (७४) । गीतातात्पर्यभाष्याभ्यां सूर्यचन्द्राभ्यामिव विश्वं गीतामतं प्रकाश्यते (७५) । इतिहासपुराणानामर्थनिर्णयाय इदमुपक्रमं महान् संशोधनप्रबन्धः प्राणायि श्रीमहाभारततात्पर्यनिर्णयो नाम (७६) । भाषात्रयपरिचायनेन पुराणपथिकानां मार्गदर्शी विस्मया-वहोऽन्यैः कल्पयितुमप्यशक्यः श्रीभागवतनिर्णयः भगवन्मुखादेवाविरकारि (७७) । तन्त्रसार-सङ्ग्रहाख्येनाणुना ग्रन्थेन सर्वोऽपि तन्त्रागमवास्तुशिल्पादिप्रपञ्चः प्रकटं प्रपञ्चितः (७८) । वादलक्षणमानलक्षणे शास्त्रमार्गे जिगमिषूणां नेत्राभे करुणया प्रदत्ते (७९) । विष्णुतत्वनिर्णयश्च पार्थइव कुरुपाण्डवीये प्रतिवादिविद्विषां मौलिषु पदं निदधत् सर्वैरपि विद्वद्भिः पूज्यते (८०) । वादः, दूषणत्रयम्, तत्वविवेकः, तत्वसङ्ख्यानं चेति षडमी प्रकरणग्रन्थाः स्फुलिङ्गा इव मारुतेरिता विपक्षकक्षं क्षिण्वन्ति (८१) । सङ्ग्रहभाष्यमिति चान्वर्थः सर्वशास्त्रार्थसङ्ग्रहः । यत्राणावपि प्रबन्धेऽ-नन्तोऽर्थः प्रकटितः (८२) । भारतरहस्यमाविष्कुर्वत् यमकात्मकं काव्यं महाभारततात्पर्यं नाम विश्वविस्मयम् । दुष्करतरं च यमकचतुराणामपि कवीनाम् (८३) । स्तोत्राणि सुभाषितानि चासङ्ख्यानि भगवन्मुखोद्गतानि । के नाम तानि गणयेयुः (८४) । यद्यप्येते गात्रतोऽणवः । अथाप्यर्थतो महान्तः । एतेषामगाधतामनवगाह्यतां चाजानन्तः क्षुद्रपण्डिताः सतां सभासु परिहासविषया जाताः (८५) । यद्यपि सन्त्यनर्घाणि ग्रन्थरत्नान्येतानि । अथाप्यन्यः प्रबन्धोऽप्यस्माभिरिष्यते (८६) । यत एभ्यो ग्रन्थेभ्योऽगाधेभ्यो युक्तयो नो दुःशकोद्धाराः । ततो व्यक्ततर्कततिं ग्रन्थमेकं कुरु' (८७) इति पण्डिताचार्येणार्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् । युगपद्रचयन्नेनां चतुरः शिष्यान् लीलयाऽलेखयत् (८८-९) । तत्रोक्ताया युक्तिमालायाश्च स्वयं विवरणं चक्रे न्यायविवरणं नाम । यतो दुष्करमेतदप्यन्यैः (९०) इत्यादि ॥ ✽ ॥

एवं मध्वाज्ञया पण्डिताचार्यो ग्रन्थमेकं विरचयामास तत्वप्रदीप इति ॥

पण्डिताचार्येण प्रार्थितो मध्वो ग्रन्थद्वयं निर्ममे– अनुव्याख्यानमिति न्यायविवरणमिति– इत्यहो भाग्यं तत्ववादविनेयानां सताम् ॥

ततश्च ग्रन्थद्वयजननी सेयमपूर्वाऽपश्चिमा च कृतिस्त्रिविक्रमपण्डिताचार्यस्य ॥

## येनैवाधीतेन माध्वो माध्वो भवति

सोऽयं तत्वप्रदीपाख्यो ग्रन्थरत्नराजः माध्ववाङ्मयजातस्य चूडामणिरिव शोभते । अन्ये सर्वग्रन्थाः कर्णावतंसकटककेयूरसारसनमञ्जीरादिभावं भजन्ते ॥

यद्यपि मध्वोक्तिर्निराभरणसुन्दरी । अथाप्येताः कृतयः श्रीमध्वोक्तिमपाश्रित्य स्वात्मानमेव भूषयन्ति । न हि तत्वप्रदीपो नाम भाष्यं भूषयति । किन्तु भाष्यसम्बन्धेन स्वयम्भूषितो बुभूषति । नहि व्याख्यानं नाम दुकूलैराभरणैश्च मूलस्याऽवरणम् । किन्त्वनावरणम् ॥

दृश्यन्ते हि पण्डिताचार्योपज्ञमुपस्थापिता बहवोऽपूर्वा भाष्यार्थाः, अपूर्वतमाश्च श्रुत्यर्थाः, प्रायः साक्षादाचार्यमुखात् पण्डिताचार्येण श्रुताः । यदि पण्डिताचार्यस्तत्वप्रदीपं न प्राणेष्यत वञ्चित एवाभविष्यत् समग्रोऽपि जिज्ञासुलोकोऽनयाऽपूर्वचिन्तनया । सेयमगतार्थताऽस्य ग्रन्थस्य पाश्चात्यैः परःसहस्रेणापि ग्रन्थैः । तादृशी च महत्ताऽस्य व्याख्यानराजस्य यदिदानीमपि येनैवाधीतेन माध्वो माध्वो भवति । प्रच्युतपथः सुपन्था भवति । सगर्वं तत्ववाददुर्गं प्रविष्टः क्रमेण गलितगर्वो भवति । स्थाने भगवत्पादः पण्डिताचार्यं नियुयोज स्वभाष्यव्याख्याने यत् स्वयमुज्जुघोष तत्वप्रदीपकृत्– 'आज्ञाबलादकृषि लेशत एष तेषाम्' इति । असाधारणो गुरुः । असाधारणः शिष्यः । असाधारणं व्याख्यानम् । अहो भाग्यं तत्ववादलोकस्य ॥

स्थाने सूक्तं नारायणपण्डिताचार्येण– 'गुर्वाज्ञागौरवाट्टीकां कुर्वन् भाष्यस्य दुष्कराम्' (म.वि.१५.७२) इति ॥

## अपूर्वा गुरुस्तुतिमाला

अत्रापि परवशतया मध्वस्तवरूपाणि मङ्गलपद्यान्यष्टादश ग्रन्थादौ निबबन्ध । अपूर्वेयं गुरुस्तवनसरणिः नान्यत्र क्वापि दृष्टा । पुनरन्ते च कतिभिश्चन पद्यैः । इदमिह निदर्शनद्वयं पर्याप्तम्–

'श्रीमन्महागुरुपदाम्बुजरेणुपुञ्जैः मूर्धाभिषेकमधिगम्य धृतानुभावः ।
'तत्वे सुदुर्गे इह भाष्यवरस्य टीकामाज्ञाबलादकृषि लेशत एष तेषाम्'– इति ॥

तथा–

'निःश्रेणितां निलयतां मणिदीपतां च दीपान्तरप्रभवकारणतां च याता ।
'हस्तावलम्बपदतां च तदेवमेषा कृत्स्ना कृतिर्गुणनिधेरिह भाष्यकर्तुः' – इति च ॥

मध्ये च–

‘यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणम् । सर्वज्ञत्वादविप्रलम्भकत्वाच्च । तथाऽपि स्कान्दे चोक्तमिति प्रौढवादं करोति’ इति ॥

‘अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
‘विसृता नृषु जातं च तं विद्याद् देवसत्तमम्’ – इति नारायणश्रुतिः ॥

‘प्रत्यक्षमेव चैतल्लक्षणं दृश्यते भगवति भाष्यकारे’ इति ।

‘तस्मादयमाचार्य आप्ततम इति सिद्धम् । यदुक्तयः क्वापि नान्यथा दृश्यन्ते तत्राऽप्तिं शङ्कमानाः कुत्र निश्चिन्वीरन्?’ इति च जिज्ञासाधिकरणे ॥

## तन्मुखे नृत्यति सरस्वती

अनुपमं च गुरौ गौरवं पण्डिताचार्यस्य । गुरुचरणस्मरणं ह्लादयति तस्य हृदयम्, मनश्च सर्वगात्राणि च । परवशयति च तं मुखरयति च । अस्ति तत्र प्रथमं निदर्शनं वायुस्तुतिः । यां यतयोऽपि मन्त्रतुल्यतया नित्यं पठन्ति ॥

अत्रापि तुरीयाध्याये प्रथमपादे द्वितीयाधिकरणे ‘न प्रतीके नहि सः’ (४.१.४) इति सूत्रे–

‘प्रकाशितश्चायमर्थः प्रभूततरप्रमाणप्रद्योतप्रसरमुखरमुखेन्दुना सदानन्दनिष्यन्दिना भगवतैवानुव्याख्याने ‘नहि सः’ इति सूत्रावयवमनुव्याचक्षाणेन । यस्य खलु हन्त परमदयानिधेः परमपुरुषगुणगणमणिनिकरनिधानभूतयोर्भाष्यानुभाष्यामृतसमुद्रयोः कलि-मलकर्दममपवर्जयितुं सज्जनमामज्जयतः समीचीनवचनसुस्वादुसुधारसास्वादप्रमोदनिर्भर-हृदया विशदमतयः करतलविलसितामलकवदलमखिलपुरुषार्थसार्थकं सद्यः साधु समर्थयन्ति’ इति ॥

तथा तुरीय एव द्वितीये ‘तदपीतेः...’ (४.२.८) इति सूत्रे–

‘तस्यैतस्य सर्वश्रुतीतिहासपुराणतन्त्रयुक्तिमूलं परमात्मतत्वविषयनिर्णयात्मकं सूत्रजातं जगति सुरवरपुरस्सरकविजनमनःसरसिजसमूहसहस्रकिरणेभ्यो गुरुतमभाष्यकारभट्टारकेभ्य एभ्योऽपरः को व्याचक्षीत? किन्तु प्राज्ञतमानामेषामाज्ञाबलमवलम्ब्य आरूढप्रौढ-दुरधिगममार्गाः कतिचन भाष्यपदानि व्याचिख्यासवः सूत्रमिह गुरुभिरुदीरितमुदाहराम

एव केवलम् । क्वापिच मुखतो विवृतमपि किमपि पदमभिमुखविकसितकरतल-विलसितामलकवदविरतमनुलक्ष्यमाणसूत्रार्थजातानां दुर्विगाहमतिमहासमुद्राणां मितपदं चेदं भाष्यं बह्वर्थमिह कृपालूनामनुग्रहादर्थाक्षिप्तमर्थं प्रतिदर्शयामः' इति ॥

अस्या वाचोयुक्तेरुत्तरार्धं वयमित्थं पूरयामः– 'परतत्वनिर्णयात्मकं भाष्यजातं जगति त्रिविक्रमपण्डित-भट्टारकेभ्य एभ्योऽपरः को व्याचक्षीत' इति ॥

अन्ते च–

'इदानीं परिसमापितभाष्यो भगवान् भगवत्तमवेदव्यासशिष्यप्रकरपुरःसरः सकलसुमनोमनो-वारिजप्रबोधप्रभाकरः समस्तवेदार्थमीमांसकवरचूडामणिः प्रतिवादिवारणप्रतिदर्पविदारण-सिंहराजः परमात्मतत्वविज्ञानगुरुपरमाचार्य आत्मनः स्वरूपं ज्ञानाधिकारिणां विज्ञापयन् स्वकृतं च भगवति नारायणे समर्पयन्नाह' इति ।

'अद्यापि हि सिद्धगन्धर्वपरिगीतसततरमणात्मकसकलसज्जनमनोरमणरामाभिधेयरमारमण-गुणगणामृतरसास्वादमहोत्सवसमुद्भूतहर्षाश्रुगद्गदपुलकाकुलितः किम्पुरुषे खण्डे तिष्ठतीति वदन्ति । तस्यैव क्षितिभारभूतप्रभूतबलदुर्दमदुष्टजनसंहरणकृतावतारस्य कृष्णस्य सहकारि पूतनाक्षयकारि पृक्षो द्वितीयं वपुः । तृतीयं मध्व इत्युच्यते । 'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्' इत्युक्तम् । अतः श्रीमदानन्दतीर्थभगवत्पादाचार्य इत्यर्थः । यस्यास्खलितानवरतवेदशास्त्रव्याख्यानश्रवणकौतुकसमुत्खातदुःखसङ्घातो निखिल-पण्डितवर्गो महामृतसमुद्रावगाहीव बहुलमाह्लादमाप्नोति' इत्यादि च ॥

धन्योऽयं भगवत्पादशिष्यः यमेव श्रुतिरियं प्रशंसतीव–

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति ॥

कविकुलतिलकोऽयं गद्यरचनायां वाक्पतिराजति यदा स्वगुरुतमस्य मध्वस्य स्मरति ॥ ✻ ॥

क्वचित् कथानकप्रसङ्गे च वश्यवाचः पण्डिताचार्यस्य वचनं बाणभट्टगद्यति । यथा गौतमशापकथा-निर्वर्णने । इयं कथा नान्यव्याख्यासु निरूपिता । पुराणेष्वपि विरळतया दृश्यते । ब्राह्मपुराणे सम्प्रति दृश्यते । विस्तरतः कथानिरूपणं तु पण्डिताचार्योपज्ञम् ॥

## उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये

असदृशोऽयं कविः श्रुतीनामपूर्वार्थचिन्तने । यथा जन्माद्यधिकरणे 'चतुर्भिः साकम्–' इति श्रुत्यर्थः । यदि पण्डिताचार्यो न व्याकरिष्यत् न व्यज्ञास्यतैवायमपूर्वोऽर्थः । एवं सर्वत्रापि वेदार्थ-चिन्तने परिणतप्रज्ञोऽयं कविस्तत्रतत्र मन्त्राणामपूर्वानर्थान् प्रकटयति, प्रायः भगवत्पादेन तत्रतत्र वेदार्थप्रवचनसमये आविष्कृतान् । अस्मासु घृणावान् पण्डिताचार्यस्तान् स्वग्रन्थे निबबन्ध । अहो कृपापारवश्यं पण्डिताचार्यस्य । एवं बहवोऽपूर्वा अर्था मन्त्राणां च भाष्यवचनानां च तत्वप्रदीपोपज्ञ-माविरक्रियन्तेति स्फुटं चक्षुष्मताम् । इदमेकमपूर्वमुदाहरणम्– श्रीश्च ते लक्ष्मीश्च पत्न्याविति । सम्प्रदायविदो वदन्ति– 'श्रीरिति वक्षःस्थितं रूपम् । श्रीवत्स इति प्रयोगात् । लक्ष्मीरित्यङ्कस्थितं रूपम् । 'लक्ष्मीधराभ्यामाश्लिष्टः' इति स्मरणात्' इति ॥

पण्डिताचार्यस्त्वपूर्वतरमर्थान्तरमाह– 'अङ्कं श्रिता श्रीः । वक्षसि लक्षणभूता लक्ष्मीः' इति । रमणीयोऽर्थः । सम्प्रदायज्ञः सन्नपि पण्डिताचार्यः किमित्येवमर्थान्तरमाह । शाखान्तरपाठ-समन्वयार्थम् । 'श्रीश्च ते लक्ष्मीश्च' इति काण्वमाध्यन्दिनयोः पाठः । 'ह्रीश्च ते लक्ष्मीश्च' इति तैत्तिरीयाः पठन्ति । अतस्तैत्तिरीयाणां पाठे श्रीः ह्रीर्बभूव । ह्रीरिति चाङ्कस्थैव भवितुमर्हति । नतु वक्षसि लक्षणभूता । न सा जिह्रेतीति वक्तुं साम्प्रतम् । लक्ष्ममात्रत्वात् । अङ्कस्था तु जिह्रीयात् । तस्मादङ्कं श्रिता ह्रीः । ततश्च श्रीरप्यङ्कं श्रितैवोच्यत इत्यायातम् । तदिदं पण्डिताचार्यस्य व्याख्याने वैशिष्ट्यम् । निर्वचनेन च तत्समन्वित्य दर्शयामासेत्यपूर्वं कौशलम् । तेन नचैव न निर्ब्रूयादिति वदन्तं यास्कमप्यनुमन्यते ॥

## सहस्रार्थं भाष्यम्

तत्रतत्र भाष्यवचनानामनेकानर्थविशेषानाविष्कुर्वन् 'भाष्यं चात्यर्थविस्तरम्' इति भगवत्पादवचनं हृदयस्पर्शितया प्रत्याययतीव । इदमेकमुदाहरणम्–

'यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वान्न पूर्णतेत्यत आह' इति भाष्यवचनम् (२.१.३३) । तत्र पण्डिताचार्यटीका–

> 'ननु सृष्ट्यादावीश्वरस्य प्रयोजनमस्ति वा नवा? आद्ये कल्पे यस्य प्रयोजनस्य प्राप्तये सृष्ट्यादिस्तत्पूर्वं तदूनत्वान्न पूर्णता । अन्योऽपि नोपादेयः । प्रयोजनार्थं हि लोके

सृष्ट्यादि । नहि प्रयोजनमनुद्दिश्य बुद्धिमन्तः प्रवर्तन्ते । अतस्तदूनत्वान्निष्फलत्वान्न पूर्णता तस्य सृष्ट्यादिप्रवृत्तेः' इति ॥

अथापि विनेयसहजेन विनयेनैवमाह–

'आञ्जस्येनैकमप्यर्थं लेशतो वक्तुमुत्सहे ।
'सहस्रार्थस्य भाष्यस्य प्रसन्नाः सन्तु सद्गुणाः' इति ॥ ❃ ॥

'ईक्षतेर्नाशब्दम्' (१.१.५) इति सूत्रभाष्ये 'नचाशब्दत्वमितरसिद्धम्' इति वाक्यस्य टीका चात्रोल्लेखनीया–

'नचाशब्दत्वमितरसिद्धमित्यस्यायमर्थः– उक्तन्यायेन वाच्यत्वाद् ब्रह्मणो मायिसिद्धमशब्दत्वं न श्रुत्यर्थः । अस्यैव भाष्यस्यान्योऽर्थः– नचावाच्यत्वं ब्रह्मण इतरस्य मायिनोऽपि सिद्धम् । ब्रह्मणि व्यवहाराभावप्रसङ्गात् । अन्योऽर्थः कथ्यते– यन्मायिनोक्तं प्रधानस्याशब्दत्वं हेतुत्वेन– 'अशब्दं हि तत्' इति साङ्ख्यं प्रति, तदितरस्य साङ्ख्यस्य न सिद्धम् । तेन प्रधानस्य वेदगम्यत्वाङ्गीकारात् । किञ्च यदितरेण मायिनोक्तं प्रधानस्याशब्दत्वं सूत्रार्थत्वेन, तन्न तस्य सिद्धम् । स्वयमेव भगवद्गीताव्याख्याव्याजग्रन्थे प्रधानस्य शब्दगम्यत्वाङ्गीकारात्' इत्यादि ॥

भाविचतुर्मुखस्येयं चतुष्पदी चतुर्धा व्याख्याता पण्डितपञ्चाननेनेत्यपूर्वोऽयं गुरुशिष्यभावः । अनुपमा च व्याख्यानचातुरी, अभूतपूर्वा च वैदुष्यवैखरी ॥

प्रायः प्रत्यक्षरं प्रतिपदं पुरो नृत्यन्तमर्थसार्थं समीक्षमाणः मूकविस्मितो मन्त्रमुग्ध किमिह कियद् व्याख्यानि किमिह कथं परित्यजानि, कियद् ब्रवाणि कियदिति न ब्रवाणि, किङ्किमावृणवानि, किङ्किं विवृणवानि इति निश्चेतुमपारयन् पण्डिताचार्यो लेखनीमारान्निक्षिप्य बहुषु स्थलेषु स्वयमानन्दजलधौ मग्नस्तूष्णीं तस्थाविति भाति । तदिदं पण्डिताचार्यस्य मौनं व्याख्यानम् । भाष्यं क्वचित् तं मुखरयति । क्वचिन्मौने निमज्जयति ॥

स्वयं सपादलक्षमिते मायावादिनां शास्त्रे गाढमवगाढोऽपि अतृप्त इव, अनधिगतशङ्कासमाधानः बहिर्मायावादं समर्थयमानोऽप्यन्ततः सन्दिहानः स्वजिज्ञासाया उत्तरमन्वेषमाणः स्वयम्प्रमाणमाचार्यं

लब्ध्वा परितुतोष । समजनि निर्मूलः शङ्काशङ्कुः । प्रजज्वालान्तःप्रकाशः । पूर्वमद्वैतभाष्येण साकं सूत्रजातमधिगत्य, सूत्रभाष्ययोः सङ्गतिमपश्यन् दिङ्मूढ इव किमिह विश्रम्भणीयम्, किं वोपेक्षणीयमिति निश्चेतुमपारयन् किङ्कर्तव्यमूढ इवाऽस । दिष्ट्या तदानीं मध्वस्य मार्गदर्शनं लेभे । अहो पण्डित-पुङ्गवस्य परिवर्तनम् । यदादिमा पञ्चाधिकरणी समग्रस्य मायावादस्य निरसनी प्रत्यभात् । तेनापूर्वार्थस्फुरणेन स स्वयं कुतूहलाब्धौ निममज्ज । तदिदमपूर्वमुपहरणं लिकुचपण्डितस्य । इयमिह तद्वचनचातुरी–

'ननु हन्त एवं तर्हि प्रकटमेतानि सूत्राणि ब्रह्मावाच्यत्वपक्षप्रतिपक्षभूतानि, यावताऽत्र तत्पक्षीयाः प्रतिपक्षीक्रियन्त इति किमिदमिह कुतूहलम् । प्रतीयन्ते हि तन्निराकरणपराणि मुखत एव कात्स्न्र्येन' इति ॥

'यच्चोक्तम्– ब्रह्मव्यतिरिक्तस्य जीवस्यैवाभावात् ब्रह्मैवाज्ञं भवेदिति, तदपि भेदविद्वेष-विषदूषितत्वात् प्रमुषितशेमुषीगुणोन्मेषैरभिलषितमिति मनीषिणो मन्यन्ते' इति ॥

'यदपीदमुदितम्– अशब्दं ब्रह्मेति च, तदपि निखिलवेदवाक्यसमन्वयपरिनिर्णीयमान-परमपुरुषगतगुरुतरगुणगणागण्यताकर्णनं कर्णशूलमिव दुःसहमसहमानानां स्वमतमान-दुर्बलानां बालिशानामिवाऽक्रोशमात्रमुत्पश्यामः' इति च ॥ ✻ ॥

अद्वैतिनां कुले जातस्य स्वयमद्वैतमतमाश्रित्य तावतिथं कालं कृतसाधनस्योक्तिरियम् । अहो कीदृशी जिहासा तस्य स्वयं पूर्वादृते मते । चातुर्मास्यदीक्षितस्य लशुनभक्षणमिव दुःसहं बभूव तस्य मायावादानुसरणम् । अताप्सीच्च पश्चात्तापेन, किमियन्तमनेहसमथ वृथा कथमपथे सम्पपतेति विस्मयते च स्म ॥

## व्यासजैमिन्योरैकमत्यम्

अन्यच्चेदमपूर्वं वैशिष्ट्यं पण्डिताचार्यटीकायाः । यदुत्तरमीमांसाव्याख्याव्याजेन पूर्वमीमांसाया अप्यन्तरङ्गं प्रकटीचकार । अन्यैरन्यथाव्याख्यातानि ब्रह्मसूत्राणि भगवत्पादो यथावद् व्याच-कार । एवमन्यैरन्यथा व्याख्यातानि कर्मसूत्राणि पण्डिताचार्यो यथावद् व्याचख्यौ ॥

अन्य एव पन्था ब्रह्मसूत्राणाम्, अन्यः कर्मसूत्राणामिति कर्मसूत्रभाष्यकारा बभ्रमुः । जैमिनिमते न ब्रह्म, नापि देवताः । मन्त्रस्वरूपाः परं देवता उच्यन्ते । कर्मपरा वेदाः, न ब्रह्मपराः । नापि मोक्षपर्यन्ताः । भूमौ यज्ञकरणम्, ततः स्वर्गप्राप्तिः । ततो भूमिस्ततः स्वर्ग इति चक्रभ्रमणमेव वैदिकं जीवनं नाम– इत्यादि वदन्तः पूर्वमीमांसका वैदिकं पन्थानं व्याकुलयामासुः ॥

पण्डिताः समशेरत– भगवता बादरायणेन समधीतसामवेदः कथं स्वगुरुमतविरुद्धमेवं जगाद जैमिनिः? कथं च विप्रतीपभाषिणं विनेयं स्ववचनसंवादित्वेनोज्जहार भगवान् बादरायण इति ॥

पण्डिताचार्यः स्वोपज्ञं समाधत्त । समग्रस्य कर्ममीमांसासूत्रस्य समन्वयं प्रसाध्य कर्मब्रह्म-मीमांसासूत्रयोरैकार्थ्यं समर्थयामास । महानयमनुग्रहोऽध्यात्मवादिनाम् ॥

तथाहि तद्वचनलेशः– (३.४.१.)

> ईश्वरादिदेवतानभ्युपगमे उद्देश्याभावेन तदुद्देशेन यागासम्भवात्, तद्विधेरानर्थक्यप्रसङ्गात् । अभ्युपैति च जैमिनिर्देवतास्वरूपादिकम् । तत्प्राधान्यं हि सप्रमाणकं नवमाध्याये सूत्रयामास । 'देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्', 'स्मृतेरुपचारा-दन्यार्थदर्शनाच्च' 'आर्थापत्त्याच्च', इति ॥
>
> 'तत्रापि प्राधान्यं ब्रुवता न देवताविग्रहाद्यभावोऽभिप्रेतः । विद्यमानस्य हि देवतादेः स्रुगाज्यवह्न्यादिवत् गुणत्वमपि यथाश्रुतं सम्भवेत् । 'गुणत्वे देवताश्रुतिः' इति हि तत्र चाऽह । नच विग्रहादिकं तत्प्रमाणानि चोपन्यस्तानि प्रत्याचख्यौ' इत्यादि ॥
>
> 'ये तु ज्ञानस्य मोक्षसाधने कर्मशेषत्वं ब्रूयुस्ते न जैमिनिमतमनुसरन्तीत्यवोचाम । अकुशला व्युत्पत्तावबोद्धारो विधिशेषाणामकर्तारः परमधर्माणामगन्तारः फलवितानाना-मित्यस्याः पदव्या दूरतो निरस्ता इति न किल पुरस्तात् प्रास्ताविषत' इति च ॥

## देवमीमांसाशुद्धपाठः

न केवलमुभयोर्मीमांसयोः । मध्यमीमांसाया अपि देवमीमांसाभिधायाः सर्वात्मना विद्वल्लोके विस्मृतप्रायायाः स्वयं भगवत्पादमुखादेवाधिगतायाः शुद्धं पाठमपि स्वयमेव दर्शयामास– 'विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते' इति ॥

एतेन 'स विष्णुराह हीत्यन्ते' इत्यनुव्याख्यानमर्थानुवादपरमित्युक्तं भवति । स्वयमेवं सन्दिग्धं सूत्ररूपमुदीर्य शुद्धं सूत्रपाठं स्वान्तरङ्गशिष्येण श्रीत्रिविक्रमपण्डिताचार्येण श्रावयामास । अहो शिष्यवात्सल्यं भगवत्पादस्य ॥

अयमेव शुद्धः सूत्रपाठ इति त्रैविक्रमार्येण नारायणपण्डिताचार्येणाप्युदलेखि । त्रैविक्रमार्यदासेन वामनपण्डिताचार्येणापि ॥

विस्मयावहमिदम्– यद् भगवत्पादमुखादेव समधिगतदेवमीमांसासूत्रशुद्धपाठैः लिकुचपण्डितैः सूत्रे एते यदि स्वग्रन्थे नोदहरिष्येताम्, नावेदिष्यतैव प्रायः शुद्धसूत्रपाठो जिज्ञासुलोकस्य ॥

एतेन विंशतिलक्षणमेकं शास्त्रमिति प्राचां वचनं च समर्थयामासेव ॥

## तौळवमण्डलीप्रवादः

पण्डिताचार्यविषये बहवः प्रवादाः श्रूयन्ते तौळवमण्डले । तेषु केचन समगृह्यन्त तीर्थभूतैर्मम तातपादैः, तत्वप्रदीपस्य प्रथममुद्रणे प्रकटितायां पीठिकायाम् । तान्येवाविकलमिह समुद्ध्रियन्ते–

१. 'असौ महानुभावः (पण्डिताचार्यः) कस्मिंश्चिद् दिवसे बालजनसाहजिकया चिक्रीडिषया गाश्चारयद्भिर्गोपालबालैः सहानतिदूरे ग्रामाद् बहिः क्रीडन् व्यतीतमपि दिनं नास्मार्षीत् । यन्तमप्यस्तं सवितारं नाद्राक्षीत् । तदा तेनैव पथा गच्छन् कश्चित् पान्थोऽस्य तेजसा समाकृष्ट इव, परिचितचर इव समीपमागत्य, एतमेव महानुभावं सादरं पप्रच्छ–'वत्स, कियद्दूरे ग्रामः?' इति । स बालोऽपि क्रीडासक्तोऽपि किमप्यविचार्य तत्क्षण एव तं पान्थमुदतारीत्– 'किं न जानीषे, मां पश्य, गगनतले लम्बमानं सवितुर्बिम्बं च पश्य, इमा गाश्च पश्य' इति । स तु पथिकः सहसाऽनधिगताशयः, विस्तृतेन चक्षुषा बालं पिबन्निव, मन्त्रमुग्ध इव तूष्णीमेवावतस्थे । तस्य पथिकस्येमां दशां दृष्ट्वा स्वयमेवायं महानुभावो हसन्नवोचत्– 'किं मदुक्तमपि नाज्ञासीद् भवान्? अहो अहमिमे च बालाः । सायन्तनश्च कालः । इमाश्च गावः । अस्मिन् समये वयं ग्रामाद् बहिर्दूरं गन्तुं प्रभवेम किम्? अतो ग्रामो दृष्टिगम्य एव' इति । पान्थस्तु प्रौढमतीनामपि दुरधिगमयाऽनया वाग्झर्या जर्जरितसर्वविचारः किमपि वक्तुं न प्राभवदिति' ॥

२. 'कदाचिद् बाल्य एव गृहे वसतोऽस्य महानुभावस्य पुरो भिक्षार्थी कश्चित् क्षपणको भिक्षां देहीति वदन्नागतः । तदात्व एवायं तं भिक्षुमेवमुवाच–

'एकः क्षपणक शाकाहर्ता बहवः क्षपणक शाकादानाः ।
'यत्र क्षपणक बहुशाकादाः तत्र क्षपणक शाकाशा का' इति ॥

'बालस्यापि सतोऽस्य महिमा स्थालीपुलाकन्यायेनाधिगतः स्यात् । अस्मन्मतेऽविरुद्धस्यैतिह्यस्य आगमत्वेन प्रामाण्यं सम्मतम् । अस्ति चातिप्रथितमैतिह्यम्– अयं त्रिविक्रमार्य ईश्वरांशसम्भूत इति । न च विरोधिप्रमाणमद्य यावदधिगतमस्माभिः' ॥

३. 'किञ्च कल्याणीति प्रथिताऽमीषामेव सहोदरी अवतीर्णा भारत्येवेति विद्वद्भिरादृता यावज्जीवमविवाहितैव स्वानुजशङ्करार्यैः सहाऽचार्यसमीपमागता तत्रैव तत्सेवयैव निर्वृताऽवसदिति । सा च देवी पुरुषान्तरसम्बन्धायोग्या, अतोऽनूढैवाऽसीत् । अत्रैकं रहस्यं च देवगुह्यमिव प्रतिभाति– यदस्मद्देशे अनूढायाः प्राप्तवयस्कायाः स्त्रियो धर्मशास्त्रे त्याज्यता प्रतिपादिता । केरळदेशे परमनूढा अपि मान्याश्चारित्रेण पूज्याश्च स्त्रियो दृश्यन्ते । अत एवेमां देशपद्धतिमनुरुन्धत्या श्रीकल्याणीदेव्या केरळदेशस्थश्रीत्रिविक्रमार्यमन्दिरे तदनुजात्वेनावातारि । एवं तौ सहोदरभावं गतौ हृष्यन्तौ स्वरूपं गूहमानौ चोषतुरिति श्लिष्टतरमिदम्' ॥

(अत्र बहवो बहुधा विवदन्ते । कल्याणीदेवी त्रिविक्रमार्यतनयेति केचिदाचक्षते । नारायणपण्डितस्तु मध्वविजयेऽखण्डं मौनमेवोवाह । तत्र कल्याणीदेव्या नामापि न श्रूयते । तस्या भारतीत्वमपि बहवो नानुमन्यन्ते । यतस्तदानीमवतीर्णाया भारत्याश्चन्द्रेति नामाऽसीदिति स्वयं भगवत्पादेन न्यगादि महाभारततात्पर्यनिर्णये । परन्तु तौळवपण्डिताः श्रद्दधते कल्याणीदेव्या एव चन्द्रेति नामान्तरमिति ।)

४. 'अपिचायमाचार्यः स्वकृते तत्वप्रदीपाख्येऽस्मिन्नेव ग्रन्थे–

'अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी । विसृता नृषु जातं च तं विद्याद् देवसत्तमम्' इति नारायणश्रुतिं श्रीमदाचार्याणां विषय उदाहरन् स्वमपि कटाक्षीकरोतीति

चेदुच्येत तदपि नातिशयकोटिमाटीकेत । यतो ह्यस्याप्यतिप्रथितप्रतिभावत्त्वेन देवोत्तमत्वं गमयेदेव । न चेन्नारायणश्रुतिः कुप्येत् । कथमन्यथा साधारणः पुरुषः सर्वज्ञाचार्यपुरतः पञ्चदशदिनानि विवदेत?'

(इदमपि साम्प्रदायिकमर्थं मानयद्भिरुदितमिति भाति । वस्तुतस्तु सप्त वाऽष्टौ वा दिनानीति वक्तव्यम्, न पञ्चदशदिनानीति ।)

५. 'श्रीत्रिविक्रमार्य इव शङ्करार्योऽप्याचार्याणां प्रेमातिशय आसीदिति प्रसिद्धिः । श्रीमदाचार्यैः त्रिविक्रमार्याणां यथा लक्ष्मीनारायणप्रतिमाऽदायि तथा शङ्करार्यस्यापि श्रीनृसिंहप्रतिमा प्रदत्ता । सा च नृसिंहप्रतिमा परम्परया इदानीमपि शङ्करार्यनृसिंह इति प्रथिता श्रीकाणियूरुमठे अद्यापि पूज्यमाना चकास्ति....' इत्यादि ॥ ✻ ॥

## लिकुचकुलतिलकै रचिताः कृतयः

**त्रिविक्रमपण्डिताचार्यस्य–**

१. उषाहरणम् (कौमार एव रचितं महाकाव्यम्)

२. तत्वप्रदीपः (अपूर्वा चानुत्तरा च ब्रह्मसूत्रभाष्यटीका)

३. विष्णुस्तुतिः (अपूर्वमाशुकाव्यम्)

४. वायुस्तुतिः ( ” ” )

५. पूर्णबोधस्तोत्रम् (चतुर्दशस्तोत्रेष्वष्टमं स्तोत्रम्)

६. मध्वाष्टकम्

**शङ्करपण्डिताचार्यस्य–**

१. अनुव्याख्यानव्याख्या सम्बन्धदीपिका ।

२. अनुव्याख्यानन्यायमाला-न्यायविवरण-सम्बन्धदीपिका ।

द्वौ शङ्करार्यौ लिकुचवंशोद्भवौ श्रीमध्वशिष्यौ श्रूयेते । तयोः कतरोऽनयोः प्रबन्धेति न स्फुटम् । तयोरेकः त्रिविक्रमपण्डितानुजः श्रीमध्वस्य ग्रन्थपाल आसीत् । प्रायः स एवानयोः प्रणेतेति तर्क्येत । नारायणपण्डितस्तु विषयेऽस्मिन् मौनमेवोवाह ॥

**पण्डिताचार्यतनयस्य नारायणपण्डिताचार्यस्य–**

१. सङ्ग्रहरामायणम् (पौराणिकं महाकाव्यम्)

२. श्रीमध्वविजयः (चारित्रिकं महाकाव्यम्)

३. भावप्रकाशिका (मध्वविजयस्य लघुटिप्पणी)

४. प्रमेयनवमालिका (मध्वविजयकथासङ्ग्रहः)

५. पारिजातहरणम् (यमककाव्यम्)

६. नयचन्द्रिका (अनुव्याख्यानटीका)

७. तत्वमञ्जरी (तत्वनिर्णयटीका)

८. मणिमञ्जरी (विवादपदं चारित्रिकं खण्डकाव्यम्)

९. शुभोदयम् (पौराणिकं खण्डकाव्यम्)

१०. कृष्णमाला (कृष्णचरितानुक्रमः)

११. योगदीपिका (अनुष्ठानपद्धतिः)

१२. शिवस्तुतिः

१३. नरसिंहस्तुतिः

१४. दाशरथ्यष्टकम् (चतुर्दशस्तोत्रेषु एकादशं स्तोत्रम् ।)

१५. रामगीत्यष्टकम् ( ,, ,, द्वादशं ,, )

**तदीयत्वेन सम्भाविताः कृतयः–**

१६. ध्यानमाला (ध्यानप्रक्रिया)

१७. पूर्णबोधस्तुतिः (यमकस्तोत्रम्)

१८. गोविन्दस्तुतिः ( ,, ,, )

(अन्यानि च बहूनि यमकबद्धानि पद्यानि ताळपत्रकोशेषु दृश्यन्ते । शैलीपरिशीलनेन तान्यपि नारायणपण्डिताचार्यकृतानि स्युरिति भाति ।)

कविनाऽनेन प्रिययमकेन यमकभारतमिति प्रथितस्य महाभारततात्पर्यस्यैका टीका रचितेति च किंवदन्ती । परन्तु नोपलब्धा ॥

**नारायणपण्डिताग्रजस्य–**

१. रमेशगीतिः (चतुर्दशस्तोत्रेषु द्वितीयम्)

अस्या रचयितुर्नाम नोपलब्धम् । गीत्यन्ते चैवं पठ्यते–'लिकुचकविनन्दनः सन्नुपान्त्यः' इति । लिकुचकविरिति त्रिविक्रमपण्डिताचार्य एव । तस्य त्रयः पुत्राः । तृतीयो नारायणपण्डिताचार्यः । अयमुपान्त्य इति द्वितीयः पुत्र इति स्फुटम् । एतमागूर्य नान्यत् किमपि ज्ञायते । नामधेयमपि । नाऽसीदहो स्वनामख्यातिचापलं प्राचामाचार्याणाम् ॥

**नारायणपण्डिततनयस्य त्रैविक्रमार्यदासोपाह्वयस्य वामनपण्डिताचार्यस्य–**

नारायणपण्डिताचार्यः स्वकृतनयचन्द्रिकादिष्वात्मानं त्रैविक्रमार्यमाह । तत्तनयोऽयमात्मानं त्रैविक्रमार्यदास इत्येव निर्दिशति । तस्य च सप्त ग्रन्था उपलब्धाः–

१. याज्ञीयमन्त्रभाष्यटीका
२. काठकोपनिषद्भाष्यटीका
३. तलवकारोपनिषद्भाष्यटीका
४. षट्प्रश्नोपनिषद्भाष्यटीका
५. आथर्वणोपनिषद्भाष्यटीका
६. माण्डूकोपनिषद्भाष्यटीका
७. आनन्दमाला (सङ्ग्रहभाष्यटीका)

सर्वेऽप्येते मया संशोध्य सम्पाद्य मुद्रिताः ॥

**कल्याणीदेव्याः–**

एवं चतुर्दशस्तोत्रेषु पञ्चमं (अणुवायुस्तुतिः), षष्ठम् (गोविन्दस्तोत्रम्), सप्तमं (मुकुन्दस्तोत्रम्) च कल्याणीदेवीरचितमित्यैतिह्यम् । अथच द्वे कल्याणीदेव्यौ श्रूयेते । एका श्रीमध्वभगिनी । अपरा लिकुचान्वयजा । अनयोः कतरा पुनरेतानि जग्रन्थेति न स्फुटम् । प्रायः प्रायपाठात् लिकुचान्वयजैव स्यादिति भाति ॥

एतावन्तः सम्प्रत्युपलब्धा लिकुचान्वयजानां ग्रन्थाः । कालगर्भे निलीय घुणभक्षिताः प्रनष्टाः कियन्त इति न जानीमः । अथापि सम्प्रत्युपलब्धा एव तत्ववादे लिकुचान्वयजानां मूर्धन्यत्वं स्फुटमवगमयन्ति । ऋते चैतेषामध्ययनात् न मध्वहृदयं शक्यं स्फुटमवगन्तुमिति ॥

एवमयं पण्डितः संसारः । सर्वेऽपि मध्वशास्त्रजलधौ गाढमवगाह्य पूतात्मानः । लिकुचान्वयजानां महदनुपमं चेदमुपढौकनं माध्ववाङ्मयस्य । धन्योऽयं लिकुचान्वयः । धन्या तौळवमण्डली । धन्याश्च माध्वाः । धन्यः सज्जनलोकः ॥

तत्रापि विशिष्य धन्यतमस्त्रिविक्रमपण्डितः । स्थितेष्वप्यन्येषु यतिशिष्येषु यमेकमेव गृहस्थं स्वभाष्यव्याख्यानकर्मणि नियुयोज भगवत्पादः । तेन तस्मिन् स्वस्य प्रेमातिशयं न केवलम्, तस्य योग्यतातिशयं च प्रकटयामास ॥

अत एव सम्प्रदायज्ञाः पूजासन्ध्यावन्दनादिषु प्रारम्भे गुरुनमनसन्दर्भे भगवत्पादेन साकं तत्वप्रदीपकृतमेकमेव गुरुत्वेन मुखतः स्मरन्ति–

'रमापतिं पूर्णगुणं मुकुन्दं व्यासं च विज्ञानसहस्रभानुम् ।
'पूर्णप्रबोधं च सुतत्वदीपं क्रमाद् गुरूंश्च प्रणमामि मूर्ध्ना' इति ॥

सुतत्वदीपकं पूर्णप्रबोधम्, तथा सुतत्वदीपप्रणेतारं पण्डिताचार्यं चेत्यर्थः ॥

एषु च तत्ववादमण्डनायितेषु ग्रन्थेषु ग्रन्थरत्नराजोऽयं मुकुटालङ्कारहीरायत इति सर्वमतिमङ्गलम् ॥

## अथातो नामजिज्ञासा

किन्नामधेयोऽयं ग्रन्थः? 'तत्वप्रदीपः' इत्येके । 'तत्वप्रदीपम्' इत्यन्ये । 'तत्वदीपिका' इत्येके । 'तत्वप्रदीपिका' इत्यपरे ॥

यद्यपि ताळपत्रकोशेषु 'तत्वदीपिका' इत्येव प्रयोगप्राचुर्यम् । श्रूयते च मायावादेऽपि कश्चन प्रथितो ग्रन्थः 'तत्वदीपिका' इति । निराकृतश्च स ग्रन्थो वादिराजश्रीचरणैर्विवरणव्रणे–

'कुर्वे विवरणं तीव्रव्रणं दुस्तत्वदीपनम् ।
'तत्वदीपनमेकोनपादिकां पञ्चपादिकाम्' इति ॥

पण्डिताचार्यग्रन्थस्य तदेकनामत्वं नातीव हृद्यमिति तन्नाम न स्वीकृतम् । अर्थविशेषलाभाय च, अनुसन्धानविशेषलाभाय च ॥

श्रीमध्वविजये तावत् तत्वप्रदीपाख्ययैव ग्रन्थोऽयमुदलिख्यत–

‘तमोनुदाऽऽनन्दमवाप लोकस्तत्वप्रदीपाकृतिगोगणेन’ इति ॥

व्याचख्यौ च ग्रन्थकृदेव स्वयं भावप्रकाशिकायाम्– ‘तत्वप्रदीपात्मको ग्रन्थः’ इति ॥

‘तत्वप्रदीपाख्यग्रन्थात्मकवचनसमूहेन’ इति वेदाङ्गतीर्थाः ॥

तत्वप्रदीपाख्यो वर्णानां विन्यासविशेषविशिष्टो ग्रन्थ इत्युक्तं भवति । गोगणविशेषणतया ‘तत्वप्रदीपः’ इत्येव चोक्तं भवति ॥

स्वयं चाऽह पण्डिताचार्यो ग्रन्थान्ते–

‘सम्प्रीतये भगवतः परमस्य भक्त्या सत्तत्वदीपमिममत्र समर्पयामि’ इति ॥

‘ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः’ इति स्मरणात्, ‘सदिति प्राणः’ इति श्रुतेश्च सदाख्यं प्राणनारायणाख्यं निर्दुष्टं तत्वं दीपयति प्रकाशयतीति सत्तत्वदीपं ग्रन्थमिमं परमस्य भगवतः सम्प्रीतये अत्र भगवति भक्त्या समर्पयामीत्यर्थः । अत्रापि ‘इमम्’ इति निर्देशात् ‘सत्तत्वदीपः’ इति पुँल्लिङ्गतैव ॥

एतेन तत्वप्रदीप इत्यस्य निर्वचनमपि न्यरूप्यतेव । ‘प्र’ इति प्राणनामा मध्वः । ‘प्र’ इति नारायणः । ‘अकयप्र–’ इत्यादेः । तेन ‘प्र’ इति प्राणनारायणाख्यं तत्वं दीपयतीति तत्वप्रदीपः । तदुभयमपि तत्वमितरटीकापेक्षया प्रकर्षेण दीपयतीति चार्थो विवक्षित एव ॥

एवं बह्वर्थगर्भितमिदमेवात्र नामत्वेन निरधारि, ग्रन्थकृत्तत्तनययोः प्रयोगसंवादाच्च । अत एव पुल्लिङ्गता च । लोके च तथैव व्यवहारो दृश्यते ॥

## यथामति परिष्कृतं तृतीयमिदं मुद्रणम्

प्रथमं तावदयं ग्रन्थः चतुरधिकरणीपर्यन्तः डा. बि. एन्. कृष्णमूर्तिशर्मणा (सम्प्रति यशःकायेन) तदुपज्ञं प्राकाश्यमानीयत ‘तत्वप्रदीपः’ इति प्रथितेन नाम्नैव अण्णामलैविश्वविद्यालयद्वारा (१९३४तमे क्रिस्ताब्दे) ॥

इदम्प्रथमतया समग्रं प्रकाशनम्, अखिलभारतमाध्वमहामण्डलद्वारा रजतपीठपुर एव सम्पन्नम्, १८७०तमे शा.वा.शके (१९५८तमे क्रिस्ताब्दे), समग्रं पुरुषायुषं जीवित्वा हरिचरणं परिगतानां

श्रीपुत्तिकामठाधीशानां श्रीमदुपेन्द्रतीर्थसंस्थानमधिष्ठितानां श्रीसुधीन्द्रतीर्थश्रीचरणानां शतमानोत्सवसमये तत्स्मारकतया प्रकटीकृतम् ॥

दिष्ट्या तस्मिन्नपि प्रकाशने प्राचीनकोशानुसारेण पाठनिर्णयः, मुद्रणार्थं लिप्यङ्कनम्, समग्रस्य ग्रन्थस्य यथामति परिशोधनमिति समग्रधुरा मदंसयोरेव न्यधायि ॥

तदा चोपविंशवर्षोऽहं वयःसहजेनोत्साहेन तां धुरं निरवक्षि । तातपादानां मार्गदर्शनमप्यासीत् । तेन, भगवत्पादपण्डिताचार्ययोः पोतेऽस्मिन् परमकारुणिकतया च सर्वं सुकरमासीत् ॥

तदा पञ्चषा मूलकोशाः पाठशोधनार्थं स्वीकृताः । यथासम्भवमशोधिषत च पाठाः । तथाऽपि क्वचित्क्वचित् पाठशङ्का शुद्धपाठस्यालाभात् सर्वथोर्वरितैव । एतावतोऽपि बहोरनेहसः सर्वात्मना परिशुद्धः पाठो नालब्धैव । अथापि महता प्रयत्नेन यथासम्भवं परिशोध्यात्र प्रकटितम् । क्षाम्यन्तु महान्तः ॥

इतः पूर्वं के.टि.पाण्डुरङ्गिमहोदयस्य नेतृत्वे द्वितीयवारं द्वैतवेदान्तप्रतिष्ठानद्वारा सप्तसु सम्पुटेषु, तत्वप्रकाशिकादीतरव्याख्याभिः सह (1997-2002 A.D.) प्रकाशितोऽयं ग्रन्थस्तत्वप्रदीपिकानाम्ना । स च रजतपीठपुरे प्रथमं मुद्रितस्य पाठस्य पिपीलिकालिपिरिति न तत्र किञ्चिद् वक्तव्यम् । तेन सम्प्रतीदं तृतीयं मुद्रणं यथासम्भवं परिष्कृततया प्रकाश्यते ॥

## टीका तत्वचन्द्रिका

तत्वप्रदीपोऽयं भगवत्पादस्य प्रियतमो ग्रन्थः । पण्डिताचार्यश्च प्रियतमः शिष्यः । तेन तमेव स्वभाष्य-व्याख्यानाय सर्वज्ञाचार्यः स्वयमाजिज्ञपत् । तेन माध्वैरवश्यं पठनीयोऽयं ग्रन्थ इति । हन्त दौर्भाग्यं माध्वानाम्, यदाचार्यस्य प्रियतमो ग्रन्थः अध्ययनपरम्पराया लुप्त एव गाढे तमस्यदृश्यतामाप ॥

मया तु पुनरस्य प्रबन्धरत्नस्य स्वाध्यायप्रवचने निरन्तरं प्रवर्त्येतामिति तरुणयतयः विद्वांसश्च क्रियासमभिहारेण अयाचिषत । उत्तरणे पुनस्तेषां सर्वेषामैककण्ठ्यम्– 'दुरधिगमोऽयं ग्रन्थः । व्याख्याऽपि नास्ति । कथं पाठयिष्यामः' इति ॥

मया पुनरालोचितम्– 'सत्यमेतेषां वचः । अनेकार्थगर्भितोऽयं दुर्गमो ग्रन्थः । अस्य पाठनार्थं नूनं व्याख्यानमपेक्ष्यते । अहमेव किमिदं साहसं न करवाणि' इति ॥

भगवन्तं सम्प्रार्थ्य, भगवत्पादं च, त्रिविक्रमविपश्चितं च, 'मयि शक्तिं निधेहि' इति व्याख्या-रचनार्थं प्रावर्तिष्येव यथामतिविभवम् । सम्प्रति प्रथमाध्यायस्य प्रथमपादस्य व्याख्या तावदवास्यत् प्राणनारायणयोः करुणया । उत्तरोऽपि ग्रन्थः सद्य एव सम्पूरिषीष्टेत्याशासे । प्राणनारायणौ प्रबन्धारौ । अहं पुनः केवलमक्षरचुञ्चुः । न जाने पुनरुत्तरं ग्रन्थं कदा तौ स्फोरयत इति ॥

'व्याख्याऽपि नास्ति । कथं पाठयिष्यामः' इति व्याख्याविरहव्याजेनाऽचिक्षिप्सतामयं समाधिः– अयि विपश्चितः, व्याख्येयं निहिता तत्रभवतां हस्ते । अथ विहाय कैतवकथनम्, प्रारभ्यतां तत्वप्रदीपप्रवचनम्' इति ॥

## लिपिलेखनक्रमः

प्राचीनादर्शे, विशिष्य श्रीहृषीकेशतीर्थेन लिखिते ग्रन्थे, कश्चन विशिष्टो लेखनक्रमोऽनुसृतो दृश्यते । तमेव क्रममत्राप्यनुससर भाष्ये च तत्वप्रदीपे च । तत्रेदं किञ्चिद् वक्तव्यं भवति ॥

पाणिनिः सूत्रयामास– 'अचो रहाभ्यां द्वे' (८.४.४६) इति । तेन अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवतः । तेन अर्क्कः, स्वर्ग्गः, अर्च्चनम्, अर्ज्जुनः, कर्ण्णः, पार्त्थः, अर्द्दनम्, अर्द्धम्, अर्प्पणम्, कर्म्म, सूर्य्यः, दुर्ल्लभः– इत्यादिरूपसिद्धिः ॥

एवं हकारादुत्तरस्यापि । तेन ब्रह्मा ब्रह्म्मा भवति । वह्निः वह्न्निर्भवति । जाह्नवी जाह्न्नवी भवति ॥

भागश एतदनुमतमाचार्यमध्वस्यापि । स रेफात् परस्य यरो द्विर्भावमनुमन्यते । तेन अर्क्कः, स्वर्ग्ग इत्यादि युक्तं रूपम् । अथापि हकारादुत्तरस्य यरो न द्वे भवतः । तेन ब्रह्मेत्येव । न ब्रह्म्मेति । वह्निरित्येव न वह्न्निरिति । जाह्नवीत्येव । न जाह्न्नवीति ॥

तथाच 'अचो राद् द्वे' इत्येव पर्याप्तम् । तत्रापि क्वचिदपवाद इष्यते । वबयोर्भकारस्य च द्विर्भावो नेष्यते । तेन सर्वम्, अर्बुदम्, गर्भ इत्याद्येव साधु रूपम् । न सर्व्वम्, अर्ब्बुदम्, गर्ब्भ इत्यादि । तेन 'ऋते बभाभ्यां वाच्च' इति वक्तव्यम् । 'शरोऽचि' (८.४.४९) इति पाणिनि-नैवोक्तम् । तेन कर्षति, कर्शयतीत्यादौ न द्विर्भाव इति स्थितम् ॥

पुनश्च सूत्रयामास पाणिनिः– 'अनचि च'(८.४.४७.) इति । अनचूपरस्य अच उत्तरस्य यरो द्वे भवतः । तेन दध्यङ् आथर्वणो दद्ध्यङ् आथवणो भवति । मध्वो मद्ध्वो भवति । अनुमतमेतदपि तत्ववादाचार्यस्य । परन्त्वत्र वपरस्य धकारस्य द्विर्भावे तल्लेखनाय संयुक्तं मुद्राक्षरं नास्ति । तेन 'मद्ध्वः', 'अद्ध्वा' इत्येव लिखितव्यं भवति । तदा पठितॄणामस्ति भ्रमावकाशः । 'सहस्रशीर्षम्' इत्यादिवदिदमपि विश्लिष्य पठनीयमिति विभ्रम्यासुः । एवङ्कारं मा नाम पठितॄणां विभ्रमो भूदिति द्विर्भावं विनैवात्र प्रकटितम्– 'मध्वः, साध्वत्र' इत्यादिषु सर्वत्र ॥

एवम्– 'अनचि च' इत्यत्र, अच इति पूर्वसूत्रादनुवर्तयन्ति वैयाकरणाः– 'अनचूपरस्य अच उत्तरस्य' इति । अत्राऽऽचार्यमते 'अच उत्तरस्य' इति च न नियतम् । तेन 'द्ध्यायति, द्ध्यात्वा' इत्यादिरूपसिद्धिः ॥

अथ वार्त्तिककार आह– 'यणो मयो द्वे भवत इति वक्तव्यम्' (८.४.४७.) इति । अत्र यण इति पञ्चमी मय इति षष्ठीति केचित् । तेषां पक्षे– वल्कलो वल्क्कलो भवति । वाल्मीकि-र्वाल्म्मीकिर्भवति । नेदं वक्तव्यम् । वल्कलो वाल्मीकिरित्येव साधुरूपमित्याचार्यमतम् । अथचान्ये वार्तिकमन्यथाकारं व्याचक्षते– यण इति षष्ठी मय इति पञ्चमीति । तेषं पक्षे– दध्यङ्, दध्य्यङ् भवति । मध्वो मध्व्वः । नेदमपि वक्तव्यम् । समग्रं वार्तिकं शाक्यमवक्तुम् ॥

पुनराह कात्यायनः– 'शरः खयो द्वे भवत इति वक्तव्यम्' (८.४.४७.)इति । अत्रापि द्वयी गतिः– शर इति पञ्चमी खय इति षष्ठीत्येके । तेषां पक्षे स्थानं त्स्थानं भवति । स्थाली त्स्थाली भवति । स्याद् वा । मा वा भूत् । द्विविधमपि रूपमनुमन्यामहे । अथापरे खय इति पञ्चमी शर इति षष्ठीत्यातिष्ठन्ते । तेषां पक्षे वत्सः वत्स्सो भवति । क्षीरं क्ष्षीरं भवति । प्रथमपक्षे स्याद्वादिनोऽपि तत्ववादिनो न द्वितीयं पक्षमङ्गीकारक्षमं मन्यन्ते ॥

अपिच पुनराह कात्यायनः– 'चयो द्वितीयाः शरि पौष्करसादेः' (८.४.४८.)इति । तेन पौष्कर-सादिराचार्यो मन्यते तकारस्य थकारम्, ककारस्य खकारम्, पकारस्य च फकारम् । तथाच तस्याऽऽचार्यस्य मते वत्सः वथ्सो भवति । क्षीरं ख्षीरं भवति । अप्सरा अफ्सरा भवति । नैतत् सर्वमनुमतम् । तैत्तिरीयाणां छन्दसि पौष्करसादिमतमनुमतं भवतीति त्वङ्गीकुर्मः । स यथा– 'तथ् सवितुर्वरेण्यम्' ॥

## पाठमीमांसा

इदमत्रावधेयम्– अत्रानुसृतः सूत्रपाठो भाष्यपाठश्च प्रचलितात् पाठादीषदिव भिन्नप्रकारः । योऽयमाचार्यप्रथमशिष्येण, मस्करिणामग्रण्या, भगवत्पादमुखादेव साक्षादधिगतसमग्रसूत्रभाष्यपाठेन श्रीहृषीकेशतीर्थेन स्वयं लिखित्वा संरक्षितः, अधुनाऽपि दिष्ट्या श्रीपलिमारुमठे सभक्तिश्रद्धमपचाय्यमानः, प्राचीनतमोऽधिकृततमश्च पाठः ॥

स्वच्छस्वान्तानां गलितदुराग्रहाणां प्रज्ञापरिग्रहाणां जिज्ञासूनां महदिदं सतां सन्तोषस्थानम्– यत् आचार्यमध्वस्य साक्षाच्छिष्येण रक्षितो मूलपाठः, पुनरन्येन साक्षाच्छिष्येण भगवत्पादमुखेनैव समधिगतभाष्येण गुरुतमप्रियभुजिष्येण लिकुचश्रेष्ठेन विरचितया व्याख्यया सह इदमुपज्ञं प्रकटीक्रियत इति हेम्नः परमामोदः ॥

यद्यपि अनन्तमठे प्रथमो भाष्यलेखकः सत्यतीर्थः । तथाहि श्रीमध्वविजये–

> 'गाङ्गमङ्गलतरङ्गभङ्गदप्रान्तसुश्रिहरिवेश्मकृत्समः ।
> 'यद्गतैकतमवर्णलेखकः सत्यतीर्थ इह भाष्यमालिखत्' (९.१३) इति ॥

दैवदुर्विपाकेन प्रनष्ट एव सत्यतीर्थलिखितो ग्रन्थः ॥

अक्षोभ्यतीर्थलिखितोऽपरः प्रतनपाठोऽस्तीत्येके । मुग्धजनमोहनमेवैतत् । न क्वाप्युपलभ्यते अक्षोभ्यतीर्थपाठो नाम । सर्वथा मिथ्यावादोऽयम् ॥

अथच सत्यतीर्थः प्रथमलेखको न केवलम् । प्रथमश्रोता च । ततो गोदावरीतीरे द्वितीयश्रोता पद्मनाभतीर्थः । तेनापि लिखितो भाष्यपाठः तदात्वे स्यादपि । किन्तु सर्वथा नोपलब्धः । तस्मादद्याप्युपलब्धः गलितप्रायोऽपि प्राचीनतमः पाठो हृषीकेशतीर्थलिखित एवेति खलु विस्तरेण ॥

## प्रचुरप्रक्षेपः प्रचलितो भाष्यपाठः

प्रचार्यमाणः पाठः प्रचुरप्रक्षेपः । पाश्चात्यानि व्याख्यानानि च मूलपाठाननुसारीणीति भगवत्पादभावनिर्णये न पर्याप्तानीव । भगवत्पादेन स्वग्रन्थे स्फुटमुदघोषि–

'ग्रन्थोऽप्येवं विलुळितः किम्वर्थो देवदुर्गमः' (म.भा.ता.नि.२.५) इति ॥

सर्वमेतत् समानं भगवत्पादवचनेष्वपि ॥

तथाहि– मात्राच्छन्दोबद्धे महाभारततात्पर्ये प्रथमपद्यस्यायं द्वादशमात्रः प्रथमः पादः–

'ध्यायेत् परमानन्दम्' इति ॥

नरहरितीर्थीये तद्व्याख्याने श्लोकबद्धे– 'ध्यायेत् तं परमानन्दम्' इति तदर्थविवरणपरं वचनं निचाय्य स एव महाभारततात्पर्यमूलपाठ इत्यनधीतच्छन्दःशास्त्राः पाश्चात्याः पण्डिता बभ्रमुः । मा स्म पाश्चात्यलोको भ्रमेदिति कृपया नरहरितीर्थेन व्याख्यायि । अहो दैवदुर्विपाकेन तदेव भ्रमहेतुर्बभूव । पाठशुद्धावनादरोऽपि तत्र बीजम् ॥

इदमेकमुदाहरणं पाठविपर्ययस्य । इदमन्यच्च–

'अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः' (माण्डूक ४.४.) इति श्रुतिपाठमनुसृत्य प्रवृत्तो नूतनो भाष्यपाठः–

'अपूर्वः कारणाभावान्नाशाभावादनन्तरः ।
'पराधीनस्थित्यभावादनपर उदाहृतः' इति ॥

अस्मिन् पाठे भग्नमिव च्छन्दः । अथापि यथामूलं व्याख्यानमिति कस्यापि पाठभेदशङ्काया अपि नावकाशः यावत् पदपाठावगमः । तथाहि प्रतनपदपाठानुगुणः श्रुतिपाठः– 'अपूर्वोऽनन्तरोऽबाह्यो न परः प्रणवोऽव्ययः' इति । 'तस्मात् परः प्रणवश्च नास्ति' इति हि वामनपण्डितः । वादिराजतीर्थविरचितायां माण्डूकभाष्यप्रकाशिकायामपि– 'न विद्यते परः उत्तमो यस्मादिति नपरः प्रणवः' इति । इयानेव विशेषः । न+परः इति द्वे पदे इति वामनपण्डितः । 'नपरः' इत्येकं पदमिति वादिराजयतिः । अनियतं हि प्रतृण्णं भवति । तर्हि 'अनपरः' इत्यपि प्रतृण्णं स्यात् । स्यादपि । किन्तु न तत् प्राचीनव्याख्यानानुगुणम् । नापि भाष्यानुगुणम् । शाङ्करभाष्यमूलोऽयं पदपाठभ्रमः । तथाहि तद्भाष्यम्– 'अपरं कार्यमस्य न विद्यत इत्यनपरः' इति । तथाच श्रुतौ 'अनपरः' इति पदमेव नास्ति । कथमहो मूले न पठितं पदं भाष्यकृद् व्याख्यायात्?

अत्र द्वयी गतिः । अत्रानन्वितमपि, प्रमाणतयोद्धृतायामात्मसंहितायां मध्ये तदपि पदं विवृतमित्य-वर्जनीयसन्निधितया उज्जहार भाष्यकार इति । अथवा पदपाठान्तरविवक्षयेदमुदितमिति । अनयोः कतरः साधीयान्?

नैकोऽपि । तर्हि किं वास्तवम् ? अस्योत्तरं ददौ हृषीकेशतीर्थीयः पाठः । अयमिह प्रतनो भाष्यपाठः–

'अपूर्वः कारणाभावान्नाशाभावादनन्तकः ।
'पराधीनस्थित्यभावादनन्तर उदाहृतः' इति ॥

तथाचानन्तरशब्दस्यैवापूर्वमर्थद्वयं कथयतीदं वचनम्, नानपरशब्दस्येत्यतिसुन्दरम् ॥ ❋ ॥

अपरं चेदं ब्र.सू.भाष्य एव पाठान्तरम् । तथाहि– 'भेदान्नेति चेदेकस्यामपि' (३.३.२) इति सूत्रे प्रचलितो भाष्यपाठः–'एकस्यामपि शाखायाम् 'आत्मेत्येवोपासीत'(बृ.उ.३.५.१.), 'कं ब्रह्म खं ब्रह्म' (छं.४.३.१.) इत्यादि भेददर्शनात्' इति ॥

अहो विस्मयावहमिदम्, यदेकस्यामपि शाखायामिति प्रत्यज्ञायि । दृष्टान्तत्वेन शाखाद्वयगतं वचनद्वयमुदाहारि । 'आत्मेत्येव' इति यजुःशाखागतं बृहदारण्यकोपनिषदो वचनम् । 'कं ब्रह्म' इत्यादि सामशाखागतं छन्दोगोपनिषदः । सेयमसङ्गततायाः परा काष्ठा । परे तु परिहसेयुरेव कम्पितकूर्चाः, झाटितजूटाः अहो नवीनमाध्वानां श्रुतिज्ञानदारिद्र्यमिति ॥

कस्तर्हि साधुर्भाष्यपाठः? दृश्यतां हृ.ती.पाठः–

'एकस्यामपि शाखायाम्– 'आत्मेत्येवोपासीत, ॐ खं ब्रह्म' इत्यादिभेददर्शनात्' इति । इदानीं युक्तमेकशाखागतत्वम् । बृहदारण्यकगतं हि वचनद्वयमपि 'आत्मेत्येवोपासीतेति, ओं खं ब्रह्म खं पुराणं वायुरं खम्' इति (७.१.२.) च ॥

एतादृशा बहवः अशुद्धपाठा एव सम्प्रति निर्लज्जं विजृम्भन्ते । यदि हृषीकेशतीर्थीयपाठं नालप्स्यामहि हन्त वञ्चिता एव चिरमभविष्याम शुद्धपाठात् ॥

एवं पण्डिताचार्यव्याख्यानं नोपालप्स्यामहि नूनमवञ्चिष्यामहि भाष्यवचनानां वेदमन्त्राणां चापूर्वार्थ-लाभात् । नूनमधमर्णा वयम् । अनर्घोऽयमनुग्रहोऽस्मासु अनयोर्भगवत्पादविनेयतल्लजयोः ॥

## ५६४ आहो ५६२?

भाष्ये तत्रतत्र पाठव्यत्ययो न केवलम् । सूत्रेष्वपि । तथाहि– परभाष्येष्वपि केनाप्यपठिते द्वे सूत्रे अधिके पठ्येते प्र.पाठे– 'युक्तेश्च'(२.३.१९) इति, 'स्मरणाच्च' (३.१.२३) इति । तेन प्र.पाठे संहत्य ५६४ सूत्राणि । प्राचीनपाठे परं ५६२ सूत्राणि । प्र.पाठे ये ते द्वे सूत्रे, भाष्यवाक्ये एव ते प्रा.पाठे । हृषीकेशतीर्थोऽपि ते उभे अपि सूत्रत्वेन न पपाठ । किन्तु भाष्यत्वेन । तथैव पण्डिताचार्योऽपि ॥

तथाहि, द्वितीयस्य तृतीये ज्ञाधिकरणे तत्वप्रदीपः– 'अविनष्टा एवोत्पद्यन्त इति विरुद्धमिति न मन्तव्यमित्याह– युक्तेश्चेति । तामेव युक्तिं प्रकटयत्युत्तरभाष्येण' इति । तेन 'युक्तेश्च' इत्येतत् पूर्वभाष्यमिति स्फुटम् । अन्यथा 'उत्तरभाष्येण' इति वृथा नावक्ष्यदेव ॥

प्रायस्तदानीमेव शिष्येषु विवादः समजनि– 'युक्तेश्च' इति भाष्यवाक्यमेवेत्येके । स्यात् सूत्रमपीत्यपरे । आचार्यादधिगतसूत्रपाठः पण्डिताचार्यः विवादपरिजिहीर्षया स्वनिर्धारं प्रकटयामास– 'युक्तेश्चेति स्वपदं वर्णयति युज्यते चेत्युत्तरभाष्येण' इति ॥ ✻ ॥

तथा तृतीयस्य प्रथमे पादे– 'तृतीये शब्दावरोधः संशोकजस्य' (३.१.२२) इति द्वाविंशात् सूत्रात् परं प्र.पाठे– 'स्मरणाच्च' इत्येकं सूत्रं पठ्यते । प्रा.पाठे तु इदमपि भाष्यवाक्यम्– 'तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिस्मरणाच्च' इति भाष्यशेषत्वेन पपाठ हृ.तीर्थः । एवं प्रायः सूत्रं पठित्वा ततस्तद्भाष्यवाक्यं व्याख्याति पण्डिताचार्यः । नात्र सूत्रं पपाठ । तेन तन्मतेऽपि नेदं सूत्रमिति तर्क्येत । हृ.तीर्थसंवादेन च नेति निश्चीयेत । एतावेव न केवलम् । उपलब्धेषु भाष्येषु नैकोऽपि भाष्यकारोऽनयोः सूत्रत्वं मन्यत इति चोक्तम् । तस्मात् ५६२सङ्ख्यान्येव सूत्राणीति स्थितम् ॥

## किमपि सङ्ख्याकुतूहलम्

अस्यां सङ्ख्यायां किमपि साङ्ख्यं कौतुकमिव भाति । तिस्रोऽपि सङ्ख्याः सङ्कलितास्त्रयोदश भवन्ति (५+६+२=१३) । ते अपि पुनः सङ्कलिते चतुष्ट्वमापादयतः (१+३=४) । तेन चतुर्मूर्तिर्भगवान् चतुरध्यायीप्रतिपाद्य इति बोधयतीव । विभजने पुनः १ ३ भवन्ति । तदपि साकूतमिव–चतुर्षु यो व्यवहारे न दृश्यते स मोक्षप्रदो वासुदेव एकः । अन्ये त्रयः व्यवहारगोचरा जाग्रदादिप्रवर्तका अनिरुद्धाद्या एको वर्ग इति विभज्य दर्शयतीव ॥

अथासङ्कलिता विभक्ताः पञ्च षड् द्वे (५-६-२) । अत्राऽसां सङ्कलनेन व्यवकलनेन गुणनेन विभागेन बहूनि भगवद्रूपाणि बोधयन्तीव । तथाहि–

१. ६–५=१. (मूलरूपः परमात्मा ।)

२. २. (आत्मान्तरात्मेति, अन्तर्यामी सर्वगत इति, अणोरणीयान् महतो महीयानिति द्विरूपः ।)

३. ५–२=३. (जाग्रदाद्यवस्थात्रयप्रणेतृतया सृष्टिस्थितिसंहारहेतुतया च त्रिरूपः ।)

४. ६–२=४. (चतुर्मूर्तिर्भगवान् ।)

५. ५. (पञ्चात्मकोऽसौ नारायणेन सह ।)

६. ६. (स एव वेदव्यासेन सह षडात्मा षड्तुनियामकः ।)

७. ५+२=७. (सप्तधातुगतः, सप्तलोकगतः, सप्तस्वरगतः, सप्तच्छन्दोगतश्च सप्तात्मा ।)

८. ६+२=८. (नारायणाष्टाक्षरप्रतिपाद्यो विश्वाद्यात्माऽष्टरूपः । सृष्ट्याद्यष्टकर्ता च ।)

९. ५+६–२=९. (विमलादिनवशक्तिरूपः । भिन्ननवशक्तिगतश्च ।)

१०. ५x२=१०. (मत्स्यादिदशरूपः ।)

११. ५+६=११. (एकादशरुद्रगतः । लक्ष्मीस्वरूपकालमायाद्येकादशतत्वगतः । तन्नामकैकादश-स्वरूपः ।)

१२. ६x२=१२. (केशवादिद्वादशरूपः । सङ्कर्षणादिद्वादशरूपश्च)

१३. ५x२+६=१६. (षोडशकलः पुरुषः ।)

१४. ५x६–६=२४. (गायत्र्यक्षरगतश्चतुर्विंशतिरूपः ।)

१५. ५x६–५=२५. (तन्त्रसारोक्तपञ्चविंशतितत्वगतः ।)

१६. ५x६+२=३२. (द्वात्रिंशत्तत्वगतोऽनुष्टुब्गतश्च ।)

१७. ५x६+६=३६. (षट्त्रिंशत्तत्वगतो बृहतीगतश्च ।)

१८. (५x६)+(५+६)+(५x२)=५१. (एकपञ्चाशद्वर्णगतः)

१९. ५x६x२=६०. (षष्टिसंवत्सरगतः ।)

२०. (५x६x२)+(५x६)+(५x२)=१००. (कलशगतशतरूपः ।)

२१. (५x६x२)+(५x६)+(५x२)+(६+२)=१०८. (अष्टोत्तरशतरूपः ।)

२२. ६x५x२x६=३६० (अस्थिगतरूपाणि ।)

२३. (५x६x२)+(५x६)+(५x२)x(५x२)=१०००. (विश्वादिसहस्रात्मा ।)

२४. (५x६x२x६)x(५x२)x(५x२)x२=७२०००(द्वासप्ततिसहस्रनाडीगतः ।)

एवमादि यथासम्भवमूह्यम् । दिङ्मात्रमिदम् । एवमपूर्वा सूत्रसङ्ख्या ५६२ इति । अपूर्वमिदं साङ्ख्यम् । अपूर्वं चेदं सङ्ख्यावतां चेतोहरणम् ॥

## पठितेष्वपि सूत्रेषु पाठभेदः

| प्रचलितपाठः | प्राचीनपाठः |
|---|---|
| १. क्षत्रियत्वावगतेश्चोत्तरत्र...... | क्षत्रियत्वगतेश्चोत्तरत्र.....(१.३.३५) |
| २. एतेन शिष्टा अपरिग्रहा अपि.. | एतेन शिष्टापरिग्रहा अपि..(२.१.१३) |
| ३. दर्शनात् | दर्शनात्तु (३.२.३३) |
| ४. अन्यथात्वं च शब्दात्... | अन्यथात्वं शब्दात्.....(३.३.७) |
| ५. प्रदानवदेव हि तदुक्तम् | प्रदानवदेव तदुक्तम् (३.३.४४) |
| ६. शब्दश्चातोऽकामचारे | शब्दश्चातोऽकामकारे (३.४.३१) |
| ७. आ प्रायणात्... | आ प्रयाणात्....(४.१.१२) |
| ८. अतश्चायनेऽपि हि दक्षिणे | अतश्चायनेऽपि दक्षिणे (४.२.२१) |

अपरं चेदं विवादपदं सूत्रम्–

| | |
|---|---|
| ९. योगिनः प्रति स्मर्यैते... | योगिनः प्रति स्मर्यते... (४.२.२२) |

(अस्मिन् सूत्रे **'योगिनः प्रति स्मर्यते'** इत्येव ह.ती.पाठः । परभाष्येष्वपि तथा । अथापि **'ब्रह्मचन्द्रगती स्मर्येते'** इति भाष्यसंवादात् स्मर्यैते इत्येव स्यादपि भाष्याभिमतः सूत्रपाठ इति भाति । प्रायोऽनिर्णय एव शरणम् ।)

**'दर्शनात्तु'** इत्यत्र **'सामान्यात्तु'** इति परभाष्येषु पाठः । ऋते च तस्मादेकस्मात् सूत्रात् अन्यत्र सर्वत्रापि प्राचीनपाठेनैककण्ठ्यम् । एवमष्टनवेषु स्थलेषु पाठद्वैविध्यं दृश्यते ॥ ✻ ॥

न केवलं सूत्रेषु पाठव्यत्ययः । अधिकरणेषु सङ्ख्याव्यत्ययश्च । तथाहि प्र.पाठरीत्या चतुर्ष्वध्यायेषु संहत्याधिकरणानि– २२३ । प्रा.पाठानुसारेण–२०३ ।

तथाहि प्रतिपादमधिकरणानि–

| | **प्र.पाठः** | **प्रा.पाठः** | |
|---|---|---|---|
| १. | १२ | ११ | (१.१.) |
| २. | ७ | ७ | (१.२.) |
| ३. | १४ | १४ | (१.३.) |
| ४. | ७ | ६ | (१.४.) |
| ५. | ११ | ११ | (२.१.) |
| ६. | १२ | १२ | (२.२.) |
| ७. | १९ | १८ | (२.३.) |
| ८. | १३ | १३ | (२.४.) |
| ९. | २० | ११ | (३.१.) |
| १०. | २० | १८ | (३.२.) |
| ११. | ४२ | ३५ | (३.३.) |
| १२. | ११ | १० | (३.४.) |
| १३. | ८ | ११ | (४.१.) |
| १४. | १० | ११ | (४.२.) |
| १५. | ६ | ६ | (४.३.) |
| १६. | ११ | ९ | (४.४.) |
| | २२३ | २०३ | |

खल्वन्विष्याधिकरणसाङ्कर्यम् । अनियतान्यधिकरणानि भवन्ति । परभाष्येष्वप्यन्यथाऽन्यथाऽधिकरणानि दृश्यन्ते । अस्मन्मतेऽपि प्राचीनपाठे द्वितीयस्य प्रथमपादे भाष्यरीत्या 'सर्वधर्मोपपत्तेश्च' इति नाधिकरणान्तरम् । अनुव्याख्यानानुसारेण त्वधिकरणान्तरम् । तदलमधिकरणानां साङ्कर्यचिन्तनया ॥ ✽ ॥

इदमिह सप्रश्रयं विज्ञापनीयम् । न मे कोऽपि मठीय आवेशः । नापि कुत्रचिद् दुरभिमानः । न मे क्वचिद् रागः क्वचिद् द्वेष इति रागद्वेषकलिलं मनः । नापि घट्टादुपरेष्वपरागः । अपरेष्वनुरागः । तदेतत् सर्वमध्यात्मचिन्तकेषु प्रायः सर्वानुगतम् । दोषैकदृशां प्रकृतिसहजाः स्वभावा एते । । नाहं दोषैकदृक् । किन्तु दोषज्ञः संशोधकः । आचार्यमध्वस्य यथार्थविज्ञाने भरो मम । शुद्धपाठः, शुद्धोऽर्थ इतीयदेव मे घोषवाक्यम् । ततः सर्वेषां जयतीर्थव्यासतीर्थराघवेन्द्रतीर्थप्रभृतीनां महतां पूर्वाचार्याणां क्षमामभ्यर्थ्य यत् प्राचीनग्रन्थसंशोधनेनापूर्वमधिगतं तत् सर्वं निर्भीतमिह निवेदितम् । दुराग्रहग्रस्ताः सत्यनिर्णये निरादरा नात्र नासां न्यस्यन्तु इति निवेद्योपरम्यते ॥

तस्मादत्र सर्वत्रापि ह.ती.लिखितः पाठ एव समादृतः । ऐकपाठ्याच्च पण्डिताचार्यस्य । लब्धेऽपि प्रतनतमे मूलपाठे पाश्चात्यपाठानुसरणं न प्रज्ञावन्त आद्रियन्ते । नापि विमर्शकाः । मा नो विपश्चितो विमर्शका अपहसिषुरित्यादरणीयः प्रतनः पाठ इति सर्वं चतुरश्रम् ॥ ✽ ॥

## आशीर्वादं प्रशास्महे

स्मर्तव्या इमे येऽस्मिन् महाकर्मणि नः सहाकुर्वन् रत्नानीव नव । साभिमानमभिनन्दाम एतान् ।

१. गणकयन्त्रे लिप्यङ्कनकर्मणि श्रीमध्वसेवेत्यनिशं निस्पृहतया कृतपरिश्रमः कृती श्रीलः कड्डी बदरीनारायणाचार्यः ।

२. प्रामादिकस्य स्खलनस्य निरसनकर्मणि दत्तावधानः प्रकटनात् पूर्वमेव कृतपाठप्रवचनः श्रीलः पर्कळ वेङ्कटेशबायरिनामा विपश्चित् ।

३. एवं प्रकटनात् पूर्वमेव संशोधनपूर्वकं कृतसमग्रपारायणः पण्डितः श्रीमान् मादनूरु नारायणः ।

मुद्राराक्षसविद्रावणकर्मणि यथाशक्ति दत्तहस्तावलम्बाः पुनरेते त्रयः । अत्रय इवानसूयाभूषिताः–

४. विद्वान् श्रीमान् तोटन्तिल्लायो विजयसिंहः ।

५. ,, ,, कुत्पाडि कृष्णराजभट्टः ।

६. ,, ,, बि.एस्. हयवदनः ।

७. मुखपत्रविन्यासकर्मणि दर्शितकौशलश्चित्रकलानिपुणः श्रीलः के. एम्. शेषगिरिः ।

८. मुद्रणकर्मणि सश्रद्धं कृतपरिश्रमः 'अनिरुद्ध क्रियेषन्'व्यवस्थापकः श्रीलः श्रीकान्त-कल्याणी ।

९. अन्ते पुनरेतेषु नवरत्नेषु चरम ऋषिकदेश (Russia)वासी, मूलतः उक्रयीन (Ukraine) प्रदेशवासी, अन्ताराष्ट्रीयरङ्गेषु प्रथितश्चित्रकारः प्रियमाध्वसिद्धान्तः श्रील उज्ज्वल-नीलमणिः । योऽसावेतत्प्रकाशनार्थं मुखपत्रे साङ्केतिकं वर्णचित्रमेकम्, अन्तःपुटेषु कृष्णश्वेतवर्णमयानि चत्वारि चतुररचनानि चित्राणि विरचय्य प्रददौ ।

सर्वेषामेतेषामाशीर्वादपरम्परां प्रशास्महे । भगवान् बादरायणमुनिः, भगवत्पादो मध्वमुनिश्च सर्वेषामेतेषां सर्वाभीष्टदातारौ भूयास्तामिति शम् ॥ ✻ ॥



रजतपीठपुरम्
दुर्मुखसंवत्
आश्विन-शुक्ल-दशमी, श्रीमध्वजयन्ती
(११.१०.२०१६)

**–डा ॥ बन्नञ्जे गोविन्दाचार्यः**

## प्रथममधिकरणम्
### (जिज्ञासाधिकरणम्)
### (१.१.१.)

ओ३म् ॥ नारायणं गुणैः सर्वैरुदीर्ण्णं दोषवर्ज्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्ण्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्त्थितो भगवान् नारायणो व्यासत्वेनावततार। अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्त्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्द्धा व्यभजत्। चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च। तदर्त्थनिर्ण्णयाय ब्रह्मसूत्राणि चकार ॥

तच्चोक्तं स्कान्दे–

'नारायणाद् विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
'किञ्चित् तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥

'गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
'सङ्कीर्ण्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥

'शरण्यं शरणं जग्मुर्न्नारायणमनामयम् ।
'तैर्विज्ञापितकार्य्यस्तु भगवान् पुरुषोत्तमः ॥

'अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
'उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥

'चतुर्द्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः ।
'शतधा चैकधा चैव तथैव च सहस्रधा ॥

'कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥

'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।
'अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

'निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
'यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥

'सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।
'इति वेदविदः प्राहुः शब्दतत्वार्थवेदिनः ॥

'सूत्रेषु येषु सर्वेऽपि निर्ण्णयाः समुदीरिताः ।
'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्ण्णयः ॥

'एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
'ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः' इत्यादि ॥ ✻ ॥

**ओ३म् ॥ अथातो ब्रह्मजिज्ञासा ॥ १.१.१. ॥**

अथशब्दो मङ्गलार्थोऽधिकारानन्तर्य्यार्थश्च । अतःशब्दो हेत्वर्थः ।

उक्तं च गारुडे–

‘अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
‘प्रारभन्ते नियत्यैव तत् किमत्र नियामकम् ॥

‘कश्चार्थस्तु तयोर्विद्वन् कथमुत्तमता तयोः ।
‘एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्वतः ।
‘एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ॥

‘आनन्तर्य्येऽधिकारस्य मङ्गलार्थे तथैव च ।
‘अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ॥

‘परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ।
‘स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः ॥

‘सिसृक्षोः परमाद् विष्णोः प्रथमं द्वौ विनिस्सृतौ ।
‘ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।
‘तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥

‘अकारः सर्ववागात्मा परब्रह्माभिधायकः ।
‘तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ।
‘अतश्च पूर्वमुच्चार्य्याः सर्व एते सतां मताः ॥

‘अथातश्शब्दयोरेवं वीर्य्यमाज्ञाय तत्वतः ।
‘सूत्रेषु तु महाप्राज्ञास्तावेवाऽदौ प्रयुञ्जते’ इति ॥

अधिकारश्चोक्तो भागवततन्त्रे–

‘मन्दमद्ध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।
‘तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ॥

‘मद्ध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।
‘इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ॥

‘भक्तिमान् परमे विष्णौ यस्त्वद्ध्ययनवान् नरः ।
‘अधमः शमादिसंयुक्तो मद्ध्यमः स उदाहृतः ॥

‘आब्रह्मस्तम्बपर्य्यन्तमसारं चाप्यनित्यकम् ।
‘विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ।
‘स उत्तमोऽधिकारी स्यात् सन्न्यस्ताखिलकर्म्मवान्’ इति ॥

‘अद्ध्ययनमात्रवतः’, ‘नाविशेषात्’ इति चोपरि ॥

‘शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्’,
‘परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायात्–’,
‘यमेवैष वृणुते तेन लभ्यः–’,
‘यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरौ ।
‘तस्यैते कथिता ह्यर्त्थाः प्रकाशन्ते महात्मनः’ इत्यादिश्रुतिश्च ॥

व्योमसंहितायां च–

‘अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ।
‘स्त्रीशूद्रब्रह्मबन्धूनां तत्र ज्ञानेऽधिकारिता ॥

‘एकदेशे परोक्ते तु नच ग्रन्थपुरस्सरे ।
‘त्रैवर्ण्णिकानां वेदोक्ते सम्यग् भक्तिमतां हरौ ॥

‘आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।
‘यथोर्वशी यमी चैव शच्याद्याश्च तथा पराः’ इति ॥

यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्त्तव्या ॥

‘यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
‘वाक्यं वेति सतां नीतिः सावकाशे न तद् भवेत्’
इति ब्रह्मसंहितायाम् ॥

‘तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते’,
‘प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः’,
‘यमेवैष वृणुते तेन लभ्यः–’,
‘आत्मा वा अरे द्रष्टव्यः–’ इत्यादिश्रुतिस्मृतिभ्यः ॥

‘कर्म्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।
‘मद्ध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ॥

'प्रसादात् त्वधमाद् विष्णोः स्वर्ग्गलोकः प्रकीर्त्तितः ।
'मद्ध्यमाज्ज्ञनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥

'श्रवणं मननं चैव द्ध्यानं भक्तिस्तथैव च ।
'साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।
'न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन' इति नारदीये ॥ * ॥

ब्रह्मशब्दश्च विष्णावेव–

'यमन्तः समुद्रे कवयोऽवयन्ति–' इत्याद्युक्त्वा, 'तदेव ब्रह्म परमं कवीनाम्' इति हि श्रुतिः । 'तन्नो विष्णुः–' इति वचनाद् विष्णुरेव हि तत्रोच्यते ॥

नचेतरशब्दात् तत्प्राप्तिः–

'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।
'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'
इति भाल्लवेयश्रुतेः ॥

'यो देवानां नामधा एक एव' इति चैवशब्दान्नचान्येषां सर्वनामता । 'अजस्य नाभौ–' इति तस्य हि लिङ्गम् । न च प्रसिद्धात्र्थं विनाऽन्यो युज्यते ॥

'अजस्य नाभाविति यस्य नाभेरभूच्छ्रुतेः पुष्करं लोकसारम् ।
'तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्त्रे'
इति स्कान्दे ॥

'परो दिवा पर एना पृथिव्या–' इतिं च समाख्याश्रुतौ, 'यं कामये तन्तमुग्रं कृणोमि–' इत्युक्त्वा, 'मम योनिरप्स्वान्तः समुद्रे' इत्याह ॥

उग्रो रुद्रः । समुद्रेऽन्तर्न्नारायणः । प्रसिद्धत्वात् सूचितत्वाच्चार्थस्य । न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एतमेव वदन्ति–

‘वेदे रामायणे चैव पुराणे भारते तथा ।
‘आदावन्ते च मद्ध्ये च विष्णुः सर्वत्र गीयते’ इति हरिवंशेषु ॥

न चेतरग्रन्थैर्विरोधः–

‘एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
‘त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥

‘अतत्थ्यानि वितत्थ्यानि दर्शयस्व महाभुज ।
‘प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु’ इति वाराहवचनात् ॥

शैवे च स्कान्दे–

‘श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।
‘तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुखः’ इति ॥

ब्राह्मे च ब्रह्मवैवर्त्ते–

‘नाहं नच शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।
‘बालः क्रीडनकैर्य्यद्वत् क्रीडतेऽस्माभिरच्युतः’ इति ॥

न च वैष्णवेषु तथा । तच्च ‘एष मोहम्–’ इत्युक्तम् ॥ * ॥

॥ इति प्रथममधिकरणम् ॥

—०—

## द्वितीयमधिकरणम्

(जन्माद्यधिकरणम्)

(१.१.२.)

ब्रह्मणो लक्षणमाह–

॥ जन्माद्यस्य यतः ॥ १.१.२. ॥

सृष्टि-स्थिति-संहार-नियमन-ज्ञानाज्ञान-बन्ध-मोक्षा यतः–

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
'बन्धमोक्षौ च पुरुषाद् यस्मात् स हरिरेकराट्' इति स्कान्दे ॥

'यतो वा इमानि भूतानि जायन्ते' ।
'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' ।
'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' ।
'परो मात्रया तन्वा वृधान नँ ते महित्वमन्वश्नुवन्ति' ।
'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' ।
'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा'
इत्यादि च ॥ * ॥

॥ इति द्वितीयमधिकरणम् ॥

—०—

## तृतीयमधिकरणम्

### (शास्त्रयोनित्वाधिकरणम्)

### (१.१.३.)

अनुमानतोऽन्ये न कल्पनीयाः–

**॥ शास्त्रयोनित्वात् ॥ १.१.३. ॥**

'नावेदविन्मनुते तं बृहन्तम्–', 'औपनिषदः पुरुषः' इत्यादिश्रुतिभ्यः ॥
नचानुमानस्य नियतप्रामाण्यम्–

'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
'निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥

'श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
'प्रमाणपदवीं गच्छेन्नात्र कार्य्या विचारणा ॥

'पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
'इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्ज्जयेत्' इत्यादि कौर्म्मे ॥

शक्यत्वाच्चानुमानां सर्वत्र–

'सर्वत्र शक्यते कर्त्तुमागमं हि विनाऽनुमा ।
'तस्मान्न सा शक्तिमती विनाऽगममुदीक्षितुम्' इति वाराहे ॥

'रेतो धातुर्वटकणिका घृतधूमाधिवासनम् ।
'जातिस्मृतिरयस्कान्तः सूर्य्यकान्तोऽम्बुभक्षणम् ॥

‘प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।

‘मृते कर्म्मनिवृत्तिश्च प्रमाणमिति निश्चयः’ इति मोक्षधर्म्मवचनान्न नास्तिक्यवादो युज्यते ॥

दर्शनाच्च तपआदिफलस्य ॥

‘ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।

‘मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

‘यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्त्तितम् ।

‘अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्’ इति स्कान्दे ॥

‘साख्यं योगः पाशुपतं वेदारण्यकमेव च’ इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्म्मेष्वपि ॥

शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ॥ * ॥

॥ इति तृतीयमधिकरणम् ॥

—o—

## चतुर्थमधिकरणम्

### (समन्वयाधिकरणम्)

### (१.१.४.)

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम् । कुतः?–

**॥ तत्तु समन्वयात् ॥ १.१.४. ॥**

अन्वय उपपत्त्यादिलिङ्गम् । उक्तं च बृहत्संहितायाम्–

‘उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
‘अर्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्ण्णये’ इति ॥

उपक्रमादितात्पर्य्यलिङ्गैः सम्यङ् निरूप्यमाणे तदेव शास्त्रगम्यम्–

‘मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम् ।
‘इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन’ इति भागवते ॥ * ॥

**॥ इति चतुर्थमधिकरणम् ॥**

—०—

## पञ्चममधिकरणम्

(ईक्षत्यधिकरणम्)

(१.१.५-११.)

ननु 'यतो वाचो निवर्त्तन्ते–', 'अशब्दमस्पर्शम्–', 'अवचनेनैव प्रोवाच', 'यद् वाचाऽनभ्युदितम्–', 'यच्छ्रोत्रेण न शृणोति–' इत्यादिभिर्न्न तच्छब्दगोचरम् । नेत्याह–

॥ ईक्षतेर्न्नाशब्दम् ॥ १.१.५. ॥

'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते', 'आत्मन्येवाऽत्मानं पश्येत्', 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादिवचनैरीक्षणीयत्वाद् वाच्यमेव ॥
औपनिषदत्वान्नावचनेनेक्षणम्–
'सर्वे वेदा यत् पदमामनन्ति–', 'वेदैश्च सर्वैरहमेव वेद्यः–' इत्यादिभ्यश्च ॥

अवाच्यत्वादिकं त्वप्रसिद्धत्वात्–

'न तदीदृगिति ज्ञेयं न वाच्यं नच तर्क्यते ।
'पश्यन्तोऽपि न जानन्ति मेरो रूपं विपश्चितः' इतिवत् ॥

'अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः ।
'अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' इति गारुडे ॥

न चाशब्दत्वमितरसिद्धम् ॥ * ॥

## ॥ गौणश्चेन्नाऽत्मशब्दात् ॥ १.१.६. ॥

न च गौण आत्मा दृश्यो वाच्यश्च, न निर्गुण इति युक्तम् । आत्मशब्दात्—

'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
'हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥

'एतदन्यस्वभावो यः सोऽनात्मेति सतां मतः ।
'अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते' इति वामने ॥

'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यस्स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्चाथ ह योऽनीदृशः सोऽनात्मा' इति तलवकार-ब्राह्मणम् ॥

न च मुख्ये सत्यमुख्यं युज्यते ॥ * ॥

## ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ १.१.७. ॥

न हि गौणात्मनिष्ठस्य मोक्षः ॥

'यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्दोघे गहने प्रविष्टः ।
'स विश्वकृत् स हि सर्वस्य कर्त्ता तस्य लोकः स उ लोक एव' इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते ॥

'अयमात्मा ब्रह्म' ।

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' ।
'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्' ॥

'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
'जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥

'इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते ।
'तस्याऽत्मनो निर्ग्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥

'सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।
'परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः' इति पाद्मे ॥ * ॥

## ॥ हेयत्वावचनाच्च ॥ १.१.८. ॥

'तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथामृतस्यैष सेतुः' इत्यन्येषां हेयत्व-वचनादस्याहेयत्ववचनान्न गौण आत्मा ॥ * ॥

## ॥ स्वाप्ययात् ॥ १.१.९. ॥

'पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते' ।
'स आत्मन आत्मानमुद्धृत्याऽत्मन्येव विलाययत्यथाऽत्मैव भवति' ।
'स देवो बहुधा भूत्वा निर्ग्गुणः पुरुषोत्तमः ।
'एकीभूय पुनः शेते निर्द्दोषो हरिरादिकृत्' इत्यादि स्वस्यैव स्वस्मिन् अप्यय-वचनात् । न हि निर्द्दोषस्य गौणात्मनि लयः ॥ * ॥

नच कासुचिच्छाखास्वन्यथोच्यते–

## ॥ गतिसामान्यात् ॥ १.१.१०. ॥

'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव ।
'प्रकाशयन्ते न विरोधः कुतश्चिद् वेदेषु सर्वेषु तथेतिहासे' इति पैङ्गिश्रुतेः गतेज्र्ज्ञानस्य साम्यमेव ॥ * ॥

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
'कर्म्माद्ध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्ग्गुणश्च' इति–

**॥ श्रुतत्वाच्च ॥ १.१.११. ॥**

नह्यशब्दः श्रूयते । नचाप्रसिद्धं कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणायुक्तेः ॥ ॥ * ॥

**॥ इति पञ्चममधिकरणम् ॥**

—o—

## षष्ठमधिकरणम्

(आनन्दमयाधिकरणम्)

(१.१.१२-१९.)

तमेव समन्वयं प्रकटयति 'आनन्दमयोऽभ्यासात्' इत्यादिना समस्तेनाद्ध्यायेन, प्रायेण, अन्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे ॥

नान्यथा तदद्दृष्टेः ॥

ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तम् । तच्च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विनाऽवयवमात्रस्य ज्ञेयतेत्यत आह–

**॥ आनन्दमयोऽभ्यासात् ॥ १.१.१२. ॥**

आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा । ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः । शतानन्दनाम्ना च । अष्टमूर्त्तित्वात् सूर्य्ये प्रोक्तत्वाच्च रुद्रस्य । एवमन्येषाम् ॥

'मम योनिर्म्महद् ब्रह्म–' इति ब्रह्मशब्दाद् बहुभावाच्च प्रकृतेः । 'जातिजीव-कमलासनशब्दराशिषु' इति ब्रह्मशब्दादेव सर्वजीवानाम् । अन्नमयत्वादेश्च ॥

तथाऽपि न त आनन्दमयशब्देनोच्यन्ते । किन्तु विष्णुरेव–

'तदेव ब्रह्म परमं कवीनाम्' । 'एतमेव ब्रह्मेत्याचक्षते' ।

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
'असम्पूर्ण्णाः परे यस्मादुपचारेण वा भवेत्' ॥

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'।

'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः' इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥ * ॥

॥ विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ १.१.१३. ॥

विकारात्मकत्वात् तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्छब्दः । नतु परमात्मन इति मा भूत् । प्रचुरानन्दत्वाद्ध्यानन्दमयः । नतु तद्विकारत्वात् ॥

अन्नादीनां च प्राचुर्य्यमेव । 'अद्यतेऽत्ति च–' इति व्याख्यानात् ॥

तत्प्राचुर्य्यं च युज्यते ॥

उपजीव्यत्वमेवाद्यत्वम् । 'स वा एषः–' इत्यन्यप्रारम्भात् ॥

'येऽन्नं ब्रह्मोपासते' इत्यादिब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वमविरोधश्च ॥

नच पृथक् कल्पना युक्ता ॥

स्वरूपे च युज्यते, प्रचुरप्रकाशो रविरितिवत् ॥ * ॥

॥ तद्धेतुव्यपदेशाच्च ॥ १.१.१४. ॥

'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इति ॥ * ॥

॥ मान्त्रवर्णिकमेव च गीयते ॥ १.१.१५. ॥

'ब्रह्मविदाप्नोति परम्' इति सूत्रयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णलक्षितमेव ब्रह्म शब्दानुसन्धानाद् गीयते ॥

न चावयवत्वविरोधः–

'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ॥

'शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।
'प्रद्युम्नश्चानिरुद्धश्च सन्देहो वासुदेवकः ।
'नारायणोऽथ सन्देहो वासुदेवः शिरोऽपि वा ॥

'पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ।
'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ॥

'ऐश्वर्य्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने ।
'अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा' इति बृहत्संहितायाम् ॥

रसशब्देन विशेषणात् तत्तत्सारभूतं चिन्मात्रमेवोच्यते ॥
इदमिति च दृश्यमानसन्निहितत्वात् ॥

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
'प्रोच्यते भगवान् विष्णुरैश्वर्य्यात् पुरुषोत्तमः' इति ब्रह्माण्डे ॥ * ॥

न चोक्तप्राप्त्या विरिञ्चादिरुच्यते–

**॥ नेतरोऽनुपपत्तेः ॥ १.१.१६. ॥**

न ह्यन्यज्ज्ञानान्मोक्ष उपपद्यते–

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते'
इति ह्युक्तम् ॥ * ॥

**॥ भेदव्यपदेशाच्च ॥ १.१.१७. ॥**

'ते ये शतं प्रजापतेरानन्दाः–', 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते', 'स यश्चायं पुरुषे–' इत्यादिभेदव्यपदेशात् ॥

न च 'तत् त्वमसि','अहं ब्रह्मास्मि' इत्यादिविरोधः ।

'नामानि सर्वाणि यमाविशन्ति' इति तत्तच्छब्दवाच्यत्वोक्तेः ॥

'इदं हि विश्वं भगवानिवेतरः' ।

'असर्वः सर्व इत्यपि' ।

'विद्याऽऽत्मनि भिदाबोधः' ।

'भेददृष्ट्याऽभिमानेन–' ।

'अन्यमीशमस्य महिमानमिति वीतशोकः' ।

'असर्वः सर्व इवाऽत्मैव सन्ननात्मेव प्रत्यङ् परागिवैक ईयते
बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म' ।

'सर्वान्तर्य्यामको विष्णुः सर्वनाम्नाऽभिधीयते ।
'एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ।'

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यादेश्च ॥

उक्ता च प्राप्तिः ॥

'ब्रह्मैव सन्–' इत्यपि जीव एव ब्रह्मशब्दः ॥

उपपद्यते च विरोधे । प्रमादात्मकत्वाच्च बन्धस्य विमुक्तत्वं च युज्यते ॥

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवते ॥ * ॥

न च तत्तदनुमानविरोधः–

**॥ कामाच्च नानुमानापेक्षा ॥ १.१.१८. ॥**

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्वे पृथगनुमानमपेक्ष्यते ॥

उक्तं च स्कान्दे–

'यथाकामाऽनुमा यस्मात् तस्मात् साऽनपगा श्रुतेः ।
'पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति ॥

'नैषा तर्केण मतिराऽऽपनेया–' इति च ॥ * ॥

**॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १.१.१९. ॥**

अस्य जीवस्य । युक्तिसमुच्चये चशब्दः ॥

'सह ब्रह्मणा विपश्चिता', 'अनिलयनेऽभयं प्रतिष्ठां विन्दते', 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यादि ॥ * ॥

इति षष्ठमधिकरणम् ॥

—०—

## सप्तममधिकरणम्

(अन्तरधिकरणम्)

(१.१.२०-२१.)

'अदृश्येऽनात्म्न्ये-' इत्युक्तम् । तच्चादृश्यत्वम्-

'अन्तः प्रविष्टं कर्त्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् ।
सहैव सन्तं न विजानन्ति देवाः' इत्यन्तस्थस्य कस्यचिदुच्यते ।

स च- 'इन्द्रो राजा-', 'सप्त युञ्जन्ति-' इत्यादिभिरन्यः प्रतीयते । तस्मात् स एवाऽनन्दमय इति न मन्तव्यम्-

**॥ अन्तस्तद्धर्म्मोपदेशात् ॥ १.१.२०. ॥**

अन्तः श्रूयमाणो विष्णुरेव-

'समुद्रे मनसा चरन्तम्-', 'समुद्रे अन्तः कवयः-', 'यस्याण्डकोशं शुष्ममाहुः-' इत्यादितद्धर्म्मोपदेशात् ॥

स हि क्षीरसमुद्रशायी । तस्य च वीर्य्यमण्डकोशः-

'सोऽभिद्ध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
'अप एव ससर्ज्जाऽदौ तासु वीर्य्यमवासृजत् ॥

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
'यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
'अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति व्यासस्मृतेः ॥

'अहं तत् तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः ।
पुरुषात् प्रकृतिर्ज्जगदण्डम्–' इति च चतुर्वेदशिखायाम् ॥ ✻ ॥

**॥ भेदव्यपदेशाच्चान्यः ॥ १.१.२१. ॥**

'इन्द्रस्याऽत्मा निहितः पञ्च होता', 'वायोरात्मानं कवयो निचिक्युः', अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्माऽन्वविन्दत्' इत्यादि भेदव्यपदेशात् ॥ ✻ ॥

**॥ इति सप्तममधिकरणम् ॥**

—०—

## अष्टममधिकरणम्

### (आकाशाधिकरणम्)

### (१.१.२२.)

'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इत्याकाशस्याऽनन्दत्वे हेतुरुक्तः, नतु विष्णोरिति न मन्तव्यम्। यतः–

॥ **आकाशस्तल्लिङ्गात्** ॥ १.१.२२. ॥

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यत्र भूताकाशस्य प्राप्तिः। न चासौ युज्यते । किन्तु विष्णुरेव–

'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादितल्लिङ्गात् ॥

'विष्णोर्नु कं वीर्य्याणि प्र वोचं यः पार्थिवानि विममे रजांसि' ।

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' इत्यादिना तस्य हि तल्लिङ्गम् ॥

'अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः ।
'प्रोच्यते विष्णुरेवैकः परेषामुपचारतः' इति च ब्राह्मे ॥

'नामानि सर्वाणि यमाविशन्ति–' इति चोक्तम् ॥ * ॥

॥ इत्यष्टममधिकरणम् ॥

—०—

## नवममधिकरणम्

**(प्राणाधिकरणम्)**

(१.१.२३.)

**॥ अत एव प्राणः ॥ १.१.२३. ॥**

'तद् वै त्वं प्राणो अभवो महान् भोगः प्रजापतेः ।

'भुजः करिष्यमाणो यद् देवान् प्राणयो नव' इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ॥

स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः । अत एव, 'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे' इत्यादितल्लिङ्गादेव ॥ * ॥

॥ इति नवममधिकरणम् ॥

—०—

## दशममधिकरणम्

(ज्योतिर्ग्गायत्र्यधिकरणम्)

(१.१.२४-२७.)

'यो वेद निहितं गुहायाम्' इत्युक्तम् । तच्च गुहानिहितम्–

'वि मे कर्ण्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत् ।

'वि मे मनश्चरति दूरआधीः किंस्विद् वक्ष्यामि किमु नू मनिष्ये' इति जोतिरुक्तम् ॥

तच्च ज्योतिरग्निसूक्तत्वात् प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह–

**॥ ज्योतिश्चरणाभिधानात् ॥ १.१.२४. ॥**

विष्णुरेव ज्योतिः । कर्ण्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान–' इत्यादिना कर्ण्णादिविदूरः ॥ * ॥

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्प्पणनिगदात् तथाहि दर्शनम् ॥ १.१.२५. ॥**

'अथ यदतः परो दिवो ज्योतिर्द्दीप्यते' इत्युक्तस्य ज्योतिषः, 'गायत्री वा इदं सर्वम्' इति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न । तथा चेतोऽर्प्पणार्त्थं हि निगद्यते ॥

अग्निगायत्र्यादिशब्दार्त्थरूपोऽसाविति चेतोऽर्प्पणार्त्थं हि निगद्यते ॥

तथा हि दर्शनम्– 'गायति च त्रायति च' इत्यादि ॥

'सर्वच्छन्दोऽभिधो ह्येष सर्वदेवाभिधोऽप्यसौ ।
'सर्वलोकाभिधोऽप्येष तेषां तदुपचारतः' इति वामने ॥ ✻ ॥

'तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति–

**॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १.१.२६. ॥**

'सुवर्ण्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम् ।
'अमृतस्य पूर्ण्णां तामु कलां वि चक्षते पादं षड्ढोतुर्न्न किला विवित्से'
इति श्रुतेः पाद इति चैकदेशपरिमितं चतुर्भागबल इतिवद् भिन्नं च ॥

स हि पुरुषसूक्ताभिधेयः–
'यज्ञेन यज्ञमयजन्त–' इति यज्ञशब्दात् । 'यज्ञो विष्णुर्देवता' इति हि श्रुतिः ॥

'तस्मिन् काले महाराज राम एवाभिधीयते ।
'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति च स्कान्दे ॥ ✻ ॥

**॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १.१.२७. ॥**

'त्रिपादस्यामृतं दिवि' इति पूर्वोपदेशः । 'परो दिवः–' इति पञ्चम्यन्तः पश्चिमः । तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न । त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ ✻ ॥

॥ इति दशममधिकरणम् ॥

—०—

## एकादशमधिकरणम्
### (प्राणानुगमाधिकरणम्)
### (१.१.२८-३१.)

'प्राणो विष्णुः' इत्युक्तम् । तत्र 'ता वा एताः शीर्षञ् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्यत्र प्राणस्य विष्णुत्वं न विद्यते । इन्द्रियैः सहाभिधानादित्यत आह–

**॥ प्राणस्तथाऽनुगमात् ॥ १.१.२८. ॥**

'तं देवाः प्राणयन्त–', 'स एषोऽसुः स एष प्राणः', 'प्राण ऋच इत्येव विद्यात्', 'तदयं प्राणोऽधितिष्ठति' इत्याद्यनुगमादत्रापि प्राणो विष्णुरेव ।

'विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।
'स एव सर्ववेदोक्तस्तद्रथो देह उच्यते' इति स्कान्दे ॥

ब्रह्मशब्दानुगमाच्च ॥ * ॥

**॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥**
**॥ १.१.२९. ॥**

'प्राणो वा अहमस्म्यृषे' इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ * ॥

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १.१.३०. ॥

शास्त्रमन्तर्य्यामी । 'संविच्छास्त्रं परं पदम्' इति हि भागवते ॥

'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वतो हरिः ।
'न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' इति च पाद्मे ॥

'अहं मनुरभवं सूर्य्यश्च–' इत्यादिवत् ॥ * ॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविद्ध्यादाश्रितत्वादिह तद्योगात् ॥ १.१.३१. ॥

'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' इति जीवलिङ्गम् । प्राणसंवादादि मुख्यप्राणलिङ्गम् । तस्मान्नेति चेन्न । अन्तर्बहिः सर्वगतत्वेनेत्युपासात्रैविद्ध्यात्, इहाऽऽश्रितत्वाच्च– 'स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत', 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्', 'एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः' इत्यादिना ॥

'महिदासाभिधो जज्ञ इतरायास्तपोबलात् ।
'साक्षात् स भगवान् विष्णुर्य्यस्तन्त्रं वैष्णवं व्यधात्' इति च ब्रह्माण्डे ॥

तत्तदुपासनायोग्यतया च पुरुषाणाम्–

'केषाञ्चित् सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।
'केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः' इति ब्राह्मे ॥

'अग्नौ क्रियावतां विष्णुर्य्योगिनां हृदये हरिः ।
'प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति च ॥ * ॥

॥ इत्येकादशमधिकरणम् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाद्ध्यायस्य प्रथमः पादः ॥**

—०—

# श्रीमद्ब्रह्मसूत्रभाष्यम्

## सतत्वप्रदीपं, सतत्वचन्द्रिकं च



# प्रथममधिकरणम्

## (जिज्ञासाधिकरणम्)

## (१.१.१.)

ओ३म् ॥ नारायणं गुणैः सर्वैरुदीर्ण्णं दोषवर्ज्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

---

## तत्वप्रदीपः

ओ३म् ॥ पूर्णज्ञानं विपुलपरमानन्दसन्दोहदेहं
भक्तप्रीत्या कृतविवरणब्रह्मसूत्रावतारम् ।
श्रीमन्नारायणपदमहं ध्वस्तनिश्शेषदोषं
वन्दे नित्यं गुरुमपि गुरोरागमार्थप्रकाशम् ॥ १ ॥

---

## तत्वचन्द्रिका

ओ३म् ॥ नत्वा नारायणं मध्वं त्रिविक्रममुखान् गुरून् ।
तत्वदीपेनोडुपेन वगाहे भाष्यवारिधिम् ॥ * ॥

ऋते तत्वप्रदीपं बहुवारमधीतमपि भाष्यमदोषलेपम् ।
पिहिताध्यात्मरहस्यं नाविष्कुरुते स्वकं हृदयलास्यम् ॥ * ॥

तत्वप्रदीपिकेयं त्रिभुवनरमणीव कामिनी तरुणी ।
आचार्यमध्वभाष्यं भर्तारं प्राप्य मोदते महिता ॥ * ॥

महितामहितामसतामतिकान्तां तत्वप्रदीपिकां ताम् ।
विवृणोमि यथाबोधं जानन्ति यया बुभुत्सवो निराबाधम् ॥ * ॥

मध्वभाष्यसदृशं ननु भाष्यं नोपलब्धमधुनाऽपि हि लोके ।
तत्वदीपसदृशीमथ टीकां कुत्र वाऽप्युपलभेय वदान्याम् ॥ * ॥

अद्भुतं श्रीमध्वभाष्यमद्भुता तत्वदीपिका ।
अद्भुतो यस्तयोर्भावं स्वादंस्वादं प्रहृष्यति ॥ * ॥

नारायणः शास्त्रवेद्यः शास्ता मध्वाभिधो मरुत् ।
त्रिविक्रमस्तद्गृहीता प्राणनारायणप्रियः ॥ * ॥

भाष्यं मध्वप्रणीतं तट्टीका मध्वाज्ञयोद्गता ।
भाग्योदयोऽयं जगतो लब्धं कल्पद्रुमद्वयम् ॥ * ॥

भगवत्पादाज्ञया सूत्रभाष्यं व्याचिख्यासुः, तद्व्याजेन समग्रे माध्ववाङ्मये न केवलम्, समग्रे वेदान्तव्याख्यावाङ्मये कञ्चनासमानं प्रबन्धरत्नराजं निर्मित्सुः पण्डिताचार्यः शिष्यशिक्षायै मङ्गलानि ग्रथ्नाति पञ्चविंशत्या श्लोकैः । स्वस्य गुरोः, अथच जगद्गुरोः आनन्दतीर्थस्यापि गुरुम् । गुरोः भाष्यकर्तुरपि गुरुं सूत्रप्रणेतारम् । श्रीमन्तं वेदगदितम् । 'ऋचो यजूंषि सामानि । सा हि श्रीः' इति हि श्रुतिः । रमाप्रणयिनं च । नारायणपदगदितम्, अहं नित्यम्, नतु ग्रन्थारम्भ एव, वन्दे प्रणमामि प्रणौमि च । नित्यं क्रियमाणस्य ग्रन्थारम्भे ग्रथनं शिष्यशिक्षायै च स्वरूपाविष्करणाय च । नारायण इति पदं यस्य वाचकं स नारायणपदः । नारायणस्य पदं पादं स्वरूपं वा । वासुदेवादीनि चत्वारि रूपाणि क्रमशश्चतुर्भिरध्यायैः प्रतिपाद्यन्ते । नारायणरूपं समग्रेणाध्यायचतुष्टयेनापि निरूप्यत इति तदेव मुखत उल्लिलेख । अध्यायचतुष्टयार्थगर्भितत्वाच्च नारायणनाम्नः । भाष्यपदं च तेनानुसृतं भवति । कीदृशं नारायणम्? पूर्णज्ञानम् । ज्ञानपूर्णम् । पूर्णप्रज्ञस्याप्यनं चेष्टकम् । विपुलः परिपूर्णः, परमो दुःखासम्भिन्नश्च आनन्दसन्दोहो यस्य देहस्तम् । अथच विपुलपरमानन्दसन्दोहं भगवन्तं भक्तानामुपदेशेन ददातीति, तेन च मोक्षे यथायोग्यं विपुलपरमानन्दसन्दोहं ददातीति विपुलपरमानन्दसन्दोहद

आनन्दतीर्थः । 'वायुश्च तदनुज्ञया' इति स्मरणात् । तमपीहयति चेष्टयतीति तादृशम् । भक्तेषु ज्ञानिषु प्रीत्या ब्रह्म वेदाख्यं कृतविवरणं यत्र तादृशानां सूत्राणामवतारभूमिम् । अथच येन ब्रह्मसूत्रं कृतविवरणं स कृतविवरणब्रह्मसूत्रो मध्वः । तस्य भूमाववतारो येन तम् । स्वयं ध्वस्तनिःशेषदोषम् । मध्वद्वारा ध्वस्तनिःशेषसज्जनमतिदोषम् । व्यासात्मना मध्वद्वारा च आगमार्थप्रकाशम् । एवं सर्वाणि पदानि तस्य गुरोर्गुरुत्वमेव विवृणते ॥

अथच नारायणस्तुतिरियं वायुस्तुतिरपि । एकयोक्त्या हरिवाय्वोः स्तुतिरियम्, सूत्रकारस्य च भाष्यकारस्य च । हरिवायुस्तुतिं पण्डिताचार्यकृतां केचनाऽचक्षते । तदिदमत्रान्वर्थम् । तथाहि– पूर्णज्ञानं पूर्णप्रज्ञं गुरुं वन्दे । विपुलपरमानन्दसन्दोहं नारायणं मोक्षं वा ददती ईहा चेष्टाऽस्येति तम् । भक्तप्रीत्या कृतविवरणब्रह्मसूत्रोऽवतारो यस्य तम् । नारायणस्य वाचकं पदमेव वासुदेव इति यस्य पितृकृतं पदं नामधेयम् । नारायणः पदनीयो ज्ञेयो गम्यश्चानेन । गुरोरप्यच्युतप्रज्ञस्याऽगमार्थप्रकाशकम् ॥

अथचात्र कानिचन सूत्रपदान्यपि कृतविवरणानि । प्रथमसूत्रार्थमाह– पूर्णज्ञानम् । गुणपूर्णं ब्रह्मेत्येव ज्ञेयम् । न जीवाभेदेन । द्वितीयसूत्रस्य विवरणम्– विपुलेत्यादि । जन्मादिकारणत्वात् पूर्णानन्दमित्यर्थः । 'कर्तृत्वात् सगुणं ब्रह्म' इति भागवते । 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इति च श्रुतिः । आनन्दमयाधिकरणं चानेनोपसञ्जग्राह । शास्त्रयोनित्वादित्यस्य विवरणम्– भक्तप्रीत्येत्यादि । समस्तवेदविवरणोपेतस्य, भारतभागवतादिस्वविवरणोपेतस्य च ब्रह्मसूत्राख्यस्य शास्त्रस्य योनित्वात् शास्त्रप्रभवत्वेनापि ध्येयम् । एवमुपोद्घातं विधायाथ समन्वयसूत्रस्य समग्रस्य च समन्वयाध्यायस्य भावमाह– नारायणपदमिति । सर्वाण्यपि पदानि समन्वये सति नारायणस्यैव प्रतिपादकानि नामानीति । अथ द्वितीयाध्यायार्थमाह– ध्वस्तनिःशेषदोषमिति । एतेन गुणैः सर्वैरुदीर्णं दोषवर्जितमिति भाष्यपदान्यपि व्याख्यातानि । अथ ज्ञेयं गम्यमित्युक्तं तृतीयतुरीयाध्यायार्थमेकयोक्त्याऽऽह– आगमार्थप्रकाशम् । आगमैः स्वार्थभूतोऽयं प्रकाश्यत इति तम् । ज्ञेयमिति यावत् । पूर्वमागमार्थतया ज्ञेयोऽन्ते मोक्षे साक्षात् प्रकाशत इति च । गम्यमिति यावत् ॥

श्रीमदित्युपसर्जनत्वेन श्रीरपि वन्दिता । अधिकारादिकं चानेनोक्तम् । वन्दनशीलो भक्त्यादिमानधिकारी । वन्दितो नारायणो विषयः । आगमार्थप्रकाशस्तेन भगवत्प्रकाशश्च फलमिति । नन्तृनम्यत्वादिः सम्बन्ध इति च ॥ ✽ ॥

यस्याऽम्नायपदाक्षराणि परमं स्वार्थं लभन्ते गुणान्
सम्प्रोच्यैव सुबृंहितानि बलवन्न्यायेतिहासादिभिः ।
तं सेव्यं मुनिभिः प्रशान्तमनसा भक्त्या भवच्छित्तये
स्वानन्दप्रदमिन्दिरापतिमहं भूयोऽभिवन्दे हरिम् ॥ २ ॥

अस्यन् विशेषाद् भजतो भवौघाद् व्यस्यन्नृगादींश्च विशिष्ट आस ।
सोऽयं हरिर्व्यासपदाभिधेयः सम्प्रीयतां सत्यवतीसुतो मे ॥ ३ ॥

आम्नायाः, आम्नायवाक्यगतानि पदानि, पदगतान्यक्षराणि च यस्य गुणान् समन्वित्य प्रोच्य प्रकर्षेण परममुख्यवृत्त्या प्रतिपाद्यैव परमं मुख्यं स्वार्थं स्वतात्पर्यविषयमर्थं लभन्ते । कीदृशान्याम्नायपदाक्षराणि? निरवकाशतया बलवद्भिः उपक्रमोपसंहारादिभिर्न्यायैः इतिहासादिभिश्च भारतादिभिः सुबृंहितानि सहकृतानि, स्फुटं समाख्यातानीत्येतत् । पुराणानि ज्ञानिप्रत्यक्षाणि चाऽदिपदोपात्तानि । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति हि स्मरन्ति । तं प्रशान्तमनसा, शान्तिर्हि भगवन्निष्ठा, भगवदेकतानमनसा भक्तिपूर्वं भवच्छित्तये वेदार्थमननशीलैः सेव्यम् । सेवाफलतया च स्वरूपानन्दप्रदं भूयोभूयः सभक्ति-श्रद्धं वन्दे । पूर्वश्लोके वन्दितः । अत्रापि भूयो वन्दे प्रसादविशेषमिच्छन् । वेदावगमनेन हरत्य-ज्ञानमिति हरिः सर्ववेदप्रतिपाद्यः व्यासपदाभिधेयश्च । आदावन्ते च 'हरिः ओम्' इति पठित्वैव हि वेदमधीयते । 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि पठितानि न संशयः' इति स्मृतिं चानेन स्मारयति । अत्र 'इन्दिरापतिम्' इति रमाऽपि स्फुटं नता । उप-सर्जनत्वेनैव सा वन्दनीया, न विना हरिं स्वातन्त्र्येणेति च सूचितम् । 'श्रीर्यत्कटाक्षबलवत्यजितं नमामि' इति ह्याचार्यकृता श्रीस्तुतिः । अहमहेयं हरिमिति वा ॥ २ ॥

ये भक्त्या भजन्ति तान् भवौघात् भवसञ्चयात् भवपरम्पराया वा, विशेषात् चरमतया अस्यन् निरस्यन् व्यासपदाभिधेयः । विशेषेण अस्यतीति व्यासः । विशेषात् । विना सहितः शेषो विशेषः । गरुड-मार्गात् शेषमार्गाच्चेत्यर्थः । एवमृङ्निगदादीन् चतुर्धा चतुर्विंशत्यादित्वेन च । व्यस्यन् विभजन् व्यास-पदाभिधेयः । व्यस्यतीति व्यासः । सर्वतो विशिष्टो विलक्षण उत्तमश्च आस इति च व्यासः । योऽयं हरिरिति वेदवेद्य इति पूर्वपद्ये नुतः स एवायं सत्यवतीसुतः सन् वेदविभागकृच्च बभूव । भवभयमोचनी प्रीतिः सम्प्रीतिः । अमे अज्ञानिनि मयीति वा । अकारवाच्ये भगवति मे लीनमनसि वा । 'मितेरपीतेर्वा

जिह्वासूल्लसिता सतां प्रतिपदं तत्वप्रतिद्योतिका
नृत्यन्ती परमेरितैव परमा वागीश्वरी श्रीः स्वयम् ।
यस्याऽस्यादुदिताऽखिलागमवपुः सत्सूत्रभूषामणिः
सर्वज्ञात् कवयश्च पुष्करभुवो जाता यदीयेच्छया ॥ ४ ॥

मकारः' इति श्रुतेः । अकारविषया मा ज्ञानं वाक् च यस्य तस्मिन्निति वा । 'वाचो मा मातरः स्मृताः' इति हि स्मरन्ति ॥ ३ ॥

अथ व्यासवाणीं स्तौति । यस्य व्यासपदाभिधेयस्य सर्वज्ञादास्यादुदिता उद्गता । सर्वज्ञस्य आस्यादिति वक्तव्यम् । सर्वज्ञादास्यादित्याह । तेनेदमाह– न भगवदवयवानां भगवता भेद इति । भगवत्स्वरूपं मुखमित्याचक्षते । पदमित्याचक्षते । तद् यथा चेतोमुख इति, विष्णोः पदमिति । भारत्यपि वागीश्वरी । अतः परमा वागीश्वरीत्याह । का सा? स्वयं श्रीः । या सतां जिह्वासूल्लसिता । सतां प्रतिपदं प्रत्यक्षरं प्रतीकनिदर्शनपूर्वकं द्योतिका । यथा 'यदेव विद्ययेति हि' इत्यादि । परमेरितैव स्वयं भगवताऽऽज्ञप्तैव सती नृत्यन्ती । सूत्राक्षरेषु परमार्थाविष्करणप्रहर्षप्रकर्षेण नृत्यन्तीव भासमाना । अखिलागमा एव वपुरस्याः । वेदमानित्वात् । अपिच वपुषाऽऽत्मा व्यज्यते । व्यासवचनेनाऽगमा व्यज्यन्ते; स्फुटार्था भवन्ति । सन्ति सर्वाधिकसारवन्ति ब्रह्मसूत्राण्येव तस्याः शिरोभूषामणिः । सदिति ब्रह्म । तस्य सूत्राणीति वा । अथच श्रीर्विशेष्यते– कवयश्च पुष्करभुवो जाता यदीयेच्छया । यस्य व्यासस्येयं यदीया वागीश्वरी, तस्या इच्छया । यस्या वागीश्वर्या इयं यदीया इच्छा वा, तया । वाग्देवतायाः श्रिय इच्छया कवयो ज्ञानिन ऋष्यादयः, पुष्करभुवः कमलसम्भवा ब्रह्माणश्च जाताः । 'यं कामये तन्तमुग्रं करोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति, 'अहं सुवे पितरमस्य मूर्धन्' इति च हि श्रुतिः । कवयः पुष्करभुव इति वा । 'तेने ब्रह्म हृदा य आदिकवये' इति हि भागवते । ईदृशी वागीश्वरी यस्याऽस्यादुदिता सोऽयं व्यासपदाभिधेयः सम्प्रीयतां म इति पूर्वश्लोकेनान्वयः ॥

उत्तरान्वयि चेदं शक्यं व्याख्यातुम् । देहल्यां दीपोऽयम् । तेनानेनैव मध्ववाणीमपि स्तौति । तथाहि परमा स्त्रीजीवेषूत्तमा वागीश्वरी भारती । साऽपि हि श्रीरिति गदिता । 'शंरूपाने नित्यरतेरियं श्रीः' इति हि भगवत्पादवचनम् । सेयं श्रीर्यस्य मध्वस्य आस्यान्नृत्यन्ती उदिता, विशेषतः सूत्रभाष्यात्मना । सेयमखिलागमवपुः । श्रुतिवचनभूयिष्ठं हि भाष्यम् । सत्सूत्राणां भूषामणिरिव मण्डनायितम् ।

य: सर्वजीवनविबोधविचेष्टितेशो देव्याश्च वाङ्मयतनोरखिलार्चितायाः ।
नाथः सदा हरिमहागुणदृष्टितृप्तस्तस्मै नमो भगवते परमानिलाय ॥ ५ ॥

ये वै पुरा जगति शार्ङ्गभृताऽमुना च देवेन भीमगदया हतबाहुवीर्य्याः ।
देवद्विषां मतिरभून्मनुजेषु तेषां वाग्योधनेन भगवद्गुणदूषणाय ॥ ६ ॥

अन्यैर्भाष्यव्याजेन सूत्राणां दूषणं कृतम् । तदयं मण्डयामासेति । यस्या भारत्या इयं यदीया इच्छा तया । तत्प्रार्थनयेति यावत् । तया प्रार्थितात् सर्वज्ञात् श्रीमध्वात् पुष्करभुवश्च कवयो जाताः । पुष्करमिति युद्धमुच्यते । तत्रैव भवन्तीति पुष्करभुवो योद्धारः क्षत्रियाः । ये पूर्वं भीमावतारे क्षत्रियाः कुरुक्षेत्रे योद्धारो बभूवुस्त इदानीं श्रीमध्वावतारे तदाज्ञया कवयो ज्ञानिनो विप्राः सन्तः सत्यतीर्थादयो जाता इत्यर्थः । दर्शयामास हि कुरुक्षेत्रे सत्यतीर्थस्य तत्पूर्वावतारायुधं गदां श्रीमदानन्दतीर्थभगवान् । अथ पुष्करमिति द्यौरुच्यते । तथाच सर्वज्ञात् तदादेशात् कवयो ज्ञानिनः पुष्करभुवः दिवि भवा देवा भुवि तच्छिष्यत्वेन जाता बभूवुरिति । 'पुष्करं हस्तिहस्ताग्रे जले वाद्यमुखे युधि । खेऽब्जे दिव्यसिधारायाम्–' इति यादवप्रकाशः । एतेन स्वस्यापि देवांशत्वं ध्वनयति । तस्मै परमानिलाय नम इत्युत्तरश्लोकेनान्वयः ॥ ४ ॥

सर्वेषां जीवानां पशुपक्ष्यन्तानां जीवनं शरीरधारणम् । तत्रापि मनुष्याणां विशिष्टो बोधः धर्मादृष्टादिचिन्तनरूपः । तत्रापि विशिष्टचेतनानामितरासाधारणं विशिष्टं चेष्टितम् । कश्चिद् धनेन महान् भवति । स महता यज्ञदानादिना विचेष्टते । कश्चिद् विद्यया महान् भवति । स महता ज्ञान-दानेन लोकानुद्धरिष्यन् विचेष्टते । कश्चित् पराक्रमेण महान् भवति । स सर्वान् विजित्य सम्राड् भवति । तस्य सर्वस्य विचेष्टितस्यायमीशः । एवं जीवनादित्रयस्याप्ययमेवेशः । वाङ्मयेऽभिमानितयाऽ-धिष्ठितेति वाङ्मयतनुर्वाग्देवी । अखिलार्चितायास्तस्या अप्ययं नाथः । हरिमहागुणदृष्टितृप्तः । अनन्तत्वाद् दोषासम्भिन्नत्वाच्च महान्तो हरेर्गुणाः । परमानिलो मध्यमः प्राणः । 'वायुरनिलममृतम्' इति हि श्रुतिः । तेन अकारवाच्यस्य विष्णोः साक्षान्निलयनमनिलः । विष्णुश्चास्य निलयनमिति ॥ ५ ॥

अथ मध्वावतारप्रसक्तिमाह । ये वायिति । पुरा देवासुरसङ्ग्रामे । शार्ङ्गभृता नारायणेन हतबाहु-वीर्याः । अमुना च वायुदेवेन भीमगदया हतबाहुवीर्याः । पुनश्च कृष्णावतारे पार्थसारथिना शार्ङ्गभृता

संरम्भतः श्रुतिषु विष्णुपरासु गूढाद् विद्वेषतः परगुणेषु महत्सु गाढात् ।
वेदान्तवादकपटैरतिदुष्टवाचां मायाविनां निरसने स कृतावतारः ॥ ७ ॥

सोऽयं गुणामृतमहाब्धिरिहावतीर्ण्ण आनन्दतीर्थभगवान् परमो गुरुर्म्मे ।
यत्पादपद्मरजसा शिरसा धृतेन सद्यः प्रयान्ति परिशुद्धिमशेषलोकाः ॥ ८ ॥

यस्याऽद्यानां मुनीनां सततहरिगुणद्ध्यानशिक्षायमाणा
वादीन्द्रामत्तनागप्रमितिबलतिरस्कारसिंहायमाना ।
सर्वज्ञस्य श्रुतीनामखिलजनमनोध्वान्तसूर्य्यायमाणा
व्याख्या विख्यातकीर्त्तेर्ज्जयति सुमनसां कर्ण्णपूरायमाणा ॥ ९ ॥

---

सह अमुना भीमेन भीमगदया । अथच अमुना शार्ङ्गभृता देवेन च भीमस्य गदया च । जगति भूमौ कुरुक्षेत्रे । तेषां देवद्विषां बाहुयोधनेन देवान् जेतुमप्रभवतां वाग्योधनेन मनुजान् विमोह्य, देवेष्वसम्भवेऽपि मनुजेषु भगवद्गुणदूषणाय मतिरिच्छा बभूव । क्षत्रधर्मेण जेतुमप्रभवन्तो ब्राह्मणधर्मं स्वीकृत्य मनुजेषु जाता देवान् बाधितुं प्रववृतिर इत्यर्थः ॥ ६ ॥

गूढात् संरम्भतः भयात् । श्रुतिभिर्विष्णुपारम्ये स्थापिते नास्माकं जीवनमिति । भगवद्गुणेषु गाढात् स्वरूपद्वेषाच्च ।अन्ततो वेदनिरसनायैव मुखतो वेदान्तवादोऽस्माकमिति कपटेन जल्पन्तः । कुहकैर्मिथ्यातर्कैर्वैदिकेषु परिस्थातुमिच्छन्तः । मायाविनस्ते मायावादिनः । स्वयमनुभूयेदमाह पण्डिताचार्यः । एतादृशां मायाविनां निरसनाय किल परमानिलः कृतावतारः ॥ ७ ॥

आनन्दतीर्थाख्यो भगवान् । भगवतः साक्षात् प्रतिबिम्बत्वात् । 'उत्पत्तिमायतिं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इति वा भगवान् । परमो गुरुर्मुख्यगुरुः । रुद्राद्या मे गुरवः । अयं परमो गुरुरिति च । परिपूर्णां शुद्धिं मनसः ॥ ८ ॥

यस्य सर्वज्ञस्य विख्यातकीर्तेः श्रुतीनां व्याख्या । जयति भाति सर्वोत्कृष्टतया, विजयते च कुवादिनः । आद्यानां मुनीनां सनकादीनामपि । वादीन्द्रा आ समन्तान्मत्ता नागा इव । तेषां प्रमितिर्नागानां बलमिव । सुमनसां विदुषाम्, देवानामपि ॥ ९ ॥

येनैकान्तयतात्मनामृजुवरेणाऽचार आचार्य्यवान्
सन्यासेन निजा स्वयं प्रकटिता निस्सङ्गता संसृतौ ।
श्लाघ्यः पारमहंस्य आश्रमवरो यच्छीलगङ्गाजल-
स्नातो व्यक्तमयोग्यसङ्गमभुवो दोषात् पुनर्म्मोक्षितः ॥ १० ॥

लेशेनोद्भासितांशां भुवि मनुजमतिं वीक्ष्य विज्ञानशक्तिं
शास्त्रव्याख्यां च चित्रां प्रविततयशसः प्राश्निकानां प्रसङ्गे ।
यस्य स्तोतुं प्रवृत्ताः प्रवरगुणमयीं प्रस्खलन्त्या स्ववाचा
प्राज्ञाः प्रोद्यत्प्रमोदप्रचुरभरनमत्साश्रुकण्ठा भवन्ति ॥ ११ ॥

तस्यास्य चारुचरणप्रणतिं प्रपन्ना गोभिर्विधूततमसः सुनयामृतानाम् ।
उद्गारिणीभिरिह सद्गुणराजभावं विप्रा व्रजन्ति विशदा वितताभिरुच्चैः ॥ १२ ॥

येन ऋजुवरेण । एकस्मिन्ननन्ते भगवति नियतमनसामपि आचार आचार्यवान् । एकान्तभक्ता अप्यनेनाऽचार्येण, तद्दर्शितेन पथा, स्वंस्वमाचारमधिजग्मुरिति । यथा विष्णुतीर्थः । पूर्वमयोग्या अपि परमहंसा बभूवुः । तेनायोग्यसङ्गमेन दोषदूषितः पारमहंस्य आश्रमवर आस । अथ भगवत्पादः परमहंसो भूत्वा तं दोषमपास्य परिशुद्धां परमहंसतामाचरणेन दर्शयामास ॥ १० ॥

मनुजमतिं विगतज्ञानशक्तिं वीक्ष्य । अथवा मनुजमतिं वीक्ष्य । कथं वीक्ष्य? यथाऽवर्तत तथा । कथमवर्तत? ज्ञानदुर्बलाऽवर्तत । शास्त्रपथेष्वपटुतमाऽवर्तत । तादृशीं मनुजमतिं वीक्ष्य, स्वां विज्ञानशक्तिं लेशेन तत्राप्यंशत एव प्रकाशयामास व्याख्यासु । अथापि चित्रामत्यद्भुताम् । कुतः? विज्ञानशक्तिम् । विशिष्टस्य विष्णुविषयस्य ज्ञानस्य दाने शक्तिर्यस्यास्ताम् । 'विज्ञानशक्तिरहमासमनन्तशक्तेः' इति हि भागवते । प्रविततयशसः यस्य शास्त्रव्याख्याम् । न केवलं श्रुतीनां व्याख्याम्, सर्वशास्त्रव्याख्याम् । चित्तरमणाच्च चित्राम् । प्राश्निकानां प्रश्नप्रसङ्गे तदुत्तरत्वेन प्रवृत्ताम् । तामेतां प्रवरगुणमयीं प्रस्खलन्त्या स्ववाचा स्तोतुं प्रवृत्ताः प्राज्ञाः तत्प्रवचनमाधुरीस्मरणेन प्रोद्यता प्रमोदप्रचुरभरेण परमामृतसमुद्रमग्ना इव विस्मृतवक्तव्या नमन्तः साश्रुकण्ठा गद्गदिनो भवन्ति ॥ ११ ॥

स्पृष्टं करेण विषमप्यमृताय दृष्टं यस्योदयः स भगवान् यदु राति किञ्चित् ।
तद् भेषजं गदवतां प्रतिक्लृप्तमायुर्वेदे सुसिद्धममुनेत्यविचार्य्यमेतत् ॥ १३ ॥

योद्धॄणां राघवार्त्थे कृतमहितरणो योऽद्वितीयो द्वितीयो
विष्णोः कृष्णप्रियार्त्थं पुनरपि विपुलैः संयुगैर्व्यक्तकीर्त्तिः ।
यद्वीर्य्यं योधवीरैः कृतनुति जगतां सप्तके सप्तके वा
देवेऽस्मिन् जैत्रशक्तिर्न्निवसति सकलेत्यत्र किं विस्मयः स्यात् ॥ १४ ॥

सब्राह्मणोपनिषदो निखिलाः सुसिद्धा
वेदाः स्फुटं यदनधीतवतः स्वशाखाम् ।

---

राजा चन्द्रः अमृतानामुद्धारिणीभिः गोभिः किरणैः विधूततमाः । विप्रा गोभिः वचोभिः विधूततमसः । अत एव राजभावं चन्द्रत्वम्, चन्द्रौपम्यमित्येतत् व्रजन्ति । 'राजा तु क्षत्रिये चन्द्रे' इति यादवप्रकाशः । तदेतत् तस्य चारुचरणप्रणतिप्रपत्तिफलमित्येतत् ॥ १२ ॥

यस्य करेण स्पृष्टं विषमप्यमृताय दृष्टम् । अमृतभावं प्राप्तं दृष्टम् । अमृतप्राप्तये दृष्टमिति । तथाहि श्रूयते– 'वायुरस्मा उपामन्थत्–' इत्यादि । एवं भीमावतारे कौरवदत्तं विषमपि जरणेनामृतं बभूव । यथा भीमरूपे तथा मध्वरूपेऽपि । स भगवान् उदयः उत्कृष्टदयः । अथच उत् उत्तमः अयः लोकशुभकरो विधिर्यस्य स उदयः । स यदु किञ्चिद् वाङ्मयं वा, मन्त्रपूतमक्षतादिकं वा, यत् किमप्यन्यद् वा राति तद् भेषजं गदवतामिति प्रत्यक्षतो दृष्टम् । श्रुतिदृष्टं च– 'यद् वै मनुरवदत् तद् भेषजम्' इति । यदपि आयुर्वेदे गदानां प्रत्येकं भेषजं क्लृप्तम्, तदप्यायुर्वेदशास्त्रप्रणेतृषु चरकादिषु प्रणयनाय स्थितेन अमुना मुख्यप्राणेनैव क्लृप्तमिति च श्रुतिसिद्धमित्यविचार्यमेतत् । ननु का श्रुतिः? 'यद्वै मनुरवदत्–' इत्येव । यद्वै चरकादिषु स्थित्वा मनुर्वायुरवदत् तद् भेषजमिति ॥ १३ ॥

राघवार्थे योद्धॄणां वानराणां मध्ये योऽद्वितीयः । यश्च विष्णोर्द्वितीयः । कृष्णप्रीत्यर्थं पुनरपि भीमावतारे । संयुगैः सङ्ग्रामैः । ऊर्ध्वलोकसप्तके, अधोलोकसप्तके च । तस्मादस्मिन् सकला जैत्रशक्तिर्वसति ॥ १४ ॥

स्वशाखामप्यनधीतवतः । यान् वेत्तुं मुनयोऽप्यसकृद् गुरुभ्यः पठन्ति सशान्तिपाठं शृण्वन्ति । उक्तं हि भगवत्पादेनैव– 'अर्वाक् तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः' इति । ते सब्राह्मणारण्यकोपनिषदो

यान् वै पठन्ति मुनयोऽप्यसकृद् गुरुभ्यो
वेत्तुं तदस्य महिमाऽयमचिन्तनीयः ॥ १५ ॥

ज्योतिश्शास्त्रं यदेकं भवति भुवि भविष्यत्यतीते च साक्षा-
च्चक्षुः प्रत्यक्षमस्य प्रकटमपि तदाद्यङ्गषट्कं यथास्वम् ।
को ह्यस्मात् पञ्चरात्रेष्वपरिमितभिदास्तन्त्रसारप्रणेतु-
र्विद्याः पौराणिकानां बहुविधविशयच्छेत्तुरन्यः प्रवेद ॥ १६ ॥

हव्यं गृह्णाति सर्वक्रतुषु मखपतिर्य्योऽनु यज्ञेशमीशो
मन्त्राणां देवतानां प्रतिहृदयगतोऽप्यृत्विजां प्रेरकश्च ।
सोऽयं कर्म्मप्रणेता हरिगुरुविहितः कर्म्मणां सत्प्रयोग-
न्यायानां सूत्रजातं यदि च बुधजनैरर्त्थ्यते किं न कुर्य्यात् ॥ १७ ॥

---

निखिला अपि वेदा अस्य स्वतः सिद्धा जिह्वासु लसन्ति । सोऽयमन्यैश्चिन्तयितुमप्यशक्यस्तस्य महिमातिशयः ॥ १५ ॥

भवति वर्तमाने भविष्यत्यतीते च विषये, काले वा, यदेकं चक्षुर्भवति । तदादि ज्योतिःशास्त्रादि, वेदाङ्गषट्कम् । शीक्षा कल्पो व्याकरणं निरुक्तं छन्दः स्मृतयश्चेति । सर्वमपि अस्य तिथिनिर्णयादि-प्रणेतुः यथावत् स्फुटतरं प्रत्यक्षम् । पञ्चरात्रभेदान्, पौराणिकानां विद्याः पुराणानि च, पौराणिकानां विविधसंशयच्छेतुरस्मादन्यः को हि सामस्त्येन वेद । पञ्चरात्रपुराणविद्याप्रवेत्तृत्वादेव हि तन्त्रसारं प्रणिनाय ॥ १६ ॥

मन्त्रसम्बद्धानां देवतानां प्रत्येकं हृदये सन्निहितः हव्यं गृह्णाति । अनु यज्ञेशम्, यज्ञेशान्नारायणा-दनन्तरम् । ऋत्विजां प्रतिहृदयगतः तान् प्रेरयति । हरिरेव गुरुर्व्यासात्मा, तेन विहितः कर्मप्रणेता । कर्मणां सत्प्रयोगन्यायानां सूत्रजातं कर्ममीमांसासूत्रम् । किं स्वयं न कुर्यात्? किं वा न व्याकुर्यात्? यदि बुधजनैरार्थिष्यत, अकरिष्यदेव तर्हि । न हि क्वाप्यस्ति नियमः– यन्न कृतं नोक्तं वा तन्न ज्ञातमिति । अमितज्ञाः प्रायो मितभाषिणो भवन्ति । अमितभाषिणश्च मितज्ञाः ॥ १७ ॥

रामक्रीडामनुविहरता पूर्वमापूर्णभक्त्या
तेन ज्ञाता न किमु विमलास्तत्कथाग्रन्थकोट्यः ।
सोऽयं रेजे कुरुषु विजयी सर्वतो भारताग्र्यो
जानीतेऽतः प्रविततमतिर्भारतार्थान् कृतार्थः ॥ १८ ॥

भाष्यन्ते ह्यपरिमिताः समस्तवेदेष्वेतेन प्रतिपदमप्रयत्नमर्थाः ।
एकैकं सुकरतरं तदेषु भाष्यं किं न स्यात् सुरवरसेवितेन तेन ॥ १९ ॥

प्रत्यक्षस्य स्वहृदि विशदे सत्यकामस्य कामान्
साक्षात्कर्त्तुः खलु भगवतो भ्रूनिदेशाद् द्युदेशाः ।
प्राप्ता देवैः प्रतिपदमसौ नित्यमासेवितस्तै-
स्तेषां रूपं स्थितिमपि बलं वेत्ति चित्रं किमेतत् ॥ २० ॥

रामक्रीडामनुसृत्य स्वयमपि क्रीडता । पूर्वं हनुमदवतारे । परिपूर्णभक्त्या । रामकथाग्रन्थकोट्यः । 'मूलरामायणं चापि शतकोटिप्रविस्तरम्' इति हि स्मरन्ति । प्रियं चैतत् पण्डिताचार्यस्य । 'मूलरामायणार्णवे विहरन्तः' इति तं वर्णयति नारायणपण्डितः । भारतेषु भरतकुलोत्पन्नेषु अग्र्यः भारताग्र्यः । भारतस्य अर्जुनस्य अग्रज इति च । भारतेषु पाण्डवेषु अग्र्यः स्वरूपत इति च । 'दशार्थाः सर्वभारते' इत्युक्तान् भारतार्थान् ॥ १८ ॥

अनेन प्रवचनकाले अपरिमिता अर्था भाष्यन्ते । स्वयं किल शुश्राव ग्रन्थकारः । प्रतिपदमपि अप्रयत्नेन अर्था भाष्यन्ते । तेषु एकैकं सुकरतरमर्थं स्वीय ऋग्भाष्ये निबबन्ध मन्दमतयोऽपि वेदवाङ्मयोदधौ किञ्चिदिव निमज्जेयुरिति ॥ १९ ॥

विशदे स्वहृदि सदा प्रत्यक्षस्य सत्यकामस्य नारायणस्य कामान् साक्षात्कर्तुः, 'कामेन मे काम आगात्' इति हि श्रुतिः, भगवतो मध्वस्य भ्रूनिदेशाद् देवैर्द्युदेशाः प्राप्ताः । भगवत्पादभ्रूभङ्गसञ्ज्ञामात्रेण देवास्तत्तद्देवतापदमास्थिषतेत्यर्थः । अतस्तैरसौ प्रतिपदं नित्यमासेवितः । एवं सत्यां वस्तुस्थितौ अयं मध्वदेवः तेषां देवानां रूपं स्थितिं बलं चेति सर्वं वेत्तीत्येतत् किं चित्रम् ॥ २० ॥

गन्धर्वविद्यानिपुणस्य नित्यं गन्धर्ववर्य्यैरनुगीतकीर्त्तेः ।
कलाश्च शेषा हृदये गुरोर्न्नः करोल्लसत्कन्दुकवद् विभान्ति ॥ २१ ॥

एवं धर्म्मार्त्थदर्शी नृपनयकुशलो न्यायवित् सुप्रमाणैः
सर्वज्ञस्तत्वमार्य्यः क्षितितळमगमत् केवलं सम्प्रणेतुम् ।
यस्मिन् गुह्ये स्म देवा अपि मुनिपितृभिः प्राय आलोच्य नित्यं
निष्ठां नाऽयान्ति भूयश्चिरतरभगवद्भक्तिभिः साधयन्ति ॥ २२ ॥

त्रेधाऽवतारमवनाय सतां बळित्थे-
त्याद्या श्रुतिर्भगवती गुरुमेनमाह ।
मुख्यानिलोऽतिबलवान् मतिरीशधेना-
नेतेति पृक्ष इति मध्व इति क्रमेण ॥ २३ ॥

शेषाः कला नृत्यवादित्रशिल्पादयः । स्फुटमेतत् शिल्पाध्याये तन्त्रसारसङ्ग्रहे ॥ २१ ॥

धर्मार्थदर्शी धर्मशास्त्रस्य चार्थशास्त्रस्य च द्रष्टा दर्शयिता च सज्जनलोकस्य । मोक्षशास्त्रं तु तस्य स्वम् । भीमरूपेण कामशास्त्रस्य च । तदेतदुक्तम्– नृपनयकुशलः । दर्शितराज्यशास्त्रकौशलः यत्रयत्र राज्याधिकृतैः समगमत् । यथा तुरुष्कराजसमागमे । यथा वा जयसिंहेन । विशेषतश्च भीमावतारे । न्यायवित् लोकनीतिवित् । न्यायशास्त्रविच्च । अतः सर्वज्ञः । सर्वं परिपूर्णं ब्रह्म जानन्नपि । केवलं युक्तिसमेधितैः श्रुत्यनुभवप्रमाणैः तत्वं सम्प्रणेतुं दृढं निरूपयितुं क्षितितळमगमत् । यस्मिन् गुह्ये तत्वमार्गे मुनिभिः पितृभिश्च सह देवा अपि इदमित्थमिति निष्ठां नाऽयान्ति । अथ कथञ्चित् चिरतरभगवद्भक्तैर्ब्रह्मादिभिः समालोच्य निर्धारयन्ति । अथच भक्तिभिरिति बहुवचनमाद्यर्थे । चिरतरसम्भृतैः भक्त्यादिभिः साधनैः कथञ्चिन्निष्ठां साधयन्ति ॥ २२ ॥

सतामवनाय त्रेधाऽवतारो यस्य तम् । 'बळित्था तद् वपुषे धायि दर्शतम्' इत्याद्या प्राणाग्निसूक्तमिति प्रथिता श्रुतिः । श्रुतिमेतां स्वयमेवोपरिष्टाद् व्याख्यास्यति । बडिति अतिबलवान् मुख्यानिलः । मतिरिति हनुमान् । 'मतिरृतस्य धेना अनयन्त ससुतः' इति । 'हनुमान् मतिशब्दितः' इति हि स्मरन्ति । ईशस्य रामस्य धेनानां सन्देशवचनानां सीतां प्रति नेता हनुमान् । 'पृक्षो वपुः पितुमान्'

प्रणम्य सम्यक्प्रणतेष्टदं तं व्याख्यां करोम्यद्य यथावबोधम् ।
तस्याऽज्ञयैवानुगृहीतबुद्धिः सत्सूत्रभाष्यस्य कृतस्य तेन ॥ २४ ॥

आञ्जस्येनैकमप्यर्थं लेशतो वक्तुमुत्सहे ।
सहस्रार्थस्य भाष्यस्य प्रसन्नाः सन्तु सद्गुणाः ॥ २५ ॥

इति भीमः । पृतनां कौरवाणां क्षपयन् पृक्षः । तृतीयमवतारं 'यदीमनु प्रदिवो मध्वः' इति मुखत एवाऽह श्रुतिः । इति क्रमेण त्रेधाऽवतारं भगवती श्रुतिरेनमाह ॥ २३ ॥

सन्ति सूत्राणि । सच्च भाष्यम् । अनवद्यानां सूत्राणामनवद्यं भाष्यमित्यर्थः । तादृशस्य भाष्यस्य तस्याऽज्ञयैव व्याख्यां करोमि । तदिदमसाधारणं वैशिष्ट्यमस्य ग्रन्थस्य । भगवत्पादस्य साक्षाच्छिष्य-स्तन्मुखत एवाधिगतसकलशास्त्रसारोऽस्य ग्रन्थस्य प्रबन्धेति प्रथमं तावद् वैशिष्ट्यम् । तत्रापि 'मया रचितं भाष्यं त्वमेव व्याख्याहि' इति भगवत्पादाज्ञयैव रचितेयं कृतिरित्यपरमसाधारणं वैशिष्ट्यम् । न हि भगवत्पादः कदाऽपि कमप्यन्यं सन्यासिनमपि शिष्यं स्वग्रन्थव्याख्याप्रणयनायाऽदिदेश । व्यासाज्ञया भगवत्पादो भाष्यं विरचयामास । भगवत्पादाज्ञया पण्डिताचार्यष्टीकामिति अपूर्वमिदं गङ्गायमुनयोरिव सङ्गमनम् । एतेन श्रीमध्वस्य प्रेष्ठोऽयं ग्रन्थराज इति प्रेष्ठश्चायं शिष्योत्तम इति च ज्ञायते । यस्यास्य ग्रन्थराजस्य समध्ययनेनैव माध्वो माध्वो भवति । तस्याऽज्ञयैवानुगृहीतबुद्धिः । तदाज्ञयैव बुद्धिदेवता वाग्देवता भारती मयि सन्निहिता मां मुखरयतीत्येतदाह । अहो भागधेयं पण्डिता-चार्यस्य । भारतीपतिस्तं प्रबन्धयामास । भारती तद्रसनायां तोन्तोमिति ललितपदन्यासं ननर्त । यथावबोधम्, यथाऽहमवाबुध्ये, यथा च सन्तो जिज्ञासवो भोत्स्यन्ते ॥ २४ ॥

सहस्रार्थस्य बह्वर्थस्य । एकमप्यर्थं न सामस्त्येन । किन्तु लेशतः । क्वचिद् ग्रन्थबाहुल्यभयात्, क्वचिदपि गोपनीयत्वात् । अथापि आञ्जस्येन तत्वमार्गमनपहाय यथावत् । सद्गुणाः सज्जनाः । अथच 'सदिति प्राणः' । तस्य गुणभूता उपसर्जनभूतास्तद्भक्ता इत्यर्थः । तेन अप्राणभक्तानां नात्राधिकारः । दुर्जना न प्रसीदन्तीति च सिद्धमेव । नहि स्वादुफलरसदर्शनेन क्रमेलकाः प्रसीदन्ति । नचासतां प्रसादनेन किञ्चित् फलम् । तन्निरासार्थो ह्ययं प्रयत्नः ॥ २५ ॥

* * *

'नारायणं गुणैः सर्वैरुदीर्ण्णं दोषवर्ज्जितम् । ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्त्थ उच्यते' इत्यनेन श्लोकेनेष्टदेवतागुरुनमस्कारं करोति, मङ्गलाचरणार्त्थम्, शिष्टाचारपरिपालनायाविघ्नेन ग्रन्थपरिसमाप्त्यै, देवतागुरुभक्त्योर्विद्यान्तरङ्गत्वख्यापनाय च । वस्तुनिर्द्देशं च करोति । अनेन चाधिकारिविषयप्रयोजनसम्बन्धाञ्छास्त्रस्याऽरम्भ एवापेक्षितान् दर्शयति । अधिकारस्य

---

एवं बहुधाकृतमङ्गलः सम्प्रति भाष्यपदानि व्याख्यातुमुपक्रमते– **नारायणं गुणैः सर्वै**रित्यादि समग्रं भाष्य-मङ्गलपद्यं परममाङ्गलिकतया वाचः शुद्ध्यर्थं प्रथमं पठित्वा । **इष्टदेवतागुरुनमस्कारं करोती**ति । इष्टदेवतैव गुरुः । अथापि द्विरूपयोस्तयोः पृथङ् **नमस्कारं करोती**त्यर्थः । नम इत्याक्रियमाणं स्तुति-प्रणतिवचनं **करोति** निबध्नातीति । किमर्थम्? **मङ्गलाचरणार्थम्** । परममङ्गलस्य नारायणस्य नमनाख्यं मङ्गलमाचरितुम् । ननु नित्यं नमस्कुर्वाणस्य किमिदं ग्रन्थादौ पृथङ्नमनम्? अथ कथञ्चिन्नमतु नाम । किमिति ग्रन्थादौ निबन्धनम्? आह– **शिष्टाचारपरिपालनायाविघ्नेन ग्रन्थपरिसमाप्त्यै** । क्वचिद् विघ्ना ग्रन्थारम्भमेव प्रतिघ्नन्ति । मङ्गलादितया च प्रारभ्यन्ते । अथापि आसमाप्ति मध्येमध्ये विघ्नाः प्रतिहन्युरेव । मङ्गलमध्यतया तेऽपि निरस्ताः । अथाप्यन्ते विघ्नेन समाप्तिः प्रतिबध्येत । तदेवं त्रिविधस्यापि प्रतिबन्धस्य परिहारेण समाप्तिः परिसमाप्तिः । तथाच **अविघ्नेन** निर्विघ्नतया **ग्रन्थपरिसमाप्त्यै** मङ्गलमाचरणीयमिति, शिष्यशिक्षायै ग्रन्थादौ निबन्धनीयमिति यः शिष्टाचारस्तस्य **परिपालनाय** । भविष्यतामपि बोधनेन शिष्टसम्प्रदायस्यानुस्यूततया पालनं परिपालनम् । अथच **शिष्टाचारपरिपालनाय**, परिपालनेन च शिष्याणामपि **अविघ्नेन ग्रन्थपरिसमाप्त्यै** । अथच स्वस्य **अविघ्नेन** विघ्नाभावेन केवलं **ग्रन्थपरिसमाप्त्यै** यः साधुः शिष्टाचारस्तस्य **परिपालनाय** । यदि स्वयं न परिपालयति, अन्येऽपि न परिपालयेयुः । तेन शिष्टाचारपरम्परैव नष्टा स्यादिति हेतोः **शिष्टाचारपरिपालनाय** । ग्रन्थे निबन्धनस्य निमित्तान्तरं चाऽह– **देवतागुरुभक्त्योर्विद्यान्तरङ्गत्वख्यापनाय च**, असन्निहितानां भविष्यतां च शिष्याणाम् । नमस्क्रियारूप एव मङ्गले पर**वस्तुनिर्द्देशं च करोति**, प्रतिपाद्य**वस्तुनिर्देशं च** । अथ च 'सूत्रार्थ उच्यते' इति **च वस्तुनिर्देशं करोति** । तथाच शिष्या एवं क्रियासुरित्याशिषा नमस्क्रियारूपं च मङ्गलं ग्रन्थादौ निबबन्धेति । स्वतो विघ्नविधुरस्य शिष्यक्षेमाशिषमन्तरा किमन्य-न्निबन्धनकारणं स्यात्? तदेवमाशीर्नमस्क्रिया वस्तुनिर्देश इति त्रिविधमपि मङ्गलमनुष्ठितं भवति ॥

साधनान्तर्भूतत्वात्, 'अद्ध्ययनमात्रवतः' इत्यादिना साधनाध्याये प्रतिपादितोऽधिकार्यत्राप्यथशब्दाक्षिप्त एव भाष्यकारेण 'नारायणं नत्वा' इति सूचितः– अद्ध्ययनवान् भक्तिमांश्चेति । नमस्कारस्य भक्तिपूर्वकत्वात् । भक्तेश्च विष्णुनिष्ठाया अद्ध्ययनवत एव प्रायेण सम्भवात् । नारायणो विषयः । नारायणप्राप्तिरूपो निर्दुःखानन्दलक्षणो मोक्षः प्रयोजनमुक्तम्– 'गम्यम्' इति । सम्बन्धो दातृदेयलक्षणादिकः ॥ * ॥

तद्भावमोक्षपक्षे दातृदेयग्रहीत्रभावान्न सम्बन्धः सम्भवी । प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्ध इति चेन्न । अविषयत्वेनाप्रतिपाद्यत्वात् । ब्रह्मणोऽविषयत्वमनपनोद्यैव प्रतिपादयति शास्त्रमिति च विरुद्धम् । वन्ध्यात्वमनपनोद्यैव मातुर्ज्जातः पुत्र इतिवत् । न चाविषयस्य

---

**शास्त्रस्याऽरम्भ एवापेक्षितान्** । यतस्तान् ज्ञात्वा ग्रन्थं प्रारभमाणस्य महत् फलं भवतीति शास्त्रेषूच्यते, यतस्तज्ज्ञाने तत्र जिज्ञासाश्रद्धे अधिकारिणः सञ्जायेते, अतस्तान् **दर्शयति** । **नारायणं नत्वेति सूचितः** । भक्तिमान् हि नमति । अध्ययनेनाधिगतमाहात्म्यो हि भक्तिमान् भवति । तदेव च सर्वानुगतमधिकारिलक्षणम्– 'भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान् नरः' इति ॥

**सम्बन्धो दातृदेयलक्षणादिक** इति । दातृदेयलक्षणः सम्बन्धो विषयप्रयोजनयोः । गन्तृगम्यलक्षणोऽधिकारिप्रयोजनयोः । नन्तृनम्यलक्षणो वा ज्ञातृज्ञेयलक्षणो वाऽधिकारिविषययोः । अन्त्यद्वयस्य ग्रन्थे मुखत एवोक्तेरादिपदेनाऽह । बोध्यबोधकभावः प्रतिपाद्यप्रतिपादकभावश्च तेषां ग्रन्थेन ॥

## मायावादे सम्बन्धासम्भवः

विषयादिज्ञानेनास्ति महत् फलम्, न केवलम् । मायावादे विषयप्रयोजनाद्यसम्भवान्न स सूत्रार्थ इति चानेन सूचयामास । दाता विषयः । देयं प्रयोजनम् । ग्रहीता चाधिकारी भवति । ब्रह्मभाव एव मोक्ष इति पक्ष एतेषां त्रयाणामप्यभावात् । नह्यविद्यमानानां परस्परं **सम्बन्धः सम्भवी** । शशाश्वशृङ्गाणामिव । ननु त्रयाणां सम्बन्धाभावेऽपि तामेव तेषामसम्बद्धतां ग्रन्थः प्रतिपादयतीति शक्यं **प्रतिपाद्यप्रतिपादकलक्षणः सम्बन्धो** वक्तुम्? न शक्यम् । विषयविषयिभाव एव हि प्रतिपाद्यप्रतिपादकत्वं नाम । नच ब्रह्मणः शास्त्रविषयत्वं तत्पक्षे । तस्य **अविषयत्वेनाप्रतिपाद्यत्वात्** । तदपि कुतः? निर्गुण-

लक्ष्यत्वम् । वाच्यस्यैव लक्ष्यत्वादिति वक्ष्यत्याचार्य्यः । न च शारीरः शास्त्रस्य विषयः । प्रमाणान्तरसिद्धत्वात्, हेयत्वाच्च । शारीरत्वमेव हेयं न तद्गतचैतन्यमिति चेन्न । तद्गतत्वस्यापि हेयत्वात् । चैतन्यं त्वविषय इत्युक्तम् । 'आत्मैकत्वविद्याप्रतिपत्तये' इति तदुक्तत्वादैक्यं शास्त्रस्य विषय इति चेत्, तदप्यसारम् । जीवब्रह्मैक्यस्यानिरूप्यत्वात् । तत् किं तद्वतो भिन्नमुताभिन्नम् । भिन्नं चेत् सत्यं मिथ्या वा । सत्यत्वेऽद्वैतहानिः । मिथ्यात्वे

---

त्वाभ्युपगमात् । कथं तस्य विषयत्वं नाम, प्रतिपाद्यत्वं नाम गुणः स्यात्? विरुद्धत्वादिति । ननु परिहरामो विरोधम् । शशशृङ्गं न शास्त्रविषयः, असत्त्वादिति शशशृङ्गस्याविषयत्वमनपनोद्यैव शक्यं प्रतिपादयितुम् । समानं ब्रह्मवादेऽपि । अत आह– **वन्ध्यात्वमनपनोद्यैवेति** । सत्यम् । शशशृङ्गस्याविषयत्वमनपोद्यैव शक्यं स्यात् प्रतिपादनम् । असत्त्वात् । नह्यसतोऽसत्त्वेन प्रतिपादने तस्याविषयत्वभङ्गः । नात्र तथा । ब्रह्मणः सत्त्वात् । यथा कश्चित् पुत्र इति जातः सन्नेवोच्यते । नह्यजातोऽसन् पुत्रो भवति । यदि जातः न तर्हि वन्ध्यापुत्रः । एवं यदि ब्रह्म शास्त्रप्रतिपाद्यम्, न तर्ह्यविषयः । ननु तस्य शास्त्राविषयत्वमेव शास्त्रेण प्रतिपाद्यते । तदिदं जातस्यैव वन्ध्यापुत्रत्वप्रतिपादनम् । व्याहतभाषणमित्येतत् । वस्तुतस्तु शशशृङ्गेऽपि समानमेतत् । यदि निर्विषयत्वेन विषयेण विषयि शशशृङ्गमुच्यते नन्वजायतैव वन्ध्यापुत्रः ॥

नन्वविषयत्वं नाम वाच्यवृत्त्या शब्दागोचरत्वं विवक्षितम् । तेन लक्षणावृत्त्या स्यादेव प्रतिपाद्यत्वम् । तदपि दुराशामात्रमित्याह– **नचाविषयस्य लक्ष्यत्वमिति** । **वक्ष्यतीति** । 'श्रुतत्वाच्च' इति सूत्रव्याख्याने 'सर्वशब्दावाच्यस्य लक्षणायुक्तेः' इति भाष्येण । ननु निर्गुणं ब्रह्म शास्त्राविषय इति सत्यम् । शारीरस्त्वात्मा भवति शास्त्रविषयः । अत एव शारीरकं सूत्रमित्याचक्षते । यं त्वं शारीरमात्मानं ब्रह्मणो भिन्नं मन्यसे न स भिन्न इति शास्त्रं प्रतिपादयति । नैतदपि युक्तम् । तस्य स्वप्रकाशत्वेनाहमिति प्रत्ययवेद्यत्वात् । हेयत्वाच्च । अहेयं हि शास्त्रप्रतिपाद्यं भवति, अस्माभिरज्ञातं ज्ञातव्यं च ॥

सत्यं न जीवो विषयः । नापि ब्रह्म । किन्तु तयोर्भेदं हेयं निवारयदैक्यमहेयं भवति शास्त्रविषय इत्यत आह– **तदप्यसारमिति** । यदस्ति तस्येदमीदृशमिति स्वरूपं निरूपणीयं भवति । यदनिरूप्यस्वरूपं तस्यास्तित्वमेवासिद्धम् । तत् कथं शास्त्रविषयः स्यात्?

भेदस्य सत्यता स्यात् । अभिन्नं चेज्जीवत्वे ब्रह्मत्वेऽपि स्वयम्प्रकाशत्वेन नित्यसिद्धमिति नोपदेष्टव्यम् । अज्ञानं तु तत्पक्षे स्वयम्प्रकाशस्य कस्मिंश्च न सम्भवतीति भावः । अत एवाधिकारी दूरतो निरस्तः । ब्रह्मात्मैक्यापरोक्षलक्षणं मोक्षफलमपि प्रत्याख्यातम् । ऐक्याभावात्, अज्ञानाभावाच्च । एवमधिकारिविषयप्रयोजनाद्यभावान्न तत्पक्षः श्रेयोऽर्थिभिः श्लाघनीयः । नारायणस्य सर्वोत्तमतया सर्वश्रुतिवाच्यत्वाद् भिन्नानां च जीवानां स्वयम्प्रकाशत्वेऽपि सविशेषत्वेन तत्राज्ञानसम्भवात्, स्वयोग्यतानुरोधेनाधिकारादिसम्भवादत्रायमेव पक्षः श्रेयान् ॥ ✻ ॥

समन्वयाविरोधसाधनफलानि चाद्ध्यायचतुष्टयेन प्रतिपादनीयान्यनेन श्लोकेन सूचयति । श्रुतीनां ब्रह्मवाचकत्वेन सम्यगन्वयः समन्वयः । स च वाक्यपदादीनां प्रत्येकमस्ति । तेन चानन्तगुणं ब्रह्म प्रतिपाद्यते । तत्र च प्रमाणाविरोधं साधयति द्वितीयाध्याये । एवं वस्तुनिर्ण्णयार्त्थमद्ध्यायद्वयम् । तत्र पुरुषेण किं कर्त्तव्यमित्याकाङ्क्षायां दृढनिर्ण्णीतपूर्ण्णगुणब्रह्मप्राप्तिसाधनमधिकारिणो विधीयते तृतीये । चतुर्त्थे तु तद्दर्शनात् तस्य संसारमोक्ष आनन्दभोगश्च फलम् । तत्र सर्वगुणसम्पन्नो नारायणो निर्द्दोषः समाधिकरहितः, अत एवावश्यं द्रष्टव्यः । दृष्ट्वा च तं परमसुखं विन्दते पुरुष इत्यभिप्रायः ॥ ✻ ॥

---

'अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति' इत्यनुव्याख्यानवचनमनुसन्धाय विषयाद्यभावमुपसंहरति– **अज्ञानं त्वित्यादिना** । स्वपक्षे तु तत् सर्वं सुकरमित्याह– **नारायणस्य सर्वोत्तमतया सर्वश्रुतिवाच्यत्वादि**त्यादिना । स ह्यहेयश्च वाच्यश्चाज्ञातश्च ज्ञातव्यश्च । तद्भिन्नानां जीवानामनुभवसिद्धमज्ञानम् । तस्मादज्ञानी स भवति ज्ञानमार्गाधिकारी । युज्यते चाज्ञाननिवृत्तिरूपो मोक्ष इति ॥

**अध्यायचतुष्टयार्थश्चतुर्भिर्विशेषणैः**

निरूपितं विषयादिपरत्वं मङ्गलपद्यस्य । अथावतरणिकान्तरमाहाध्यायचतुष्टयार्थप्रतिपादकतया– **समन्वयेत्यादिना** । तेन वाक्यपदवर्णानां भगवद्गुणवाचकत्वेन सम्यगन्वयेन । **प्रतिपाद्यते** प्रथमा-

नारायणपदेन चैतत्समन्वयाद्यर्थचतुष्टयं विशेषणपदचतुष्टयोपदिष्टमभिप्रैति । अराणां दोषाणां विरुद्धत्वान्नारा गुणाः, तेषामयनत्वात्, तैः सहेयत इति वा नारायणः । अतो नारायण-शब्देन गुणोदीर्ण्णत्वं वक्ति । उदीर्ण्ण उदार उत्कृष्टः पूर्ण्ण इत्यर्थः । अराणामयनं न भवतीति योजनायां दोषवर्ज्जितत्वम् । नारं चेतनविशेषसम्बन्धित्वाज्ज्ञानं, तेन नारेण

---

ध्याये । तत्र एवमध्यायद्वयेन वस्तुनिर्णये सति, तस्मिन्ननन्तगुणत्वे ब्रह्मणः । विरोधप्रमाणानां निरासेन दृढं निर्णीता पूर्णा गुणा यस्य तादृशस्य ब्रह्मणः **प्राप्तिसाधनं तृतीये**ऽध्याये विधीयते । **तद्दर्शनात्** तस्य ब्रह्मणो दर्शनात्, **तस्य** अधिकारिणः साधकस्य, **चतुर्थे** प्रतिपाद्यते ॥

फलितमाह– **तत्रे**ति । अध्यायचतुष्टये संहत्यायमाशयः । सर्वगुणसम्पन्नत्वात्, निर्दोषत्वाच्च नारायणः समाधिकरहितः । **अत एव** समाधिकरहितत्वात् **अवश्यं द्रष्टव्यः** ॥

**नारायणपदार्थः**

**तैः सहेयत** इति । तैः गुणैः सहैव ईयते ज्ञायते उपास्यते च, न निर्गुणत्वेनेति नारायण इति प्रथमा-ध्यायार्थोऽनुसंहितः । तदेव प्रथमविशेषणेन स्फुटयति– **गुणैः सर्वैरुदीर्णमि**ति । गुणैरुदीर्णः पूर्ण इति । 'उदीर्णः सर्वतश्चक्षुः' इति विष्णुसहस्रनामवचनं चानेन स्मारयति । 'उदारोदीर्णधन्यास्तु महात्मा सुकृतीति च' इति यादवप्रकाशः । **उदीर्ण्ण उदार** इति । उद्गत उद्रिक्तः इत्यर्थः । क्र्यादेः कॄ गतावित्यस्मात् क्तप्रत्यये रूपम्– ईर्णइति । रेफादुत्तरत्वात् निष्ठातकारस्य णत्वम् । 'रदाभ्यां निष्ठातो नः–' (अ.सू.३.२.४३) इति । अराणां दोषाणामयनमाश्रयो न भवतीति नारायणः । समासान्ता विशेष्यनिघ्नता । विश्वामित्र इति यथा । अराणामयनो न भवतीति च शक्यं विग्रहीतुम् । सोऽयं द्वितीयाध्यायार्थः । तमेव द्वितीयविशेषणेन स्फुटयति– **दोषवर्जितमि**ति । सर्वैरिति वर्तते । सर्वदोष-वर्जितम् । दोषैर्वर्जितो रहित इत्यर्थः । ननु सर्वैरादरणीयता नाम गुणोऽनेन भग्नः । न भग्नः । दुष्टाश्च दोषाश्चास्माद् भीता दूरमपसस्रुरिति महान् गुणः । अथापि यदि मनीषा ते नानुमन्यते तर्ह्यन्यथा विगृहाण– दोषा वर्जिता अनेनेति । उभयथाऽपि न नो हानिः ॥

**चेतनविशेषसम्बन्धित्वादि**ति । सात्विकानामेव हि चेतनानां तात्विकं ज्ञानम् । तेन नरा इति सात्विकचेतना उच्यन्ते । सात्विकानां नराणामिदं नारं ज्ञानमिति । तेन नारेण यथार्थज्ञानेन ईयते

**ईयत इति च नारायणत्वम् । ज्ञानविषयत्वमेव च ज्ञेयत्वम् । न रीयन्त इति नरा मुक्ताः, तेषां समुदायो नारः, तेनेयत इति च नारायणत्वम् । तदेव गम्यत्वं च । एवम्भूतः समुद्रशायी नारायणः ॥ ❋ ॥**

**अथ वासुदेवाख्यो गुणोदीर्ण्णशब्दोक्तः सर्ववसनोत्कर्षक्रीडाज्ञानादिगुणैरुच्चत्वात् ।**

---

विषयीक्रियत इति नारायणस्तृतीयाध्यायार्थः । रागद्वेषाद्यरविरहात् सात्विका एव वा नाराः । तैरयमीयते ज्ञायत इति नारायणः । तदेव तृतीयविशेषणेन स्फुटमाह– **ज्ञेयमिति** ॥

न कदाऽपि रीयन्ते नश्यन्ति इति नराः मुक्ताः । नराणामयं नारः समुदायः । मुक्ता इति मुक्तियोग्या जीवन्मुक्ता वा । नारेण ईयते गम्यत इति नारायण इति चतुर्थाध्यायार्थः । तदेव चतुर्थविशेषणेन स्फुटमाह– **गम्यमिति** । पूर्वविशेषणद्वयं उत्तरयोरपि विवक्ष्यते । गुणैः सर्वैरुदीर्ण इति दोषवर्जित इति ज्ञेयमिति, यथायोग्यं गुणैः सर्वैरुदीर्णैः दोषवर्जितैर्गम्यमिति च ॥

**एवम्भूतः समुद्रशायी नारायण** इति । नारं नीरमयनमस्येति नारायण इति समुद्रशायी कथ्यते । नाराया निर्दोषाया रमाया अयमयन इति रमापतिश्च नारायणः । तेन विद्यादेवता श्रीरपि वन्दिता । नारायणपदे नलोपचिन्ता णत्वचिन्ता च तत्वचिन्तकानां व्यर्था । शास्त्रलोकप्रयोगसिद्धं हि तत् पदम् । साध्ये हि व्याकरणचिन्ता न सिद्धे । प्रयोगशरणैर्वैयाकरणैर्यद्यस्य पदस्य साधुता न साधिता तर्हि तेषामेव न्यूनता स्यात् । तेन नारायणपदं कथं निष्पादनीयमिति वैयाकरणानामेव शिरोवेदना, न तत्ववादिनाम् । सिद्धे सम्प्रत्यया वयम् ॥

## सूत्राणां चतुर्मूर्तिपरत्वम्

अथ पुनरवतरणिकान्तरमाह मङ्गलपद्यस्य नारायणादिपञ्चरूपनिरूपणपरतया– **अथ वासुदेवाख्य** इत्यादिना । वसति सर्वत्रेति वासुः । वसुरिति वक्तव्ये वासुरित्याह–'वासुर्नरायणपुनर्वसुविश्व-रूपाः' इति । तत्र दैर्घ्यमाधिक्यार्थम् । तेन सर्ववसनोत्कर्षो वासुशब्दार्थ इति गम्यते । **क्रीडा-ज्ञानादिगुणैरुच्चो** देवशब्दार्थः । दिवु क्रीडाविजयव्यवहारद्युतिस्तुतिमोदकान्तिगतिष्विति प्राचीनम् ।

**सम्यग्दोषकर्षणात् सङ्कर्षणो दोषवर्ज्जित इत्युक्तः । प्रकृष्टद्युतिमेयत्वात् प्रद्युम्नो ज्ञेयः । ज्ञानिनः प्रति प्राप्तिनिरोधरहितत्वादनिरुद्धो गम्यशब्दार्थः । एवं पञ्चमूर्त्तित्वमपि सूचयति ।**

क्रीडाज्ञानपदाभ्यामाद्यन्तमुपसञ्जग्राह । तेन मध्यपतिताः सर्वेऽप्यर्था यथासम्भवं ग्राह्या इति सूचयन्नादि-पदमुपादत्त । ननु वयमङ्गीकुर्मः– क्रीडाज्ञानादिगुणवान् देव इति । गुणैरुच्च इति त्वशाब्दो बोधः । न भोः, असाधारण्येन हि सर्वे व्यपदेशा भवन्ति । नहि वीथ्यां वसन् भिक्षुको वासुरुच्यते । किन्तु सर्वत्र वसन् वसतामुच्चः । एवं यःकोऽपि पांसुषु क्रीडन् बालो न देव उच्यते । नापि यत्किञ्चिज्ज्ञान-वान् । तेनावगम्यते सृष्ट्याद्युच्चक्रीडागुणको देवः । उच्चज्ञानवान् सर्वज्ञो देव इति ॥

एवं **सम्यक्** सामस्त्येन दोषान् कर्षति दूरीकरोतीति **सङ्कर्षणो दोषवर्जित** इत्युक्तः । एतेनार्थान्तरं च ध्वनयति– स्वभक्तानां च दोषान् कर्षतीति । भक्तैरपि दोषा वर्जिता यस्मात् यदनुग्रहादिति ॥

एवं प्रकृष्टद्युतिरिति ज्योतिर्मय इति मीयत इति प्रद्युम्नः । आम्नायते वा । प्रकृष्टया द्युत्या तत्वज्ञाना-ख्यया मीयत इति च । प्रकृष्टा द्यौर्ज्ञानं प्रद्यौः । तया मन्यते ज्ञायत इति वा । तेन ज्ञेय इति प्रद्युम्न उच्यते । 'द्युम्नं वित्ते बलेऽपिच' इत्यभिधानात् प्रकृष्टं ज्ञानरूपं वित्तं बलं वा प्रद्युम्नम् । प्रकाश-रूपत्वाज्ज्ञानमेव वा प्रद्युम्नम् । तद्विषयत्वात् प्रद्युम्नः ॥

ज्ञानिनां स्वपदप्राप्तिं न निरुणद्धीति, भक्तानां न निरुद्ध इत्यनिरुद्धः । भगवान् स एव ज्ञानिभिर्गम्य इति स्तुतः ॥

## विष्णुतीर्थप्रोक्तं चतुर्मूर्तिलक्षणम्

चतुर्मूर्तिलक्षणं विष्णुतीर्थीयेऽप्युक्तम् । तद्यथा–

'सर्वचेष्टकरूपत्वादनो वायुरुदाहृतः ।
'तद्वाननी हरिः साक्षाद् रुद्धश्चैव स्वभक्तकैः ।
'शत्रुभिः सोऽनिरुद्धश्चेत्यनिरुद्धः प्रकीर्तितः ॥
'द्योतनत्वाज्ज्ञानवत्त्वात् प्रद्युम्न इति कीर्तितः ।
'सम्यग्ज्ञानस्वरूपत्वादानन्दत्वात् स केशवः ॥

तथा प्रतिपिपादयिषितत्वादस्मिञ्छास्त्रे । तमेतं गुरूंश्च ज्ञानाश्रयत्वेन नारायणशब्दवाच्यान्नत्वा सूत्रार्थ उच्यते । बहुवचनं बहुमानार्थम् । चशब्दः पृथङ् नमस्कारार्थः । 'अपि'शब्दात् सूत्रकारमपि ॥

'सम्यक् कर्तृस्वरूपत्वात् सम्यग् ग्रहणरूपतः ।
'सम्यक् प्राणस्वरूपत्वात् सम्यक् च बलरूपतः ।
'सङ्कर्षण इति प्रोक्तः–
'....................सर्वत्रापि च वासनात् ।
'वर्तकत्वाच्च सर्वस्य प्राणदेवत्वतस्तथा ।
'वासुदेवः स विज्ञेयो ज्ञानिनां मोक्षदो हरिः' इति ॥

एवं नारायणादिपञ्चमूर्तिरपि स्तुतः । ननु बहूनि रूपाणि भवन्ति । किमिति पञ्चैव मूर्तयो विशिष्य स्तुताः? प्रस्तुता इति स्तुताः । तदेवाऽह– **तथा प्रतिपिपादयिषितत्वादस्मिन् शास्त्रे** । वासुदेवाद्याश्चतुर्मूर्तयश्चतुर्भिरध्यायैः नारायणश्च समग्रेण सूत्रकदम्बेन प्रतिपाद्यते । एवं प्रत्यध्यायं वासुदेवाद्याश्चतुर्भिः पादैर्नारायणः समग्रेणाध्यायेन प्रतिपाद्यत इति हि भगवत्पादाभिमतम् । तेन ग्रन्थेऽधिकृता इति पञ्च मूर्तयो विशिष्यास्तूयन्त ॥

## यदधिकृतं तदेवेष्टं च विशिष्टं च

एतेन प्रतिपाद्यत्वं नामाधिकृतत्वं नमननिमित्तमिति वदता तत्सहभावि विशिष्टत्वमिष्टत्वं च सूचितमेव । स्फुटत्वान्न मुखत उक्तम् । यो गुणैः सर्वैरुदीर्णः, यो दोषवर्जितः, यो मुमुक्षुभिर्ज्ञेयः, यश्चान्ते गम्यः स हि विशिष्टो भवति । अनितरसाधारणा ह्येते गुणाः । विशिष्ट एव चेष्टो भवति । एतेन भगवतो लक्षणं चोदितम् । सर्वैर्वेदैर्ज्ञेयमिति प्रमाणं च । स्पष्टमेतदपीति ग्रन्थकृन्मुखतो नोवाच । नहि स्फुटप्रतिभासमप्यर्थं महान्त आम्रेडयन्ति । यत् क्वचिदाम्रेडयन्ति सेयमवदिधारिषया मन्देष्वपि विनेयेष्वनुजिघृक्षा नाम ॥

## नारायणमेव गुरूंश्च नत्वा

ज्ञानविषयत्वं नारायणशब्दार्थ इत्युक्तम् । इदानीं नाराणां ज्ञानानामयनमाश्रय इत्यर्थमाश्रित्याऽह– **ज्ञानाश्रयत्वेन नारायणशब्दवाच्यान्नत्वेति** । नारायणमेव गुरून्नत्वा नारायणाभिधानमेव तत्वं गुरव

---

**यद्यपि शास्त्रप्रतिपाद्या परदेवतैव भाष्यकारस्य गुरुः, स एव सूत्रकर्त्ताऽपि, तथाऽपि देवताभक्त्या, स्वगुरुभक्त्या, शास्त्रगुरुभक्त्या च तमेव नारायणं पृथङ् नमस्करोतीति गम्यते । नारायणपदेनैव गुरुनाम चोवाच । आ समन्ताद् विशिष्टः स एव हि व्यासोऽपि ।**

---

इति बहुमानेनापि नत्वेत्यर्थः । ब्रह्मसूत्राणामर्थ उच्यते । ननु बहूनि सूत्राणि भवन्ति शुल्बसूत्रं कल्पसूत्रं पाणिनीयं काशकृत्स्नमिति । केषां सूत्राणामिति स्फुटं वक्तव्यम् । यदवचनेऽपि ज्ञायते तत् किमिति स्फुटमुच्यते । तद्यथा माध्वे वाङ्मये बहव आचार्या भवन्ति । अथापि केवलमाचार्य आहेत्युक्ते भगवत्पाद आहेत्येवावगम्यते । तथैव सूत्रेषु यन्मुख्यं तदेव निरुपपदं सूत्रमुच्यते । अन्यानि तु सोपपदान्येव । तद्यथा जैमिनीयं सूत्रम्, पाणिनीयं सूत्रम्, गौतमीयं सूत्रमिति । 'मुख्यस्य निर्विशेषेण शब्दः' इति प्रमाणं वक्ष्यति । तस्मात् सुष्ठूक्तम्– **सूत्रार्थ उच्यत** इति । अधिसूत्रं बहूनि भाष्याणीति बभूवुः । अथापि तत्र स्वार्थ एवोच्यते, न सूत्रार्थः । अतो मया सूत्रार्थ एवोच्यते । न स्वमनीषाकल्पितोऽर्थ इति ॥

## गुरावात्मनि च बहुवचनम्, न परमात्मनि

ननु नारायणं गुरुं नत्वेति वक्तव्यम् । कथं गुरून् नत्वेति? आह– **बहुवचनं बहुमानार्थमिति** । ननु तर्हि भगवत्यपि बहुमानार्थं नारायणान् नत्वेति वक्तव्यम् । कुतो भगवति न बहुमानः? अविदितभाषाशास्त्रोऽसि येनैवं भाषसे । भगवति बहुमानयन्तोऽपि भगवन्तं देव इत्येवाऽचक्षते न देवा इति । यतस्तत्र बहुवचनेन बहुत्वमेव बोध्यते नैकत्वम् । गुरौ पुनरेकस्मिन्नपि युज्यते बहुवचनं गौरवात्– एते मे गुरव इति । अत एव गीताभाष्येऽपि– 'देवं नारायणं नत्वा, गुरूंश्चान् नत्वा गीतार्थं वक्ष्यामि' इत्याह । अत एव पदवित् पाणिनिर्गुरौ बहुवचनमाचष्ट, न भगवति ॥

**चशब्दः पृथङ्नमस्कारार्थः**, नारायणं नत्वा गुरूंश्च नत्वेति क्रियासमुच्चये चशब्द इत्यर्थः । अपिशब्दस्त्वनुक्तसमुच्चयार्थ इत्याह– **अपिशब्दात् सूत्रकारमपि** । नत्वेत्यन्वयः । स्फुटमेतदुक्तं भगवत्पादेनैव– 'तमेव शास्त्रप्रभवं प्रणम्य' इति । **पृथङ् नमस्करोतीति गम्यते** तथा कर्तव्यमिति शिक्षयितुम् । तथाहि श्रूयते– 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति ॥

नराणामुत्तमगतित्वेन विशिष्टत्वात् । नारायणस्य नमस्कारोऽप्यष्टाङ्गः कृतो नत्वेत्युच्यते, तथा कार्य्यत्वज्ञापनार्थम् । तं नत्वा स एव सूत्रार्थ उच्यत इत्यर्थः ॥ * ॥

अयं हि तावत् प्रणवार्थः । अकारोऽन्याभावविरुद्धवाची कारणत्वेन सर्वजगतोऽन्यत्वम्, सर्वदोषाभावम्, सर्वगुणसम्पन्नत्वेन जगद्विरुद्धलक्षणत्वं च ब्रह्मणो वदति । तथाच भगवती

## गुरोर्नाम न गृह्णीयादिति वचनार्थः

**नारायणपदेनैव गुरुनाम चोवाच** । ननु गुरोर्नाम न गृह्णीयादित्याचक्षते । सत्यमाचक्षते । किं तेन? तेनेदं विरुद्धं भवति नामग्रहणम् । न भवति, भिन्नविषयत्वात् । गुरोरसाधारणं नाम मुखतः गुरुं सम्बोधयितुं न गृह्णीयादिति स्मृतिवचनार्थः । मुखतः सम्भाषणेऽपि गुरो आचार्य भगवन्नित्यादि साधारणं नाम गृह्णीयादेव, अतोऽसाधारणं नामेति । परोक्षे कश्चित् पृच्छति चेत् किं ते गुरोर्नामेति तदाऽपि ब्रूयादेवासाधारणं नाम शिष्यो गुरोः, भार्याऽपि पत्युरिति मुखतः सम्बोधयितुमिति । अत्र तु गुरोः व्यास इत्यसाधारणं नाम । नारायण इति तु साधारणं नाम भगवद्रूपाणाम् । परोक्षवचनं चेदं गुरून्नत्वेति ॥

अथ नाम्नि निर्वचनसाम्यमाह– **य आ समन्तात् विशिष्टः** सर्वविलक्षणः सर्वोत्तमश्च **स** नारायण **एव हि व्यासोऽपि** । एवं विद्वद्रूढ्या नारायणवचनोऽपि व्यासशब्दो लोकरूढ्या सत्यवतीकुमारस्यासाधारणं नाम । एवं नारायणपदमपि व्यासे निर्वक्ति– **नराणामुत्तमगतित्वेन** । उत्तमा गतिरवगतिः परमा गतिश्च । एतेन नारस्य सज्जनसमुदायस्य अयनं ज्ञानं प्रायणं च येनेति निर्वचनमुक्तं भवति ॥

**अष्टाङ्गो नमस्कार** इति । अष्टभिरप्यङ्गैः प्रह्वत्वं हि धात्वर्थः । 'उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः' । क्रियताम्? किमर्थमुच्यते । तथा कार्यमिति शिष्यान् ज्ञापयितुम् । **तं नत्वा स एव सूत्रार्थ उच्यते** । अत एव हि स नतः ॥

## स एव सर्ववेदार्थः

प्रणवादिश्रुत्यन्तार्थ एव सूत्रार्थ इत्याह– **अयं हि तावत् प्रणवार्थः** । भगवतः प्रकृष्टो नवः स्तवः प्रणवः । णु स्तुतौ । प्रथमो वा नवः । अः प्रतनो नवोनवः । सर्वजगतोऽन्यः सर्वजगन्निमित्त-

श्रुतिः– 'अः इति ब्रह्म' इति सर्वतो विलक्षणमकारार्त्थं ब्रह्म ब्रवीति । उकारमकाराभ्यामुत्कृष्टतया मितत्वमुच्यते । व्याहृतीनामपि भूमत्वात्, भावनशीलत्वेन वर्त्तमानत्वात्, सुत्वेन वृत्तेः, स्वातन्त्र्याच्चायमेव वाच्यः । त्रिपदया च गायत्र्या त्रिवर्ग्गात्मकेन पुरुषसूक्तेन च । सोऽयं विष्णुर्वेदैरेक एवोद्गीतस्तदर्त्थनिर्ण्णायकैः सूत्रैः प्रतिपाद्यते । अतः सूत्रार्त्थ उच्यत इति समस्तवेदोपबृंहकेतिहासपुराणादिशब्दराश्यर्त्थभूतः सूत्रार्त्थो भाष्यत इति प्रतिज्ञा क्रियते ॥ ✲ ॥

---

कारणत्वात् । जन्माद्यष्टकारणत्वाद् वा । अः सर्वदोषाभावरूपः । अः जगद्भिरुद्धलक्षणः गुणपूर्णत्वात् निर्दोषत्वाच्च । अत्वादुः उच्च इति मीयते । तदेतदाह– **उकारमकाराभ्यामिति** । **मितत्वं प्रमितत्वमुच्यते** । **भूमत्वाद्** पूर्णत्वाद् भूः । सृष्टिस्थितिसंहारान् भावयतीति भुः भावनशीलः । 'सृष्टिः स्थितिश्च संहारो भावनेत्यभिधीयते' इति ह्यभिदधति । ताच्छील्यार्थ उन् । भावनशीलः सन् वर्तत इति भुवः । भावनशीलः सन् वसतीति वा भुवः । सुत्वेन सुखरूपत्वेन वर्तत इति सुवः । 'स्वित्यानन्दः समुद्दिष्टः' इति च स्मरन्ति । स्वातन्त्र्यात् स्वरमणाच्च स्वः ॥

'व्याहृतीनां च भूमतः । भावनाच्चैव सुत्वाच्च' इत्यनुव्याख्याने ॥

'ओमशेषगुणाधार इति नारायणोऽप्यसौ ।
'पूर्णो भूतिवरोऽनन्तसुखो यद् व्याहृतीरितः ॥

'गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।
'भारतिज्ञानरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः ।
'प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरितः ॥

'स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः ।
'स एवाखिलवेदार्थः सर्वशब्दार्थ एवच' इति चर्ग्भाष्ये ॥

**विष्णुरेक एव** उच्चत्वेन सर्वदेवोत्तमत्वेन गीतः । अन्ये तु तत्परिवारतया । अतः स एव उद्गीथः । सर्वशब्दमुख्यार्थतया गीतः । अन्ये त्वमुख्यवृत्त्या । तदेतत् सर्वशब्दार्थत्वं नारायणस्य **सूत्रैः प्रतिपाद्यत** इति । अतः नारायणः **सूत्रार्थ उच्यत** इति साधुतमेयं प्रतिज्ञा ॥ ✲ ॥

**द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान् नारायणो व्यासत्वेनावततार ॥**

---

कथमेतेषां सूत्राणां प्रामाण्यमिति चेदाप्तिमूलत्वात् श्रुतिमूलत्वाद् युक्तिमूलत्वाच्चेति ब्रूमः । आप्तिस्तावत्, प्रसक्तिश्रोतृवक्तॄणामानुकूल्याद् भवति । तत्र प्रथमतः प्रसक्तिं दर्शयति– **द्वापरे सर्वत्र ज्ञान आकुलीभूत** इति । द्वावेव धर्म्मपादौ परं यस्मिन् युगे प्राप्ते, ततः क्रमादपचयोऽन्तत एकोऽवशिष्यते तस्मिन् द्वापरे । सर्वत्र, मनुष्याणामृषीणां देवानां च । केषाञ्चिदिदं वा तत्वमदो वेति संशयो बभूव । तत्र चैकतरप्राधान्यं केषाञ्चित्, अन्यतर-प्राधान्यमन्येषां, इदमेव नान्यदित्यन्येषां, तद्विपरीतमपरेषामिति ज्ञानमाकुलीबभूव ॥

---

## त्रिविधं प्रामाण्यम्

विवृतं द्वात्रिंशदक्षरं त्रयोदशपदमानुष्टभं मङ्गलपद्यम् । अथावतरणिकाभाष्यपदानि व्याचष्टे– **कथमेतेषा-मित्यादिना** । **आप्तिमूलत्वादित्यादि** ॥

> ‘आप्तिमूलतया चैव श्रुतिमूलतया तथा ।
> ‘युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत्’ इत्याचार्यवचनम् ॥

**आप्तिस्तावदिति** । ‘वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता’ इति च ॥

## द्वापरशब्दार्थः

**प्रसक्तिश्रोतृवक्तॄणामित्युत्तरवाक्यानुसारी क्रमः** । अल्पाच्तरं पूर्वमिति तु द्विपदसमास एव । यदाहुः– ‘वीणावेणुमृदङ्गाः मृदङ्गवेणुवीणा वा’ इति । तमेव क्रमं दर्शयति– **तत्र प्रथमतः प्रसक्तिं दर्शय-तीति** । युगस्य द्वापरत्वमेव प्रथमं तावदाकुलीभावकारणम् । तदेतन्निरूप्य दर्शयति– **द्वावेव धर्मपादौ परं** केवलं **यस्मिन्** अवशिष्येते युगारम्भे, युगान्ते च **एकोऽवशिष्यते** । द्वाभ्यां कृतत्रेताभ्यां परमिति च शक्यं निर्वक्तुम् । प्रकृतोपयुक्तं ज्ञानाकुल्यकारणसमर्पकं निर्वचनं तु ग्रन्थकृदाह ॥

**तन्निर्ण्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्त्थित** इति श्रोतॄन् दर्शयति । इदमेव तत्वं नान्यदिति सम्यग्ज्ञाननिर्ण्णयापेक्षयेन्द्रादिभिरर्त्थितो ब्रह्मा रुद्रश्च । ततस्तैः सर्वैरुपगम्योत्तमाधिकारिभिरलब्धतत्वोत्कण्ठापरिखिन्नहृदयैरनन्यशरणत्वेन सकरुणमभिष्टूय प्रसादितोऽ**र्त्थितो भगवान् नारायणो व्यासत्वेनावततारे**ति वक्तृस्वरूपमाह ॥

## सूत्राणां वक्त्राद्यानुकूल्यम्

ननु राजसानां मनुष्याणां तत्वमिदमदो वेति संशय एव सदा । तत्र किञ्चित् सत्वाधिक्ये प्राय इदमेव सत्यमित्येकतरप्राधान्यम् । तमआधिक्ये अद एवेत्यपरप्राधान्यम् । सात्विकानामिदमेवेति । तामसनां तद्विपरीतमद एवेति । जीवानां वस्तुस्थितिरियम् । नाऽकुलीभावः । अत आह– सात्विकानां **मनुष्याणामृषीणां देवानां च** । ऋषिदेवसाहचर्यात् सात्विकानां मनुष्याणामिति गम्यते । तथाच सात्विकेष्वेव मनुष्येषु तत्वज्ञानार्हेषु ज्ञानमाकुलीबभूव । तेन केषाञ्चित् सात्विकानामेव तत्वमिदमदो वेति संशयो बभूव । सात्विकेष्वेव केषाञ्चित् प्राय इदं तत्वं स्यादिति । केषाञ्चित् प्रायोऽदस्तत्वमिति । केषाञ्चिद् गाढसत्वानामिदमेव तत्वमिति । केषाञ्चित् पिहितसत्वानामतत्वमेव तत्वमिति विभ्रमो बभूव । तत्रभवान् द्वापरमानी शकुनिः सर्वानाविवेश । न केवलं मनुष्याणामियं दशा । ऋषीणां च देवानां च । तेऽपि ह्यसुराविष्टाः किञ्चिदिव सङ्कीर्णबुद्धयो बभूवुः । केवलं मनुष्याणां तमआवेशो तन्निरसनाय देवानामवतरणं पर्याप्तम् । किन्तु देवा अप्यसुरावेशेन किञ्चिदिव विस्मृततथ्याः पिहितज्ञाना बभूवुरिति स्वयं **भगवान् नारायण** एव **व्यासत्वेनावततार** । अत एवोक्तं निर्णये– 'एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा' इति । देवानामिन्द्रादीनामृषीणां सात्विकनराणां च **सम्यग्ज्ञाननिर्णयापेक्षया** । **ब्रह्मरुद्रेन्द्रादिभिरर्थित** इत्यत्र व्यवस्थामाह– **इन्द्रादिभिरर्थितो ब्रह्मा रुद्रश्चे**ति । इन्द्रान्ता देवाः सङ्कीर्णबुद्धयो बभूवुः । ते तमोनिरासाय तमोमानिनं रुद्रमभ्येत्य प्रार्थयामासुः । स तैः सह ब्रह्माणं जगाम । ततश्च ब्रह्मरुद्रपुरःसरा देवा नारायणं जग्मुः । तदेतत् प्रमाणवचने स्फुटम्– 'सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः' इति । ब्रह्मरुद्रपुरःसरा इति वचनेनैव देवा इन्द्रादय इति स्फुटम् । तदेतदाह– **ब्रह्मरुद्रेन्द्रादिभिरर्थित** इति । उत्तमाधिकारिभिः ब्रह्मरुद्रपूर्वैरिन्द्रादिभिर्देवैः । पूर्वमलब्धस्य तत्वस्य लब्धये योत्कण्ठा उत्कटा स्पृहा तया, असह्यविलम्बतया **परिखिन्नहृदयैः** । तदयं देवानां भगवदवतारेण स्वार्थः । अलब्धस्य लाभः, क्वचिल्लब्धस्यैव स्फुटता, क्वचिद् विस्मृतस्य स्मृतिरिति । अथच अधमा-

---

'ज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' इत्यादावशेषत इति विशेषणान्निरतिशयज्ञानादिगुणवान् भगवच्छब्दार्थ उक्तः स्यात् ।

---

धिकारिषु मनुष्येषु 'तेऽपि तत्वज्ञानवन्तो भूयासुः' इति कृपाशीलैः । तदेतदाह– **सकरुणमिति** । **अभिष्टूय** ज्ञानपूर्वं स्तुत्वा **प्रसादितः** प्रसाद्य च **अर्थितः** ॥

ननु कथमभिष्टूय? छान्दसोऽयं प्रयोगः । अभिष्टुत्येत्यर्थः । तेन, 'युप्लुवोर्दीर्घश्छन्दसि' (अ.सू.६.४.५८) इत्यत्र 'ष्टुञोऽपि' इत्युपस्कर्तव्यम् । अन्यथा पाणिनेर्न्यूनता नाम दोषः स्यात् । तथाहि भागवते प्रयोगः– 'इत्थं पृथुमभिष्टूय पुरुषम्–' (४.१८.१)इति, 'इत्यभिष्टूय पुरुषम्–' (१०.३.४३) इति च । महान्त एवं क्वचित् पाणिनीयं नयमनादृत्य प्रयुञ्जते । यथा विष्णुस्तुतौ 'निहताम्' इति वक्तव्ये 'निघ्नताम्' इत्याह– 'निघ्नतां नः स्मरण-सरणिकाविघ्नमीशस्य जङ्घे' (१२) इति । मध्वविजयकारोऽपि 'अलब्ध' इति वक्तव्ये अलभिष्ट इत्याह– 'अलभिष्ट यदेष धन्य इत्यतिकौतूहलमापि तापसैः' (७.५५) इति । 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' ॥

ननु कथं ब्रह्मणोऽलब्धलाभः? शृणु । भारतं हि केवलेश्वरदृष्टार्थम् । तद् ब्रह्माऽपि न जानातीत्यायातम् । अन्यथा केवलपदं व्यर्थं स्यात् । तथाच भगवान् व्यासः केवलस्वदृष्टार्थं भारतं विधाय तमर्थं ब्रह्मादीन् प्रति बोधयामासेति सर्वं सूक्तम् । एवं **द्वापरे सर्वत्र ज्ञान आकुलीभूत** इति प्रसङ्गानुकूल्यम्, **तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थित** इति श्रोत्रानुकूल्यम्, **भगवान् नारायणो व्यासत्वेनावततारेति** वक्त्रानुकूल्यं च प्रदर्शितम् ॥

## भगवच्छब्दार्थः

नन्वनन्तगुणो भगवान् । किमिति षडेव गुणा भगवच्छब्दवाच्याः ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसीति? ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणीति वा वचनान्तरे? सर्वगुणसमाहारोऽयम् । चतुर्गुणोपासनवत् । तथाहि सृज्यस्य समस्तस्य जगतः, स्रष्टुश्चाऽत्मनः समग्रं ज्ञानं ज्ञानम् । सर्वज्ञत्वमित्येतत् । इच्छामात्रेण सृष्ट्याद्यष्टकर्तृत्वं शक्तिः । सत्यसङ्कल्पत्वमित्येतत् । सृष्टिहेतुरानन्दो बलम् । आनन्दमयत्वमित्येतत् । अन्तर्बहिः स्थित्वा सर्वनियमनमैश्वर्यम् । सर्वेश्वरत्वमित्येतत् । दोषनिरसनशक्तिर्वीर्यम् । अप्रतिहतत्वं तेजः । पक्षान्तरे सर्वसमर्थत्वमैश्वर्यम् । दोषनिरसनशक्तिर्वीर्यमित्युक्तम् । पुण्यश्रवणकीर्तनत्वं सर्वशब्दाभिधेयत्वं च यशः । सर्वाश्रयत्वं श्रीः । सर्वज्ञत्वं ज्ञानम् । असङ्गत्वं नामाभिमानविरहो वैराग्यम् ॥

गुणगुण्यभेदाभिप्रायात् । न च गुणानां परस्परं भेदः । विशेषाङ्गीकारेणैव बहुवचनाविरोधात् ॥

ननु कथमेकस्यैव गुणगुणिभावः । गुणव्यतिरिक्तो हि गुणसम्बन्धेन गुणवान् । दण्डव्यतिरिक्तो दण्डीतिवत् भिन्नयोरेव तथाऽनुभवादिति चेन्न । प्रत्यक्षत एव दण्डदण्डिनोर्भेदानुभवात् सम्बन्धापेक्षया दण्डीति युज्यते । न च गुणगुणिनोर्भेदोऽनुभूयते । 'विज्ञानमानन्दं ब्रह्म' इत्यादिसामानाधिकरण्येनाभेदप्रतीतेः । लोके च 'शुक्लः पटः' इत्यादौ । तत्र

## भगवति वक्त्रानुकूल्यम्

अविप्रलम्भकत्वं विवक्षितार्थतत्वज्ञानं च हि वक्तुराप्तता नाम । श्रोतॄणां प्रसङ्गस्य चाऽप्ततया ज्ञातमविप्रलम्भकत्वम् । विवक्षितार्थतत्वज्ञानं च भगवत्पदेनाऽह । यद्यपि सर्वदेवोत्तमस्य नारायणस्य सर्वज्ञत्वं न पृथग् वक्तव्यम् । सर्वज्ञ एव सर्वोत्तमो भवितुमर्हतीति । अथ नारायणपदमेव च सर्वज्ञतामाह– नारस्य निर्दुष्टज्ञानस्यायनमाश्रय इति । अथापि विनेयानां स्फुटप्रतिभानाय पुनरपि भगवानिति पदमुपादत्त । तथाहि– अशेषदेवोत्तमत्वेन नारायणत्वेन च सूचितं सर्वज्ञत्वं स्फुटमभिधीयते भगवत्पदेन । कथम्? प्रमाणवचने तावज्ज्ञानादीनामशेषत्वं विशेष्यते । अशेषतः अशेषाणि निरतिशयानि ज्ञानादीनि षड् भगवच्छब्दवाच्यानीति । तेन भगवानिति निरतिशयज्ञानादिमानिति मुखत एव कथितं भवति ॥

प्रमेयान्तरं चापूर्वमुपक्षिप्तं भवतीत्याह– **गुणगुण्यभेदाभिप्रायादिति** । तथाहि– वचनान्तरे चैवं पठ्यते– 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति । समग्राणि ज्ञानादीनि षड् भगशब्दवाच्यानीत्यत्रोच्यते । भगवच्छब्दवाच्यानीत्युपरितनश्लोके । तेन ज्ञायते भगभगवतोः गुणगुणिनोरभेदोऽप्यत्राभिप्रेत इति । ज्ञानस्वरूपो भगवान् ज्ञानवानपीति ॥

## गुणगुणिनोर्न भेदः

तदेतदसहमानाः केचन प्रत्यवतिष्ठन्ते । गुणेन सम्बद्धं हि गुणीत्युच्यते । यथा दण्डेन दण्डी । सम्बन्धश्च भेदसापेक्षः । अर्धसत्यमाह भवान् । यत्र द्रव्यं द्रव्येण संयुज्यते, यथा दण्डः पुरुषेण, तत्र भेद एव । प्रत्यक्षत एव भेदानुभवात् । यत्र गुणो द्रव्येण संयुज्यते तत्र न भेदः । यथादृष्टवादिनो

---

**शौक्ल्यसम्बन्धापेक्षया शुक्लत्वमिति चेन्न । 'शुक्लो वर्ण्णः' इति प्रयोगदर्शनात् । तथाच श्रुतिः 'श्वेतं रूपम्' इति, 'तस्य हवा एतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौग्मं कृष्णम्' इति च । शौक्ल्यमित्यादिशब्दव्यवहारो निष्कर्षार्त्थः स्वरूपत्वमितिवत् । सामानाधिकरण्यं हि सर्वेषामभेदे प्रमाणम् ॥**

---

वयम् । नच गुणगुणिनोः कापि भेदोऽनुभूयते । प्रत्युताभेद एवानुभूयते वेदे च लोके च । वेदे तावत्– **'विज्ञानमानन्दं ब्रह्म'**, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' इत्यादिषु सामानाधिकरण्येनाभेद एव हि प्रतीयते । लोके च 'शुक्लः पटः', 'रक्तो घटः' इत्यादौ ।

ननु मत्वर्थीयेनाचा सर्वं निरुह्यते– शुक्लो वर्णोऽस्यास्तीति शुक्ल इति । तेन पटे शुक्लत्वव्यवहारः, घटे वा रक्तत्वव्यवहारः परम्परया शौक्ल्यादिसम्बन्धादेव, नतु साक्षात् । वर्णगतं शुक्लत्वं रक्तत्वं वा वर्णाधिष्ठाने पटे घटे वोपचर्यते । तदिदं पितामहं पितरमाचक्षते । तद्यथा पूर्वे नः पितर इति ॥

ननु भोः, न सर्वं निरुह्यते । ननु भवानेव प्रायुङ्क्त– 'शुक्लो वर्णः' इति । सार्वत्रिकश्चायं प्रयोगः– 'शुक्लो वर्णः' इति । नायं प्रयोगो मत्वर्थीयेनाचा शक्यं निर्वोढुम् । तेन ज्ञायते शुक्लत्वं वर्णेऽप्याचक्षते– 'शुक्लो वर्णः' इति । पटेऽप्याचक्षते 'शुक्लः पटः' इति । तेन किल पटवर्णयोरभेदः प्रतीयते । तद्यथा काचिच्छ्रुतिः भगवन्तमेव श्वेतं रूपमाह । अपरा भगवतः श्वेतं रूपम् । श्वेतत्वं रूपे च भगवति च । तेन तयोरैक्यम् । यथा क्वचित् तृतीया सविशेषमभेदं बोधयति धान्येन धनवानिति धान्याभिन्न-धनवानिति, एवं षष्ठी च– पटस्य शुक्लो वर्ण इति पटाभिन्नः शुक्लो वर्ण इत्यर्थः ॥

एवं बहुविधाः प्रयोगा भवन्त्यव्युत्पन्नानां विभ्रमकराः । पटस्य शुक्लं रूपमित्याचक्षते । पटस्य शौक्ल्यं रूपमित्यपि । घटस्य रक्तं रूपमित्याचक्षते । घटस्य रक्तत्वमित्यपि । स्वोक्तमर्थमवधारयितुं स्वार्थे ष्यञ् प्रत्ययोऽयं त्वप्रत्ययो वा । तद् यथा त्रयो लोका एव त्रैलोक्यम् । चत्वारो वर्णा एव चातुर्वर्ण्यम् । यथा सुखमेव सौख्यम् । यथा वा स्वरूपमेव स्वरूपत्वम् । दुःखमेव दुःखता । नान्यत् किञ्चित् पदार्थान्तरं प्रत्ययेन बोध्यते । तदेतदाह– **शौक्ल्यमित्यादिशब्दव्यवहारो निष्कर्षार्थः स्वरूपत्वमितिवदि**ति । निष्कर्षार्थ इत्यवधारणार्थ इत्यर्थः । शौक्ल्यमिति शुक्लत्वावच्छिन्नमुच्यते । स्वरूपत्वमिति स्वरूपत्वावच्छिन्नमुच्यत इति शाब्दिकानामियं प्रक्रिया ॥

**'मृद् घटः' इत्यादिसामानाधिकरण्येऽपि कारणेनाभेदप्रतीतेर्विनाशाच्च कार्य्यस्य भेदाभेदोपपत्तिः । तस्माद् द्रव्ये सत्यप्यपायिनां गुणादीनां भेदाभेदौ, यावद्द्रव्यभाविनामभेदः ॥**

ननु किमनेनाभेदप्रतिपादनप्रयासेन? भेदाभ्युपगमे किं ते च्छिन्नम्? शुक्लः पट इति त्वौपचारिकतयाऽपि शक्यमुपपादयितुम् । न शक्यमित्याह– **सामानाधिकरण्यं हि सर्वेषामभेदे प्रमाणमसति** बाधके । यथावस्तु दृश्यते तथा किलाङ्गीकरणीयम् । न हि पटाद् रूपं पृथग् दृश्यते । न शक्यते च पृथक्कर्तुम् । तेन सामानाधिकरण्यमेव मुख्यम् । वैयधिकरण्यमेवामुख्यमित्यवसीयते । दृष्टं विहायादृष्टं कल्पयित्वा तेन किमिति षष्ठ्या मुख्यार्थत्वं वृथा कल्पयसि? किञ्चास्मत्पक्षे प्रथमा च मुख्यार्था षष्ठी च । षष्ठ्याः सविशेषाभेदार्थकत्वाभ्युपगमात् । तथाच सामानाधिकरण्येनाभेदो बोध्यते । षष्ठ्या चाभेदस्य सविशेषत्वं बोध्यत इति सर्वमतिसुन्दरम् ॥

## मृद्घटयोर्भेदाभेदः

ननु यदि सामानाधिकरण्यं सर्वेषामभेदे प्रमाणम्, मृद्घटयोरप्यत्यन्ताभेदः स्यात् । 'मृद् घटः' इति सामानाधिकरण्यप्रतीतेः । न स्यात् । न वयं ब्रूमः यत्र सामानाधिकरण्यं तत्राभेद एवेति । किन्त्वसति बाधके सामानाधिकरण्यमभेदं बोधयतीति । तथाच सामानाधिकरण्यं श्रवणमात्रेणाभेदं बोधयति । अथ बाधकदर्शने भेदाभेदं बोधयति । यथादृष्टवादिनो हि वयं न किमपि क्वापि कल्पयामः । 'मृद् घटः' इत्यत्र कारणेन मृदा कार्यस्य घटस्याभेदो दृश्यते । न दृश्यते च मृदो घटेनाभेदः । नष्टेऽपि हि घटे मृदवशिष्यते । तथाचैवं व्यवस्था– **द्रव्ये सत्यप्यपायिनां गुणादीनां भेदाभेदौ** सामानाधिकरण्यार्थः । **यावद्द्रव्यभाविनामभेदो**ऽर्थः । न क्वापि सामानाधिकरण्यस्य भेदोऽर्थः ॥

ननु पराजितोऽसि । 'सिंहो माणवकः' इत्याचक्षते । तत्रास्ति सामानाधिकरण्यम् । नास्त्यभेदः । नापि भेदाभेदौ? ननु भ्रान्तोऽसि । त्वमेव पराजितो भूत्वा मां पराजितं मन्यसे । तत्र न सिंहत्वं सिंहशब्दार्थः । किन्तु सिंहसदृशत्वम् । सिंहसदृशेनाभेदो माणवके बोध्यत इति किमत्रानुपपन्नम् ॥

## विस्मयावहो विशेषः सर्वैरनुभूयते

ननु सामानाधिकरण्यं चेदभेदे प्रमाणम्, तेनैव नयेनासामानाधिकरण्यं भेदे प्रमाणं स्यात् । अस्ति च गुणगुणिनोरसमानाधिकरणः प्रयोगः पटस्य शौक्ल्यमिति । तेन पटस्य शौक्ल्यमिति षष्ठ्या गुणगुणिनोर्भेदः किं न स्यात्? न स्यात् । नहीदं भेदवचनम्, किन्तु सविशेषाभेदवचनम् । अभेदो

**ननु भेदः प्रतीयते गुणगुणिनोः, पटस्य शौक्ल्यमिति तन्न । विशेषप्रतीतिरेषा 'पटस्य भेदः' इतिवत् । नहि पटाद् भेदस्य भेदः । अनवस्थानात् । यथा च समवायस्य सत्त्वमिति स्वरूपभूतमेव सत्त्वं विशेष्यते । न च तस्य सत्ता भिन्नाऽभ्युपगम्यते वैशेषिकैः । द्रव्य-**

---

ह्यनुभूयते; विशेषश्च । पटे शुक्लत्वमनुभूयते । न शुक्लवर्णे पटत्वम् । अयमेकः, अभेदेऽपि भेदवद् वर्तनं नाम, विस्मयावहो विशेषः ॥

## पटभेदः पटाभिन्नः

ननु समानमेतद् मृद्घटव्यवहारेऽपि । घटे मृत्त्वमनुभूयते । न मृदि घटत्वम् । घटत्वावच्छिन्नं मृदेव । न मृत्त्वावच्छिन्नं सर्वं घटः । तेनात्रापि सविशेषोऽभेदोऽङ्गीक्रियताम् । किं विरुद्धयोर्भेदाभेदयोरेकनिष्ठत्वाभ्युपगमेन? न भोः । सर्वं हि यथादर्शनं व्यवस्थीयते । घटनाशेऽपि तत्कारणं मृदवशिष्यते । तेनावश्यं मृदि घटाद् भेदोऽभ्युपेयः । प्रत्यक्षदृष्टे सहयोगे का युक्तिविरुद्धता नाम । नैवं गुणगुणिनोः । नहि पटनाशेऽपि क्वापि पटरूपमवशिष्यते । तर्हि कथं षष्ठी? न दोषः । अभेदेऽपि षष्ठीदर्शनात् । विवृतमेतत् । अथापि शृणु । पटस्य भेद इति सर्वोऽपि व्यवहरति । त्वमपि । किमुक्तं भवति? पटाभिन्नो भेद इत्येवोक्तं भवति । कुत एवमागृह्यते – पटभेदः पटाद् भिन्नः किं न स्यात्? न स्यादनवस्थाप्रसङ्गात् । तथाहि– पटाद् पटभेदो भिन्न इति किलाऽस्थ । अनयैव दिशा पटभेदनिष्ठो भेदोऽपि पटभेदाद् भिन्नः । पटभेदभेदोऽपि पटभेदभेदाद् भिन्नः । सोऽपि तथा, सोऽपि तथेत्यनन्तेयं भेदपरम्परा स्यात् । तस्मादनुयोगिस्वरूपतैव भेदस्य । गुणिस्वरूपतैव गुणस्येति युक्तं वचः । षष्ठी तु भेदप्रतिनिधिं विशेषं बोधयति ॥

## वैशेषिकाणामज्ञानम्

अत्राऽहुर्वैशेषिकाः– यद्यभेदोऽङ्गीक्रियते तर्ह्यभेद एव । यदि भेदः, भेद एव । नामुमर्धजरतीयं भेदाभेदं वयमङ्गीकुर्म इति । तन्मतप्रक्रिययैव तं प्रत्येतं सविशेषाभेदमङ्गीकारयति– **यथा च समवायस्य सत्त्वमिति स्वरूपभूतमेव सत्त्वं विशेष्यते** । अस्ति तावत् 'समवायः सन्' इति व्यवहारो वैशेषिकाणामप्यभिमतः । न चेत् समवायस्यास्तितैव न स्यात् । किमिदं समवाये सत्त्वं नाम? न तावत् समवायनिष्ठं सामान्यम् । द्रव्यगुणकर्मसु त्रिष्वेव पदार्थेषु सामान्यस्य तैरभ्युपगमात् । तेन स्वरूपभूतमेव सत्त्वं

गुणकर्म्मस्वेव सत्तासामान्यस्य वृत्तेः । अस्ति च 'समवायः सन्' इति प्रयोगविशेषः । अन्यथा 'समवायः समवायः' इतिवदनर्थकः प्रयोगः स्यात् । न चौपचारिकं समवाय-सत्त्वम् । मुख्यतस्तदभावप्रसङ्गात् ॥

यथा च मायिनां ब्रह्मणः सत्यज्ञानानन्दत्वादि । नचैकस्मिन् ब्रह्मणि विशेषमन्तरेण सत्यज्ञानादिशब्दप्रवृत्तिः, तेषां पर्य्यायत्वप्रसङ्गात् । निर्विशेषेऽपि वस्तुन्यनृतादिव्यावर्त्त्यभेदा-

---

व्यवहारविषय इत्यनिच्छद्भिरपि तैरेष्टव्यं भवति । स्वरूपमेव द्विधोच्यते– समवाय इति सन्निति । यदि स्वरूपभूतः कश्चन विशेषो नाभ्युपेयते तर्हि **'समवायः समवायः' इतिवदनर्थकः प्रयोगः स्यात्** । तस्मादुन्मत्तप्रलापिनो मा नाम भूमेति तैरप्यवश्यमभ्युपेयः स्वरूपाभिन्नः कश्चन विशेषः ॥

## मायिनामप्यविदितो विशेषोऽस्ति

अथ मायावादिनः स्वयमभेदवादिनोऽपि गुणगुणिनोरभेदमसहमानाः प्रत्यवतिष्ठन्ते । तेषामपि समं समाधानमित्याह– **यथा च मायिनां ब्रह्मणः सत्यज्ञानानन्दत्वादि** । मायिनां तावदियं प्रक्रिया– अङ्गीकुर्मो वयं सामानाधिकरण्यमभेदे प्रमाणमिति । अत एव 'तत् त्वमसि' इति तदभिन्नस्त्वमसी-त्यर्थः । 'अहं ब्रह्मास्मि' इति ब्रह्माभिन्नोऽहमस्मीत्यर्थः । तेन भवत एव प्रतिकूलोऽयं नियमः । गुण-गुणिनोस्तु न वयमभेदमङ्गीकुर्मः । 'शुक्लः पटः' इति तु मत्वर्थगर्भः प्रयोगः । नतु शुक्लाभिन्नः पट इति । विशेषाभ्युपगममन्तरा गुणगुणिनोरभेदस्य दुरुपपादत्वात् । विशेषस्य चानङ्गीकारादिति । यदि नाङ्गीकरोषि, अङ्गीकारयिष्यसे । तथाहि– सत्यं ज्ञानमनन्तं ब्रह्मेति कोऽर्थः? न तावत् सत्यत्वादिगुणविशिष्टं ब्रह्मेति । ब्रह्मणो निर्गुणत्वाभ्युपगमात् । न गुणा उच्यन्ते । किन्तु ब्रह्मस्वरूपमेव पदान्तरैरुच्यत इति चेत्, तर्हि तेषां स्वरूपमात्रबोधकतया पर्यायत्वेन ब्रह्म ब्रह्म ब्रह्मेत्युक्तं स्यात् । नहि वेदा नामाभिधानकोशः । येन पर्यायपदान्यावर्त्येरन् 'विष्णुर्नारायणो बभ्रुश्चक्रपाणिर्जनार्दनः' इति । नन्वस्त्यत्र किमप्याकूतम् । सत्यमिति न सत्यत्वं विधीयते । किन्त्वनृताद् व्यावृत्तं ब्रह्मेत्युच्यते । ज्ञानमिति न ज्ञानत्वं विधीयते । किन्तु जडाद् व्यावृत्तं ब्रह्मेत्युच्यते । अनन्तमिति नानन्तत्वं विधीयते । किन्तु परिच्छिन्नाद् व्यावृत्तं ब्रह्मेत्युच्यते । आनन्द इति नाऽनन्दत्वं विधीयते । किन्तु दुःखाद् व्यावृत्तं ब्रह्मेत्युच्यते । यदाहुरस्मत्पूर्वाचार्याः– 'अनृतजडविरोधिरूपमन्तत्रयमलदुःखताविरुद्धम्'

च्छब्दान्तरप्रवृत्तिरिति चेत् । अनृतादिव्यावृत्त्या ब्रह्मणि विशेषोऽस्ति वा नवा? न चेदेकपदेनैवाखण्डार्थसिद्धेः पदान्तरवैयर्थ्यं पर्य्यायत्वं च सत्यादिपदानां स्यात् । विशेषाभ्युपगमेन वेदपदोदितस्य ब्रह्मणोऽनन्तगुणत्वमित्यस्मन्मतमेवाविस्मृतविमलविबुधमहाजनमानसमाननीयमखिलघस्मरैरस्मृतमपि तैरङ्गीकृतं स्यात् । अथानृतादिव्यावृत्तेरन्यो विशेषो नाभ्युपगम्यते,

---

इति । ततश्च व्यावर्त्यभेदान्न शब्दान्तराप्रवृत्तिप्रसङ्गः, नापि पर्यायत्वप्रसङ्ग इति । एवं यथाकथाच स्वमतसमर्थनप्रयत्नप्रयासेनापि नोक्तदोषनिस्तार इत्याह– **अनृतादिव्यावृत्त्येति** । एवं समर्थयमानः स्वमतनिरूढाभिमानः प्रष्टव्यः– अनया व्यावृत्त्या ब्रह्मणि कश्चन विशेष आधीयते नवेति? अथ नाऽधीयते, व्यर्थं तर्हि व्यावर्तकपदान्तरोपादानम् । अपिच स्यात् सहस्रनामस्तोत्रवदभिधानकोशवच्च पर्यायपदता । अतो मायिभिरपि विशेषमङ्गीकृत्यैव स्वमतप्रक्रिया समर्थनीया भवति । अन्ततो भगवतो निर्गुणत्वप्रहाणेनानन्तगुणत्वं च तैरनिच्छद्भिरप्यङ्गीकृतं भवतीत्याह– **वेदपदोदितस्येत्यादिना** । वेदपदोदितत्वादवाच्यत्वं गतम् । वेदपदानां पर्यायत्वप्रसङ्गेन निर्विशेषत्वं च गतम् । तर्हि समागतं ब्रह्मणः सविशेषत्वमनन्तगुणत्वं च । तेन मायिभिरप्यस्मन्मतमङ्गीकृतं स्यात् । अहो अयमिह महान् विशेषः, यदेकेन विशेषेणाभ्युपगतेन सर्वं तत्ववादे पर्यवस्यति ॥

विमलान्तरङ्गा विबुधा एव महान्तो लोकपथप्रदर्शकाः सज्जनाः । तेषामविस्मृतानि शास्त्रवचनविस्मरणविधुराणि मानसानि । तैर्माननीयमस्मन्मतं तत्ववादः । विष्णोः सर्वतः पारम्यं सर्वगुणपूर्णत्वं च हि सर्वमूलं तत्वम् । अखिलघस्मरैः सर्वलोकव्यवस्थोन्मथनैः । अथच घस्मर इत्यद्मर उच्यते । अखिलान् भगवद्गुणानदन्तीत्यखिलघस्मराः । अखिलान्यपि शास्त्राणि विप्लावयन्तीत्यखिलघस्मराः । स्मरन्ति हि– ब्रह्मस्तेना निरानन्दा इति, शास्त्रदस्यव इति । **अस्मृतमपि** स्वाभिमतशास्त्रानुक्तमपि, एवमङ्गीकरणीयमापततीत्यचिन्तितमपि ॥

अथ मायी पुनः प्रत्यवतिष्ठते– न वयं विशेषमङ्गीकुर्महे । येन भवन्मतेऽनुप्रवेशः स्यात् । अविगणय्यैव विशेषमस्मन्मतं समर्थयामहे । तथाहि– सत्यमित्यनृताद् व्यावृत्तिरुच्यते । ज्ञानमिति जडात् । आनन्द इति दुःखात् । अनन्तमिति परिच्छिन्नात् । नच तावता ब्रह्मणि कश्चिद् विशेष आधीयते । तानि हि पदानि केवलमनृतत्वादीनि ब्रह्मणि व्यावर्त्य विश्राम्यन्ति । न किमपि विशेषान्तरमादधति ।

**अद्धयस्तातद्रूपव्यावृत्तेरेव विवक्षितत्वात्; न च तावताऽद्वैतहानिः, भावरूपविशेषाभावात्, भावाद्वैतं हि तैरभ्युगम्यते; अतो नाभावेन सविशेषत्वप्रसङ्ग इति यदि ब्रूयात् स प्रष्टव्यः, सोऽभावो ब्रह्मणो भिन्नः किमुताभिन्न इति । भिन्नश्चेत्, भेदधर्म्मकत्वादभावविशिष्टत्वाच्च ब्रह्मणः सविशेषत्वम् । अभिन्नश्चेदभाव एव वा ब्रह्मैव वा स्यात् । अभावत्वे शून्यवाद-प्रसङ्गः । ब्रह्ममात्रत्वे ब्रह्मपदेनैव तस्य सिद्धेः पदान्तरवैयर्थ्यम् । अनृताद्यभावोप-लक्षितस्वरूपत्वान्नाभावविशिष्टो वाक्यार्थ इति चेत्, उपलक्षितत्वविशेषः केन वार्य्यते । स्वरूपत्वं वाक्यार्थत्वमखण्डार्थत्वं च । तस्मात् सर्वथा सर्ववादिभिरभ्युपेयो विशेषः ॥**

---

तस्माद् व्यावृत्तिरेव विशेषः । न तावताऽस्माभिरपि विशेषोऽङ्गीक्रियतेति भ्रान्त्या सम्भ्रमितव्यम् । भावरूपं हि विशेषं भवान् मन्यते । वयं त्वभावरूपम् । अत्यन्ताभावो हि व्यावृत्तिरुच्यते नास्ति नाऽसीन्न भविष्यतीति । सत्यमेतद् यद् वयं ब्रह्म च तस्मिन्नभावरूपा व्यावृत्तिश्चेति तत्वद्वयम-ङ्गीकुर्महे । न तावता काचिदद्वैतस्य हानिः । भावाद्वैतं हि वयं ब्रूमः । नाभावाद्वैतमिति । तदिदं कूपे पतितस्य कुशकाशावलम्बनमित्याह– **स प्रष्टव्य** इति ॥

ब्रह्म सत्यमिति श्रुतिर्ब्रह्मण्यनृतत्वाभावं वक्तीति किल तन्मतम् । इदमिदानीं पृच्छामः– योऽयं ब्रह्मनिष्ठोऽनृतत्वाद्यभावः स किं ब्रह्मैव, उत ततोऽन्यः? ननु ब्रह्मैवाभावः । तर्हि ब्रह्माभावरूपम्, न भावरूपमित्युक्तं स्यात् । अस्तु, तेन किं स्यात्? ब्रह्म नास्तीत्युक्तं स्यात् । प्रच्छन्नशून्यवादी सम्प्रति स्फुटं शून्यवादी भूयाः । ननु भोः, ब्रह्मणोऽभावत्वं न ब्रूमः । किन्त्वभावस्य ब्रह्मत्वं ब्रूम इति । ननु कश्चित् प्रज्ञावादी वदेत्– न वयं मातुर्वन्ध्यात्वं ब्रूमः, किन्तु वन्ध्याया मातृत्वमिति तदा किं ब्रूयाः? तेन समानयोगक्षेमोऽसि । अथ पूर्वोक्तो दोषश्च तदवस्थ एवेत्याह– **ब्रह्ममात्रत्वे ब्रह्मपदेनैव तस्य सिद्धेः पदान्तरवैयर्थ्यमिति** ॥

न वयं ब्रह्मणोऽभावत्वमभावस्य वा ब्रह्मत्वं ब्रूमः । किन्त्वनृतत्वाद्यभावो नाम ब्रह्मण्यनुसन्धेयो धर्म-विशेष इति वदन् विच्छिन्नकाशः प्रह्वौ पपातैव । यतस्तेनानृतत्वाद्यभावाद् भेदो ब्रह्मण्यभ्युपगतः । तेन ब्रह्मणो भेदधर्मकत्वं स्यात् । अभावविशिष्टत्वं च भावधर्म एव हि । सोऽप्यङ्गीकृतः स्यात् । स्यात्, किं तेन? तेन भेदपरम्परयाऽनवस्था स्यादित्युक्तम् । निर्धर्मकत्वप्रहाणेनापसिद्धान्तश्च स्यात् ॥

सोऽयमेकत्रापर्य्यायनानाशब्दप्रवृत्तिहेतुः । तेनैकमेवानेकधा द्रव्यगुणक्रियासामान्यादिस्वरूपेण प्रमाणव्यवहारपदवीमद्ध्यास्ते ॥

---

ननु न वयमभावविशिष्टत्वं नाम भावधर्मं ब्रह्मण्यङ्गीकुर्मः । येनापसिद्धान्तः स्यात् । किन्त्वनृतत्वाद्यभावोपलक्षितं ब्रह्मेति ब्रूमः । तदिदं दोषा दृष्टेऽन्धौ दिवा पतनम् । तदाऽप्युपलक्षितत्वं नाम भावधर्मं कथं वारयसि? कथं वा ब्रह्मणः ब्रह्मस्वरूपत्वम्, सत्यं ज्ञानमनन्तमित्यादिश्रुति-बोध्यत्वमपरिच्छिन्नत्वं च निवारयसि? **तस्मात् सर्ववादिभिः सर्वथाऽभ्युपेयो विशेषः** । नान्यः पन्थाः पलायनाय विद्यते ॥

## सर्वानुभूतस्य नामकरणमाचार्यैः कृतम्

ननु कोऽयं विशेषो विशेष इति कण्ठविदारं घुष्यते । अस्माकमप्यस्त्युत्कण्ठा तत्स्वरूपं ज्ञातुमिति जिज्ञासवे तल्लक्षणमाह– **सोऽयमिति** । अभिन्नस्यार्थस्य वाचकानां पदानां यो भिन्नार्थकत्वं निरुह्य घटयति स विशेषः । तद् यथा ज्ञानानन्दादयो गुणा भगवत्स्वरूपतया परस्परमभिन्नाः । अथापि ज्ञानमिति नाऽनन्द उच्यते । आनन्द इति न ज्ञानम् । एकमेव ब्रह्म द्रव्यस्वरूपेण, ज्ञानानन्दादिगुणस्वरूपेण, जगत्सृष्ट्यादिक्रियास्वरूपेण, आत्मत्वादिसामान्यस्वरूपेण, दोषाभावाद्यभावस्वरूपेण व्यवह्रियते । 'स्वाभाविकी ज्ञानबलक्रिया च' इति हि श्रुतिः ॥

एवं लोकेऽपि । शुक्लाभिन्नः पटः । अथापि शुक्ल इति न पट उच्यते । पट इति न शुक्लरूपम् । एवमाधाराधेयभावोऽपि भिद्यत इव । यद्यपि भगवानेव गुणाः । अथापि भगवति गुणा वर्तन्ते । न गुणेषु भगवान् । यद्यपि शुक्लाभिन्नः पटः । अथापि पटे शुक्लरूपं वर्तते, न पटः शुक्लरूपे । यदनङ्गीकारेण मायावादिनां सर्वं दुर्घटमभूत्, तस्यैकस्य विशेषस्याङ्गीकारेण तत्ववादिनां सर्वं व्यवहारजातं सुघटमभूत् । अहो, विस्मयावहमिदम्, यत् सर्वैरपि व्यवहारेऽनुभूयमानोऽयं विशेषो नाम पदार्थविशेषः भगवत्पादोपज्ञं प्रकट्यक्रियतेति । सत्यम्, सम्भोगक्रियामजानन्त्यपि अप्रज्ञाभुक्ताऽपि कन्या गर्भिणी भवति । ततोऽप्यद्भुततमा इमे ये भगवत्पादेन प्रकटीकृतेऽपि पिहिते धने, स्वयम-विश्वसन्तो नेदं धनमिति जल्पन्तो जिजीविषन्ति । हन्त, बलवत्तरो भगवान् दुराग्रहः ॥

**स च विशेषो वस्तुस्वरूपं स्वनिर्वाहकश्च । नचेदृशं विशेषमन्तरेण सर्वेषां व्यवहार-निर्वाहः । नच गुणगुण्यादिभेदे सम्बन्धः सम्भवी । तस्य सम्बन्धस्य ततो भिन्नत्वे गुणवदेव सम्बन्धान्तरापेक्षत्वादनवस्थानात् । अभिन्नत्वे वस्तुमात्रमिति न सम्बन्धः स्यात् । तस्माद् गुणगुणिनोर्भेदं भेदाभेदौ वा कल्पयित्वा, तयोः सम्बन्धं समवायमन्यं वा कल्पयित्वा, तदनवस्थापरिहारार्थं तस्य स्वनिर्वाहकत्वकल्पनाद् वरमेकस्य द्रव्यस्य गुणादिविशेषरूपेण स्वनिर्वाहकत्वम् । तदेवमेक एव नारायणो ज्ञानैश्वर्य्यादिसविशेषानन्तगुणगणात्मको भगवान् व्यासत्वेनावततारेति सूक्तमुक्तम् ॥**

**तथाच महोपनिषदि–**

**'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते ।**
**'अतो मिथोऽपि भेदो न तेषां कश्चित् कदाचन ॥**

---

एवं विशेषाङ्गीकारेणैव सर्वसङ्कटकण्टकोद्धार इति विवृण्वन् विशेषवादमुपसंहरति– **स च विशेषो वस्तुस्वरूपं स्वनिर्वाहकश्चे**त्यादिना । उक्तमर्थजातं भाष्यारूढं करोति– **तदेवमेक एव नारायणो ज्ञानैश्वर्यादिसविशेषानन्तगुणगणात्मक** इति ॥

## विशेषे पुनरपूर्वं श्रुतिवचनम्

नेदमप्रतिष्ठितं तर्कमात्रम् । श्रुतिश्चात्र संवदत इत्याह– **तथाच महोपनिषदी**ति । विष्णुतत्वनिर्णये भगवत्पादेनोद्धृतेयमुपनिषत् । व्याचख्यौ च तत्वमञ्जर्याम्– 'ननु न गुणिन ईश्वरस्य गुणस्वरूपत्वं सम्भवति । तथा सति गुणमात्रत्वप्रसङ्गात् । नहि लोके तद्वतस्तद्रूपत्वं दृष्टम् । तथाचायं प्रयोगः– तद्वान् तन्न भवति, तद्वत्त्वात् । यो यद्वान् स तन्न । यथा छत्रीति । अत आह– **गुणे**ति । आदिपदादिच्छाशक्त्यादयः' इति । अथच ज्ञानानन्देच्छादयो गुणाः, जगत्सर्जनादयः क्रियाः, आदि-पदात् आत्मत्वादयो धर्माः, करचरणाद्या अवयवाः, मत्स्यकूर्मादीन्यवताररूपाणि च । सर्व एते **विष्णोः स्वरूपम्** । स्वरूपात् **अन्यत्** भिन्नं किमपि विष्णौ **नेष्यते** नाङ्गीक्रियते तत्वविद्भिः ।

'स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु ।
'भेदाभावेऽपि तेनैव व्यवहारश्च वर्त्तते' इति ॥ * ॥

**अतः** गुणक्रियादीनां भगवत्स्वरूपत्वात् **मिथः** परस्पर**मपि भेदो न** तेषामस्ति । गुणाः क्रियाश्चाभिन्नाः परस्परम् । गुणश्च गुणान्तरेण । क्रिया च क्रियान्तरेण । ज्ञानमानन्दो भवति । आनन्द एवेच्छा । इच्छैव क्रियेत्यादिः ॥

ननु द्विविधो भवति भेदः । आत्यन्तिक एकः । यथा घटपटयोः । अभेदगर्भोऽपरः, यं भेदाभेदमाचक्षते । यथा मृद्घटयोः । विष्णोः गुणक्रियादीनां मा भूदात्यन्तिको भेदः । स्यादभेदगर्भो भेदः । नेत्याह– **न कश्चिद् भेद** इति । अभेदगर्भोऽपि भेदो नेष्यत इति । नन्वस्तु सम्प्रति केवलाभेदः । स्यात् पूर्वं भेदः । भवेदपि भविष्यति । तदपि नेष्यत इत्याह– **न कदाचनेति** । न भूते कश्चन भेदो बभूव । न भविष्यति च भविष्यति । न हि कचिद् भिन्नमभिन्नं भवति । अभिन्नं वा भिन्नम् ॥

अथापि विशिष्टोऽयमभेद इत्याह– **स्वरूपेऽपि विशेषोऽस्तीति** । तत्वमञ्जरीकार आह– 'गुणि**स्वरूपेऽपि** गुणक्रियादिरूपो **विशेषोऽस्ति** । तस्मान्न गुणमात्रत्वप्रसङ्गः । यथा स्वरूपिण एव स्वरूपत्वविशेषोऽस्ति, एवम् । नहि तत्पक्षेऽपि स्वरूपिणः स्वरूपं भिन्नम् । **भेदाभावेऽपि तेन** विशेषेणैव स्वरूपस्वरूपिव्यवहारो गुणगुण्यादि**व्यवहारश्च वर्तते**' इति । अयमर्थः– गुणक्रियादिभिरभिन्ने भगवतः **स्वरूपेऽपि** भगवतो गुणः भगवतः क्रियेति व्यवहारहेतुः कश्चन **विशेषोऽस्ति** भेदप्रतिनिधिः । तस्मान्न गुणमात्रत्वम् । अस्मिन्नर्थे गुणगुणिनोर्भेदं वदतामप्यनुमतोऽयं दृष्टान्तः– **स्वरूपत्ववदेव त्विति** । पृथुबुध्नादिराकारः घटस्य स्वरूपम् । तेनाऽकारेणाऽकारवान् घटः स्वरूपी । तत्र स्वरूपेऽपि स्वरूपत्वमस्ति । स्वरूपिणि घटेऽपि । एवं **भेदाभावेऽपि, तेनैव** विशेषेण, यं पूर्वपक्षी नाभ्युपैति, स्वरूपस्वरूपि**व्यवहारश्च वर्तते** । नहि गुणगुणिनोर्भेदवादिनां पक्षेऽपि स्वरूपिणः स्वरूपं भिन्नम् । एवं प्रकृतेऽपि, **भेदाभावेऽपि** गुणगुणिनोः, **तेनैव** भेदप्रतिनिधिना विशेषेण भिन्नयोरिव **व्यवहारश्च वर्तते**– ज्ञानानन्दादयो गुणाः, भगवान् गुणीति ॥

ब्रह्मतर्के च–

‘अभिन्नत्वमभेदश्च यथा भेदविवर्ज्जितम् ।
‘व्यवहार्य्यं पृथक् च स्यादेवं सर्वे गुणा हरेः ॥

तथाच यत् पूर्वपक्षिणोपक्षिप्तमनुमानम्– तद्वांस्तन्न भवति तद्वत्त्वादिति, तत्रानैकान्तिको हेतुः । स्वरूपिण एव स्वरूपत्वदर्शनात् । उदाहृतमहोपनिषद्वचनविरोधात् कालात्ययापदिष्टं च तदनुमानमिति ॥

उपनिषदि ‘स्वरूपत्ववदेव तु’ इति तुकारः विशेषस्यापि कश्चन विशेषमाह– भाषाशास्त्रे कश्चनापूर्वोऽयं प्रमेयविशेषः, यमाश्रित्य चिरं भाषमाणा अप्यहो विपश्चितो यस्य सत्तां नान्वपश्यन्निति । अभेदश्च वर्तते, भेदव्यवहारश्च वर्तते । उभयोरविरोधं विशेषः साधयतीति चकारार्थः । व्यवहारो वर्तते, युज्यते चायं विशेषमहिम्नेत्यनुक्तसमुच्चये वा ॥

## अपूर्वं ब्रह्मतर्कवचनम्

अत्र भगवद्वचनसमाख्यामप्याह– **ब्रह्मतर्के** चेति । इदमपि विष्णुतत्वनिर्णयोदाहृतम् । व्याचख्यौ च पण्डिताचार्यतनयस्तत्वमञ्जर्याम्– ‘अभेदधर्मविशिष्टत्वम्, अभेदधर्मश्चेत्युक्तद्वयं यथा परस्परं भेदवर्जितम्, तथाऽपि विशेषमात्रेणैव धर्मधर्मिरूपेण **पृथग् व्यवहार्यं च स्यात्** । एवं हरेर्गुणाश्च भेदवर्जिता अपि पृथग् व्यवहार्याः स्युः’ इति । ‘अथवा अभिन्नत्वमभेदधर्मविशिष्टत्वम्, अभेदधर्मश्च यथा धर्मिणः परस्परं च भेदवर्जितम्’ इति च ॥

इदमुक्तं भवति– अभिन्नत्वमिति अभेद इति च भिन्नाकारं पदद्वयम् । अर्थतो भेदवर्जितम् । भेदवर्जितमिति पर्याप्तम् । अथापि तत्र कश्चन विशेषोऽस्तीति सूचयन् विवर्जितमित्याह । भिन्नार्थकमिव प्रतीयते, भिन्नार्थकवत् प्रयुञ्जते चेत्ययमेव विशेषः, नहि गुणगुणिनोरभिन्नत्वमिति, गुणगुणिनोरभेद इति वा व्याहारे कश्चनार्थभेदः । अथापि **पृथग् व्यवहार्यं स्यात्** । अभिन्नत्वमित्यभेदाश्रयत्वम्, अभेद इत्यभेदरूपत्वमिति । न तावता तयोः परस्परं भेदः, नापि धर्मिणाऽभिन्नेन । तदेवमभिन्नत्वमभिन्नमभेद इति त्रिभिः पदैः पृथग् व्यवह्रियमाणमेकमेव वस्तु । **एवं सर्वे गुणा हरेः** परस्परमभिन्ना गुणिना

'अभेदाभिन्नयोर्भेदो यदिवा भेदभिन्नयोः ।
'अनवस्थितिरेव स्यान्न विशेषणतामतिः ॥

'मूलसम्बन्धमज्ञात्वा–

हरिणा च । गुणाश्रयत्वं नाम गुणरूपत्वमेव । अथापि पृथग् भिन्ना इव व्यवह्रियन्ते– गुणित्वं गुणी गुणा इति ॥

अभिन्नत्वमभेदश्चेति प्रयोगद्वयसमुच्चये चकारः । भेदविवर्जितं च, धर्मधर्मित्वेन पृथग् व्यवहार्यं चेति परस्परसमुच्चये द्वितीयश्चकारः ॥

**अभेदाभिन्नयोरि**ति । एतच्च व्याख्यातं तत्वमञ्जर्याम्– 'अभेदाभिन्नयोरिति सर्वेषां धर्मधर्मिणां गुणगुणिनां चोपलक्षणम् । भेदभिन्नादीनां भेदश्चेत् सम्बन्धापेक्षा । तस्य सम्बन्धस्य सम्बन्धान्तरापेक्षयाऽनवस्थितिः । यः सम्बन्धिद्वारेणैव सर्वसम्बन्धानामनुग्राहकः तं मूलसम्बन्धमज्ञात्वा अयमनयोः सम्बन्ध इति विशेषणतामतिर्न जायते । किन्तु कयोश्चित् सम्बन्ध इति सामान्यबुद्धिरेव । अथवा यदि भेदभिन्नयोर्भेदः, तर्हि तस्य भेदस्यापि भिन्नाद् धर्मिणो भेदान्तरम्, तस्यापि तस्यापीत्यनवस्था । मूलसम्बन्धं प्रथमयोर्भेदभिन्नयोरेव सम्बन्धमज्ञात्वा अनयोरयं भेद इति विशेषणतामतिर्न स्यात्' इति । अयमर्थः– कश्चिज्जिज्ञासुरेवं शङ्केत– रूपाभिन्ने पटे रूपेणाभेदो वर्तते । तत्राभिन्नस्य चाभेदस्य च परस्परं भेद एव युक्तः । पटोऽभिन्नः पटोऽभेदवान्, पटेऽभेद इति क्तप्रत्ययेन मतुपा सप्तम्या च स्फुटं भेदावगमात् । एवं घटाद् भिन्ने पटे घटभेदो वर्तते । तत्र भिन्नस्य च भेदस्य च परस्परं भेद एव युक्तः । भिन्नः पट इति, भेदवान् पट इति, पटे भेद इति क्तप्रत्ययेन मतुपा सप्तम्या च स्फुटं भेदावगमादिति । तामेतां शङ्कामत्र भगवान्निरास । **अभेदाभिन्नयोः, यदिवा** अथवा **भेदभिन्नयोः** यदि भेद एव तर्हि **अनवस्थितिरेव स्या**दिति । न किमपीदमित्थमिति व्यवस्थाप्येत । सर्वमप्यव्यवस्थायां निमज्जेदिति ॥

कुतः? यतोऽस्मिन् पक्षेऽनवस्थितिरनवस्था नाम दोषः स्यात् । स च दोषः अपरिहार्य एव स्यादित्येवकारः ॥

तथाहि–अभेदाभिन्नयोर्यो भेदः, यश्च भेदभिन्नयोः, स भेदोऽप्युक्तन्यायेनैव भिन्नो वक्तव्यः । सोऽपि तथा सोऽपि तथेत्यपर्यवसिता भेदपरम्परा स्यात् । भेदश्च सम्बन्धसापेक्षः । नहि प्रतियोगिनमनुयोगिनं चर्ते भेदो नाम भवति । एवं भेदपरम्परया साकं सम्बन्धपरम्परा चानन्ताऽनुवर्तते । क्वास्या विश्रान्तिः? क्व सर्वमूलम् । तदिदं पाशुपतानां लिङ्गमूलान्वेषणम् । मूलोच्छेदे च सर्वोच्छेदः । नहि निकृत्तमूलो वृक्षः प्ररोहति ॥

नन्वस्त्वपर्यवसितः सम्बन्धः । अपर्यवसितश्च भेदः । तेनाभिन्नयोः पटशुक्लरूपयोरभेदो भिन्न इत्यध्यवसाये किमायातम्? ननु भोः, तथाऽध्यवसाय एव न सम्भवति । मूलसम्बन्धस्याज्ञाने अभेदभिन्नयोर्भेदेन सम्बन्धो वा, अभेद एव वेत्यस्यैवानिर्णयात् 'अयमनयोः सम्बन्धः', 'एतेनेमौ सम्बद्धौ' इति विशेष्यविशेषणभाव एव न सम्भवति । भेदज्ञानसापेक्षा हि विशेषणतामतिः । नहि पाश्चात्यस्य प्रपौत्रत्वानिर्णये पूर्वतनस्य प्रपितामहत्वनिर्णयो भवति ॥

## न क्वाप्येकस्य द्विनिष्ठता

ननु दाम्पत्यमिव द्विनिष्ठो भेदः । घटपटयोर्हि भेदः । कथं कस्य भिन्नेनाभेद इति? अहो महानयं ते भगवान् भ्रमः । न द्विनिष्ठं दाम्पत्यम् । नापि द्विनिष्ठो भेदः । नहि जायापतित्वं कुत्रचिदेकस्य सम्भवति । जायाया एव जायात्वम् । जायायाः जायात्वे पतिः प्रतियोगी । पत्युरेव पतित्वम् । पत्युः पतित्वे जाया प्रतियोगिनी । तेन दाम्पत्यं द्वयोः सत्तामपेक्षत इत्येव । एवं भेदोऽपि द्वयोः सत्तामपेक्षते । अथापि घटाद् भेदः पट एव । पटाद् भेदो घट एव । केवलं प्रतियोगिनं द्वितीयमपेक्षते । तेन क्व द्विनिष्ठता?

न केवलं भेदस्य । न कस्यापि धर्मस्य द्विनिष्ठता । तत्ववादे धर्मस्य वस्तुस्वरूपतया धर्मिणोरप्यभेदप्रसङ्गात् । 'भिन्नाश्च भिन्नधर्माश्च' इति च भगवत्पादवचनम् ॥

## द्वित्वमपि न द्विनिष्ठम्

ननु द्वित्वं द्विनिष्ठम् । एवं वदता द्वित्वं निर्वक्तव्यं भवति । द्विविधं हि द्वित्वमाचक्षते– 'द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यते' इति । भेदे यथा– 'द्वा सुपर्णा सयुजा सखाया' इति । द्विवचनेनैव द्वित्वसङ्ख्यालाभात् द्विशब्दोऽत्र भेदवचन इति सम्प्रदायज्ञाः । द्वित्वसङ्ख्यायां यथा– 'भिन्नौ द्वाविमौ'

इति । भेदो द्वित्वमिति तु दत्तोत्तरम् । भेदस्य धर्मिणाऽभेद एवेति । यत्र समानगुणक्रियान्वयित्वं तत्र द्वित्वं सङ्ख्यावचनम् । तदपि द्विविधं वैशेषिकं नैसर्गिकं चेति । वैशेषिकं यथा– 'आत्माऽऽन्तरात्मेति हरिरेक एव द्विधा स्थितः' इति ॥

अथ किंलक्षणं नैसर्गिकं द्वित्वमिति? शृणु । एकमात्रप्रतियोगिनी सङ्ख्या द्वित्वम् । एकमात्रावरेत्येतत् । एवं बहुत्वापरपर्यायमनेकत्वं च नैकभिन्नत्वम् । द्वित्वेऽनैकान्तिकं हि तत् । यस्य प्रतियोगी नैकः स बहुः सोऽनेकः । तेन एकाधिकप्रतियोगिनी सङ्ख्या अनेकत्वम् । एकाधिकावरसङ्ख्योपेतेत्येतत् । तथाच जीवप्रतियोगिकं द्वित्वं भगवति । भगवत्प्रतियोगिकं द्वित्वं जीव इति न द्वित्वं द्विनिष्ठम् ॥

भगवत्यनेकत्वं च द्विविधमिष्यते । अभिन्नानेकरूपवत्त्वमेकम् । एकाधिकप्रतियोगिकसङ्ख्याश्रयत्वमपरम् । आद्यं यथा–'परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे । अविकारिणे स्फुटमनन्तरूपिणे–' इति । सहस्रनामस्वपि स्फुटमेतत्– 'एको नैकः' इति । ब्रह्मतर्के च–

'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।
'बहुसङ्ख्यागोचरं च विशेषादेव केवलम्' इति ॥

'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' (११.५) इति च गीतासु ॥

द्वितीयं यथा– जडजीवपरमात्मानः । जडजीवसहचरितमनेकत्वं भगवतीत्युक्तं भवति । एतेन 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति भगवत्पादवचनस्य, 'एवं धर्मान् पृथक् पश्यन्' इति श्रुतिवचनस्य च सङ्ख्यातिरिक्तविषयतया केषाञ्चित् सङ्कोचकल्पनं चापहस्तितं भवति । सर्वमेतदुक्तं भगवत्पादेनैव ब्रह्मतर्कोदाहरणेन–

'एकमेवाद्वितीयं तन्नेह नानाऽस्ति किञ्चन ।
'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
'एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥

'इत्यदिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
'सर्वं तु घटते विष्णौ यत् कल्याणगुणात्मकम्' इति ॥

—तस्मादेकमनन्तधा ।

'व्यवहार्य्यं विशेषेण दुस्तर्क्यबलतो हरेः ।

'विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य च' इति ॥

उपसंहरति– **तस्मादेकमनन्तधा व्यवहार्यं विशेषेणेति** । अनेकधा गुणगुणित्वेन ज्ञानत्वेनाऽनन्दत्वेन क्रियात्वेनेच्छात्वेनावयवत्वेनावयवित्वेन मत्स्यत्वेन कूर्मत्वेनेत्यादि । कथं जडस्य विशेषस्येदृशी शक्तिः? नायं विशेषस्य शक्तिविशेषः । भगवतोऽयं महिमेत्याह– **दुस्तर्क्यबलतो हरेः** । दुरिति नञर्थे वर्तते । यथा– दुरन्तमहिमा हरिः । अनन्तमहिमा हरिरित्येवोक्तं भवति । अतर्क्यं यद् हरेर्बलं तत इति । व्याचख्यौ च तत्वमञ्जर्याम्– 'कथमेकमेवानेकधा व्यवहार्यमित्यत आह–दुस्तर्क्येति । तर्कयितु-मशक्यं दुस्तर्क्यम्' इति ॥

भेदपक्षे याऽनवस्थितिरुक्ता सा विशेषाङ्गीकारेऽपि दुष्परिहरेत्याशङ्कां परिहरति– **विशेषोऽपि स्वरूपं स स्वनिर्वाहकताऽस्य** चेति । तथाहि तत्वमञ्जरी– 'विशेषविशेषिणोर्विशेषान्तरम्, पुनरेवमित्यनवस्था युष्मत्पक्षेऽपि, विशेषविशेषिणोः सम्बन्धान्तरापेक्षया चेत्यत आह– विशेषोऽपीति । स विशेषोऽपि वस्तुस्वरूपमेव । नतु भिन्नः । येन सम्बन्धापेक्षयाऽनवस्थितिः । तस्यापि स्वयमेव विशेष इति स्वनिर्वाहकता च अस्य विशेषस्य । तस्मान्न भिन्नविशेषान्तरापेक्षयाऽनवस्थितिः' इति ॥

अयमर्थः– ननु गुणगुणिनोर्यो भेदप्रतिनिधिर्विशेषोऽभ्युपेयते स ताभ्यां भिन्नश्चेत् तस्यापि भेदान्तरं तस्यापि भेदान्तरमिति पूर्ववद् भेदसम्बन्धपरम्परयाऽनवस्था । अभिन्नश्चेत् तस्यापि भेदव्यवहारनिर्वाहाय विशेषान्तरम्, तस्यापि तथेति पुनरनवस्थैवेति किं फलं विशेषाङ्गीकारेण । यन्निवारणाय विशेष-मङ्ग्यकरोः, तस्मिन्नेव गर्ते पुनरपतः । तत् किमनेन घट्टकुटीप्रभातेनेति । मैवम्, विशेषस्य विशेषि-णाऽभेदाङ्गीकारेण न भेदपरम्परयाऽनवस्था । तदिदमाह– **विशेषोऽपि स्वरूपं स** इति । नापि विशेषपरम्परयाऽनवस्था । विशेषस्य स्वनिर्वाहकतया तन्निर्वाहकस्य विशेषान्तरस्यानभ्युपगमात् । तदिदमाह– **स्वनिर्वाहकताऽस्य** चेति । अनुव्याख्याने च–

'भेदहीने त्वपर्यायशब्दान्तरनियामकः ।

'विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ॥

अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्द्धा व्यभजत्। चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा च ॥

---

अथेत्यादेरयमर्थः– **अथ अनन्तरमेव**। **अन्यत्राव्यापृतः**। **सुखप्राप्तौ दुःखपरिहारे चेच्छावतां** तयोरुपायं विशिष्टमजानतां **तज्ज्ञापनार्थं वेदम**पाठात् **उत्सन्नं** अनभिव्यक्तमद्ध्यापनेन **व्यञ्जयन्** अद्ध्येतॄणामल्पशक्तित्वं वीक्ष्य ऋगादिभेदेन **चतुर्द्धा व्यभजत्**। तांश्च चतुरो वेदान्

---

'विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः।
'स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः' (१.१.१०९–१०) इति ॥

'कल्पयित्वा षट्पदार्थान् साभावानपि केवलम्।
'एकस्मिन् स विशेषश्चेत् किं पूर्वं तस्य विस्मृतिः ॥

'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत्।
'भावाभावविभागेन यं विना न कथञ्चन।
एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत्' (२.२.९६-७) इति च ॥

## सूत्राणां श्रुतिमूलत्वं युक्तिमूलत्वं च

**व्यासत्वेनावततारे**ति लिटैव वेदविभागस्य तदुत्तरकालीनत्वप्रतीतेः पुनः **'अथ'** इति प्रयोगस्याऽशयमाह– **अनन्तरमेव**। अव्यवहितानन्तर्यमथशब्दार्थ इत्यर्थः। विनाऽप्यवधारणार्थं पदमवधारणमवगम्यते। सत्यां हि विवक्षायां सर्वं वाक्यं सावधारणमामनन्ति भाषाशास्त्रविदः। तदेव स्फुटं विवृणोति– **अन्यत्राव्यापृत** इति। अयमर्थः– रामकृष्णादिरूपेष्विव लीलयाऽप्यन्यत्राध्ययनादावव्यापृतः। अवतारकार्येषु पुराणादिनिर्माणेष्वपि प्रथममव्यापृतः। अवतारसमनन्तरमेव बाल्ययौवनादिवृद्धिक्रममप्यनपेक्ष्य सपदि प्राप्तयौवनाकारो वेदान् व्यभजद् व्यासत्वेनावतीर्णो नारायण इति ॥

इष्टेषु चरमं सुखम्। अनिष्टेषु चरमं दुःखम्। इष्टानिष्टयोर्यथाक्रमं प्राप्तिपरिहारौ। तदेवाऽह– **सुखप्राप्तौ दुःखपरिहारे चेच्छावतामि**ति। मूले योगमुपायं विशिष्याजानतामिति विशिष्टमुपायमजानतामित्येवोक्तं भवति। **विशिष्टं** सर्वाधिकमसाधारणं चोपायम्। अजानतां सतां **तज्ज्ञापनार्थम्**। **अपाठा**दिति।

तदर्त्थनिर्ण्णयाय ब्रह्मसूत्राणि चकार ॥

---

प्रत्येकं शाखोपशाखाभेदेन **व्यभजत्**; ऋग्वेदं **चतुर्विंशतिधा**, यजुर्वेदमेकशतधा, सामवेदं **सहस्रधा**, अथर्ववेदं **द्वादशधेति** । तेषां सर्वेषामर्त्थमुपक्रमोपसंहारादितात्पर्य्ययुक्तिभिर्न्निर्ण्णेतुं **ब्रह्मसूत्राणि चकारेति** श्रुतिमूलत्वं युक्तिमूलत्वं च प्रदर्शितं सूत्राणाम् ॥ ❋ ॥

नन्वागमस्याप्रामाण्यान्न तन्मूलतया प्रामाण्यं सिद्ध्यतीति । तन्न । तदप्रामाण्यस्याप्यागम-प्रामाण्यानङ्गीकारे दुस्साद्ध्यत्वात् । नचैतदनुमासाद्ध्यम् । वाक्यस्याबोधकत्वेऽनुमाप्रयोग-

---

अनध्ययनमपाठः । तेन **उत्सन्नमनभिव्यक्तम्**, अर्थतः शब्दतश्च । पैलवैशम्पायनादीनामध्यापनेन पुनर-भिव्यञ्जयन्, दृष्ट्वा पुंसोऽल्पमेधसः प्रथममृगादिशाखाभेदेन **चतुर्धा व्यभजत्**– ऋक्शाखा यजुःशाखा सामशाखाऽथर्वशाखेति । ताश्च चतस्रः शाखाः शाखानामप्युपशाखाभेदेन **पुनर्व्यभजत्**, पैलादिभिस्त-च्छिष्यैश्च विभाजयामास, मन्त्राणां सूक्तानां पदानां चाऽवापोद्धापाभ्याम् । येन श्रीसूक्तादिकं पुनरुप-लब्धम् । येन च 'ह्रीश्च ते लक्ष्मीश्च' इतिवत् 'श्रीश्च ते लक्ष्मीश्च' इति स्फुटतरं पाठान्तरमुपलब्धम् । 'एकविंशतिधा बाह्वृच्यम्, नवधाऽऽथर्वणः' इति पतञ्जलिः । तेन बाह्वृच्यस्य तिस्रः शाखाः, आथर्वणस्य च तिस्रस्तदात्व एव लुप्ता इति ज्ञायते । मा च स्म तत्ववादिनः पतञ्जलिवचनेन भ्राम्यन्नित्येतदर्थमपि प्रमाणवचनमत्रोज्जहार भगवत्पादः । संहत्य च (२४+१०१+१०००+१२) सप्तत्रिंशदधिकशतोत्तरं सहस्रं वेदशाखा भवन्ति (११३७) । सेयं वेदसङ्ख्या । अत एताः सङ्कलितास्त्रित्वं सम्पादयन्ति (१+१+३+७=१२=२+१=३) । केवलं त्रित्वसङ्ख्यया विभाजनीया भवति चैषा– ११३७÷३=३७९ । सर्वथा त्रित्वपर्यवसायिनी चैषा सङ्ख्या । अत एव च वेदान् त्रयीत्याहुरिति किमपि साङ्ख्यं रहस्यम् । एवं विभज्यविभज्य वितरणेऽपि वेदानां तात्पर्यमान्तरमवगन्तुमप्रभवतः, शाखामारुह्याऽरुह्य स्खलतो वीक्ष्य मनुजान् तेषां तात्पर्यं **युक्तिभिर्निर्णेतुं ब्रह्मसूत्राणि चकारेति** । त्रिविधे प्रामाण्यगमके पूर्वमाप्ति-मूलत्वमुक्तम् । अनेन च वाक्येन **श्रुतिमूलत्वं युक्तिमूलत्वं** च व्यक्तमुक्तं भवति सूत्राणाम् ॥

## प्रत्यक्षवदागमस्यापि प्रामाण्यम्

ननु नाऽगमः प्रमाणम् । नतरां श्रुतयः । तत् कथं ब्रह्मसूत्राणां श्रुतिमूलत्वेन महत् प्रामाण्यम् । तामेतां कुशङ्कां विस्तरतो निराकरोति– **नन्वागमस्याप्रामाण्यादित्यादिना** ॥

वैयर्थ्यात् । वचनायत्तत्वात् साध्यस्य । कथं चाबोधकेन परं प्रति साधयेत् । स्वयं वा कथं बुद्ध्येत । प्रत्यक्षं मानम्, नाऽगम इत्ययं सिद्धान्तोऽपि स्वगुरुवाक्यादवसीयते । आगमस्याप्रामाण्यं वदतः प्रत्यक्षस्यापि स्यात् । प्रत्यक्षस्य सम्प्रतिपन्नं प्रामाण्यं चेदागमस्यापि तथा । किञ्च नाऽगमः प्रमाणमिति वचनं प्रमाणमुताप्रमाणम् । अप्रमाणं चेदागमः प्रमाणमेव । प्रमाणं चेत् स्वव्याहतिः । अतः प्रामाण्यमङ्गीकार्य्यम् ॥

---

दुःसाध्यत्वादिति । आगमो न प्रमाणमिति किल वाचा प्रस्तुत्य तदप्रामाण्यं साधनीयम् । तेन तावत् तस्य वचनस्य प्रामाण्यं स्यादङ्गीकृतम् । वचनव्याहारं विना कथं किमपि निराकरोषि? प्रायो मूकतैव ते शरणम् । अहो, गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः ॥

ननु नाऽगमेन तदप्रामाण्यं साधयामः । किन्त्वनुमानेन । कथमनुमिनोषि? आगमो न प्रमाणमाप्तिनिश्चयाभावादविश्वसनीयत्वादित्यनुमिनुमः । नन्विदमनुमानमपि वचनायत्तम् । वचनं तु ते न प्रमाणम् । यदप्रमाणमबोधकं च ते, तदेव कथं प्रमाणत्वेनोपन्यस्य बोधयसि परं प्रति? स्वयं वा कथं बुध्यसे?

प्रत्यक्षमेव प्रमाणम्, नाऽगम इति किल ते गुरुरुपदिदेश । त्वमप्यङ्गीचकर्थ चक्षुषी निमील्य । गत्वा तं पृच्छ– 'भगवन्, यदि नाऽगमः प्रमाणं कथं तत्रभवतो वचः प्रमाणम्' इति ॥

अपिच यद्यागमो न प्रमाणम्, प्रत्यक्षमपि तर्हि न प्रमाणं स्यात् । किं शृङ्गमस्ति प्रत्यक्षे? नन्वागमेष्वनाप्तवचनशङ्कया न शक्यं प्रामाण्यं निश्चेतुमिति तदप्रमाणमिष्यते । प्रत्यक्षदृष्टे तु काप्रामाण्यशङ्का? नन्वद्भुतं भाषसे । प्रत्यक्षदृष्टेऽपि बाधो दृश्यते नेदं रजतमिति, नायं सर्प इति । तेन समाना तत्राप्यप्रामाण्यशङ्का । अतस्तदप्यप्रमाणमित्यङ्गीकृत्य निष्प्रमाणो भव ॥

मायावादस्य चायं शुभसम्प्रदायः । यत्र किल शुक्तिरजतदृष्टान्तेन सर्वं जगदपि मिथ्याभूतमवसीयते । चन्द्रभेददृष्टान्तेन सर्वमपि भेदजातम् ॥

अस्तु बाधः । किन्त्वबाधिते प्रत्यक्षे किमायातम्? तस्मात् तस्य प्रामाण्यं नः सम्प्रतिपन्नम् । एवमागमेऽपि तर्हि क्वचिदस्तु बाधः । अबाधितस्याऽगमस्य प्रामाण्ये का विप्रतिपत्तिः?

अथोच्येत, वक्तृज्ञानं शब्दादनुमीयते, आप्तवाक्यस्य ज्ञानपूर्वकत्वाज्ज्ञानलिङ्गकोऽर्थोऽवगम्यते, तज्ज्ञानस्य यथार्थत्वात्। अतो नाव्यवधानेनापि शब्दादर्थनिश्चयः, अव्यवधानेन शब्दार्थनिश्चये प्रमाणाप्रमाणवाक्यविभागो न स्यादिति। मैवम्। न तावद् वक्तृज्ञानमात्रानुमानं शब्दात्। तथा सति तद्व्यवधानेनापि शब्दादर्थावगमाभावप्रसङ्गात्। अर्थविशेषितं ज्ञानमनुमीयते चेदर्थः प्रथमतः प्रतीयत इति किमत्र व्यवधानम्। प्रतीयत एव केवलं प्रथमतो न निश्चितः, तत्प्रमाणान्तरादेव हि निश्चीयते, तस्मादनुमानात्मकं पुरुषवाक्यमिति चेन्न। शब्दादेवार्थज्ञानम्, तन्निर्दोषत्वज्ञानं प्रमाणान्तरापेक्षम्। न च तावता तस्य

---

इदमिदानीं भवन्तं पृच्छामः– नाऽगमः प्रमाणमिति हि भवतो गुरुराह। किमिदमपि प्रमाणमुत नेति? ननु भोः, गुरुवचनमप्रमाणमिति को नाम विनेयो ब्रूयात्? तर्हि तदेव वचनं प्रमाणमिति कथमागमोऽप्रमाणं स्यात्? केवलं व्याहतभाषी बभूव भवतो गुरुः। तमनुसरन् भवानपि। ननु तर्ह्यप्रमाणमस्तु। अप्रमाणं चेदागमः प्रमाणमित्येवाऽयातम्। किमवचनेनैव प्रोवाच भवतो गुरुरागमस्याप्रामाण्यम्? उपसंहरति– **अत** इति। अप्रामाण्यसाधकवचसामसङ्गतत्वात्, प्रत्यक्षवत् प्रामाण्यानुभवाच्च परेणाप्यङ्गीकार्यमेवाऽगमप्रामाण्यमिति॥

पुनः शङ्कान्तरमुद्भावयति– **अथोच्येते**ति। अयमर्थः– नाऽगमत्वेनाऽप्तवाक्यस्य प्रामाण्यम्। किन्त्वनुमानबलादित्यस्मदाचार्यवचनाशयः। तत् कथं तस्य व्याहतभाषिता? तथाहि– आप्तवाक्यं श्रुत्वा प्रथमं तावदेवमनुमिमीते– इदं वाक्यं ज्ञानपूर्वकमुक्तम्, अर्थवच्छब्दघटितत्वात्। ततो निश्चिनोति तच्च ज्ञानं यथार्थमाप्तिमूलत्वादिति। तेन तदुक्तं प्रमाणम्, यथार्थज्ञानमूलकत्वादिति। एवमनुमानपरम्परया व्यवधानेनार्थनिश्चयो न शब्दमात्रत इति। अव्यवधानेन शब्दादेवार्थनिश्चये, प्रमाणवाक्येन चाप्रमाणवाक्येन चाव्यवधानेनार्थबोधे सति तत्रेदं प्रमाणमिदमप्रमाणमित्यन्यतरनिश्चयो न सम्भवति। तेनानुमानबलादेव प्रामाण्यनिश्चय इति। एवमुद्भाविताां शङ्कामपाकरोति– **न तावदि**त्यादिना॥

ज्ञानपूर्वकमिति किं यत्किञ्चिज्ज्ञानपूर्वकमाहोस्विदुक्तार्थज्ञानपूर्वकम्? आद्ये 'अयं घटः' इति वाक्यं न घटज्ञानपूर्वकमिति नियमः। पटज्ञानेनापि पूर्येत। यत्किञ्चिज्ज्ञानमात्रस्य विवक्षितत्वात्। अतोऽतिप्रसङ्गः। अथच कथं तेनानुमानेन व्यवधानेनापि श्रोतुर्घटबोधः?

तत्राप्रामाण्यम् । अन्यथा प्रत्यक्षेऽपि क्वचिन्निर्दोषत्वज्ञानस्य प्रमाणान्तराधीनत्वेन स्वार्थे प्रामाण्याभावप्रसङ्गात्, अनुमानात्मकत्वप्रसङ्गाच्च । अत आगमस्य स्वार्थे प्रामाण्यमङ्गीकार्य्यम् । किं पुनर्वेदशब्दस्य । तदेतदाह भगवान् भाष्यकारः– 'वेदम्' इति । वेदनादेव हि वेद इत्युच्यते । वेदो न वेदयतीति विप्रतिषिद्धम् ॥

तच्च प्रामाण्यं स्वत एवाभ्युपगन्तव्यम्, प्रत्यक्षवदेव । परतश्चेत् तस्यापि परत इत्यनवस्थानात् । नचानुमादेः गुणविमर्शः क्रियते । दोषाभावे प्रामाण्यसिद्धेः । तस्माद्

---

नन्वर्थविशेषितमेवानुमिमीमहे– 'अयं घटः' इति वाक्यं घटज्ञानपूर्वकमाप्तवाक्यत्वादिति । तर्हि शब्दादेवार्थः प्रतीत इति किं पुनरनुमानेनाजागलस्तनेन? अर्थः प्रतीतः केवलम् । न प्रामाण्यं प्रतीतम् । प्रतीतेः प्रामाण्यप्रत्ययार्थमनुमानमिति । तदपि न युक्तम् । यतः समानमेतत् प्रत्यक्षेऽपि । तथाहि सन्ध्यासमये लोहितायति भास्करे पेलवप्रभे पथि रज्जुं पश्यन् सर्पोऽयमिति भ्रमित्वा बिभेति । ततः शिरोऽवनमय्य पश्यति । तथाऽप्यनिश्चये शनैर्दण्डेन चालयति । ततोऽवगच्छति– नायं सर्पः, दण्डस्पर्शेऽपि चलनहीनत्वात् । नापि मृतः सर्पः । पुच्छफणाद्यदर्शनात् । किन्तु रज्जुरेवेति । किं तत्राप्येवं जल्पसि– प्रत्यक्षेण वस्तुप्रतीतिमात्रम्, तस्य प्रामाण्यनिर्णयोऽनुमानादिति । तस्मात् प्रत्यक्षवच्च प्रामाण्यं स्वत एवाऽगमस्येति सूचयामास भगवत्पादः 'वेदम्' इतिपदेन ॥

कथं द्वाभ्यामक्षराभ्यामियतोऽर्थस्य सूचनम्? आह– **वेदनादेव हि वेद इत्युच्यते** । नानुमानद्वारा, किन्तु साक्षादेवार्थं वेदयतीति हि वेदः । नायं निरुद्देशः प्रयोगः । अन्यथा श्रुतिमुत्सन्नामिति त्रयीमुत्सन्नामिति वा प्रायोक्ष्यत् ॥



## प्रामाण्यं स्वतः, परतोऽप्रामाण्यम्

वेदस्य प्रामाण्यं च स्वत एव प्रत्यक्षवदित्युक्तम् । ननु प्रत्यक्षेऽपि परत एव प्रामाण्यम् । न क्वापि स्वतः । यद् वयं परतःप्रामाण्यवादिनः । अतः सर्वत्रापि प्रमाणान्तरेणैव प्रामाण्यनिश्चय इति वदन्तं प्रत्याह– **परतश्चेदिति** । प्रमाणस्य परतः प्रामाण्याङ्गीकारे तस्यापि परतस्तस्यापि परत इत्यनवस्थापङ्के मग्नः कथमुत्तरसि?

**दोषादप्रामाण्यम्, दोषाभावे स्वत एव प्रामाण्यम् । दोषस्य प्रामाण्यप्रतिबन्धकत्वाद् दोषाभावान्वयव्यतिरेकित्वात् । तस्मादेव प्रामाण्यं न स्वत इति चेत्, तदयुक्तम् । नह्युत्तम्भकाभावान्वयव्यतिरेकित्वेनाग्नेरौष्ण्यमस्वतः स्यात् । तस्मात् प्रमाणानां प्रामाण्यं स्वत एव । दोषादप्रामाण्यम् । दोषश्च बलवत्प्रमाणाज्ज्ञायते । उक्तं च ब्रह्मतर्के–**

---

अनुभवविरुद्धं च भाषसे । पर्वतो वह्निमान् धूमादिति केनचिदुक्ते सपदि वह्निबोधो जायते । न कोऽपि तद्युक्तमयुक्तं वेति विमर्शाय प्रवर्तते । तस्माद् दोषदर्शने परतोऽप्रामाण्यम् । दोषाभावे स्वत एव प्रामाण्यमिति स्थितम् ॥

ननु विप्रतिषिद्धं वचनम् । दोषाभावज्ञानाधीनं प्रामाण्यमिति परतः प्रामाण्यमित्येवोक्तं भवति । पुनः स्वत एव प्रामाण्यमिति वदन् कथं न व्याहतभाषी भवान्?

त्वामिदानीमिदं पृच्छामः– अग्नेर्दाहकत्वं स्वतः परतो वेति । ननु स्वतः । अथ कश्चिदग्निस्तम्भवित् केनचिदौषधेन वा मन्त्रेण वाऽग्नेर्दाहशक्तिं प्रतिबध्नाति । तदा कुतोऽग्निर्न दहति । ननु प्रतिबन्धकसद्भावात् । तर्हि प्रतिबन्धकविरहाधीनमिति दाहकत्वमपि परत एव स्यात् । न भोः । नात्रानुभवः संवदते । अग्नेः स्वतो दाहकत्वमिति सर्वोऽपि लोको मन्यते । यथा गजः पथि चलति स्वशक्त्या । अथापि पथि कण्टकक्षेपे स्वयमचलस्तिष्ठति । कण्टकापनयने पुनश्चलति । न तावता कण्टकापनयनाधीनं गजगमनं न स्वशक्त्येति वक्तुं युक्तम् । अनुभवविरुद्धत्वात् । तर्ह्यत्रापि दोषाभावज्ञानाधीनत्वात् परतः प्रामाण्यमित्यनुभवविरुद्धं मा स्म भाषथाः । तदेतदुक्तं विष्णुतत्वनिर्णये–'नचोक्तयुक्त्यधीनत्वं प्रामाण्यस्य । बुद्धिदोषनिरासमात्रकारणत्वाद् युक्तीनाम् । अदुष्टबुद्धीनां स्वत एव सिद्धत्वाच्च प्रामाण्यस्य' इति । व्याचख्यौ च तत्वमञ्जर्याम्–'प्रामाण्यं परतश्चेदनवस्थेति ह्युक्तम् । एवं चानवस्थापरिहारायान्यथानुपपत्तियुक्त्यधीनत्वं प्रामाण्यस्येत्यत आह– नचोक्तेति' । तस्मात् **प्रमाणानां प्रामाण्यं स्वत एव । दोषादप्रामाण्यम्** । कथं वा दोषज्ञानम्? आह– **दोषश्च बलवत्प्रमाणाज्ज्ञायत** इति । यथा तमसाऽऽवृते देशे रजतत्वेनावगतं दीपानयनेन शुक्तिरित्यवसीयते ॥

अत्रापि भगवद्वचनसंवादमाह– **उक्तं च ब्रह्मतर्क** इति । व्याख्यातानि चैतानि वचनानि तत्वमञ्जर्याम्– 'एवं प्रसङ्गप्राप्तं प्रमाणानां बलाबलविवेकं ब्रह्मतर्कवाक्येन तल्लक्षणप्रकथनपूर्वकं प्रकटयति–

‘अदुष्टमिन्द्रियं त्वक्षं तर्कोऽदुष्टस्तथाऽनुमा ।
‘आगमोऽदुष्टवाक्यं च स्वदृक् चानुभवः स्मृतः ।
‘बलवत्प्रमाणतश्चैव ज्ञेया दोषा नचान्यथा’ इति ॥

**अदुष्टमिति** । प्रत्यक्षादीनां लक्षणमुक्त्वा साक्षिप्रमाणमाह– स्वदृक् चेति । स्वदृक् स्वस्य साक्षिणो ज्ञानमनुभवरूपमित्यर्थः । इदमदुष्टमिति निश्चेतुं कथं दोषज्ञानं स्यादित्यत आह–**बलवदिति**’ इति ॥

अयमर्थः– अदुष्टं बाह्यान्तरदोषरहितम्, इन्द्रियं ज्ञानेन्द्रियम्, अक्षं तु प्रत्यक्षाख्यं प्रमाणमुच्यते । विषयान् प्रति स्थितत्वं नाम विशेषं तुनाऽऽह । तेन प्रत्यक्षमित्यायातम् । अन्यथा अक्षमिन्द्रियमिति पर्यायपदाम्रेडनं स्यात् । विषयनिष्ठो दोषो बाह्यः । इन्द्रियनिष्ठ आन्तरः । स यथा चाक्षुषप्रत्यक्षे दूरस्थत्वमप्रकाशत्वं सूक्ष्मत्वं च बाह्यम् । सूक्ष्मत्वमित्यणुत्वमदृश्यताशक्तिश्च । काचादिना वयआदिना वा करणस्यापाटवमान्तरम् । न दूरस्थत्वादिकं स्वतो दोषः । इन्द्रियस्य विषयग्रहणे प्रतिबन्धकतयैव तस्य दोषत्वम् । एवं श्रावणेऽपि प्रत्यक्षे नादतरङ्गाणां दविष्ठतया दुर्बलता, ग्रहणशक्तिमर्यादातो नादस्योच्चता नीचता च बाह्यदोषाः । रसगन्धस्पर्शानां तु करणापाटवमेव प्रायः । दविष्ठता वा गन्धस्य । ननु दविष्ठता रसेऽपि दोषः स्यात् । स्पर्शेऽपि । न स्यात् । स हि दोषो भवति यः शक्यत्वेऽपि प्रतिबध्नाति ॥

यथा प्रत्यक्षं पृथक् प्रमाणं तथा अदुष्टस्तर्कः अव्याप्त्यादिदोषरहिता युक्तिरपि प्रमाणान्तरमनुमा नाम । युक्तिदोषाश्च प्रमाणवचन एवोत्तरत्र निरूपिताः– ‘विरोधश्च तथाऽऽधिक्यं न्यूनताऽसङ्गतिस्तथा । उपपत्तिदोषा विज्ञेयाः’ इति ॥

तथा अदुष्टवाक्यं च वक्तृश्रोतृप्रसङ्गानुकूल्योपेतं पदजातं च तृतीयं प्रमाणमागमो नाम । ननु कश्चिदाह– पर्वतो वह्निमानिति । तमपरः पृच्छति– ‘कुतः’ इति । अन्य उत्तरमाह– ‘धूमात्’ इति । अत्र नास्ति वाक्यम् । केवलमेकं पदम् । तस्माददुष्टः शब्द आगम इति वक्तव्यम् । न वक्तव्यम् । अदुष्टं वाक्यमिति च स एवार्थः । अर्थवदक्षरम्, अक्षरे अक्षराणि वा पदम् । तदेव हि वाक्यम् । यत्र वक्तव्यस्य पूर्तिः तद् वाक्यम् । अपूर्तौ पदम् । अतो वाक्यमित्येव सूक्तम् । शब्द इति ध्वन्यात्मकः शब्दोऽपि स्यादिति च **अदुष्टं वाक्यमित्याह** ॥

उच्यत इति हि वाक्यम् । पदं वा स्यात् पदजातं वा । यद् बोध्यते तद् वाच्यम्, यद् बोधकं तद् वाक्यमितीयदेव । वस्तुतस्तु कुत इति नैकं पदम् । धूमादिति च । पूर्ववचनसङ्गतोऽयं प्रश्नः– कुतः

पर्वतो वह्निमानिति त्रीणि पदानि । एवमुत्तरवचनेऽपि धूमादिति नैकं पदम् । धूमात् पर्वतो वह्निमानिति त्रीणि पदानि ॥

एतेन 'कारकविशिष्टक्रियाबोधकं शब्दजातं वाक्यम्' इति, 'आख्यातं सविशेषणं वाक्यम्' इति च यद् वैयाकरणानां वाक्यनिर्वचनं तन्न तत्ववादिनां सम्मतमिति सूचयाम्बभूव । स्फुटमेतदुपरिष्टात् ॥

अन्ते चान्तरङ्गं प्रमाणमाह– **स्वदृक्** चेति । स्वयमेव इन्द्रियान्तरनिरपेक्षं पश्यतीति स्वदृक् साक्षीन्द्रियम् । स्वस्य स्वरूपभूतस्य साक्षिणो दृग् दर्शनमिति स्वदृक् साक्षिज्ञानम् । जन्यत्वमभेदश्च षष्ठ्यर्थः । साक्षीन्द्रियजन्यं साक्षिरूपं ज्ञानमित्येवोक्तं भवति । मृदो घट इति यथा । मृज्जन्यो मृदभिन्नो घट इत्येवोक्तं भवति । सेयं स्वदृक् च चक्षुरादिवदतिरिक्तं प्रमाणमिति चकारार्थः । तथाहि भगवत्पादः प्रमाणलक्षणे– 'प्रत्यक्षं सप्तविधम्, साक्षिषडिन्द्रियभेदात्' इति ॥

इयानत्र विशेषः । चक्षुरादीन्यनुप्रमाणानि केवलम् । साक्षी तु ज्ञानरूपत्वात् प्रमाणं चानुप्रमाणं च । अत एवान्ते निर्देशः । ननु प्रत्यक्षत्वसाम्यात् तेन सहैव पठितव्यम्– 'अदुष्टमिन्द्रियं त्वक्षं स्वदृक् चानुभवः स्मृतः' इति । अपठिष्यत यदि तादृश आशयोऽभविष्यत् । अन्यादृशश्चात्र पाठक्रमः । सद्योजातः शिशुः प्रथमं मातरं पश्यति, स्तन्यं पिबति । सोऽयं प्रथमः प्रत्यक्षानुभव इति तस्य प्रथमतो निर्देशः । अथ मातुर्वात्सल्यातिशयं दर्शंदर्शं मह्यमियं स्निह्यतीत्यनुमिनोतीति द्वितीयमनुमानम् । ततः क्रमश इयं ते मातेति श्रावंश्रावं तस्या मातृत्वमवगच्छतीत्यागमस्तृतीयः । ततोऽप्यन्तरङ्गं प्रमाणमूर्धन्यं साक्षिज्ञानमिति तस्यान्ते निर्देशः । नह्यनुभवविरुद्धं श्रुतिरपि वक्ति । अनुभवविरोधादेव हि यजमानस्य न प्रस्तरत्वम्, जीवस्य न ब्रह्मत्वम्, मुखतः श्रुत्युक्तमपि ॥

ननु किमिदं साक्षिज्ञानमित्यपरिचितं पठ्यत इति शङ्कमानं परिचितेन पदेन परिचाययति– **अनुभवः स्मृत** इति । यः शास्त्रे च ज्ञानिलोके चानुभव इत्युच्यते तदेवात्र साक्षिज्ञानं विवक्षितमिति ॥

ननु मानसवृत्तिरूपोऽप्यनुभवः शास्त्रेषु स्मर्यते । सत्यं स्मर्यते । न केवलं वृत्तिरूपः, **स्वदृक् चानुभवः स्मृतः** इत्यर्थेऽप्यत्र चकारः । स एव चात्र विवक्षितः । अबाधितत्वेन तस्यैव मुख्यार्थत्वात् ॥

तथाच प्रत्यक्षानुमाने सदोषे अपि भवतः । आगमस्त्वपौरुषेयेणांशेनादोषः । साक्षिप्रत्यक्षं सर्वथाऽप्यदुष्टमिति च क्रमः । कथं तर्हि सदोषेषु सदोषत्वनिर्णयः? अदोषेण बलवता प्रमाणेनेत्याह– **बलवत्प्रमाणतश्चैवेति** । बलवत्प्रमाणत एव दोषा ज्ञेया नैवान्येन केनापि प्रकारेणेति ॥

किम्पुनर्वेदस्यापौरुषेयत्वेनासम्भाव्यदोषस्य । पुरुषकृतत्वे हि अज्ञानविप्रलम्भादिदोषाः शङ्क्येरन् । नच वेदनित्यत्वं विना धर्म्माधर्म्मादिसिद्धिः । न चादृष्टत्वात् तदभावः ।

चैवेति समुदितमवधारणे वर्तते । एवेति पर्याप्तम् । अथापि 'चैव' इति 'एवच' इति प्राज्ञाः प्रयुञ्जते । कोशकाराः अर्थविशेषाभावे 'चः पादपूरणे' इत्याचक्षते । 'वाक्यालङ्कारे' इति च । अत्र तावन्नाऽद्यः । यतश्चकारं विरहय्यैव पादः पूर्यते– 'बलवत्प्रमाणादेव' इति । नन्वत्र यतिभङ्गो दोषः । पञ्चमस्यालघुत्वं च । काव्यालाप एवायम् । न शास्त्रे दोषः । वस्तुतस्त्वनियतं पञ्चमस्य लघुत्वम् । यत्र न गतिविच्छेदस्तत्र गुरुत्वमपि स्यात् । 'रामायणं पुत्र पठेः' इति यथा । तस्मात् पादपूरणार्थमिति गतम् । नापि द्वितीयः । तदपि काव्य एव न शास्त्रे । अपिच, चकारेणोपक्षिप्तेन कोऽत्र शोभातिशयोऽनुभूयते? वयं तु ब्रूमः । अवधारणमपि क्वचिदनिश्चितं भवति । यथा– श्वः प्रायो गन्तव्यमेव । नायमत्र प्रायोवादः । किन्तु निश्चितमवधारणमिति चकारेणाऽह– **चैवेति** ॥

## चकारैवकारयोराध्यात्मिकोऽर्थः

तत्ववादिनां पुनराभ्यामव्ययाभ्यामनुसन्धानान्तरं भवति । चकारेण गुणैः समुचितो भगवानुच्यते । एवकारेण च दोषाभावः । आ समन्तादिच्छया वर्तनं नाम सर्वगतत्वं च । किञ्चित् सादृश्यं च तेन जीवस्य । यथा सहस्रनामसु– 'क्षेत्रज्ञोऽक्षर एव च' इति । एवमन्ततो भगवन्तं स्मरन्तः स्मारयन्तो वाऽवधारयन्ति ॥

अथच चकारः पक्षान्तरे, चेदित्यर्थे । बलवत्प्रमाणतश्चेत् दोषा ज्ञेया एवेत्ययोगव्यवच्छेदः । अन्यथा चेत् न ज्ञेया इत्यन्ययोगव्यवच्छेदः । बलवत्प्रमाणस्य सामर्थ्याधिक्यं द्योतयितुमेवाक्षराधिक्यं पादे । 'आधिक्येऽधिकम्' इति हि स्मरन्ति ॥

## वेदानामपौरुषेयत्वम्

अथ भाष्ये वेदपदेनैवापौरुषेयत्वं च सूचितमित्याह– **किम्पुनरिति** । स्मरन्ति हि– 'वेदास्ते नित्यविन्नत्वात्' इति । 'विदॢ लाभे' इत्यतः, 'विद सत्तायाम्' इत्यतो वा नित्यं विद्यन्ते उपलभ्यन्ते वर्तन्ते वेति नित्यविन्नाः । अपौरुषेयत्वं समर्थयते– **पुरुषकृतत्व** इति । **धर्माधर्मादीत्यादिना** स्वर्गनरकादिकं सर्वमदृष्टं देवा देवोत्तमश्च नारायणः । **तदभावः** धर्माद्यभावः । लौकिकेषु विषयेषु

प्रत्यक्षायोग्यत्वात् तस्य । दृश्यन्ते हि सूक्ष्माः सूक्ष्मदृग्भिः स्थूलदृग्भिरदृष्टाः । विप्रतिपत्तौ परवाक्याद्युक्त्या वा निर्ण्णयः । युक्त्यविषयत्वात्तु धर्म्मादौ वाक्यापेक्षा । तस्य च पौरुषेयत्वकल्पने सर्वज्ञत्वतत्कृतत्वादिगुरुकल्पना स्यात् । न च नित्यत्वे किञ्चित् कल्प्यम् । कर्त्तरि प्रमाणाभावे स्वत एव नित्यत्वं स्यादेव ॥

न च धर्म्मादिः कस्यचित् प्रत्यक्षः, प्रमेयत्वात्, करतलामलकवदित्यनुमानमात्रात् सर्वज्ञसिद्धिः । विप्रतिपन्ना दर्य्यः केनचित् पाटिताः, दरीत्वात्, सम्प्रतिपन्नदरीवदित्यादिना सिंहशृङ्गादेरपि सौलभ्यप्रसङ्गात् । योग्यानुपलब्धिविरुद्धोऽयं हेतुरिति चेत्, समः पर्य्यनुयोगः । धर्म्मादिसूक्ष्मवस्तुदर्शिन उपलब्धियोग्यत्वमेव नास्तीति चेदेवं पृथुलगभीरदरीविदारणकारणस्येत्यपि समं समाधानम् । प्रत्यनुमा चात्र सम्भवति– विमतो धर्म्मदृङ् न भवति, पुरुषत्वात्, अविप्रलम्भकत्वनियतश्च न भवति, चैत्रवदित्यादिका । न चापसिद्धान्तोक्तिरियम् । केवलानुमानगम्यसर्वज्ञनिरासपरत्वादस्याः ॥

---

**विप्रतिपत्तौ परवाक्यात्** आप्तवाक्यात् युक्त्या वा निर्णयः शक्यः । धर्मादौ विषये पुनर्वाक्येनैव निर्णयः । तस्य **युक्त्यविषयत्वात्**, युक्तेश्च प्रत्यक्षागममूलत्वात् ॥

**कर्तरि प्रमाणाभाव** इति । तदुक्तं विष्णुतत्वनिर्णये– 'अपौरुषेयत्वं च स्वत एव सिद्धम् । वेदकर्तुरप्रसिद्धेः । अप्रसिद्धौ च कर्तुस्तत्कल्पने कल्पनागौरवम् । अकल्पने चाकर्तृकत्वं सिद्धमेव' इति । धर्मादिसाधकमनुमानमाभाससमानयोगक्षेममित्याह– **विप्रतिपन्ना दर्य** इति । युक्त्याऽपलपतो लपनमपलापेनैव मुद्रणीयमित्याह– **योग्यानुपलब्धीत्यादिना** । ननु नेदमदृश्यतया दरीपाटनं सिंहशृङ्गं मनसि लगति । मा स्म लगत् । अपलापस्य प्रत्यपलापः किलायम् । तर्कस्य हि प्रतितर्कोऽयम् । न वस्तुस्थितिकथनम् । तस्यालगनं न दोषः । किन्तु गुण एव । **अविप्रलम्भकत्वनियतश्च** नियमेनाविप्रलम्भकश्च **न भवति** पुरुषत्वादेव ॥

ननु मा भूवन् मनुष्यरचिता वेदाः । वाक्यत्वात् केनचिद् रचिता इति तु निश्चितम् । तेनान्यथानुपपत्त्या परमेश्वररचिता इत्यायातम् । अलौकिकपुरुषरचितत्वादेवापौरुषेयत्वव्यवहारश्च सूपपाद इत्यत

अथ वाक्यत्वाल्लौकिकवाक्यवत् पौरुषेयत्वं मन्येथाः, सशरीरकर्तृरहितत्वादपौरुषेयत्वं किं न स्यादात्मवत् । 'न तस्य कार्य्यं करणं च विद्यते' इत्यादिवाक्यसिद्धत्वान्नेश्वरस्यात्यन्तासिद्धिरिति चेन्न । सर्वज्ञेश्वरसिद्धौ तत्कृतत्वेन वेदप्रामाण्यसिद्धिः, प्रामाण्यसिद्धौ ततः सर्वज्ञसिद्धिरित्यन्योन्याश्रयत्वात् ॥

---

आह– **अथेति** । **सशरीरकर्तृरहितत्वात्** पञ्चभूतात्मकशरीरवत्कर्तृरहितत्वादित्यर्थः । एतेन 'अस्मत्सम्मतकर्तृरहितत्वात्' इति तत्वनिर्णयवचनं च विवृताशयम् । सशरीरस्य कर्तुरभावो भवताऽप्यङ्गीकृतः । अशरीरः कश्चित् पुरुषो नास्मत्सम्मत इति तत्कृतत्वं दूरापास्तम् । शशशृङ्गनिर्मितनीडनीकाशमेतत् ॥

नन्वशरीरः परमपुरुषोऽस्माकमपि सम्मतः । सत्यं सम्मतः । किं तेन । प्रतिवादिनिरासमात्रमेतत् । यदि वादी ब्रूयात्– अशरीरमहं पुरुषं नाङ्गीकरोमीति तदा कस्ते प्रतिवादः स्यादिति ॥

नन्वशरीरं पुरुषं श्रुतिवचनेन साधयित्वा तमप्यङ्गीकारयिष्यामः । तथाहि श्वेताश्वतराणां श्रुतिः–

**'न तस्य कार्यं करणं च विद्यते** न तत्समश्चाभ्यधिकश्च दृश्यते ।
'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (६.८) इति ॥

तस्य परमेश्वरस्य पञ्चभूतकार्यं शरीरं न विद्यते, नापि किञ्चित् तस्य करणं च विद्यत इति किल श्रुत्यर्थः । तेनाशरीरः परमेश्वरः सिद्ध्यतीति । तमेतं वादं निराकरोति–**सर्वज्ञेश्वरसिद्धाविति** ॥

## वेदाः स्फुरन्ति, न क्रियन्ते

ननु विना वक्तारं वचनं न भवति । तद्यथा विना ज्ञातारं ज्ञानम् । सत्यमुक्तं भवता विना वक्तारं न वचनमिति । किं तेन? तर्हि वेदवचनानामपि वक्ता वक्तव्यः । सत्यं वक्तव्यः । उच्यते च– सृष्ट्यादौ ब्रह्मणे भगवान् वेदानुवाचेति । तर्हीश्वरो वेदानां वक्ता । को नेत्याह? गतं तर्ह्यपौरुषेयत्वम् । क्व गतम्? प्रथमवक्ता हि कर्ता भवति । ननु भगवान् प्रथमवक्ता । कदा? सृष्ट्यादौ । कस्याः सृष्टेः? सर्वाऽपि हि सृष्टिः सृष्टिपूर्वा । तस्मान्न भगवान् प्रथमवक्ता । सप्रागभावं प्रथम-

तस्मादपौरुषेयो वेदः स्वत एव प्रमाणं चेति सिद्धम् । तच्चोक्तमाचार्य्यवर्य्येणैव– **वेदमुत्सन्नं व्यञ्जयन्निति** ॥ स्वत एव वेदयतीति वेदः । तथाच पिप्पलादश्रुतिः–

'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति' इति ॥

'न चक्षुर्न्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति' इति च भाल्लवेयश्रुतिः ॥

नित्यत्वे च श्रुतिः– 'वाचा विरूप नित्यया' इति ॥

'नित्ययाऽनित्यया स्तौमि ब्रह्म तत् परमं पदमिति ।

'श्रुतिर्वाव नित्या, अनित्या वाव स्मृतयो याश्चान्या वाचः' इति पैङ्गिश्रुतिः ॥

---

वक्तृत्वम् । ततो न वेदकर्ता । यद् भगवाननादितो वदन्नेवाऽसीत् तदृषीणां समाधौ पुस्फोर । तस्मात् तेऽपि वक्तार एव न कर्तारः । तदिदं लोके कवयोऽप्यवयन्ति । काव्यं स्फुरति, नतु क्रियते । ये तर्केण वेदानां सकर्तृकत्वं सिषाधयिषन्ति शोचनीयास्ते स्वयमविदितस्फुरणाः प्रतिहतप्रतिभाः । सन्ति तेऽपि पदार्था यत्र तर्कः पादं न प्रसरति । तूष्णीमत्र स्थातव्यमनुभवविधुरैः– 'नैषा तर्केण मतिरापनेया' इति ॥

**स्वत एव वेदयतीति** वेदपदेन स्वतःप्रामाण्यम् । **उत्सन्नं व्यञ्जयन्निति** वेदानामपौरुषेयत्वम् । पिप्पलादश्रुतिर्भाल्लवेयश्रुतिश्च वेदानां स्वत एव वेदकत्वे । **'न चक्षुर्न श्रोत्रम्'** इति प्रत्यक्षस्यावेदकत्वमुच्यते । वेदने चक्षुःश्रोत्रयोः प्राधान्यान्मुखतस्तयोर्ग्रहणम् । **'न तर्कः'** इति केवलस्यानुमानस्यावेदकत्वम् । **'न स्मृतिः'** इति केवलस्य पौरुषेयागमस्य । अपौरुषेयत्वेन **नित्यत्वे च**– 'तस्मै नूनमभिद्यवे **वाचा विरूप नित्यया** । वृष्णे चोदस्व सुष्टुतिम्'(८.७५.६) इति ऐतरेयी श्रुतिः, **'नित्यया–'** इति पैङ्गिश्रुतिश्च ॥

## 'तस्मै नूनम्' इति श्रुतेः ऋषिनिर्णयः

'तस्मै नूनम्' इत्यस्य विरूप ऋषिः । अग्निर्देवतेति श्रौतः सम्प्रदायः । अग्निस्थोऽग्निनामा नारायण इति तु वास्तवम् । मन्त्रमेतं पण्डिताचार्यः स्वयमेव व्याचख्यौ श्रुतिनित्यत्वाधिकरणे–

'हे विरूप, तस्मा अभिद्यवे सुष्टुतिं चोदयस्व । अभितो द्योतत इत्यभिद्युः । वृषा श्रेष्ठः । सुष्ठु स्तुतिं प्रति प्रेरयेति प्रार्थनं विरूपस्यर्षेरन्तर्यामिविषयं भवति' (२.१.४) इति ॥

तथाच विरूपेति स्वबिम्बरूपं नारायणं सम्बोध्य तुष्टावर्षिरित्युक्तं भवति । स्फुटं मन्त्राक्षराणि व्याचख्यौ तत्वमञ्जरीकारः– 'हे विरूप, नूनमिदानीम्, अभितो द्योतकाय, तस्मै वृष्णे समर्थाय, नित्यया वाचा सुष्टुतिं चोदयस्व' इति । सपूर्वपदानां वृषादीनामेव श्रेष्ठवाचकत्वमिति लौकिको नियमः । वेदे तु केवलानामप्यस्ति । 'ऋषभं मा समानानाम्–' इत्यादिश्रुतिप्रयोगदर्शनादित्याशयेन 'वृषा श्रेष्ठः' इत्युक्तम् । पद्मनाभतीर्थास्तु कञ्चनापूर्वं प्रमेयविशेषमाविरकुर्वन्– 'तस्मै पूर्वप्रकृताय अग्रणीत्वादग्निनाम्ने, अभिद्यवे अभितो द्योतमानाय, द्यामभितो वर्तमानाय वा, वृष्णे वर्षित्रे विष्णवे, नित्यया वाचा स्तुतिं चोदस्व प्रेरयेति विरूपमृषिं प्रत्युच्यते' इति । जयतीर्थीयटीकाऽप्येतामेव सरणिमनुसरति– 'विरूपमृषिं प्रत्युच्यते' इति । अत्र शङ्का– विरूपेणर्षिणा दृष्टोऽयं मन्त्रः । तत् कथं विरूपमृषिं प्रत्युच्यत इति । नच विरूप ऋषिः स्वात्मानं प्रत्याहेति वक्तुं युक्तम् । तर्हि 'विरूपः स्वात्मानमाह' इत्येव वक्तव्यम् । नतु 'विरूपमृषिं प्रत्युच्यते' इति । तस्मात् विरूपमृषिं प्रति केनाप्यन्येनोच्यत इत्येव वाक्यार्थः । केनान्येन? अत्र सायण आह– 'विरूपः स्वात्मानमेवाऽह । यजमानो वा होतारं विरूपम्' इति । नैतत् स्वरसम् । विरूपो हि मन्त्रं ददर्श न यजमानः । पद्मनाभतीर्थ-कृतत्वेन प्रथितायां तूक्तं भाष्यटीकायाम्– 'विरूपं प्रति यमवचनमेतत्' इति । समीचीनमेतत् यमेन विरूपमृषिं प्रत्युच्यत इति । नन्वत्राप्यनुयुज्यते– विरूपो हि मन्त्रं ददर्श, न यम इति । नैष दोषः । प्रथमं यम एतं मन्त्रं ददर्श । ततस्तमेव मन्त्रं विरूपः स्वान्तर्यामिणं सम्बोध्य स्तुवन् ददर्शेति सर्वं सुन्दरम् । नैवं परैर्वक्तुं शक्यम्– प्रथमं यजमान एतं मन्त्रं ददर्श । ततस्तमेव मन्त्रं विरूपस्तत्पुरतो ददर्शेति ॥

सर्व एतेऽर्थविशेषा अन्यान्यप्रसङ्गेषु भगवत्पादेनैवोदिताः, तन्मुखादेव श्रुत्वा तच्छिष्याः सञ्जगृहुरित्यव-गम्यते । अथ कथं विरूपः? विविधरूप इति सायणः । वयं तु ब्रूमः, विष्णोर्विशेषसन्निधानेन विशिष्टं रूपमस्येति विरूप इति ॥

पूर्वश्रुतावस्पष्टं स्पष्टमाचष्ट इति पैङ्गिनां श्रुतिं पुनरुदाजहार । **'नित्ययाऽनित्यया'** इति मन्त्रपदे श्रुतिरेव व्याचष्टे– **'श्रुतिर्वाव नित्या'** इत्यादिना । **वाव** इत्यनुनये । नन्वितिवत् । किलेतिवत् ॥

'विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः ।
'अनादिनित्या सा तच्च विना तां न स गम्यते' इति काट्यायनश्रुतिः ॥

'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः ।
'आम्नायोऽनन्यथापाठादीशबुद्धिस्थिताः सदा' इति महावराहे ॥

वेदानामपौरुषेयत्वमसाधारण्येन भगवद्वेदकत्वं च श्रावयन्तीं काट्यायनश्रुतिमाह– **विज्ञेयं परमं ब्रह्मेति** । परमब्रह्मज्ञापकत्वमेव परमत्वं श्रुतेः । **तच्च** परमं ब्रह्म चानादिनित्यम् । किं तत् परमं ब्रह्मेत्यत आह– **स** इति । सारत्वात् स इत्युक्तो नारायण इत्यर्थः । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इत्युक्तेः ॥

ननु कात्यायनं श्रुणुमः । कोऽथ काट्यायनः? 'कत्ययनात्मजः कात्यायनः' इति वामनपण्डितः । तथाऽत्रापि स्यात्– कट्ययनस्याऽत्मजः काट्यायन इति । कं टीकत इति कटिर्भगवानयनमस्येति कट्ययनः । वैयाकरणास्तु कटस्यापत्यमिति विगृह्णीयुः ॥

अत्रार्थविशेषमाहुः पद्मनाभतीर्थभट्टारकाः– 'विज्ञेयं परमं ब्रह्म । अत्र लक्ष्मीहिरण्यगर्भादिकमपरमत्वेन श्रुत्या विज्ञेयमित्यभिप्रेतम् । यथा तद् ब्रह्म अनन्याधीनत्वेन अनादिनित्यत्वेन परमं विज्ञेयम्, एवमितिहासादेर्ज्ञापकत्वेऽपि अनाद्यनन्तत्वेन श्रुतिः परमा ज्ञापिकेत्युच्यते । तद् ब्रह्मेत्युक्तेऽपि न नपुंसकं ब्रह्मेति दर्शयितुं स इत्युक्तम् । तां श्रुतिं विना स ब्रह्मशब्दार्थो विष्णुर्न बुद्ध्यते' इति । तत्वमञ्जर्यामपि– 'यद्यपि कर्मदेवाद्यपि श्रुत्या विज्ञेयम् । तथाऽपि परमं विज्ञेयं ब्रह्म । यद्यपि वेदानुकूलतर्कादिकमपि ज्ञापकं ब्रह्मणः । तथाऽपि परमा ज्ञापिका श्रुतिः' इति । विज्ञेयं प्रमाणान्तरनिरपेक्षतया ज्ञेयं श्रुत्या, सर्वगुणविशिष्टत्वेन सदोषसकलजगद्विलक्षणत्वेन च ज्ञेयमित्यर्थः ॥

वेदपदेनैवापौरुषेयत्वं गम्यत इत्येतत् पुराणवचनेन समर्थयते– **वेदा** इति । ते वेदाः **नित्यविन्नत्वात् वेदा** इत्युच्यन्ते । नित्यविन्नत्वमेव वेदानां वेदत्वमित्यर्थः । 'नित्यविन्नत्वादिति नित्यसिद्धत्वादित्यर्थः । विद सत्तायामिति धातोः' इति पद्मनाभतीर्थाः । 'नित्यविन्नत्वात् नित्यलब्धत्वात् विदॢ लाभ इति धातोः । आम्नायः सम्प्रदायः । तत्सम्बन्धी चाऽम्नाय एव' इति तत्वमञ्जरीकारः । अखिलैः श्रूयन्त एव, न केनापि प्रथममुच्चार्यन्त इति श्रुतयः । आम्नायते निरन्तरमनुवर्त्यत इत्याम्नायः सम्प्रदायः । तत्सम्बन्धी सम्प्रदायप्राप्त इति वेदोऽप्याम्नायः । सम्प्रदायागत इत्यधुनातनैरधीयते । सम्प्रदाया-

**नचानन्विते शब्दशक्तिरिति युक्तम् । अनन्वितार्थस्यैवाभावात् । अन्वितमेव हि सर्वं दृश्यते । एकपदश्रवणेन हि सामान्यान्वयप्रतीतौ विशेषान्वयाकाङ्क्षा पदान्तरश्रवणात्**

गत इत्येव पूर्वैरध्यगायि । पूर्वतरैरपि । न केनापीदम्प्रथमतया । तदेवाऽह– **अनन्यथापाठात्** । अनादितः सम्प्रदायागतया तयैवाऽनुपूर्व्या तैरेव स्वरैः पठ्यत इत्याम्नायः । अथवा आम्नानमित्यध्ययनमुच्यते । 'आम्नायोऽध्ययने वेदे सम्प्रदाये कुलेऽपिच' इति यादवप्रकाशः । अनादितः एकरूपतया आम्नायतेऽधीयत इत्याम्नायः । एकरूपतया आमनन्त्येनमिति वा ॥

ननु प्रळये विच्छिद्येते सम्प्रदायश्चाध्ययनपरम्परा च । तेन गतं निरन्तरत्वं नाम नित्यत्वमिति । नेत्याह– **सदा** प्रळयकालेऽपि **ईशबुद्धिस्थिता** इति ॥

ननु सर्वं सङ्गतम् । अथापि कथमाम्नाय इति । आम्नाया इति वक्तुमुचितम् । वेदा इति बहुवचनेनोपक्रमात् । ईशबुद्धिस्थिता इति बहुवचनेनैवोपसंहाराच्च । तर्हि सुपां सुरिति नयेन बहुवचनार्थमिदमेकवचनमिति गृहाण । ननु नेयं साधुतापृच्छा । किन्तु हेतुपृच्छा । शक्यं बहुवचनमपि प्रयोक्तुम्– 'आम्नाया अनन्यथापाठात्' इति । अक्षराधिक्यं तु न दोष इति भगवती श्रुतिरेवाह– 'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्याम्' इति । एवं शक्येऽपि बहुवचनप्रयोगे किमुद्देशोऽयमेकवचनप्रयोग इति?

एतामाशङ्कां परिजिहीर्षन्निव तत्वमञ्जरीकार आह– 'आम्नायः सम्प्रदायः' इति । अनन्यथापाठात् तन्मूल आम्नायः सम्प्रदायो गम्यते । तत एवमनादिसम्प्रदायप्राप्तपाठत्वात् वेदा अप्याम्नाय इत्युच्यन्त इत्यर्थद्वयस्फोरणायैवैकवचनप्रयोग इति । यद्यप्याम्नायानां सहस्रं शाखा भवन्ति । तथाप्याम्नाय इत्येव प्राय उच्यन्ते गतिसामान्यादिति च । अनयैव दिशा पूर्वार्धेऽपि 'वेदोऽयं नित्यविन्नत्वाच्छ्रुतिरप्यखिलैः श्रुतेः' इत्यपि ज्ञातव्यमित्यनेन दर्शयामास ॥

## अन्वितान्येव पदान्यभिदधति

अथानन्विताभिधानवादं निराकरोति– **नचानन्विते शब्दशक्तिरिति युक्तमिति** । नह्यनन्वितः कश्चिदर्थः केनापि पदेन बोध्यते । नहि गामित्युक्ते केवला गौः प्रतीयते । कयाऽप्यनिर्दिष्टया क्रियया, अनिर्दिष्टेन वा धर्मेण सम्बद्धैव गौः प्रतीयते । एवं सामान्यतः सम्बन्धप्रतीतौ, आनयेत्यनेन

पूर्य्यते । स्वत एवान्वितानामर्थानामनन्वितत्वेन पदवाच्यत्वं कल्पयित्वा तेषामेवान्योन्यान्वितानां वाक्यार्थलक्षकत्वकल्पनाद् वरमन्वितानामेव पदार्थानां वाक्यार्थत्वाश्रयणम् । अनुभवानुकूल्यात् । अन्यथा वाक्यार्थो नाम न स्यात् । ननु श्वेतरूपं पश्यतो हेषाशब्दं खुरनिष्पेषशब्दं च शृण्वतः 'श्वेतोऽश्वो धावति' इति धीर्भवति, तस्मात् प्रथममनन्विताः प्रतीता अर्थाः परस्परान्वयं बोधयन्तीति दृष्टमेवाश्रीयते, न कल्प्यत इति । तदेतदयुक्तम् । यतस्तत्राप्यन्वितानामेव प्रथमतः प्रतीतिः । न हि श्वेतिमा द्रव्यानन्वितः प्रतीयते, हेषादेश्च सामान्यान्वयो ज्ञात एव, वस्तूनामन्वयनियमात् । अन्यथा तैरन्वितत्वेन कथमश्वो विशिष्टार्थः पश्चाद् बोद्ध्येत । न चात्रार्थानामन्वयबोधकत्वम् । नह्यर्थो नाम प्रमाणमस्ति । अनुमा ह्येषा, अयं श्वेतपदार्थोऽश्वो भवितुमर्हति, खुरनिष्पेषहेषाशब्दवत्त्वात्, सम्प्रतिपन्नवदिति । तस्मादन्विताभिधायिनः शब्दाः । एतदपि सूचितं गुरुभिरेव– **तद्योगमविजानतां तज्ज्ञापनार्थं वेदमिति** ॥

---

सम्बन्धविशेषो बोध्यते– मया करिष्यमाणानयनक्रियाविषयतां गोनिष्ठामयमिच्छतीति । अनुभवविरुद्धश्चायमनन्विताभिधानवादः । यतोऽन्वित एव वाक्यार्थः सर्वैरनुभूयते । अनुभवं पृच्छ । मा वृथा वादीः । **अन्यथा** लक्षणयाऽन्वितानां बोध इत्यङ्गीकारे वाक्येन वाच्योऽर्थ एव नेत्युक्तं भवति । तर्हि सर्वमपि वाक्यं लाक्षणिकमिति 'गङ्गायां घोषः', 'गङ्गायां मीनः' इत्यनयोः को विशेषः पदलक्षणामृते?

**एतदपि** शब्दानामन्विताभिधायित्वमपि **गुरुभिरेव सूचितमिति** । **तद्योगम्**, तयोः इष्टानिष्टप्राप्तिपरिहारयोः उपायं वेदानां गुणान्वितभगवदभिधायकत्वम्, **अविजानतां** अनन्विताभिधानवादिनां **तज्ज्ञापनार्थं** गुणान्वयेनैव वेदो भगवन्तं बोधयतीति ज्ञापनार्थम् । सर्वाण्यपि हि वेदपदानि गौणानि । न किञ्चित् स्वरूपमात्रबोधकम् । नापि लाक्षणिकम् । तथाच मुख्यवृत्त्या गुणान्वयेनैव भगवन्तं वेदयतीति च वेद इत्युच्यते ॥

* * *

अत्र केचिदाचक्षते, सत्यमन्विताभिधायित्वं शब्दानामस्त्येव, तथाऽपि न सिद्धान्विते तेषां शक्तिः, किन्तु कार्य्यान्वित एव, तत्रैव व्युत्पत्तिसम्भवादिति । तदप्यचारु । कार्य्यस्य कार्य्यान्वयाभावात् प्रयोजकभेदकल्पनाप्रसङ्गात् । न च कार्य्यान्वयान्वयिनीति वाच्यम् । तथाविधवस्तुव्यवहाराभावात् । न हि देवदत्तो देवदत्तपुत्रपुत्रीत्युच्यते । न च कार्य्यप्रतियोगिकेनान्वयेनान्वयित्वं कार्य्यस्य । अन्वयित्वं हि नामान्वयधर्म्मधर्म्मित्वम् । कार्य्यधर्म्मेणान्वयेनान्वयित्वं सिद्धस्य च नास्ति । अतो न कार्य्यान्वयान्वयिनि शक्तिः कल्प्या ॥

ननु 'शुक्लां दण्डेन गामानय' इति वाक्यश्रवणसमनन्तरमेव श्रोतुर्गवानयनप्रवृत्तिदर्शनात् ततः प्रवर्त्तकज्ञानमनुमिमीते बालः, विगीता प्रवृत्तिः प्रवर्त्तकज्ञानपूर्विका, प्रवृत्तित्वात्,

---

## कार्यान्वयनिरासः

अथ कार्यतावादमुपक्षिपति– **अत्र केचिदाचक्षत** इति । **कार्यान्वयान्वयिनि** गामानयेत्यत्र आनयनकार्येणान्वयवती गौः । तया पुनरन्वयिनि आनयनाख्ये कार्य इत्यर्थः । **देवदत्तपुत्रपुत्री** । देवदत्तस्य यः पुत्रो यज्ञदत्तः, तेन पुत्रेण पुत्रवान् देवदत्त इत्यर्थः । **कार्यप्रतियोगिकेने**ति । यः कार्येणान्वयो गवि स कार्यप्रतियोगिकः । तेनैव पुनः कार्यस्यान्वयित्वं अन्वयानुयोगित्वमित्यद्भुता वाक्यार्थचातुरी । तदेवाऽह– **अन्वयित्वं हि नामान्वयधर्मधर्मित्वमि**ति । ननु न कार्यान्वय इति कार्यप्रतियोगिकोऽन्वयः । कार्यधर्म एव ह्यन्वयः । कार्यानुयोगिकोऽन्वय इत्येवोक्तं भवतीति । तदिदमप्यसङ्गतम् । यतोऽन्वयित्वं नामान्वययोगित्वमेव । तेन कार्यान्वयान्वयित्वं नाम कार्यानुयोगिकान्वयानुयोगित्वं कार्यस्येत्युक्तं स्यात् । तदिदं पूर्वमेवापहस्तितं देवदत्तपुत्रपुत्रीतिवदिति । अपिचैवमप्रबुद्धं व्याहरन् सिद्धस्यानन्वितस्य कथं वाक्येन बोधं मन्यसे । तस्मात् कार्ये कार्यान्वययोग्ये च शक्तिरिति वक्तव्यमिति गतं कार्ये शक्तिरिति मतम् ॥

लोकव्यवहारदर्शनेनानुभवबलादेव वयं कार्ये शक्तिरिति वदाम इति वदन्तं विस्तरेण निराकरोति– **ननु शुक्लां दण्डेन गामानयेत्यादिना** । कश्चिद् वृद्धो ब्रूते– 'दण्डेन शुक्लां गामानय' इति । तच्छ्रुत्वा तत्पुत्रो युवा गामानयति । तद् दृष्ट्वा तत्पुत्रो **बालोऽनुमिमीते**– इयं मत्पितुर्गवानयनप्रवृत्तिः केनचित्

अस्मत्प्रवृत्तिवदिति; तच्च कार्य्यज्ञानं भवितुमर्हति, प्रवर्त्तकज्ञानत्वादस्मत्प्रवर्त्तकज्ञानवदिति चानुमाय, पुनः 'शुक्लां गां बधान', 'शुक्लमश्वं दण्डेनाऽनय' इत्यादि बहुकृत्व एकैकपदान्तरावापोद्धारे दण्डाद्यर्थविशेषावापोद्धारदर्शनात्, सर्वप्रयोगे च कार्यानुगमात् प्रवर्त्तकज्ञानपूर्वकत्वनियमात् प्रवृत्तौ प्रवर्त्तकद्वारमेव सकलशब्दशक्तिं जानाति, कार्य्यस्यैव प्रवर्त्तकत्वं कार्यान्वित एव सकलशक्तिं बालो निश्चिनोतीति ॥

तदेतद् बालविभीषिकामात्रं भ्रान्तानाम् । नहि वृद्धस्यापीदृशी पटुतरा बुद्धिर्भवति, यया शुक्लादिपदसमुदायक्रमं सकृत् श्रुतमविस्मृत्य तदनन्तरमेवान्यसम्भाषणोत्थानादिकां श्रोतुरानुषङ्गिकप्रवृत्तिं च दृष्टामपहाय, गवानयनप्रवृत्तावेव ततः प्रवर्त्तकज्ञानमनुमिमीते, पुनस्तदर्थसमुदायं च हृदि सन्निधाय, तदेकपदोद्धारे तदर्थोद्धारं, पदान्तरावापे तदर्थावापं,

---

पूर्वज्ञानेन प्रवर्तिता **प्रवृत्तित्वादिति** । तत्र बालः स्वानुभवमेव दृष्टान्तीकरोति–**अस्मत्प्रवृत्तिवदिति** । वयं बालाः 'वत्स, पयः पिब, इडुरिकां खाद' इति मात्रोक्ताः, अनेन वाक्येन मे माता मां पयःपानकार्ये प्रवर्तयति, इडुरिकाभक्षणकार्ये प्रवर्तयतीति प्रवर्तकज्ञानपूर्वमेव प्रवर्तामहे । यथा बालास्तथा वृद्धा अपीति । तच्च प्रवर्तकज्ञानं कार्यज्ञानमेवेति चास्मदनुभवसिद्धम् । 'पयः पिब' इति वाक्यश्रवणेन कीदृशं ज्ञानं जायते? पयःपानक्रियायां मामियमयं वा प्रवर्तयतीति ज्ञानम् । कार्यज्ञानमेव हि तत् । एवं 'गामानय' इत्यादिष्वपि ॥

आवापः स्वीकरणम् । उद्धारः परित्यागः । 'शुक्लां गां बधान' इति प्रथमं शुश्राव । स वृद्धः पुनराह– 'शुक्लमश्वं दण्डेनाऽनय' इति । शुक्लत्वमुभयत्रापि समानम् । द्वितीयवाक्ये गोर्बन्धनस्य च स्थानेऽश्वस्य दण्डेनाऽनयनस्य चाऽवापः । 'गां बधान' इति पुनर्वाक्यं शृण्वन् बालश्चिन्तयति– अत्र गोरावापः, अश्वदण्डयोरुद्धार इति ॥

एवं सर्वत्र **प्रयोगे** च वचने आनयनबन्धनादि**कार्यानुगमात्** । तस्मात् **कार्यस्यैव प्रवर्तकत्वं** विज्ञाय **कार्यान्वित एव शब्दशक्तिं निश्चिनोति बाल इति** । नेदं बालानामनुमानम्, किन्तु बालिशानामित्याह– **तदेतद् बालविभीषिकामात्रं भ्रान्तानामित्यादिना** । अन्येन पुरुषेण अन्यस्य विषयान्तरस्य सम्भाषणम्, अन्यस्मै कार्याय तत उत्थायान्यत्र गमनमित्यादिकां आनुषङ्गिकीं प्रकृतानुपयुक्तां

सर्वत्र कार्य्यानुगमात् कार्यान्विते शक्तिं च जानीयात्। किम्पुनर्द्वित्रवर्षस्य बालस्य तत्क्षणदृष्टमपि विस्मरतः। स हि 'इयं माता', 'अयं तव भ्राताऽपूपमत्ति' इत्यादिवाक्यानां नित्यपरिचितेष्विष्टेषु वर्त्तमानेष्वर्त्थेष्वाकाङ्क्षासन्निधियोग्यताभावात् प्रथमं शक्तिं जानाति। पुनश्च 'भ्राता क्षीरं पिबति', 'अहमपूपमद्मि' इत्यावापोद्धाराभ्यामङ्गुलिप्रसारणादिपूर्वकमुक्ते विशेषव्युत्पन्नो भवति। पुनश्च 'अपूपमघसम्', 'गामयमानैषीत्' इत्यादावनन्तरानीतेऽर्त्थे, एवं वर्त्तमानेऽतीते च व्युत्पन्नस्य तत एष्यदानयने बुद्धिरवतरतीति सिद्धान्वित एव बालः शक्तिं जानाति ॥

न प्रवर्त्तकद्वारा बालो ज्ञातुं शक्नोति। प्रवृत्तावाकाङ्क्षाद्यभावात्। नापि कार्य्यान्विते, कार्य्यस्यैवाभावात्। नापीष्टसाधनतां विना कार्य्यता नामास्ति। कृतियोग्यं कार्य्यमित्युक्ते निषिद्धस्यापि कार्य्यत्वं स्यात्। अकर्त्तुमशक्यत्वं च निषिद्धे समानम्। तस्मादिष्टसाधनव्यतिरेकेण कार्य्याभावान्न कार्य्यस्य प्रवर्त्तकत्वम्। साधनज्ञानस्य प्रवृत्त्यन्वयव्यतिरेकावुभयसम्प्रतिपन्नौ। न चातीतेष्टसाधने साधनताज्ञानमस्ति। नष्टस्य

---

प्रत्युतान्तरायभूतां सर्वां दृष्टिपथं गतामपि **प्रवृत्तिमपहाय**, यया बुद्ध्या बालः **कार्यान्विते शक्तिं जानीयात्**, ईदृशी पटुतरा बुद्धिर्वृद्धस्यापि न भवति। **किम्पुनर्बालस्य**। किं पूर्वजन्मन्यधीततर्कशास्त्रबलादेवमनुमिमीते?

तर्हि कथं बालस्य शाब्दी व्युत्पत्तिः। आह– **स हीत्यादिना**। श्रोतरि 'इयं का' इत्याकाङ्क्षा, पदार्थस्य मातुः सन्निधिः, पदस्य चार्थबोधनयोग्यता चास्तीति सिद्ध एवार्थे बालः शक्तिं जानाति सिद्धान्विते च। अभिधानकोशवत्। विष्णुसहस्रनामादिवच्च। किमत्रापि कार्यान्वयं वदसि?

ननु प्रवर्तकद्वारैव बालस्य प्रवृत्तिः। प्रवर्तकत्वं च कार्यस्यैवेत्युक्तम्। दुरुक्तं तदित्याह– **प्रवृत्तावाकाङ्क्षाद्यभावादिति**। वृद्धेन गामानयेत्युक्तमाकर्ण्य बालः सपदि विदितार्थः प्रवर्तते। कुतो मया प्रवर्तितव्यमित्याकाङ्क्षैव नोदेति। यत्परिहाराय प्रवर्तकज्ञानपूर्वकत्वमनुमिनुयात्। नापि कार्यान्विते शक्तिरिति युक्तं वक्तुम्। 'इयं ते माता, अयं ते भ्राता' इत्यादौ कार्यस्यैवाभावात् ॥

साधनस्य साधनताया अपि नष्टत्वात् । तत्पक्षे यत्कार्य्यज्ञानहेतुरिष्टसाधनज्ञानं तदेव प्रवृत्तिहेतुरस्माकमिति नातीतदूरस्थादौ व्यभिचारः ॥

अपिच सिद्धेऽर्थे प्रामाण्यं नास्तीत्येतद् वाक्यं प्रमाणमुताप्रमाणम्? प्रमाणं चेदिदमेव हि सिद्धेऽर्थे प्रमाणं किमन्यनिवारणेन । अप्रमाणं चेत् सिद्धार्थे प्रामाण्यं न निराकृतम् । किञ्च कार्य्यवादिनो न परार्थानुमानं प्रमाणम् । सिद्धविषयत्वात् । न च तत्र विद्धीत्याद्यध्याहारः । अनध्याहृतेऽपि तस्मिन् वाक्यादर्थावगमात् । अप्रयोजकत्वात् तस्याऽधिक्यदोषप्रसङ्गाच्च । विध्यद्यध्याहारेऽप्यनुमायाः स्वार्थे प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा प्रतिवादिनं प्रति ज्ञानविधिमात्रपरं साधनदूषणरहितमसङ्गतं स्यात् । तस्माद् ब्रह्मवाक्यानां च प्रतिपत्तिकर्त्तव्यतापरत्वेऽपि यथाश्रुतानन्तगुणगणपरिपूर्णब्रह्मणि प्रामाण्यपर्य्याप्तिरिति न नः किञ्चिच्छिद्यत इति सिद्धेऽर्थे प्रामाण्यं सुस्थितम् । अतः सुष्ठूक्तम्– 'इष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थम्' इति ॥

## इष्टसाधनमेव कार्यम्

किं च केयं कार्यता नाम? कृतियोग्यतेति चेत् चोरस्य स्तैन्यमपि कृतियोग्यम् । कामान्धस्य पराङ्गनागमनमपि कृतियोग्यम् । वदन्ति हि– शक्यमभक्ष्यभक्षणेनापि क्षुत् प्रतिहन्तुमिति । मुमूर्षोर्विषभक्षणमपि कृतियोग्यम् । अहो भवत्परिष्करणेनाकार्यमपि कार्यतां भेजे । ननु विषभक्षणं शक्यमकर्तुम् । जिजीविषुर्न शक्नोति च कर्तुम् । तस्मादकर्तुमशक्यतैव कार्यता । ननु भोः कामार्तः अकर्तुमशक्नुवन्नेव पराङ्गनामालिङ्गति । अपहारमकर्तुमशक्नुवन्नेव चोरः परस्वमपहरति । तस्मादिष्टसाधनतैव कार्यता नामेत्यनिच्छताऽपि भवता भवत्येष्टव्यमिति । उक्तं चैतदनुव्याख्याने– 'कार्यता च न काचित् स्यादिष्टसाधनतां विना' इति । तस्मादिष्टसाधनताज्ञानमेव प्रवृत्तिहेतुः । सर्वोऽपि हि लोक इदमिष्टसाधनमिति मन्वानः प्रवर्तते । नेष्टसाधनमिति मन्वानो निवर्तते ॥

नन्वतीत इष्टसाधनेऽतिव्याप्तिः । तत्रास्तीष्टसाधनत्वम्, नास्ति प्रवृत्तिः । भ्रान्तोऽसि । तत्रेष्टसाधनत्वमासीत् । तदा प्रवृत्तिश्चाऽसीत् । इदानीं नास्तीष्टसाधनत्वम् । नास्ति च प्रवृत्तिः । कुतः? **नष्टस्य साधनस्य साधनताया अपि नष्टत्वात्** ॥

**तच्चोक्तं स्कान्दे–**

**‘नारायणाद् विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।**
**‘किञ्चित् तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥**

---

उक्तेऽर्थे प्रमाणमाह– **तच्चोक्तं स्कान्दे ‘नारायणाद् विनिष्पन्नम्’** इत्यादि ॥

---

**इदमेव** सिद्धेऽर्थे प्रामाण्यं नास्तीति वाक्यमेव **सिद्धेऽर्थे** प्रामाण्यमस्तीत्यत्र **प्रमाणम्** । नहि तत्र किञ्चित् कार्यबोधकं पदमस्ति । तदलमन्यप्रमाणान्वेषणेन **निवारणेन** वा । **अप्रमाणं चेत्** पिहितस्ते पन्थाः । **अन्यथा** विद्धीत्यध्याहारमन्तरेणाप्यनुमायाः स्वार्थे प्रामाण्यानङ्गीकारे, परार्थानुमानं परस्य **ज्ञानविधिमात्रपरमित्युक्तं** स्यात् । स्यात्, किं तेन? तेन ‘पर्वतो वह्निमान् धूमादिति विद्धि’ इति ज्ञानविधिमात्रेण पर्यवसितेः परार्थानुमानं न किञ्चित् साधयति परं प्रति नापि दूषयतीति व्यर्थमेव स्यात् ॥

अपिचैवं ब्रह्मप्रतिपादकसिद्धपरवाक्यानामपि शक्यं क्रियाविधिपरत्वमनुसन्धातुम्– ‘सत्यं ज्ञानमनन्तं ब्रह्म विद्धि’ इति । ब्रह्मणः सत्यत्वादिना प्रतिपत्तिः कर्तव्येत्यर्थः । एवं सिद्धवाक्यानां विद्धीत्यध्याहारेण बोधकत्वाङ्गीकारेऽपि न नः किञ्चिच्छिद्यते । भवत एव केवलं व्यर्थपदाध्याहारदोषः । अतः **सिद्धेऽर्थे प्रामाण्यं सुस्थितम्** ॥

उक्तार्थजातं भाष्याक्षरगदितमित्याह– **अतः सुष्ठूक्तमिति । तद्योगम्** इष्टप्राप्त्युपायमिष्टसाधनं नारायणम्, **अविजानतां तज्ज्ञापनार्थम्**, इष्टसाधनतां विनाऽन्यस्याः कार्यताया अभावात्, वाक्यानां सिद्ध एव तात्पर्यात् नारायण एव च परममिष्टसाधनमिति स एव सर्ववेदार्थ इति ज्ञापनार्थमिति ॥ ✻ ॥

## पुराणान्यपि प्रमाणानि; पञ्चरात्रमपि

**स्कान्दे चोक्तमिति** । न केवलमस्माभिरितरभाष्यकृद्भिरिव स्वमनीषोत्थमुच्यत इति मन्तव्यम् । स्कान्दे चैतदुक्तमित्यर्थः । ननु मूले ‘तच्चोक्तम्’ इत्युच्यते, न ‘एतच्चोक्तम्’ इति । सत्यम् ।

---

नन्वपौरुषेयो वेदः प्रमाणमस्तु, किमिति पुराणादिष्वादरः क्रियते? उच्यते। वेदानुसारित्वाद्, वेदपरिगृहीतत्वाच्च। 'ऋग्वेदं भगवोऽध्द्येमि' इत्यारभ्य, 'इतिहासपुराणं पञ्चमं वेदानां वेदम्' इति हि च्छन्दोगश्रुतिः। 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति च। 'इतिहासः पुराणं विद्या उपनिषदः श्लोकाः' इति बृहदारण्यके। 'सर्वेषु वेदेषु तथेतिहासे' इति पैङ्गिश्रुतिः ॥

'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सहचेतिहासैः।
'सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्रतत्र प्रतीतैः' इति भाल्लवेयश्रुतिः ॥

---

एतच्चोक्तम्। तच्चोक्तम्। किमेतत्? पूर्वभाष्योक्तो व्यासावतारः वेदविभजनं च। किं तत्? भाष्येऽनुक्तं तत्पूरकं गौतमशापादिकं ब्रह्मसूत्राणामेव मुख्यसूत्रत्वादिकं च। वस्तुतस्तु यत्तदोर्नित्यसम्बन्धादेवमेव व्यवहरन्ति। यदस्माभिरुक्तं पूर्वभाष्ये तत् स्कान्दे चोक्तं स्वयं सूत्रकारेण भगवता बादरायणेन ॥

अथच चकारेणाऽपाततः शिवपरत्वं समुच्चिनोति। **स्कान्दे च** शैवत्वेन प्रथितेऽपि स्कान्दे तदेतत् समाधिभाषया उक्तम्। स्कान्दस्यैव प्रथममुदाहरणेन पुराणानां तामसादिभेदेन त्रैविध्यं निराचिकीर्षतीव। अत एव उपरिष्टाच्च– 'शैवे च स्कान्दे', 'ब्राह्मे च ब्रह्मवैवर्ते' इत्येवाऽह। नतु 'तामसे च स्कान्दे', 'राजसे च ब्रह्मवैवर्ते' इत्यादि। अत एव पुराणत्रैगुण्यवादिनां सात्त्विकत्वेनाभिमतं पद्मपुराणं शैवमिति वक्ष्यति– 'शैवे च पाद्मे' इति ॥

## पुराणादयः पौरुषेयवेदाः

ननु वेदा अपौरुषेयतया प्रमाणं भवन्तु। **किमिति** पौरुषेयेषु **पुराणादिष्वादरः**? आदिपदेन इतिहासात्मकं भारतं रामायणं च, पञ्चरात्रं च। तत्रापि तामसतया प्रसिद्धे स्कान्दे? एवमाशङ्कायाः परिहारमाह– **उच्यत** इति। वेदाः प्रमाणमिति सिद्धम्। **वेदपरिगृहीतत्वात्** पुराणान्यपि प्रमाणमित्यायातम्। यदि पुराणानि न प्रमाणानि, पुराणानि परिगृह्य प्रशंसतां वेदवचनानामप्यप्रामाण्यमापद्येत। **इति च** च्छन्दोगश्रुतिरिति वर्तते। **सहचेतिहासैरि**त्येकं पदम्। 'दूरेहरिकथाः केचिद् दूरेचाच्युतकीर्तनाः' इतिवत्। इतिहासाभ्यां भारतरामायणाभ्यां च सहितैर्वेदैरित्येकान्वयः। अनेकरामायणविवक्षया वा 'इतिहासैः' इति बहुवचनम्। पूर्ववचनेष्वस्फुटं पञ्चरात्रस्य प्रामाण्यं स्फुटतरं घोषयति भाल्लवेयश्रुतिः। एतेन भारतरामायणयोरेवेतिहासत्वेन प्रामाण्यं न पञ्चरात्रस्येति वदन्तः परास्ताः। अथवा

'वेदैश्च पञ्चरात्रैश्च ह्यध्येयो नारायणः परः ।
'पञ्चरात्रं च वेदाश्च विद्यैकैव विधीयते' इति नारायणश्रुतिः ॥

'सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् ।
'सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथा' इति ब्रह्मतर्के ॥

सूत्रकारश्च भगवांस्तत्रतत्रोवाच 'स्मृतेश्च', 'अपि स्मर्य्यते' इत्यादि ॥ ✻ ॥

यद्यप्याचार्य्यः स्वोक्तार्थे स्वयमेव प्रमाणम्, सर्वज्ञत्वादविप्रलम्भकत्वाच्च । तथाऽपि 'स्कान्दे चोक्तम्' इति प्रौढवादं करोति । सर्वज्ञत्वं तावत् श्रुतिसिद्धम्– 'बळित्था तद् वपुषे धायि दर्शतम्' इति । इह हि प्रस्तुतस्य बलज्ञानस्वरूपस्य वायोः प्रथमावतारो

शृणु गमनिकान्तरम् । य एकः परतः परत्वेन उपास्य इति सर्वैर्वेदैर्विहितः स ह स एव नारायणः इतिहासैरपि गीयते । सः पञ्चरात्रैः सपुराणैश्च सर्वैर्गुणैः पूर्ण इति गीयते । तात्पर्यमवधारयितुं स इति त्रिरुक्तिः । पञ्चरात्रमेकदेशे प्रमाणं न सर्वत्रेति भ्रमन्तं प्रति पञ्चरात्रस्य वेदतुल्यतां प्रतिपादयन्तीं नारायणश्रुतिमाह– **वेदैश्च पञ्चरात्रैश्च** । संहिताभेदापेक्षया 'पञ्चरात्रैः' इति बहुवचनम् । हरिवंशेष्विति-वत् । मोक्षधर्मेष्वितिवत् । भगवद्गीतास्वितिवत् । विषयैक्यात् पुनरन्ते **'पञ्चरात्रं च वेदाश्च'** इत्याह । न केवलं वेदानुसारित्वादितिहासपुराणैः, वेदानुसारिभिस्तर्कैश्च भगवानेव ज्ञेय इति ब्रह्मतर्कवचनेनाऽह । वर्जनं तु शुष्कतर्कविषयम् । प्रज्ञावादमूलत्वमेव शुष्कत्वम् । तथाहि श्रुतिः– 'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति' इति । तपांसीति युक्तय इति वक्ष्यति । अन्तरङ्गं प्रमाणमाह– **सूत्रकारश्च भगवानिति** । **'स्मृतेश्च'** इति द्विः(१.२.६; ४.३.११), 'स्मरन्ति च' इति त्रिः (२.३.४६; ३.१.१५; ४.१.१०), 'स्मर्यते च' (४.२.१४) इति, 'स्मर्यतेऽपिच' (३.१.२०) इति, 'स्मर्यमाणमनुमानं स्यादिति' (१.२.२५) इति च सकृत् । **'अपि स्मर्यते'** इति च चत्वारि सूत्राणि (१.३.२३; १.३.४४; ३.४.३०; ३.४.३७) ॥

**प्रौढवादं करोतीति** । दुर्जना अपि तुष्यन्त्विति वादः प्रौढवादः । ये मध्वस्य वाय्ववतारत्वं नाभ्युपयन्ति तेऽपि यथार्थात् पथो मा प्रच्याविषतेति कृपया वादः प्रौढवादः । कश्चिन्मायावादी पृच्छेत्– निर्मूलं भवदाचार्यवचनम्, यद्यस्ति किञ्चिन्मूलं प्रदर्श्यतामिति । तदा तत्ववादी पुनरवाग्वदनो मा भूदिति कृपया वादः प्रौढवादः । अभ्युपगमवाद इत्येतत् ॥

रामस्याऽज्ञाप्रणेता साधको 'मति'शब्दोक्तः। द्वितीयं वपुः पृतनाक्षयकृत् 'पृक्ष'शब्दोक्तम्, ऋगादिसप्तविद्यानिवासात्मकं च। अस्य ऋषभस्य तृतीयं वपुर्ज्ञानदोहनार्थं योषासु जातम्। 'दश'शब्दः पूर्ण्णवाची, 'तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या' इत्यादिश्रुतेः। 'दशप्रमति'मिति पूर्ण्णप्रज्ञनामोक्त्या सर्वज्ञत्वमुक्तम्। येन 'शवसा' सुखेन महितषड्गुणस्य विष्णोर्वरणीयान् गुणान् रुद्रादीश्वरा अन्ये च सूरयो 'निरक्रन्त'

---

उक्तमेतन्नरहरितीर्थैरपि गीताभाष्यटीकायाम्– 'श्रीमदाचार्यवचनं स्वत एव प्रमाणम्। न तत्र शङ्का भवति तल्लक्षणाभिज्ञानां महात्मनाम्। तथाहि ब्रह्मतर्कादौ– 'तदुक्तिमात्रे प्रामाण्यं यदि नास्याऽगमान्तरम्। अपेक्षितम्' इत्यारभ्य, 'नाऽशङ्क्यं तद्वचः क्वचित्', 'तद्वाक्यं वेदपूजितम्' इत्यादि। तल्लक्षणानभिज्ञानां प्राकृतानां तु भवत्यपि शङ्का। साऽपि मा भूदिति भावेनाऽह– तच्चोक्तमिति' इति॥

## श्रुतिगीतो मध्वावतारः

**'बळित्था–'** इत्यादि प्राणाग्निसूक्तम्। मन्त्राक्षराणि कानिचन व्याख्याति। **'बट्'** इति बलस्वरूपः प्रस्तुतः। 'दर्शतम्' इति ज्ञानस्वरूपः। प्रथमावतारो हनुमान् श्रुतौ **मतिशब्दोक्तः**– 'साधते मतिरृतस्य धेना अनयन्त' इति। **द्वितीयं वपुर्भीमाख्यं पृक्षशब्दोक्तम्।** **'पृतनाक्षयकृत्'** इति पदयोराद्याक्षरग्रहणेन। 'आशये सप्तशिवासु मातृषु' इति श्रुतिभावमाह– **ऋगादिसप्तविद्यानिवासात्मकं चेति।** अथवा 'सप्त शिवासु' इति भिन्ने पदे। सप्तेति प्रथमा सप्तम्यर्थे। 'सप्तसु प्रथमा' इतिवचनात्। सप्तसु मातृष्वित्यन्वयः। स्फुटमेतदुत्तरत्रेति तृतीयावतारवाचिश्रुतिभावमाह– 'दोहसे' **ज्ञानदोहनार्थम्।** भट्टपत्न्यां श्रीभूदुर्गाख्यासु भगवद्**योषासु** सन्निहितासु सतीषु **जातम्।** 'दशप्रमतिम्' इति पूर्णप्रज्ञमित्येवोक्तं भवतीत्याह– **दशशब्द** इति। 'निर्यत्' इति श्रुतौ प्रथमान्तो यच्छब्दस्तृतीयार्थे पठित इत्याह– **येन** तृतीयेन वपुषेति। 'सप्तसु प्रथमा' इति ह्युक्तम्॥ 'महिषस्य' **महितषड्गुणस्य विष्णोः।** श्रुतौ 'वर्पसः' इति सान्तं द्वितीयाबहुवचनान्तं पदम्। 'वर्पाख्यान् गुणान्' इति व्याख्यानाद् यजुःसंहितायाम्। तेन वर्प इत्यदन्तं च पदमनुमतमिति गम्यते। भवतु नाम। अथापि कया निरुक्त्या गुणानां वर्पाख्येत्यत आह– **वरणीयान् गुणानिति।** वरणीयत्वाद् वर्याः। वर्या एव वर्पा वर्पसो वा। वर्णविपर्ययेण यकारस्य पकारः। अर्थविशेषद्योतनाय च वर्णविपर्ययः– वृताः पान्तीति। 'ईशानासः सूरयश्च' इति प्रमाणवचनानुसारेण 'ईशानासः' इति मन्त्रपदस्यार्थमाह– **रुद्रादीश्वरा अन्ये च सूरय इति।**

निरजानत । यत्र चायं 'प्रदिवः' प्रकृष्टज्ञानो मध्वनामा भूत्वा 'मातरिश्वा' गुहायां निहितं विष्णुम् 'आधवे' आ समन्तादीश्वरत्वे 'मथायति' प्रकाशयति, असत्यमनीश्वरं जगद् वदद्भिरसुरैर्ग्गूहितं सन्तं प्रकाशयतीत्यर्थः । यत्र च परमेश्वरस्य स्वपितुरिच्छया नीयमानः प्रश्नवीरुधः स्वदन्तेषु पर्य्यारोहयति चर्वितवच्छकलीकरोतीत्यर्थः ॥

'अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
'विसृता नृषु जातं च तं विद्याद् देवसत्तमम्' इति नारायणश्रुतिः ॥

---

'निः+क्रन्त' इति श्रुतिपदे अन्वयपूर्वकमर्थतोऽनूद्य व्याचष्टे— **निरक्रन्त निरजानतेति** । अथवा 'निः+अक्रन्त' इत्येव श्रुतिपदे । ननु तर्हि प्रतृण्णं कुप्यति । निःक्रन्त इत्येव हि पठन्ति पदपाठज्ञाः । उभयथाऽपि स्यात् पदपाठः । 'निः+क्रन्त' इति । 'निः+अक्रन्त' इति । पदपाठः केवलमयोगं व्यवच्छिनत्ति नान्ययोगमित्यनेन सूचयाम्बभूव । 'यदीमनु' इत्यत्र सप्तम्यर्थे यच्छब्द इत्याह— **यत्र चावतारे** । नक्तमित्यज्ञानमुच्यते, दिवमिति ज्ञानमुच्यत इत्याशयेन 'प्रदिवो मध्वः' इति मन्त्रार्थमाह— **प्रकृष्टज्ञानो मध्वनामा भूत्वा** । 'गुहा सन्तम्' इति वचनं प्रमाणे 'गूढं कलियुगे हरिम्' इति व्याख्यातम् । तेन श्रुतौ गुहेति सप्तम्यर्थे प्रथमेत्याह— **गुहायां निहितं विष्णुम्** । गुहायां सन्तं निहितं पिहितमित्यर्थः । पिहितं कम्? सन्तं विष्णुम् । सच्छब्दो हि विष्णुवचनः । 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात् । 'आधवे' इति भावप्रधानो निर्देश इत्याह— **आ समन्तादीश्वरत्व** इति । 'आ समन्तात् पतित्वे तु' इति हि प्रमाणवचनम् । 'प्र यत् पितुः परमान्नीयते पर्यापृक्षुधो वीरुधो दंसु रोहति' इति मन्त्रभागं व्याचष्टे— **यत्र चेत्यादिना** । 'यत्' **यत्र** तृतीये वपुषि, 'पितुः' **स्वपितुः** 'परमात्' परमेश्वरात्, **परमेश्वरस्येच्छयेति** यावत्, वादेषु 'नीयते' संयुज्यते । अथ **नीयमानः** सन् 'वीरुधः' प्रतिवादिनां **प्रश्नवीरुधः** 'दंसु रोहति' **स्वदन्तेषु पर्यारोहयति** चर्वश्चर्वं **शकलीकरोतीति** । उपक्रमे 'तृतीयमस्य वृषभस्य' इति वृषभत्वं रूपितम् । तदनुगुणमत्र 'वीरुधो दंसु रोहति' इत्युपसंहृतमिति सर्वमतिसुन्दरम् । कांश्चिदर्थविशेषान् ग्रन्थान्ते स्वयं वक्ष्यति । समग्रसूक्तार्थस्तु अस्मत्कृते प्राणाग्निसूक्तभाष्ये द्रष्टव्यः ॥

श्रुत्युक्तेऽर्थे युक्तिं चाऽह— **अश्रुतप्रतिभेति** । एतेनेदमाह— श्रीमध्वः देवसत्तमावतारः अश्रुत-श्रुतिस्मृत्यविरोधिप्रतिभत्वादिति । **अश्रुतप्रतिभा** भुवि जातेष्वसुरेष्वपि दृश्यत इति तद्वारणाय

प्रत्यक्षमेव चैतल्लक्षणं दृश्यते भगवति भाष्यकारे ॥

'हनशब्दो ज्ञानवाची हनूमान् मतिशब्दितः ।
'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ॥

**श्रुतिस्मृत्यविरोधिनी**ति । तादृशी प्रतिभा सात्विकेषु मनुष्येष्वपि स्यादिति– **अश्रुते**ति । मनुष्यलोके क्वचिदन्यत्रादृष्टाश्रुतपूर्वेत्यर्थः । मध्वग्रन्थानामध्ययनेनैव तस्याश्रुतपूर्वा प्रतिभा ज्ञायेत । स्वस्य त्वनुभवसिद्धमेतदित्याह– **प्रत्यक्षमेव चे**ति । तथाच प्रत्यक्षादिप्रमाणत्रितयमपि मध्वस्य देवोत्तमत्वमवगमयतीत्यर्थः ॥

अत्रैतदवगन्तव्यम्– न केवलमश्रुतप्रतिभत्वम् । देवसत्तमत्वद्योतकं द्वात्रिंशल्लक्षणलक्षितं शरीरमपि प्रत्यक्षमेव दृश्यते । तेनापि तस्य स्वयम्प्रमाणत्वमवगम्यते । तथाहि ब्रह्मतर्कवचनम्–

'तदुक्तिमात्रे प्रामाण्यं यदि नास्याऽगमान्तरम् ।
'अपेक्षितं यदा शङ्का दर्शनीयस्तदाऽऽगमः ॥

'निःशङ्कत्वेन यो वक्ता प्रश्नानामुत्तरं सदा ।
'आनुकूल्येनाऽगमानां नाऽशङ्क्यं तद्वचः क्वचित् ॥

'दशतालो दशमुखो ललाटत्रिंशकस्तथा ।
'सार्धोन्नतश्चैव पुनः पर्यग्दशशिरास्तथा ।
'पञ्चोराः सप्तपादो यो नाऽशङ्क्यं तद्वचः क्वचित् ॥

'नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः ।
'चतुर्विंशाङ्गुलतनुस्तद्वाक्यं देवपूजितम्' इत्यादि ।

नन्वियं श्रुतिरग्निपरतया परैर्व्याख्याता । न मध्वस्य वार्ताऽपि तत्र । तत् कथमनया श्रुत्येष्टसिद्धिरिति? शृणु । न परेषां व्याख्यानमुपादेयम् । तस्य स्वमनीषोत्थतया निराधारत्वात् । नचास्मदुक्तोऽर्थः स्वमनीषोत्थः । प्रमाणान्तरसंवादादिति स्वोक्तार्थे भाववृत्तवचनं तावदाह– **हनशब्दो ज्ञानवाची**ति । हन गताविति धातुपारायणिकाः । गतिरित्यवगतिरपि । तेन हनधातुर्ज्ञानवचनः । हन्ति ज्ञानवान् भवतीति हनुर्मतिः, मतिमांश्च हनुमान् । मतिमतो मतिश्च तत्स्वरूपमेवेति **हनूमान् मति-**

'भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।
'प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ॥

'मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
'मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ॥

'इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
'यो वेद वेदवित् स स्यात् तत्ववित् तत्प्रसादतः' इति भाववृत्ते ॥

---

**शब्दितः** । **तेन 'ऋतस्य धेना अनयन्त', रामस्य स्वृतरूपस्य वाचः अनयन्त** सीतां प्रत्यनीयन्त । श्रुतौ ऋतस्य ज्ञानरूपस्येत्युपलक्षणमित्याह– **स्वृतरूपस्येति** । सु इति सुखम् । 'स्वित्यानन्दः समुद्दिष्टः' इति वचनात् । तेन ज्ञानानन्दरूपस्य रामस्य । अनेन विशेषणेनेदमाह– न रामस्य सीतान्वेषणमूलमज्ञानम्, सीताविरहजं दुःखं वा शङ्कनीयम् । स्वृतरूपत्वात् । किन्तु केवलं लीलेयं भगवत इति । अत एव हनुमन्तं प्रति राम आज्ञापयामास– अभिज्ञानमादाय त्वमेव दक्षिणामाशां याहीति । अथच श्रुतेरर्थान्तरम्– रामस्य धेनाः त्वमेव याहीत्याज्ञारूपा वाचः तं लङ्कां प्रत्यनयन्तेति । अर्थद्वयसमाहारायैवा-नयन्तेति प्रयोगः । **'अनयन्त हि'** इति हनुमदवतारस्य परममुख्यं कार्यमेतदिति प्रसिद्धमित्याह ॥

'आशये द्वितीयमा सप्तशिवासु मातृषु' इति भीमशब्दनिर्वचनमित्याह–**भृतमो भीम इत्युक्तः** । भृताः माः सप्त शिवाः वाचः येन स भृतमः । असतां भयकरत्वाद् भीमः, सतां भृतमत्वाद् भीम इत्युभयार्थ-सङ्ग्रहायात्रापि वर्णविपर्ययः । **मा** इति **मातर** इति च **वाचः स्मृताः** । 'मातु' इति भाषायाम् । अस्तु मा इति वाचः । कास्ताः सप्तेत्यत आह– **ऋगाद्याः** चत्वारः, भारतं रामायणं चेतिहासः । इतिहासमिति नपुंसकत्वमार्षम्, भारतं रामायणमिति ग्रन्थसाधर्म्याय । **पुराणं पञ्चरात्रकं** चेत्येताः **सप्त** च ताः शिवाश्च **सप्तशिवाः** । पञ्चरात्रमिति पर्याप्तम् । अथापि पञ्चरात्रकमित्याह । तेन कृत्स्नं पञ्चरात्रमिति ज्ञायते । अधिकं सत् किञ्चिज्ज्ञापयतीति ह्याभणन्ति । 'आधिक्येऽधिकम्' इति च स्मरन्ति । तत्र शेते सप्तशिवासु रमत इति **शयः** ॥

अथ 'मध्व आधवे' इति श्रुतौ मध्वपदं व्याचष्टे– **मध्वित्यानन्द उद्दिष्टः** । वा गतिगन्धनयोः । वीयते गम्यते तत्वमनेनेति वं शास्त्रं **तीर्थमुदाहृतम्** । तस्य वायो रूपत्रयस्य **प्रसादतः वेदवित्**

'साधको रामवाक्यानां तत्समीपगतः सदा ।
'हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ॥

'पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
'पूर्ण्णप्रज्ञस्तथाऽऽनन्दतीर्त्थनामा प्रकीर्त्तितः ॥

'दशेति सर्वमुद्दिष्टं सर्वं पूर्ण्णमिहोच्यते ।
'प्रज्ञा प्रमतिरुद्दिष्टा पूर्ण्णप्रज्ञस्ततः स्मृतः ॥

'आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
'असत्यमप्रतिष्ठं तज्जगदेतदनीश्वरम् ।
'वदद्भिर्ग्गूहितं सन्तं तृतीयोऽसुर्म्मथायति ॥

---

**स्यात्** । अत एव परतत्वस्य नारायणाख्यस्य वेदनात् **तत्ववित्** च **स्यात्** । 'नावेदविन्मनुते तं बृहन्तम्' इति श्रुतेः ॥

नामत्रयनिर्वचनं भाववृत्ते गतम् । सिद्धं च सूक्तस्यावतारत्रयपरत्वम् । अथ मन्त्रवर्णानां कांश्चनार्थविशेषान् यजुःसंहितावचनेनाऽह– **साधक** इत्यादिना । 'साधते' रामवाक्यानि साधयति । 'उपह्वरते' सदा रामसमीपे तं सेवमानस्तिष्ठति । 'मतिः' **हनुमान् प्रथमो** ज्ञेयः प्रथमावतारत्वेन उपास्यः । **भीमस्तु** पितोः अन्नस्य बकार्थं नीतस्य बहु सामस्त्येन भुङ्क्ते इति 'पितुमान्' इत्युक्तः । तथा पृतनाक्षयकारित्वात् 'पृक्षः' इति चोक्तो **द्वितीयो** ज्ञेयः । **तृतीयकस्तु पूर्णप्रज्ञ इत्यानन्दतीर्थ** इति च श्रुतौ प्रशस्य **कीर्तितः** । अज्ञातस्तृतीयः **तृतीयकः** । तृतीयोऽयं वायोरवतार इति बहुभिरज्ञातो निगूढोऽवतार इत्यर्थः ॥

ननु मध्व इत्यानन्दतीर्थ इति भाववृत्तेनावगतम् । पूर्णप्रज्ञ इति श्रुतौ कुत्र प्रकीर्तित इत्यत आह– **दशेति सर्वमुद्दिष्टमिति** । 'शतं दश सहस्रं च सर्वमक्षय्यवाचकम्' इति च स्म हि स्मरन्ति । **ततः पूर्णप्रज्ञः** दशप्रमतिरिति **स्मृतः** शास्त्रेषु पठितः ॥

'गुहा सन्तम्' इत्येतत् द्वेधा व्याख्याति– **गूढमिति** । **गूहितं सन्तमिति** । **आ समन्तात् पतित्वे** सर्वेश्वरत्वे विषये **कलियुगे**ऽवताराद्यभावेन **तु** विशेषतो **गूढम्**, न केवलम्, एतत् प्रत्यक्षादिप्रमाणसिद्धं

'येन विष्णोस्तु वर्प्पाख्यान् गुणानज्ञासिषुः परान् ।
'ईशानास्ते सूरयश्च निगूढान् निर्गुणोक्तिभिः ॥

'त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।
'एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
'स्वयम्भुब्रह्मसञ्ज्ञोऽसौ परोऽस्मै ब्रह्मणे नमः' इति च यजुःसंहितायाम् ॥

अविप्रलम्भकत्वं चास्यावगम्यते । 'यद्वै किं च मनुरवदत् तद् भेषजम्', 'त्वादूतासो मनुवद् वदेम' इत्यादिश्रुतेः । 'ते वायवे मनवे बाधिताय' इति च ॥

---

**जगत्** अनीश्वरनिर्मितं **वदद्भिर्नास्तिकैर्मायावादिभिश्च गूहितं च सन्तम्** । **आ समन्तात् पतित्वे तु** । तादर्थ्ये चतुर्थी । विशेषतः सर्वेश्वरत्वसमर्थनार्थम् । **मथायति** उपक्रमादियुक्तिमथनपूर्वकं वेदार्थं प्रकटयति । कः? **तृतीयोऽसुः** तृतीयावतारो 'मातरिश्वा' ॥

**येन** तृतीयावतारेण । **विष्णोः परान्** परिपूर्णान् वरणीयत्वतो **वर्पाख्यान् गुणान् तु** विशेषेण **अज्ञासिषुः** । के? **ईशानासः**, बहुवचनमाद्यर्थे, ईशानप्रमुखा देवाः । ईशत इतीशानाः समर्था रुद्राद्या इति वा । अन्ये **च सूरयः** ऋष्याद्याः । मायिनां **निर्गुणोक्तिभिः** । श्रुतिष्वापाततः निर्गुणत्वमिव वदन्तीभिः 'साक्षी चेता केवलो निर्गुणश्च' इत्याद्युक्तिभिश्च **निगूढान् गुणान्** । एवं त्रिषु युगेष्वेव **त्रय एव** च वायोरवताराः सर्वकल्पेष्वपि । वायुरसौ भाविनि कल्पे स्वयम्भूरित्युच्यते, ब्रह्मेति च । मोक्षेऽपि च । तेनान्ततस्तदेव तस्य रूपमिति **असौ** वायुरेव **स्वयम्भुब्रह्मसञ्ज्ञः** । **परः** सर्वजीवोत्तमः । तस्मात् **अस्मै ब्रह्मणे** वायवे **नम** इति ॥

## आप्ततम आचार्यः

ननु स्यात् पूर्णप्रज्ञो वायोस्तृतीयोऽवतारः । अथापि विष्णोर्बुद्धरूपवन्मोहावतारः स्यात् । ततश्च तद्वचनमग्राह्यमेव स्यात् । अत आह— **अविप्रलम्भकत्वं चास्यावगम्यते** श्रुतित एव ॥

ननु भवदुदाहृतायां श्रुतौ मनुवचनानामुपादेयत्वमाह । न मध्ववचनानाम् । मनुरिति सावकाशं स्मृतिकर्तर्यपि । तत्रैव रूढेः, योगादपि रूढेर्बलीयस्त्वात्, स्मृतिकृन्मनुरेव श्रुत्यर्थ इति च शक्यं वक्तुम् ।

यदाह रामानुजमुनिः– 'यद् वै किञ्च मनुरवदत् तद् भेषजमिति श्रुतिपरिगृहीतमन्वादिस्मृतीनाम्' इति । नैतद् युक्तम् । अङ्गरूढितोऽपि विद्वद्रूढेर्बलीयस्त्वात् । विद्वद्रूढिश्च वायावेव । तथाहि श्रुतिः–

'ज्ञेया भागं सहसानो वरेण त्वादूतासो मनुवद् वदेम ।
'अनूनमग्निं जुह्वा वचस्या मधुपृचं धनसा जोहवीमि' (ऋ.२.१०.६) इति षळृचं गृत्समदस्याऽर्षं त्रैष्टुभमाग्नेयम् ॥

अयं मन्त्रार्थः– वरेण वीर्येण शत्रून् सहसानोऽभिभवन्, अस्मत्प्रार्थितेन वरेण सह अप्रार्थितस्यापि सानो दाता वा, प्रतृण्णस्यानियतत्वात्, अग्ने नारायण, भागं भवता भजनीयमस्मत्कृतं स्तोत्रं ज्ञेयाः ज्ञायाः । इमं स्तोतारं मां तव भागं भक्तं जानीहि इति वा । वयमपि **मनुवद्** वायुवत् **त्वादूतासः** त्वत्सन्देशहरा दूताः सन्तः लोके **वदेम** त्वन्महिमप्रसारका भवेम । यथा हनुमान् त्वत्सन्देशं सीतां प्रति जहार । यथा वा मध्वो गुहा सन्तं प्रतानयामास । जुह्वा ज्वालया अनूनं प्रज्वलन्तम्, मधुपृचमानन्दमयम्, भक्तानां स्वरूपानन्दप्रदं च त्वामग्निम्, सर्वात्तारं सर्वेन्द्रियप्रणेतारम्, धनसाः विद्याधनस्य शिष्येभ्यो दाता, त्वदाराधनोपयुक्तसाधनसम्पन्नो वाऽहं वचसा स्तुतिकामनया जोहवीमि आह्वयामीति ॥

नात्र स्फुटं वायुपरत्वं प्रतीयत इति स्फुटवचनां श्रुतिमाह– **ते वायव** इति । तथाहि समग्रो मन्त्रः–

'कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
'**ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण**' (ऋ.७.९१.१) ॥

वायुदेवत्यमिदं सप्तर्चं सूक्तं त्रैष्टुभं वसिष्ठस्याऽर्षम् । अयं मन्त्रार्थः–

आत्मानमेव सम्बोधयन्नाह वसिष्ठः– हे अङ्ग हे प्रियतम, मम मानसेति । कुवित् कुत्रचिद् रहसि ये देवाः पुरा साधनदशायां नमसा कायेन प्रणम्य, वाचा संस्तूय, मनसा च त्वामेव ध्यात्वा वृधासः ज्ञानवृद्धाः सन्तो अनवद्या रागक्रोधादिदोषदूरा आसन्, ते देवाः **वायवे मनवे** ज्ञानिने, **बाधिताय** संसारबाधितैः शरणमिताय । **अबाधिताय** इति वा प्रतृण्णम् । यस्य वचनानि न क्वापि बाधितानि भवन्ति सोऽबाधितः । वक्ष्यति हि– 'यदुक्तयः क्वापि नान्यथा दृश्यन्ते तत्राऽप्तिं शङ्कमानाः कुत्र

'ब्रह्मविष्णू हि सर्वस्य लोकेष्वाप्ततमौ मतौ ।
'आप्तास्तदितरे ज्ञेया देवा मुनय एव च' इति विष्णुसंहितायाम् ॥

वायुरेव हि ब्रह्मा भवति । 'वायुर्ह्येव प्रजापतिः । तदुक्तमृषिणा, पवमानः प्रजापतिरिति' ॥

---

निश्चिन्वीरन्' इति । तादृशाय वायवे तत्प्रसादार्थम्, अवासयन् उषसं स्वबुद्धिं वायौ आवासयन् सूर्यनारायणेन सह । व्याकरिष्यते च टीकाकृदुपरिष्टात्– 'पुरा कचिद् ये नमस्कारादिना वृद्धाः सन्तो देवा रागाद्यवद्यशून्या आसन् ते, वायवे ज्ञानिने बाधिभिः शरणार्थमिताय अवासयन् स्वबुद्धिं सूर्येण सह । 'उष प्रकाशने' इति धातोर्बुद्धिरुषःशब्दोक्ता । वायुमुद्दिश्य बुद्धिमवासयन्नित्यर्थः' (१.३.२४) इति । बुद्धिमवासयन्निति अजिज्ञासन्तेत्यर्थः ॥

अत्र मनुशब्दो वायुवचन इति स्फुटम् । योगार्थेन च मनुरिति ज्ञानी किलोच्यते । ततोऽपि ज्ञानितमो वायुरेव मनुशब्दार्थ इति युक्तम् । अधिकमस्मत्कृते कुविदङ्गसूक्तभाष्ये द्रष्टव्यम् ॥

वायोराप्तत्वे स्मृतिसम्मतिं चाऽह– **ब्रह्मविष्णू** इति । **लोकेषु** ज्ञानिलोकेषु । **सर्वस्य** सज्जनसमुदायस्य । **सर्वस्य** प्रमेयस्य विषये वा । विष्णुराप्ततमः । ब्रह्माऽऽप्ततरः । 'यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ' इति हि स्मरन्ति । **तदितरे देवा मुनयश्च आप्ता एव** केवलमिति **ज्ञेयाः** ॥

नन्वत्र ब्रह्मण आप्तत्वमुक्तम्, न वायोः । न दोषः । यतो **वायुरेव ब्रह्मा भवति** । **ऋषिणा** मन्त्रेण मन्त्रद्रष्ट्रा वा । 'ऋषिस्तु वेदे भृग्वादौ' इति यादवप्रकाशः ॥

'त्वष्टारमग्रजां गोपां पुरोयावानमाहुवे ।
'इन्दुरिन्द्रो वृषा हरिः **पवमानः प्रजापतिः**' (ऋ.९.५.९) इति समग्रो मन्त्रः ॥

एकादशर्चं पवमानसूक्तम् । काश्यपस्यासितस्य देवलस्य वाऽऽर्षम् । पवमानस्येदमाप्रीसूक्तम् । त्वष्टृनामा पवमानो मन्त्रदेवता ॥

अयं मन्त्रार्थः– सृष्टावग्रतो जातं पुरोगन्तारं मार्गदर्शकं देवानां पालकं त्वष्टारं जगन्निर्मातारं पवमानमाह्वयामि । किमिति? इष्टदानादिन्दुरिति । जीवेषु परमैश्वर्यादिन्द्र इति । अभीष्टवर्षणात्

---

**'य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः' ।**
**'ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम' इत्यादिश्रुतिः ॥**

---

पुरुषवृषभत्वाच्च वृषेति । अज्ञानहरणात् कपित्वेनावतरणाच्च हरिरिति । पावयित्वा महानन्दे मिनोतीति, पवत इति च **पवमान** इति । स एव ब्रह्मा भविष्यतीति **प्रजापतिरितीति** ॥

**'य आत्मदा–'** (ऋ.१०.१२१.२) इति हिरण्यगर्भसूक्ते द्वितीयमन्त्रस्य पूर्वार्धम् । **'ततो देवा-नाम्–'** इति सप्तमस्योत्तरार्धम् (१०.१२१.७) । मध्यस्यापि सङ्ग्रहायाऽऽद्यन्तयोर्ग्रहणम् । तथाच समग्रो मन्त्रभागः–

**य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
यस्य च्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥

यः प्राणतो निमिषतो महित्वैक इद् राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाऽऽहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥

आपो ह यद् बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् ।
**ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम** ॥ ७ ॥

## हिरण्यगर्भसूक्तमन्त्रार्थः

दशर्चं हिरण्यगर्भसूक्तमिदं प्रजापतिपुत्रस्य हिरण्यगर्भस्याऽऽर्षम् । त्रिष्टुप् छन्दः । हिरण्यगर्भः प्रजापति-र्देवता । वायुश्च । 'पवमानः प्रजापतिः' इति ह्युक्तम् । तथाचायं मन्त्रार्थः–

**यो वायुः** जीवानां **आत्मदा** ज्ञानद्वारा परमात्मदाता । **बलदा** अध्यात्मसाधने शक्तिप्रदः । बलदेवता हि सः । **विश्वे** जीवाः **यस्य** यदधीनाः । **यस्य प्रशिषं** शासनं **देवा** अपि रुद्राद्या **उपासते** अनुतिष्ठन्ति । अमृतं मुक्तिः यस्य छाया छायेव यदधीनम् । मृत्युः मरणं च यस्य छाया । अमृतं मरणाभावो जीवनम्, मरणं च श्वासप्रणेतुर्यस्य छायेवाधीने इति वा । क इति ब्रह्मा वायुश्च । करोति विश्वमिति कः । शतानन्दत्वाच्च कः । तस्मै कस्मै देवाय हविषा विधेम परिचरेम ॥

यो महित्वा महित्वना स्वमहिम्ना प्राणतः श्वसतश्चलनशीलस्य वा, निमिषतः चक्षुर्निमेषं कुर्वतः जगतः जीवजातस्य एक इत् राजा अधिपतिः बभूव भवति च भविष्यति च । अस्य द्विपदश्चतुष्पदः प्राणिजातस्य य ईष्टे तस्मै देवाय ॥

यस्येमे महित्वना हिमवदादयः पर्वताः स्थिराः सृष्टा बभूवुः । यस्य महित्वना रसया भूम्या नदीभिश्च वा सह समुद्रं सृष्टमाहुः । उपदिशन्तीति प्रदिशः इमा ब्रह्मजातयः यस्य वशे । तथा बाहू बाहुजाताः क्षत्रिया अपि यस्य वशे तस्मै देवाय ॥

येन द्यौरुग्रा असतामगम्या कृता । येन च पृथिवी दृढा कृता । येन स्वः स्तभितं स्तब्धमपतनशीलं कृतम् । येन च नाकः आदित्यः सत्यलोको वा दिवि द्योतते । यो निरालम्बे अन्तरिक्षे रजसो लोकान् विमानः निर्मितवान् । तस्मै देवाय ॥

तस्तभाने स्थिरतया स्थिते रेजमाने अतिशयेन द्योतमाने, क्रन्दसी रोदसी द्यावापृथिव्यौ देव्यौ, अवसा रक्षणेन निमित्तेन, जगद्रक्षार्थाम्, यं मनसा मनःपूर्वम्, सादरमित्येतत्, अभ्यैक्षेताम् भवदधीनाऽस्मदवस्थितिरिति अभिमानेन पश्यतः । यस्मिन् अधिष्ठाने स्थितः सूर्य उदितो विभाति तस्मै देवाय ॥

इदानीं विशिष्य मध्वावतारं स्तौति– **आपो ह** । बृहतीरापः आपान्तीति लोकपालनीः बृहत्यो देव्यः । वेदमातरः विश्वं पूर्णं विष्णुं आयन् व्याप्नुवन् तद्गुणपरतया । अग्निं प्राणं गर्भं अर्भकस्थानीयं दधानाः, ततश्च तं भूमौ जनयन्त्यः । तस्मिन् जाते तासां भगवद्गुणव्यापनं सुदृढमासीदिति यत् ततः **असुः** वायुरेव **देवानां एकः** प्रधानः **समवर्तत** । ततस्तस्मै **कस्मै देवाय हविषा विधेम** ॥

अत्र असुनामा वायुरेव प्रजापतिरुक्त इति स्फुटम् । अतः प्रकृतोपयोगितया आद्यन्तयोरेव ग्रहणम् ॥

नच बुद्धरूपे विप्रलम्भकत्वं विष्णोः शङ्क्यम् । तत्र श्रोतॄणामसुराणामयोग्यत्वादन्यथामतिर्ज्ज्ञाता, नान्यथावचननिमित्ता । इतरेषां रागादिमत्त्वादन्यथा मतिर्य्युक्ता । विष्णोस्तु तदभावश्रुतेर्न्न वक्तृदोषकृतो मोहः । स एव हि तानि सूत्राणि तत्वविषयाणि प्रशान्त-

## बुद्धस्याविप्रलम्भकत्वम्

नन्वाप्ततमो विष्णुरेव बुद्धरूपे विप्रलम्भको बभूव । का कथाऽऽप्ततरस्य वायोरिति शङ्कमानं प्रत्याह– **नच बुद्धरूप** इति । श्रोतुरन्यथाज्ञानं वक्तुर्वञ्चकत्वादपि भवति; श्रोतुर्बुद्धिदोषादपि । बुद्धशिष्याणामन्यथाज्ञानं तेषामासुरत्वादन्यथाग्रहणनिमित्तम्, न बुद्धस्यान्यथावचननिमित्तम् ॥

तथाहि वक्तुरन्यथावचनमज्ञानाद्वा स्यात् । श्रोतर्यपरागाद्वा स्यात् । न भगवतोऽज्ञानं सम्भवति । नापि रागद्वेषौ । 'न मे द्वेष्योऽस्ति न प्रियः' इति भगवद्वचनात् । श्रुतयश्चैनं निरनिष्टं निरवद्यमाहुः । 'सर्वं शून्यं सर्वं क्षणिकम्' इत्यादीनि तान्येव बुद्धवचनानि तत्वपरतया स्वयं बुद्ध एव देवेभ्यो व्याचख्यौ । यां प्रशान्तसंहितामाचक्षते । तस्मान्न बुद्धस्य विप्रलम्भकत्वम् । तस्माद् बौद्धानां बुद्धिमालिन्यादेवान्यथामतिर्जाता । तदेतन्न केवलमस्माभिरुच्यते । बौद्धा अप्याहुः– शिष्याणां मतिदौर्बल्यात् गुरूक्तस्य यथावद् ग्रहणासमर्थतया बुद्धसमयश्चतुर्धा भिन्नः– वैज्ञानिकः, सौत्रान्तिकः, वैभाषिकः, माध्यमिकश्चेतीति । तदुक्तमनुव्याख्याने–

'–एवं स्वयं विष्णुर्यद्यपीशो ह्यशेषवित् ।
'चकार सौगतमतं मोहायैव चकार यत् ॥

'असुराणामयोग्यानां वेदमार्गे प्रवर्तताम् ।
'अतोऽसुराधिकारत्वान्न ग्राह्यं तन्मतं क्वचित्' (अनु.४.२.३०–११) इति ॥

अयमर्थः– यद्यपि विष्णुरेव सौगतमतं चकार । करणमिह ज्ञानानुकूलो व्यापारः । कर्ता विष्णुर्यद्यप्यशेषवित् । न तेनाज्ञानमूलं विप्रलम्भकत्वं तस्य सम्भवति । यद्यपीशः असुराणामयोग्यानां मोहाजननस्य चेष्टे । अथापि असुराणामयोग्यानां मोहायैव चकार । तत् कुतः? असुराणां ज्ञानमार्गे योग्यताविरहात् । अथापि ज्ञानमार्गे प्रवृत्तत्वात् । तदपि परेषामनिष्टजननायेति परस्मैभाषयाऽऽह– प्रवर्ततामिति । तथाच तेषां मोहनं सतामिष्टजननाय तेषां स्वरूपस्थितये चेति नात्र किमपि

संहितायामञ्जसा देवेभ्यो व्याचख्यौ । न च पुराणादिष्वन्यथोक्तिः । यतः सूत्रकर्त्ता भगवान् व्यास एव पुराणादिकर्त्ताऽपि । न च तद्वाक्यं क्वचिदप्रमाणमाशङ्क्यम् । आप्तिसाम्यात् । 'सर्वत्र भगवत्प्रमाणाद् भगवद्वचनप्रामाण्यम्' इति मूलश्रुतिः ।

---

विप्रलम्भकत्वं नाम । यस्य यद् विहितं तस्य तत्करणं कथं विप्रलम्भः स्यात्? ज्ञानिनां ज्ञानदत्वमिवाज्ञानिनामज्ञानदत्वमपि हि भगवतोऽसाधारणो धर्मः । यतोऽसुराणां मोहायैव चकार, यतस्तदिच्छया मोहनमेव अपार्थमेव मतमङ्गीचक्रुः । अतस्तत् तेषां मतं विष्णुमतत्वेन न ग्राह्यमिति ॥

## व्यासस्याप्यविप्रलम्भकत्वम्

ननु मा भूद् बुद्धस्य विप्रलम्भकत्वम् । सूत्रकर्तुर्बादरायणस्य तु स्यादेव । स किल तामसानि पुराणानि प्रबबन्ध । तत्र चातथ्यानि वितथ्यानि बबन्धेति । एतदप्यसङ्गतमित्याह– **नच पुराणादिष्वन्यथोक्तिः** । अत्रापि पाठकस्य मतिदौर्बल्यमेवान्यथाज्ञानहेतुर्न ग्रन्थकर्तुर्बादरायणस्येति समं समाधानम् ॥

केचित् सूत्रभाष्यप्रणेतार आहुः– त्रिविधानि पुराणानि सात्विकानि राजसानि तामसानि चेति । तत्र यदा बादरायणस्य सत्वगुणोन्मेषः, तदा सात्विकानि पुराणानि रचयामास । यदा रजस उन्मेषस्तदा राजसानि, यदा तमस उन्मेषस्तदा तामसानि पुराणानीति । तदेतन्निराकरोति– **यतः सूत्रकर्ता भगवान् व्यास** इति । तामसानां पुराणानामप्रामाण्यं वदन् कथं स्वयं सूत्रभाष्यं प्रणिनाय? यतः सूत्रकर्ता व्यास एव हि पुराणादिकर्ताऽपि । यदि तत्प्रणीतं पुराणमंशतोऽप्रमाणं तत्सामान्यात् सूत्राणामपि प्रामाण्यनिर्णयो न स्यात् । ननु यदा तमस आवेशस्तदा रचितान्येव पुराणान्यप्रमाणानि । ब्रह्मसूत्राणि तु सत्वाविष्टः प्रणिनाय । कथमेतन्निश्चिकाय भवान्? तमसाऽऽविष्टत्वादेव भेदसूत्राणि प्रणिनायेति वदतः किमुत्तरम्? अपि च भगवान् व्यासस्तमसाऽऽविष्टो बभूवेत्यद्भुतं वचः । स्वयं तमसाऽऽविष्टस्यैवैतादृशानि व्याहरणानि भवेयुः । तस्मात् **तद्वाक्यं क्वचित्** तामसत्वेनाभिमतेषु पुराणेष्वपि **अप्रमाणमिति नाऽशङ्क्यम्** । आप्तोक्तत्वाद् ब्रह्मसूत्राणि प्रमाणानीति वदता **आप्तिसाम्यात्** पुराणान्यपि प्रमाणानीत्यनिच्छताऽपि वक्तव्यम् । अन्यथा अनाप्तिसाम्याद् ब्रह्मसूत्राण्यप्यप्रमाणानि स्युः ॥

अत्र श्रुतिसंवादमप्याह– **भगवत्प्रमाणात्** । भगवद्रूपात् प्रमाणात् । महान्तः प्रमाणमिति यथा । भगवत आप्ततमत्वादिति यावत् । भगवद्वचनानां **प्रामाण्यं** सुस्थिरमिति ॥

---

पूर्वपक्षसिद्धान्तविभागापरिज्ञानकृतश्च तत्र मोहः स्यात् । तच्च भाषारीतिविशेषाज्ञानाद् भवति । तथाच ब्राह्मे–

'भाषात्रयं न जानाति रीतीनां शतमेव च ।
'पुराणार्थं वदन् याति नरकं नात्र संशयः' इति ॥

---

तर्हि श्रोतुर्मोहमूलं विपरीतग्रहणमित्युक्तं भवति । मोहस्य मूलं च पुराणेष्वेव निहितमित्याह– **पूर्वपक्षसिद्धान्तविभागापरिज्ञानकृत** इति । सोऽपि कुतो न परिज्ञायते? **भाषारीतिविशेषाज्ञानात्** । का सा भाषा? का च रीतिः? या न ज्ञायेतेति शङ्कमानं पुराणवचनेनैव समाधत्ते– **तथाच ब्राह्म** इति ॥

समाधिभाषा दर्शनभाषा गुह्यभाषेति भाषात्रयम् । पूर्वपक्षसिद्धान्तयोरविभागेन कथनमित्याद्याः शतं रीतयः । शतमिति बहुत्ववचनः । भाषायां 'नूरारु' इति यथा । एवकारेण तासामियत्तापरिच्छेदं वारयति । नरकं यात्येव इत्युत्तरत्र चान्वेति । तदेव स्फुटमाह– **नात्र संशय** इति । अज्ञानविपरीतज्ञानाभ्यां पुराणानामन्यथार्थकथनाद् देवापचारात् निश्चितं तेषां नरके पतनमित्यर्थः । **नात्र संशय** इत्यस्य वचनस्यार्थवादत्वशङ्कां वारयति ।

अयमर्थः– यथा विद्यते तथा कथनं समाधिभाषा । यथा दृश्यते तथा कथनं दर्शनभाषा । परदर्शनानुवादश्च । निगूढार्थं वचनं गुह्यभाषा । **शतमेव च** इति चकारोऽनुक्तसमुच्चायकश्च । तेन सप्त शैलीभेदा अपि सङ्गृहीता भवन्ति–

'व्यत्यासः प्रातिलोम्यं च गोमूत्री प्रघसस्तथा ।
'उक्षणः सुधुरः साधु सप्त भेदाः प्रकीर्तिताः' इति ॥

एतेषां लक्षणं त्वस्मत्कृतायां महाभारततात्पर्यनिर्णयटीकायां द्रष्टव्यम् । **पुराणार्थमिति** वेदार्थस्योपलक्षणम् । तथा ह्युक्तं भगवत्पादेन–

'भाषात्रयं न जानाति रीतीनां शतमेव च ।
'व्यत्यासादीन् सप्त भेदान् वेदाद्यर्थं च यो वदेत् ।
'स याति नरकं घोरमन्यथाज्ञानसम्भवम्' इति ॥

**न पुराणानां स्वतोऽन्योन्यं वा विरोधः । शैवादिपुराणेषु दर्शनभाषाप्राचुर्य्याद् वेदाननुसारित्वमिव प्रतीयते । नतु तदस्ति । तत्रापि विष्णोः सर्वोत्तमत्वमेव सिद्धान्तसारः ।**

---

**वेदादीति वेदेनाऽदिमद् वेदानुकूलप्रतनग्रन्थजातमित्यर्थः । एवमत्रापि वेदवेदानुकूलान्यतरत्वे सति प्रतनग्रन्थत्वं पुराणशब्दार्थः ॥**

## भाषात्रयहृदयम्

इदमुक्तं भवति– वेदानां पुराणानां च समाधिभाषया विष्णुपारम्यमर्थः । तदुक्तं हरिवंशे–

'वेदे रामायणे चैव पुराणे भारते तथा ।
'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इति ॥

यत्र तद्विरुद्धं शिवपारम्यादिकं प्रतीयते सा दर्शनभाषा । शैवदर्शनादीन्येवमपि वदन्तीति परपक्षानुवादोऽयम्, न सिद्धान्तकथनम् । अथ तत्रापि गुह्यभाषया सतां विष्णुपारम्यमेव प्रतीयते । रुद्रादिपदानामपि विद्वद्रूढ्या 'रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः' इति विष्णावेव प्रसिद्धेः । 'रुद्रो बहुशिरा बभ्रुः', 'सर्वः शर्वः शिवः स्थाणुः' इति च सहस्रनामसु । तेनेतरदेवतास्तुतिवचनेष्वपि नारायणमन्तर्यामितया पश्यन्तः सन्तो मोदन्ते ॥

एवं स्थितेऽपि पुराणेषु वेदेषु चायं पूर्वपक्षोऽयं सिद्धान्त इति विभज्य नोच्यते । सर्वं सङ्कलय्याविभक्तमुच्यते । सेयं पुराणरीतिः । तदविदुषां मन्दानां विभ्रमो भवति । ते पूर्वपक्षमेव सिद्धान्तं मन्वानाः पापमेव सञ्चिन्वन्ति । यस्य यादृशी श्रद्धा स तमेवार्थं पुराणेषु पश्यति । तेन शिवादिभक्तानां तत्पारम्यवचनमेवेष्टं भवति । तेन ते पूर्वपक्षमेव सिद्धान्तं मन्यन्ते । मत्वा च्यवन्त इति । नायं पुराणदोषः । किन्तु श्रोतुः शिरस्यारूढः भगवान् भ्रम एव दोषभाग् भवति ॥

ननु सर्वमेतद् युक्तिविरुद्धम् । तथाहि– पुराणानि न प्रमाणानि व्याहतभाषित्वात् । व्याहतिश्च द्विविधा भवति । क्वचिदेकस्मिन्नेव पुराणे पूर्वोत्तरविरोधः । क्वचित्पुराणान्तरेण विरोध इति । एतां युक्तिं निराकरोति– **न पुराणानां स्वतोऽन्योन्यं वा विरोध** इति । पुराणवचनानि मन्दानामापाततो विरुद्धानीव प्रतीयन्ते । भाषाविशेषं रीतिविशेषं च विज्ञाय समन्वयने समीचीनोऽविरुद्धोऽर्थः प्रतीयते । तस्मान्नायं विरोधः, किन्तु विरोधाभासः । तेन हेत्वाभासदोषदुष्टं परानुमानमित्याह– **शैवादिपुराणेष्विति** । एतज्ज्ञापनार्थमेव शैवत्वेन प्रसिद्धं स्कान्दमेवाऽदित उदाजहार भगवत्पादो भाष्ये–

'गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
'सङ्कीर्ण्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ॥

---

तत्रतत्र तदुक्तेः । पूर्वपक्षाधिक्यं दुर्ज्जनमोहनार्त्थमिति दर्शनरहस्यम् । तस्मादयमाचार्य्य आप्ततम इति सिद्धम् । यदुक्तयः क्वापि नान्यथा दृश्यन्ते तत्राऽप्तिं शङ्कमानाः कुत्र निश्चिन्वीरन्निति ॥ ✻ ॥

---

**तच्चोक्तं स्कान्द** इति । शैवत्वेनाभिमते च **स्कान्दे तदुक्तमित्यर्थः** । एतेनैतदुक्तं भवति– न पुराणानां स्वतस्तामसत्वं राजसत्वं वा । तामसानां तामसार्थप्रतीतिहेतुत्वं तामसत्वम् । राजसानां राजसार्थप्रतीतिहेतुत्वमेव च राजसत्वम् । सात्विकानां तु सर्वाण्यपि पुराणानि सात्विकमेवार्थमवगमयन्तीति मूलतः सर्वाण्यपि पुराणानि सात्विकान्येव ॥

ननु किमर्थं पुराणेषु क्वचित् पूर्वपक्षाधिक्यम्, येन तामसानामपार्थप्रतीतिप्रसङ्गः समजनीत्यतो रहस्यमाह– **पूर्वपक्षाधिक्यं दुर्जनमोहनार्थमिति** । ननु तर्ह्यागतं विप्रलम्भकत्वं भगवतः । मोहकत्वमेव हि विप्रलम्भकत्वं नामेति । मैवम् । न मोहकत्वमात्रं विप्रलम्भकत्वम् । किन्तु सज्जनमोहकत्वमिति दर्शनरहस्यम् । योयो यदर्हति तस्य ततः प्रच्यावनं हि वञ्चनम् । स एव च विप्रलम्भः । यो यदर्हति तस्य तल्लम्भनार्थं हि दुर्जनमोहनम् । स तु गुण एव न दोषः । बुद्धोऽप्येतच्चकार । दुर्जनमोहनो हि बुद्धावतारः । न तेनाऽप्तताभङ्गः । स्वयं रागद्वेषविधुरतया यस्य यद् योग्यं तस्य तद्ददाविति कोऽत्र दोषः? माताऽऽमयाविने पुत्राय तिक्तं कषायं ददात्यनामयस्य मधुरं रसालरसमिति किमनाप्ता भवति सा?

एवं प्रसङ्गप्राप्तं सर्वं विस्तरतो विमृश्यान्ते मूलप्रमेयमुपसंहरति– **तस्मादयमाचार्य आप्ततम इति सिद्धम्** । स्वानुभवेन च नः प्रत्याययति– **यदुक्तयः क्वापि नान्यथा दृश्यन्त** इति ॥

## स्कान्दवचनार्थः

अथ स्कान्दवचनार्थः । नीरस्यायनाज्जलधेरिव नारस्यायनात् ज्ञानजलधेः **नारायणाद् विनिष्पन्नम्**, प्रथमं विशिष्टयोर्ब्रह्मवाय्वोर्निष्पन्नं स्थितम्, ब्रह्मवायुभ्यां देवेषु प्रततम्, देवेभ्य ऋषिषु मनुष्येषु च यथावत् स्थितम् । **किञ्चित्** पादांशेन **त्रेतायाम्** । **द्वापरे** द्वापरान्ते । यद्यपि द्वापरे द्वयोरंशयोरन्यथाभावो युक्तः । अथापि **गौतमस्य ऋषेः शापादखिलमन्यथा जातम्** । सोऽयं व्यासावतारस्य बीजावाप इति

**गौतमस्य हि वदान्यस्यान्नवन्तमाश्रमं द्वादशवार्षिक्यामनावृष्टावृषयोऽध्यूषुः। तत्राहरहस्तेन समीहितहव्यकव्याभ्यवहार्य्यातिसर्ज्जनेन सुकृतसमाधिस्वाध्यायप्रवचनाः समवर्त्तन्त। ततः सत्यां वृष्टौ प्रतिभयविपद्विमुक्ताः प्रतिष्ठासवस्तु महामुनिमनुज्ञापयाञ्चक्रुः। तेन विनिवारिताः सुहृत्तमं तममी स्नेहभङ्गभयान्नात्यवर्त्तन्त। तस्मिन् काले पतिशिरसः सपत्नीं निष्कासयन्त्या पार्वत्या प्रेषितो विनायको ब्रह्मचारिवेषप्रच्छन्नस्तानृषीनुपससार– भगवन्तः, किमत्रभवतां तपोधनानां तपःक्षयकरेणातिचिरमेकपरान्नाशनेन। स्वंस्वमाश्रमं व्रजत। तत्र चोपायमाकर्ण्णयत। तपोबलान्मायामयीं माहेयीं निर्म्मिमीध्वम्। तां तु गौतमः स्वकीयया तपःशक्त्याऽनुसवनं वर्षुकीकृतबलाहकावलीविगलितसलिलसंवर्द्धितसस्यग्रासिनीमपक्रामयितुं**

---

शापोऽपि महान् वरो बभूव। तमेतं विशेषं द्योतयितुमेव ऋषेरिति विश्लिष्य प्रयोगः। 'न ऋते त्वत् क्रियते' इतिवत्। यथा वा 'देवाश्च ऋषयस्तथा' (म.भा.ता.नि.१०-८२)। 'ऋत्यकः' (अ.सू.६-१-१२८) इति हि पाणिनिः। कीदृशोऽयमृषेः शापः? आह पण्डिताचार्यः– **गौतमस्य हीति**। ऋषेस्तपोमहिम्नाऽनावृष्टिरहिततया **अन्नवन्तम्**। गौतमस्य वदान्यतया **ऋषयस्त**दाश्रम ऊषुः। **'अध्यूषुः'** इत्यधियोगात् **'आश्रमम्'** इति द्वितीया। समीहितस्य अपेक्षितस्य देवानां हव्यस्य, पितॄणां कव्यस्य, आश्रमवासिनामभ्यवहार्यस्याऽहारस्य च **अतिसर्जनेन** वितरणेन। सुष्ठु आचरितानि समाधिस्वाध्यायप्रवचनानि यैस्ते। समाधिरान्तरं तपः। स्वाध्यायप्रवचने बाह्यं तपः। **समवर्तन्त** सुखेनावर्तन्त। **प्रतिष्ठासवस्तु**। चिरपरान्नभोजनेन किञ्चिल्लुप्तपुण्या इति तुनाऽऽह। अत एव मुनिद्रोहे तेषां मतिर्जाता। **अनुज्ञापयाञ्चक्रुः** गमनार्थमनुज्ञामभ्यर्थयाञ्चक्रुः। **सपत्नीं** गङ्गां **निष्कासयन्त्या,** तद्व्याजेन व्यासावतारस्य पीठिकां रचयन्त्या। तदेव च मुख्यं कारणम्। सपत्नीनिष्कासनं तु व्याजमात्रम्। लोकमोहनी लीलेयम्। न तत्र तात्पर्यम्। अतस्तस्याः सर्वात्मना निष्कासनं नाऽसीदेव। वक्ष्यति हि– 'मन्दाकिनीमंशेन समानीय' इति। लुप्तपुण्यान् तानृषीन् वञ्चयितुमिव **उपससार**। उपसृत्योवाच च– **भगवन्त** इति। **एकपरान्नाशनेन** केवलपरान्नाशनेन। एकत्र परान्नस्याशनेन वा। **माहेयीं** गाम्। अवशिष्टेन तपोबलेन **निर्मिमीध्वम्**। तेन पुनः क्षीणतपसो गलितपुण्याः शापभाजनानि बभूवुः। अन्यत्रावर्षुका अपि **स्वकीयया तपःशक्त्या अनुसवनं** त्रिकालं स्वाश्रमे वर्षुका वर्षणशीलाः सम्पद्यमानाः कृता वर्षुकीकृताः। तादृशानां बलाहकानां मेघानामावल्या गलितेन

प्रयतिष्यते । सा ततः सहसा निपतिष्यति । तदा ब्राह्मणास्तं विब्रूत– 'यावदिमामशेषमातरं सौरभेयीं नोत्थापयिष्यति, तावन्न भवान् भोज्यान्नः । अतो हरशिरसः सुरसरितमवतार्य्य तद्वारिणाऽऽसिच्य तामुज्जीवयतु भवान्', इत्येवमनुतापिनं तमभिलप्यापसरत– इत्युक्त्वा स व्रती स्वाश्रमं जगाम । ते चामुना सुनिपुणेन प्रणिगदितं प्रयाणोपायमुपश्रुत्यान्वतिष्ठन् । तेनैव च प्रातिष्ठन्त । ततस्तावदसौ मुनिवृषभश्चिरकालचीर्णया तपस्यया परितोषितात् पशुपतेर्म्मौलिमणिमालायितां मन्दाकिनीमंशेन समानीय तद्वारिणा सुरभिमभिषिषेच । ततश्च सोत्तस्थौ । तद् गोतमेन गोदत्तं वारि गोदावरीति जगति प्रसिद्धिं लेभे । अथ तस्य चिन्ता समजनिष्ट– 'किमिह किल कारणं, यदनया भद्रया केवलान्मे कमण्डलूदकबिन्दुसंस्पर्शादपाति, सहसा चामोहि, अथ च गिरिशोत्तमाङ्गगतसुरतरङ्गिणीतनुतरङ्गसङ्गमादेव चोदबोधि, झटिति चोदस्थायि, आश्चर्य्यमेतत्' इति । स विगताधिः समाधिं समाधत्त । प्रतिबुबोध चैतद् वृत्तं विबुधवरयोरम्बिकाहेरम्बयोर्वृथा विचेष्टितेन । विचुक्रोध च तेभ्यः– 'अहो, अस्मत्तपोबलादतिमहतीं विपदमतितीर्ण्णानामन्नपानादिभोगमत्तानां मुनीनां दुश्चिकित्सितमेतत् । अस्तु नाम । तेषां धर्म्ममूढानामस्मन्निमित्तादवाप्तं ज्ञानं विनश्यतु' इति गौतमशापः ॥

---

वृष्टेन सलिलेन संवर्धितानां सस्यानां **ग्रासिनीं** गाम् । **ततः सा निपतिष्यति** । यथा निपतिष्यति तथाऽस्माभिर्देवैर्व्यवस्था क्रियते । **तदा** तं गौतमं **विनिन्द्य ब्रूत** । **अशेषमातरम्** । 'गावो विश्वस्य मातरः' इति हि श्रुतिः । अनुतापिनं **पश्चात्तापवन्तम्** । **व्रती** ब्रह्मचारिवेषः विनायकः । **स्वाश्रमं** हिमवन्तम् । ऋषीणां बुद्धिभ्रमणजनने **सुनिपुणेन** । **उपश्रुत्य** सगौरवं श्रुत्वा । **पशुपतेरिति** पञ्चम्यन्तं पूर्वान्वयि । षष्ठ्यन्तमुत्तरान्वयि । गोदवारि **गोदावरी** बभूव । भद्र इति वृषभ उच्यते । भद्रस्य स्त्री भद्रा सुरभिः । भद्रा मङ्गल्या च । **विगताधिः** मानसीं चिन्तां दूरीकृत्य **समाधिं समाधत्त** ध्यानपरो बभूव । **अम्बिकाहेरम्बयोः** वृथा परिहासमात्रेण **विचेष्टितेन** एतद् वृत्तं निर्वृत्तमिति च **प्रतिबुबोध** । बुध्वा च **तेभ्यः** ब्राह्मणेभ्यः **विचुक्रोध** विशिष्य विधिचिकीर्षितं जानन् चुक्रोध । क्रुद्धश्च तान् शशाप– **अहो** इति । लोकदृष्ट्या वृथाऽपि न वृथा । व्यासावतारस्य हीयं भूमिका । अत एव न ताभ्यां चुक्रोध देवगुह्यं जानन् ॥

‘शरण्यं शरणं जग्मुर्न्नारायणमनामयम् ।
‘तैर्विज्ञापितकार्य्यस्तु भगवान् पुरुषोत्तमः ॥

‘अवतीर्ण्णो महायोगी सत्यवत्यां पराशरात् ।
‘उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥

---

**ज्ञाने त्वज्ञानतां गते** अज्ञानप्रतीतिगोचरतां गते । **महायोगी** महाशक्तिः ॥

---

**ज्ञाने तु** यथार्थज्ञान एव अयथार्थज्ञानमिति **प्रतीतिगोचरतां गते** । सतामृष्यादीनां मनुष्यान्तानामिमामवस्थां दृष्ट्वा कृपाविष्टाः, तत्परिहारोपायमविज्ञाय **सङ्कीर्णबुद्धयः** विक्षिप्तमतयः, रजस्तमोभ्यामाक्रान्ततया किञ्चिदाकुलितमतयश्च देवा ब्रह्मरुद्रौ पुरस्कृत्य **नारायणं शरणं जग्मुः** । शरण्यो यः शरणमागतान् पातुं प्रभवति । आमयोऽज्ञानम् । दोषसामान्यं वा । **अनामयम्** अज्ञानदुःखादिदोषलेशरहितम् । तेन सर्वगुणपूर्णत्वमाह । विशिष्य च सर्वज्ञत्वम् । अत एव हि **शरणं जग्मुः** ॥

**तैर्विज्ञापितकार्यस्तु** । तेषां प्रार्थनया सन्तुष्ट इति तुनाऽऽह । विज्ञापनं व्याजमात्रम् । तत ऋतेऽपि स्वयं सर्वं जानन् स्वेच्छयाऽवततारेति च । क्षराक्षर**पुरुषोत्तमः** । तेन सर्वोत्तमत्वमाह । **महायोगी**ति सर्वसमर्थत्वमाह । युज्यतेऽनेन समर्थ इति योगः शक्तिः । तेन महायोगीति महाशक्तिरुच्यते । सर्वसमर्थ इत्येतत् । स्वयं **भगवान्** गुणपूर्णो नारायणः । ‘ब्रह्मेति परमात्मेति भगवानिति शब्द्यते’ इति हि भागवते । पराशरं निमित्तीकृत्य सत्यवत्यामवतीर्णः, नतूत्पन्नः । ऊर्ध्वलोकादंशतोऽवतीर्य भूमौ प्रादुर्भावोऽवतारः । पूर्वं नारायणो भगवानुक्तः– **भगवान् पुरुषोत्तम** इति । तदेव विशेषणं व्यासस्याऽप्याह– **भगवान् वेदानुज्जहारे**ति । तेन व्यासस्य साक्षान्नारायणत्वमाह । तदेव स्फुटमाह– **हरिः स्वयम्** । योऽयं वेदवेद्यो ‘हरिः ओम्’ इति वेदादौ गीयते स एव **हरिः स्वयं वेदानुज्जहारे**ति । हरत्यज्ञानमिति हरिर्व्यासः । अपिच पूर्वद्वापरेषु चान्यैर्मुनिभिर्वेदान् विभाजयामास । विभाजयिष्यति च द्रौणिव्यासादिभिरुत्तरत्र । अस्मिन् द्वापरे पुनः **स्वयं हरि**रेव व्यासो भूत्वा **वेदानुज्जहारे**ति । उत्कर्षप्रापणमुद्धारः । मन्दानामप्युपकाराय विभज्य प्रसारणमित्येतत् । तमेव विभागप्रकारमाह–

'चतुर्द्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः ।
'शतधा चैकधा चैव तथैव च सहस्रधा ॥

'कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
'चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥

'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।
'अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

---

**'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।**
**'अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' ॥**

---

तान् पूर्वं विभक्तानपि विस्मृतान् प्रथमं **चतुर्धा व्यभजत्** । **पुनश्च व्यभजत्** शिष्याणां द्वारा । ऋग्वेदं **चतुर्विंशतिधा**, यजुर्वेदं **शतधा चैकधा च**; एकोत्तरशतधेत्यर्थः । चैवेति समुदिते समुच्चयार्थे इत्युक्तम् । षडशीतिः कृष्णयजुःशाखाः । ता एव वैशम्पायनद्वारा व्यासो व्यभजत् । अन्याः षोडश शाखाः सूर्येणाधिगतशुक्लयजुर्वेदो याज्ञवल्क्यः कण्वमध्यन्दिनादिभिः स्वशिष्यैर्विभाजयामासेति शङ्का-निरासार्थश्चायमेवकारः । शतधा चैकधा चायं व्यास एव व्यभजदिति । व्यास एव हि सूर्यगतो याज्ञवल्क्याय वाजसनेयापरनामकं शुक्लयजुर्वेदं ददौ । अत एव हि 'हरिः सूर्यस्थितः स्वयम्' इत्याह । हरिरिति हि सूर्यनामापि । यथा याज्ञवल्क्यादिभिः प्रवृत्ता अपि शाखा अन्ततो व्यास एव व्यभजत् **तथैव** तद्वदेव सामवेदं च स एव **सहस्रधा व्यभजत्** । **कृष्ण** इति तस्यावतारनामाऽह । यो वासुदेवः कृष्णः स एव द्वैपायनः कृष्ण इति च । कृष्ण एव च सुमन्तुद्वाराऽथर्ववेदं **द्वादशधा च** व्यभजत् । **अञ्जसा** मुख्यतः ॥

## सूत्रलक्षणविमर्शः

सामान्यतः सर्वसूत्राणां विशेषतो ब्रह्मसूत्राणां विशिष्टं षण्मुखं स्वरूपमाह–

**अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।**
**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः'** इति ॥

यावद्भिरक्षरैर्विना विवक्षितार्थासिद्धिस्तावन्मात्राक्षरम् **'अल्पाक्षरम्'** । तद्वचनं भाष्यव्यावृत्त्यर्थम् । विशेषणान्तराणां भाष्येऽप्यनुवर्त्तनीयत्वात् । **'असन्दिग्धं'** निर्ण्णीतार्थम् । निर्ण्णयहेतुरहितवाक्याद् व्यावृत्त्यर्थम् । **'सारवत्'** उत्तमार्थम् । कुशलपुरुषोक्तलोकवार्त्तादिव्यावृत्त्यर्थम् । **'विश्वतोमुखम्'** एकप्रयोजनं प्रत्यपेक्षितार्थस्य कृत्स्नस्य प्रतिपादकम् । एतदनुक्तौ भगवन्नाममन्त्रादेः सूत्रत्वं स्यात् । अर्थविवक्षयाऽल्पाक्षरत्वेऽपि वृथास्तोभपदं वा पादपूरणार्थं वा मा भूदिति **'अस्तोभम्'** । अपशब्दार्थदोषव्यावृत्त्यर्थम् **'अनवद्यम्'** इति ॥ ❋ ॥

---

तानि विशेषणानि विवृणोति– **यावद्भिरक्षरैर्विनेत्यादिना** । **तावन्मात्राक्षरमिति** । तावतोऽर्थस्य प्रतिपादनाय ततोऽधिकस्य न्यूनस्य वाऽक्षरस्यानुपादानमित्यर्थः । नन्वव्याप्तमेतद् ब्रह्मसूत्रेषु । 'खं तल्लिङ्गात्' इत्येतावतैव विवक्षितार्थपूर्तौ 'आकाशस्तल्लिङ्गात्' इत्याह । तेन गतमल्पाक्षरत्वम् । न गतम् । 'आकाश इति होवाच' इत्याकाशशब्दसमन्वयाय हि तत् सूत्रं प्रवृत्तम् । न खशब्दसमन्वयाय । **भाष्यव्यावृत्त्यर्थमिति** । तत्र ह्यनल्पान्यक्षराणि भवन्ति स्वपदवर्णनपराणि । ननु तर्हि सङ्ग्रहभाष्येऽतिव्याप्तम् । सूत्रेभ्योऽपि ह्यल्पान्यक्षराणि तत्र भवन्ति । तथाहि– 'जन्माद्यस्य यतः' इति षडक्षरं सूत्रम् । 'सर्वकर्ता' इति चतुरक्षरं सङ्ग्रहभाष्यम् । 'तत्तु समन्वयात्' इति षडक्षरं सूत्रम् । 'समन्वयात्' इति चतुरक्षरं सङ्ग्रहभाष्यम् । 'ईक्षतेर्नाशब्दम्' इति षडक्षरं सूत्रम् । 'ईक्षतेश्च' इति चतुरक्षरं सङ्ग्रहभाष्यम् । 'आनन्दमयोऽभ्यासात्' इति सप्ताक्षरं सूत्रम् । 'पूर्णानन्दः' इति चतुरक्षरं सङ्ग्रहभाष्यम् । 'अन्तस्तद्धर्मोपदेशात्' इत्यष्टाक्षरं सूत्रम् । 'अन्तरः' इति त्र्यक्षरं सङ्ग्रहभाष्यम् । 'आकाशस्तल्लिङ्गात्' इति षडक्षरं सूत्रम् । 'खवत्' इति द्व्यक्षरं सङ्ग्रहभाष्यम् । एवमुत्तरत्रापीति । नैतद् युक्तम् । सूत्राक्षरसापेक्षा हि सङ्ग्रहभाष्यस्यार्थपूर्तिः । तस्मात् सङ्ग्रहभाष्ये न्यूनाक्षरत्वं न दोषः । ततो नातिव्याप्तिः । अधिकस्य न्यूनस्य चाक्षरस्यानुपादानमल्पाक्षरत्वं हि विवक्षितम् । शब्ददोषैरर्थदोषैश्च रहितमनवद्यमित्याह– **अपशब्देति** । तदिदं गुणदोषाणां कथनेन सूत्रपरिचायकं स्वरूपकथनम् । यथा कश्चन सज्जनं परिचाययन्तो वदन्ति– साधुरयं वदान्यः परोपकारी यष्टा पण्डितः कृती च जितकामादिश्चेति । नैकमप्यसाधारणं लक्षणम् । अथापि संहतानि साधोः स्वभावं स्फुटं परिचाययन्ति ।

'निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
'यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ॥

'सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।
'इति वेदविदः प्राहुः शब्दतत्वार्थवेदिनः ॥

'सूत्रेषु येषु सर्वेऽपि निर्ण्णयाः समुदीरिताः ।
'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्ण्णयः ॥

---

एवमत्रापि । नैकमप्यसाधारणं सूत्रलक्षणम् । अथापि संहतानि सूत्रस्वरूपं स्फुटं परिचाययन्ति । अथापि यदि लक्षणे भरः तदा 'अल्पाक्षरं विश्वतोमुखं सूत्रम्' इति पर्याप्तमित्याचक्षते । अथापि समग्रं पद्यमेव समग्रं सूत्रस्वरूपं मनस्यारोहयतीति तु न तिरोहितम् । **सूत्रविदः** सूत्रलक्षणविदः । एतत् सर्वं ब्रह्मसूत्रेषु पूर्णतया दृश्यते । अतस्तेषां मुख्यसूत्रत्वमित्युक्तं भवति ॥

न केवलं भगवता व्यासेन कृतत्वात्, **अतोऽपि** उक्तानां विशेषणानां षण्णामपि सामस्त्येन ब्रह्मसूत्रे दर्शनादपि, **ब्रह्मसूत्रस्य च** ब्रह्मसूत्रस्यैव मुख्यसूत्रत्वम्, मुख्यत्वादेव **निर्विशेषितसूत्रत्वं** चेति । **एकस्य कृष्णस्य** केवलं कृष्णद्वैपायनस्य । **एकस्य** वेदविभाजकेषु मुख्यस्येति । **अन्ये** द्रौणिव्यासादयः विशेषणबलादेव व्यासपदवाच्याः । यथा द्रौणिव्यास इत्यादि । एवम**पराणि** सर्वाण्यपि सूत्राणि **सविशेषणसूत्राणि** पाणिनिसूत्राणि जैमिनिसूत्राणीत्यादि । अन्यत्रापि– यत्र क्वचित् तदुक्तं भाष्य इत्याचक्षते, तदुक्तं ब्रह्मसूत्रभाष्य इत्येवाऽचक्षते । इतरत्र तु तदुक्तमृग्भाष्ये, तदुक्तमुपनिषद्भाष्य इत्येवाचक्षते । **निर्विशेषेण** विशेषणरहितेन केवलेन पदेन **शब्दो** व्यवहारो भवति । **अन्येषां विशेषतः** विशेषमपेक्ष्यैव व्यवहारो भवति ॥

वेदविद एव सामस्त्येन शब्दतत्वं तदर्थविशेषं च वेदयन्ति । न केवलं वैयाकरणा इति सूचयन् **'वेदविदः'** इत्याह । अथवा **वेदविदः** वेदेष्वपि तादृशं व्यवहारमिच्छन्ति । यथा आत्मेति परमात्मैवोच्यते मुख्यतः । ब्रह्मेति परम्ब्रह्मैव । एवं **शब्दतत्वार्थवेदिनो** लौकिका अपि तथैव व्यवहरन्तीत्यर्थः ॥

'एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ।
'ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
'ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः' इत्यादि ॥ ✻ ॥

**ओ३म् ॥ अथातो ब्रह्मजिज्ञासा ॥ १.१.१. ॥**

---

ब्रह्मसूत्रस्य मुख्यसूत्रत्वे निमित्तान्तरं चाऽऽह– **सूत्रेषु येष्विति** । **सर्वशास्त्रनिर्णयाः समुदीरिताः** । **शब्दजातस्य सर्वस्य** भगवत्परत्वे **यत्प्रमाणश्च निर्णयः** । **महायशाः** । 'तस्य नाम महद् यशः' इति श्रुतिः । यमिति ज्ञानम् । शमित्यानन्दः । तेन महायशाः ज्ञानानन्दपूर्णः । यश इति कीर्तिः । सर्वैर्वर्ण्यत्वम्, सर्ववेदप्रतिपाद्यत्वं च । तच्च महद् यस्येति महायशाः । भारतप्रणयनं वेदोद्धारश्च महद् यशो व्यासावतारे । **ब्रह्मरुद्रादिदेवेषु** । तथाहि निर्णये–

'सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार ।
'तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात्' (१०.५८) इति ॥

पितॄणां पक्षः कक्ष्या एकान्नविंशी । सैव कक्ष्या येषां ते पितृपक्षिणः ऋषयः । पितृषु पितृपक्षिषु च । पक्षिणो जरितार्यादयोऽपि बादरायणाज्ज्ञानमापुरिति च वदन्ति । **संस्थाप्य** असन्दिग्धमधिकं प्रकाश्य, क्वचित् सन्देहं निवार्य, क्वचिद् ज्ञानं वर्धयित्वा, विस्मृतं स्मारयित्वा, अज्ञातं ज्ञापयित्वा । एवं गौतमादिषु स्थित्वा ज्ञानं विलाप्य पुनर्व्यासरूपेण ज्ञानं संस्थाप्य **भगवान्** नारायणः **क्रीडते** । परमाणां ब्रह्मरुद्रादीनामपीश्वरो हि सः । सर्वलोकपः रमेश्वरो हि सः । 'अपरमेश्वरः' इति च प्रतृण्णम् । अकारवाच्यं परं ब्रह्मैव परमं येषां तेषां भगवद्भक्तानामीश्वरो हि सः । तेन समाधिभाषया पुराणानि चकार । अपगतरमणानां तामसानां दण्डने च स एव हीश्वर इति । तेन दर्शनभाषया गुह्यभाषया च तथ्यमाह ॥

✻ ✻ ✻

अथशब्दो मङ्गलार्थोऽधिकारानन्तर्य्यार्थश्च । अतःशब्दो हेत्वर्थः ॥
उक्तं च गारुडे–

'अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
'प्रारभन्ते नियत्यैव तत् किमत्र नियामकम् ॥

'कश्चार्थस्तु तयोर्विद्वन् कथमुत्तमता तयोः ।
'एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्वतः ।
'एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ॥

---

**॥ ॐ अथातो ब्रह्मजिज्ञासा ॥ अथशब्दः** श्रवणकीर्त्तनाभ्यां मङ्गलफलः । विष्णोः परममङ्गलस्य वाचकत्वेनातिप्रियत्वात् । **अतश्शब्दो हेत्वर्थः** । सर्वस्य हि, 'दुःखं मा

---

**॥ ॐ अथातो ब्रह्मजिज्ञासा ॥** मङ्गलमर्थः फलमस्येति **मङ्गलार्थः** । मङ्गलानां च मङ्गलं विष्णुरर्थोऽभिधेयोऽस्येति च **मङ्गलार्थः** । मङ्गलाचरणार्थ इत्येतत् । **अतःशब्दः** इष्टानिष्टप्राप्तिपरिहारहेतुत्वादिति **हेत्वर्थः** । अकारवाच्यस्य परस्य ब्रह्मणो विष्णोः प्रसादात् इति च **हेत्वर्थः** । यदस्माभिरुक्तं तद् **गारुडे चोक्तम्** ॥

## गारुडवचनार्थः

**सूत्राणि निखिलान्यपि** प्राचीनानि वेदमूलानि । **प्रारभन्ते** परावरज्ञा ऋषयः । **तत्** तेषां सूत्राणाम्, **अत्र** अथातःशब्दपूर्वकत्वे **किं नियामकं** कारणम् । **तत्** शास्त्रप्रसिद्धं **नियामकमिति** वा । **तयोरर्थस्तु** अर्थविशेषः **कः** । प्रयोजनविशेषोऽभिधेयविशेषश्च । **तयोरुत्तमता च कथं** केन प्रकारेण । **यथा** येन कथनेन **तत्वतः** तत्वं **यथा** यथावत् **ज्ञास्यामि** । **तत्वतः** आञ्जस्येनेति वा । स्वयं जानताऽपि लोकशिक्षार्थं विशेषज्ञानार्थं च **नारदेन एवमुक्तः** पृष्टः । **सत्तमः** ज्ञानितमः, सात्विकतमः, पूज्यतमश्च । **प्रोवाच** पुत्र इति विष्णुभक्त इति प्रीत्योवाच । वक्तृश्रोत्रानुकूल्यप्रदर्शनार्थमियं पीठिका ॥

अथशब्दः केवलमानन्तर्यवचनः । तच्च किञ्चित् पूर्वतनमपेक्षते । विषयः प्रयोजनमधिकारी ग्रन्थारम्भे बुद्धिस्थाः । तत्र न तावद् विषयानन्तर्यमथशब्दार्थः । विषयस्याद्याप्यनारम्भात् । नापि पूर्वोक्तात्

'आनन्तर्य्येऽधिकारस्य मङ्गलार्थे तथैव च ।
'अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ॥

'परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ।
'स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः ॥

'सिसृक्षोः परमाद् विष्णोः प्रथमं द्वौ विनिस्सृतौ ।
'ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात् ।
'तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ॥

---

भूत् सुखमेव मे स्यादि'ति निश्शेषदुःखनिवृत्तिः परमसुखावाप्तिश्चेच्छाविषयत्वेन सदा हृदि कृताऽत इत्युच्यते ॥

---

प्रमेयात् । अत्रैव ग्रन्थारम्भान्न किमपि पूर्वोक्तम् । नापि प्रयोजनानन्तर्यम् । तस्य ग्रन्थाध्ययनानन्तरभावित्वात् । अधिकारस्तु ग्रन्थाध्ययनार्थं पूर्वमपेक्षितः । तस्मादधिकारसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति **अधिकारस्याऽनन्तर्ये**ऽर्थे ग्रन्थारम्भे **अथशब्दः** प्रयुज्यत इति **समुदीरितः** सङ्ख्यावद्भिरुदीरितः । मा कश्चिदनधिकारी ग्रन्थमधीत्यापचारीदिति । यथाऽनन्तर्यार्थे **तथैव मङ्गलार्थे** मङ्गलाचरणार्थं **च अथशब्दः** प्रयुज्यते । वीणावेणुध्वनिवत् अथशब्दस्य श्रवणत एव माङ्गलिकत्वात् । परममङ्गलस्य विष्णोर्वाचकत्वाच्च । अवशिष्टं प्रयोजनम**तःशब्दो** वक्ति– अतः सप्रयोजनत्वादिति । एवमर्थाल्लब्धमर्थमुक्त्वा सम्प्रति शब्दतो लब्धमाह– **परस्य ब्रह्मणः** । 'अः इति ब्रह्म' इति श्रुतेः, **अतः परस्य ब्रह्मणो विष्णोः प्रसादादिति** चार्थो **भवेत्** । वाशब्दोऽर्थान्तरद्योतकः । न विकल्पार्थः । किन्तु समुच्चयार्थः । **समुदाहृतः** सतां सम्मतेषु शास्त्रेषु निरूपितः । स्वयं भगवता च । तथाहि– 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इति भगवद्गीतासु । तस्य सर्वमनोवृत्तिप्रेरकत्वाद्दते तत्प्रसादान्मनसि शास्त्रग्रहणशक्तिरेव नोदयेतेति ॥

अथ कथमुत्तमता तयोरिति द्वितीयप्रश्नस्योत्तरमाह– **सिसृक्षोरिति** । नामात्मकप्रपञ्चं स्रष्टुमिच्छोः । ब्रह्मणोऽपि **परमात्** । एतेन 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ

'अकारः सर्ववागात्मा परब्रह्माभिधायकः ।
'तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ।
'अतश्च पूर्वमुच्चार्य्याः सर्व एते सतां मताः ॥

'अथातश्शब्दयोरेवं वीर्य्यमाज्ञाय तत्वतः ।
'सूत्रेषु तु महाप्राज्ञास्तावेवाऽदौ प्रयुञ्जते' इति ॥

---

यस्माद् ब्रह्मजिज्ञासां विना ते न सिद्ध्यतः, तया सिद्ध्यतश्च, अतः सा कर्त्तव्या । 'व्याख्यानत्वात् सर्ववाचां सर्ववागात्मता भवेत्' इति सामसंहितायाम् । **तथौ प्राणात्मकौ प्रोक्तौ** प्राणं प्रणेतारं विष्णुं वाचकत्वेनाऽप्तौ ।

---

तस्मान्माङ्गलिकावुभौ' इति प्रमाणवचनमपि विवृतार्थम्– ब्रह्मणः परब्रह्मण इति । **क्रमात् प्राथमिकौ** । ओङ्कारः प्रथमोऽथशब्दो द्वितीय इत्यर्थः । यतः ओमथौ विनिःसृतौ तस्य विष्णोः, तत्प्रसादस्येति यावत्, **हेतुत्वं वदन्** । सः सर्वमनोवृत्तिप्रेरकः हेतुर्यस्या जिज्ञासायाः सा तद्धेतुः । तस्या भावः **तद्धेतुत्वमिति** वा । **अतःशब्दः तृतीय उदाहृतः** उदीरितः सद्भिः । अन्वाचये चः । सप्रयोजकत्वं मुख्यतो वदन्, आनुषङ्गिकतया हेतुत्वं च वदन् । अपिशब्द ओमथयोः समाहारे ॥

इदानीमोङ्कारवदथातःशब्दयोरपि सामस्त्येन परब्रह्माभिधायकत्वमाह– **अकार** इत्यादिना । सर्वा वाचः व्याख्येयत्वेन व्याप्नोतीति **सर्ववागात्मा** । तत्र प्रमाणसम्मतिमाह टीकाकृत्– **व्याख्यानत्वादिति** । **सर्ववाचां** अकारव्याख्यानत्वात् अकारस्य सर्ववागात्मता भवेत् । ओङ्कारस्याप्यकारगर्भत्वात्, अकारस्य सर्ववेदसारत्वाच्च सर्वप्राथम्यम् । **तथौ व्याप्तिस्थितिविधायकौ** । ततत्वात् व्याप्तत्वात् तः । अन्तःस्थितत्वात् थः । **प्राणं सर्वप्रणेतारं विष्णुं वाचकत्वेन** आप्नुत इति **प्राणात्मकौ** । प्राणं सर्वजीवप्रणेतारं वायुं तदनन्तरं वाचकत्वेनाऽप्नुत इति च । उभयार्थसङ्ग्रहायैव प्राणशब्दं प्रायुङ्क्त ॥

तथाच तथौ प्राणनारायणोभयपरावपि अकारेण विशेषितौ केवलं विष्णुपरौ भवतः । **अथ सर्वान्तस्थं** नारायणाख्यं परं ब्रह्म । **अतः** सर्वगतं नारायणाख्यं परं ब्रह्मेति । अतश्च त्रयाणामपि भगवद्वाचकत्वेन परममाङ्गलिकत्वाच्च । **पूर्वमुच्चार्याः** इति **सतां मताः** । अयमर्थः– अथातःशब्दवत् ओङ्कारोऽपि पूर्व-

अधिकारश्चोक्तो भागवततन्त्रे–

'मन्दमद्ध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।
'तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ॥

'मद्ध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।
'इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ॥

'भक्तिमान् परमे विष्णौ यस्त्वद्ध्ययनवान् नरः ।
'अधमः शमादिसंयुक्तो मद्ध्यमः स उदाहृतः ॥

---

मुच्चार्यः सर्वैः सूत्रपाठकैः । तदुक्तं पद्मनाभतीर्थैः– 'ओङ्कारः पृथगुच्चारितो वेदितव्यः । नाथशब्दवत् सूत्रोपनिबद्धः' इति । पृथगिति सूत्रघटकत्वं विना, असंहिततया च । 'ओम् अथातः–' इति । न तु 'ओमथातः–' इति । अथातःशब्दावेव आदौ प्रयुञ्जते सूत्रावयवत्वेन सूत्रकाराः । अत एवोपक्रमेऽपि– **'अथातःशब्दपूर्वाणि'** इत्येवान्वयुज्यत । प्रासङ्गिकमोङ्कारमहत्त्वमभिधाय सम्प्रति नारदप्रश्नोत्तरमुपसंहरति– **अथातःशब्दयोरेवमिति** । **सूत्रेषु** तु वेदमूलेषु सूत्रेषु । **महाप्राज्ञाः** परब्रह्मविदः ॥

## अधिकारत्रैविध्यविमर्शः

कोऽयमधिकारो नाम यदानन्तर्यमथशब्दो वक्तीत्यत आह– **अधिकारश्चोक्त** इति । **भागवततन्त्रे** मोक्षयोग्यानामधिकार उक्तः । अनेनाधिक्रियन्त इत्यधिकारोऽर्हता नाम लक्षणम् । चकारेण तद्विभागश्च । **उत्तमगणाः** राजससात्त्विकाः । **जातिकृत** इत्यौत्पत्तिकः । न मनुष्येष्विव औपाधिक इत्यर्थः । आन्तरं लक्षणमेतत् । स्वरूपलक्षणमित्येतत् । न देवा क्वचिददेवा भवन्ति । नाप्यदेवः क्वचिद् देवः । नानृषय ऋषयः । नाप्यगन्धर्वा गन्धर्वा इत्यादि । अथ बाह्यं लक्षणमाह– **तथाऽन्यो गुणपूर्वक** इति । **परमे विष्णौ भक्तिमान्** । विष्णुः परम इति विज्ञाय तस्मिन् परभक्तिमान् । 'यस्य देवे परा भक्तिः' इति श्रवणात् । **अध्ययनवांस्तु** । तुशब्दो विशेषार्थः । साङ्गसर्ववेदाध्ययनवानित्यर्थः । **नरः** मनुष्योत्तम इत्यर्थः । वस्तुस्थितिकथनमेतत् । न लक्षणानुविष्टम् । यस्त्वध्ययनवानपि न भक्तिमान्, व्यर्थं तर्हि तस्याध्ययनम् । यस्तु भक्तिमानपि नाध्ययनवान् मूढा तर्हि तद्भक्तिः ।

'आब्रह्मस्तम्बपर्य्यन्तमसारं चाप्यनित्यकम् ।
'विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ।
'स उत्तमोऽधिकारी स्यात् सन्न्यस्ताखिलकर्म्मवान्' इति ॥

'अद्ध्ययनमात्रवतः','नाविशेषात्' इति चोपरि ।

---

**'अद्ध्ययनमात्रवतः', 'नाविशेषात्' इति चोपरि** सूत्रकारो भगवान् व्यास एवाधिकारं तारतम्येन वक्ष्यति ।

---

तस्मात् संयुक्तमेव लक्षणम्, न विश्लिष्टम् । **सः अधिकारी** । स्तम्ब इति तृणगुल्मवचनोऽत्र तृणजीववचनः । 'अप्रकाण्डौ स्तम्बगुल्मौ' इति यादवप्रकाशः । **सर्वमसारं** नीरसं निकृष्टं च । चः समुच्चये । अपिर्गर्हायाम् । **अनित्यकम्**, अनित्यत्वादत्यल्पं च । **जातवैराग्यः** इदमेव सर्वस्वं नेतः परमस्तीति भ्रमरहितः । पद्मपत्रमिवाम्भसि जीवन् । कर्मनिरतस्य कथमलिप्ततेत्यत आह– भगवति **सन्न्यस्ताखिलकर्मवान्** । 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' इति भगवद्वचनात् । ज्ञानी त्वकर्मा भवतीति केचित् । तन्निरासाय **कर्मवान्** इत्याह । ज्ञानी च कर्मवान् भवेत् । किन्तु **'सन्न्यस्ताखिलकर्मवान्'** भवेदिति । उक्तं हि– 'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत' इति । अकामो विष्णुकामः, विष्णुप्रीतिमात्रकाम इत्यर्थः । इदमुक्तं भवति– विष्णुभक्तोऽधीतवेदः शमादिसम्पन्नः सर्वत्र **जातवैराग्यो विष्णुपादैकसंश्रयः** सन्न्यस्ताखिलकर्मा च यः **स उत्तमोऽधिकारी** । षड्गुणे भगवति प्रपदनाय समग्राधिकारिष्वपेक्षिताः षड्गुणा इमे । ननु मोक्षं जिगमिषूणामपेक्षिता इमे गुणाः । न ब्रह्मसूत्रमधिजिगांसूनामिति । मोक्षं जिगमिषूणामिति तथ्यमाह भवान् । यैव मुमुक्षूणामधिकारसम्पत्तिः सैव ब्रह्मसूत्रमधिजिगांसूनामपि । महामोक्षशास्त्रत्वात् । विष्णुभक्तः, अथापि नात्यन्तं विष्णुपादैकसंश्रयः, अधीतवेदः, अथापि न समग्रं जातवैराग्यः, शमादिसम्पन्नश्चेति त्रिगुणो मध्यमोऽधिकारी । न समग्रं जातवैराग्यः, अत एव न विष्णुपादैकसंश्रयः, नापि नितरां शमादिसम्पन्नः, अथापि विष्णुभक्तोऽधीतवेदश्चेत्ययं द्विगुणोऽधमोऽधिकारी । विष्णुभक्तिपूर्वकं वेदाध्ययनमात्रमवराऽधिकारसम्पत्तिः । समग्रवैराग्यपूर्वकं सन्न्यस्ताखिलकर्मता विष्णुपादैकसंश्रयणं परमाऽधिकारसम्पत्तिरित्येतत् ॥

'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्',

---

**शान्तो दान्त उपरतस्तितिक्षुः समाहित** इति । 'शमो मन्निष्ठता बुद्धेः' इति भागवते । वैष्णवसिद्धान्तादचलनमित्यर्थः । 'दमः' इन्द्रियनिग्रहः । 'उपरतिः' विष्णावेव

---

समग्रमध्ययनमध्ययनमात्रम् । विशिष्य स्वशाखायाः । तदपि '**नाविशेषात्**' इति अधिकारं **तारतम्येन वक्ष्यति** स्वयं **सूत्रकार एव** । उपरि तृतीयाध्याये तुरीयपादे द्वादशत्रयोदशे इमे सूत्रे (३.४.१२–१३) ॥

त्रिवारमध्ययनमिति विष्णुतीर्थः । तथाहि समग्रं तद्वचनम्–

'भक्तौ विष्णौ त्रिवारं वा वेदाध्याय्यधमः स्मृतः ।
'युक्तः शमादिना तेन पूर्वोक्तेन च मध्यमः ॥

'आब्रह्म तृणपर्यन्तमसारं चाप्यनित्यकम् ।
'सारत्वं नाम केनापि विष्णोरन्यस्य न क्वचित् ॥

'क्षणेक्षणेऽन्यथाभावादनित्यं च सदा जगत् ।
'विष्णुरेव सुनित्यो हि सर्वस्माच्च सुसारकः ॥

'इति ज्ञात्वा भवघ्नस्य विष्णोः पादाब्जसंश्रयः ।
'निर्विण्णश्चान्यत्र सदा पूर्वोक्तेनापि संयुतः ।
'उत्तमः—' इति ॥ (स.प.१.१४-१७)

एतेन 'यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमशृणोत् पुरुसङ्ख्यात्' इति मध्वविजयवाक्यमपि (६.५०) विवृताशयम् ॥

शमादिसम्पन्न इत्यत्र शमेनाऽदिमन्तः क इत्यत आह– **शान्त** इत्यादि बृहदारण्यकवचनम् (६.४.२४)। शमसम्पन्नः शान्तः । शमश्च भगवन्निष्ठता बुद्धेः । भक्तिमान् परमे विष्णावित्येवोक्तं भवति । तात्पर्यान्तरं चाऽह टीकाकृत्– **वैष्णवसिद्धान्तादचलनमित्यर्थ** इति । भगवत्सिद्धान्तनिष्ठैव हि भग-

'परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायात्',
'यमेवैष वृणुते तेन लभ्यः',
'यस्य देवे परा भक्तिर्य्यथा देवे तथा गुरौ ।
'तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इत्यादिश्रुतिश्च ॥

---

मनोरतिः । 'तितिक्षा' द्वन्द्वसहिष्णुता । 'समाधानं' सदा हरौ चित्तस्यावस्थितिः । **'यमेवैष वृणुते तेन** लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्' इति । यमेव परमात्मा भक्तिदानेन 'वृणुते' स्वीकरोति, तेन प्राप्यः, यतः तस्यैव स्वां तनुं प्रकाशयति ।

'भक्त्यैव वृणुते विष्णुर्भक्त्या दद्यान्निजं पदम् ।
'भक्त्यैव दृश्यते नित्यं भक्त्या भोगान् ददाति च' इति पाद्मे ॥

---

वन्निष्ठा । 'मन्निष्ठता शमः' इति पर्याप्तम् । अथापि 'बुद्धेर्मन्निष्ठता' इत्याह । तेनेदं गम्यते– निश्चयात्मिका हि बुद्धिः । तेन निश्चिता भगवद्धर्मनिष्ठेत्युक्तं भवति । तदेव हि वैष्णवसिद्धान्तादचलनं नाम । अभेदवादिनोऽपि विष्णुभक्ताः क्वचिद् भवेयुः । यदाचक्षते– 'भज गोविन्दम्' इति । वैष्णवा अपि केनचित् कारणेन क्वचिद् विगलितश्रद्धा भवेयुः । तन्मा भूदिति भक्तिशब्दार्थमेवावधारयन् शान्त इत्याह । विष्णुपादैकसंश्रयत्वस्य पूर्वपीठिकेयम् । दमः मनसः बाह्येन्द्रियाणां च संयमः । 'दम इन्द्रियनिग्रहः' इति च भागवते । सर्वस्मादुपरे रतिरुपरतिः । तदेवाऽह– **विष्णावेव मनोरतिः** । स्रक्चन्दनवनितादौ आत्यन्तिकरमणसाधनत्वबुद्धिविरह इत्यर्थः । उत्तमाधिकारिलक्षणोक्तस्य समग्रवैराग्यस्य पूर्वावस्थेयम् । **तितिक्षा** सुखदुःखादि**द्वन्द्वसहिष्णुता** दमफलम् । **चित्तस्यावस्थितिरि**ति । चित्तं हि स्मरणकारणम् । तेन सदा अखण्डितं स्मरणं नाम ध्यानं समाधानपदार्थः ॥

'परीक्ष्य लोकान्–' इत्याथर्वणी श्रुतिः (१.२.१२) । **कर्मचितान्** कर्मसञ्चितान् पुण्य**लोकान्**, शरीराणि वा, असारतया अनित्यतया च **परीक्ष्य ब्राह्मणो**ऽधीतवेदः परब्रह्मजिज्ञासुः **निर्वेद**मलम्बुद्धि**मायात्** ईयात् । पूर्वतनोऽपि तृतीयोऽतिशये । 'नास्त्यकृतः कृतेन' इति श्रुतिशेषः । अकृतः नित्यो मोक्षः कृतेन कर्मणा न लभ्यो भवति । किन्तु केवलज्ञानेनैव लभ्य इत्यर्थः ॥

व्योमसंहितायां च–

‘अन्त्यजा अपि ये भक्ता नाम ज्ञानाधिकारिणः ।
‘स्त्रीशूद्रब्रह्मबन्धूनां तत्र ज्ञानेऽधिकारिता ॥

---

जयोत्तरे च–

‘भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्ज्जुन ।
‘ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप’ इत्यादिस्मृतिश्चशब्दाद् गृह्यते ॥

---

**‘यमेवैषः–’** इति काठके (१.२.२३) । **‘यस्य देवे’** इति श्वेताश्वतरे(६.२३) । **श्रुतिश्च** इति चशब्दात् स्मृतिश्च । तां च स्मृतिं लेशतो दर्शयति– **भक्त्यैवे**-त्यादि । **जयोत्तरे** गीतायां **च** । **‘शक्य अहम्’** इति विश्लिष्टार्थे विश्लिष्य प्रयोगः । सर्वतो विलक्षणोऽहमित्यर्थः । ‘विश्लिष्टार्थे च विश्लिष्टम्’ इति स्मरणात् । ‘श्रुतिश्च’ इत्येकवचनेन श्रुतीनामैककण्ठ्यम् ॥

विष्णुभक्तिपूर्वकं वेदाध्ययनमवरमधिकारिलक्षणमित्युक्तम् । तत्र यथायोग्यं गुरुभक्तिरप्युपलक्षणीयेति श्वेताश्वतरश्रुतिवचनेनैवाऽह– यस्य देव इति । **यथा परे देवे परा भक्तिः तथा** तदवरे **गुरौ** तदनुगुणा भक्तिः करणीयेत्यर्थः । हरिभक्तेः गुरुभक्तिसाध्यत्वात् । **तस्य** एवं हरिगुरुभक्तस्यैव **एते** वेदोदिता **अर्थाः** गुरुणा **कथिताः** सन्तः **प्रकाशन्ते** । गुरावभक्तस्य कथिता अपि न प्रकाशन्ते । भक्तस्य तु **अकथिता अर्था** अपि **प्रकाशन्ते** । स हि महान् सुकृती यो हरिगुरुभक्तः ॥

## स्त्रीशूद्रादीनामपि भारतादिष्वधिकारः

ननु वेदाध्ययनं सर्वानुगतमधिकारिलक्षणं चेद् वेदानधिकारिणां मोक्षयोग्यानां सज्जीवानां का गतिरित्यत आह– **व्योमसंहितायां** चेत्यादिना । द्विविधा हि ब्रह्मजिज्ञासा भवति । तत्रैका ब्रह्मणा वेदेन ब्रह्मणो विष्णोर्जिज्ञासा । याऽत्र ग्रन्थे विवक्षिता । विना वेदेन ब्रह्मणो जिज्ञासा द्वितीया । प्रथमस्या ब्रह्मजिज्ञासाया नियतं वेदाध्ययनम् । उत्तरस्यां न वेदाध्ययनावकाशः । तदिह निरूप्यते– **अन्त्यजा अपि ये भक्ता** इति ॥

वस्तुतो नेदं ब्रह्मसूत्राधिकारचिन्तायां साक्षात् सङ्गतम् । तथाऽपि सामान्यतो ब्रह्मजिज्ञासाधिकारचिन्तेयमिति प्रस्तुता । अपिच वेदाध्ययनमधिकारिलक्षणमित्युक्तम् । के च वेदाध्ययनेऽधिकारिणः के चानधिकारिण इति शङ्काया इदमुत्तरम् । तेनान्ततः ब्रह्मसूत्राधिकारचिन्तैवेयम् ॥

**अन्त्यजा अपि ये विष्णुभक्तास्ते विष्णुसहस्रनामादिनामज्ञानाधिकारिणः** । 'स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम्' (भाग.१.४.२४) इति वचनान्तरात् । अथच उत्तरार्धानुगुण्येन अत्रापि नामेति भिन्नं पदम् । **ये भक्ता नाम** विष्णुभक्तत्वेन प्रसिद्धाः, अत एव मोक्षयोग्याः, अथापि साक्षाद् वेदाध्ययनेऽनधिकृताः, तेऽपि शास्त्रोक्त**ज्ञानाधिकारिणः** । तदेव स्फुटमाह– **स्त्रीशूद्रब्रह्मबन्धूनां तत्र ज्ञानेऽधिकारिता** ॥

## व्योमसंहितावचनस्यार्थविशेषः

अत्र द्वेधाऽर्थानुसन्धानं भवति– स्वरूपपरं तज्जन्ममात्रपरमिति । मोक्षयोग्या मनुष्याश्चतुर्विधा भवन्ति– ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा इति । स्वरूपविभागोऽयम् । मोक्षेऽपि ब्राह्मणा ब्राह्मणा एव । क्षत्रियाः क्षत्रियाः । वैश्या वैश्याः । शूद्राः शूद्रा इति । तत्र त्रैवर्णिका वेदाधिकारिणः । स्वरूपशूद्राणां का साधनसरणिरिति? आह– **अन्त्यजा** इति । चतुर्षु वर्णेषु अन्त्या भूत्वा जाता **अन्त्यजाः** शूद्राः । **ये भक्ताः** विष्णुभक्ता मोक्षाधिकारिणः ते **अन्त्यजाः** शूद्रा **अपि** । वेदानधिकारिणोऽपीत्यपेरर्थः । **नामज्ञानाधिकारिणः**, विष्णुनामभिर्वेदोक्तगुणज्ञाने तदुपासने चाधिकारिण इत्यर्थः । वेदाधिकारिणामपि तदुक्तगुणोपासनेनैव हि मोक्षः । न वेदपाठमात्रेण । स्त्रियो द्विविधा भवन्ति– स्वरूपतः स्त्रियः कारणविशेषतः स्त्रीदेहं प्राप्ताः पुरुषा इति । द्विविधा अप्यत्र स्त्रीपदेन गृह्यन्ते । शूद्रा अपि द्विविधा भवन्ति– स्वरूपतः शूद्राः, शापादिना प्राप्तशूद्रत्वास्त्रैवर्णिका इति । त उभयेऽप्यत्र गृह्यन्ते । ब्रह्मबन्धवोऽपि द्विविधा भवन्ति– स्वरूपतो ब्राह्मणा अपि, ब्राह्मणयोनौ जाता अपि, प्रारब्धकर्मवशादब्राह्मणाचाराः, स्वरूपतो हीनवर्णा अपि ब्राह्मणयोनौ जाता व्रात्या औपाधिकब्राह्मणा इति । ब्राह्मणान् बन्धून् वदन्तः स्वयमब्राह्मणाचाराः । त उभयेऽप्यत्र गृह्यन्ते । तेषां द्विविधानां त्रयाणामपि **तत्र** वेदविषये **ज्ञाने** वेदोक्तज्ञानमात्रे**ऽधिकारिता** । न वेदाध्ययने । 'तत्र ज्ञाने' इति हृषीकेशतीर्थलिखिते मूलकोशे विद्यमानः पाठः । 'तन्त्रज्ञाने' इति जयतीर्थाभिमतः । 'तन्त्रं पञ्चरात्रादि' इति तद्वचनम् । 'तन्त्रं ब्रह्मतर्कः' इति गुर्वर्थदीपिका । अयमेव च 'पञ्चरात्रादि' इति टीकावचने आदिपदार्थः । ब्रह्मसूत्राणि च । साक्षाद् वेदार्थनिर्णायकग्रन्थजातमिति यावत् ॥

'एकदेशे परोक्ते तु नच ग्रन्थपुरस्सरे ।
'त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ॥
'आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।
'यथोर्वशी यमी चैव शच्याद्याश्च तथा पराः' इति ॥

---

ननु यदि न गुरुमुखतोऽध्ययनं तर्हि कथं तेषां वेदोक्तज्ञानमित्यत आह– **एकदेश** इति । परेण गुरुणा परस्मै शिष्यायोक्ते प्रवचने तदेकदेशश्रवणं तेषामनुमन्यते । न वेदानां ग्रन्थपुरस्सरं शान्तिपाठपूर्वकमध्ययनम् । इदमुपलक्षणम् । महाभारतरामायणयोः पुराणानां च गुरुमुखादध्ययनेनापि तेषां तत्वज्ञानमिष्यते । तथाहि स्मरन्ति– 'स्त्रीशूद्रब्रह्मबन्धूनाम्–' इत्युक्तम् ॥

अथच तज्जन्ममात्रविवक्षयाऽर्थान्तरं च । अस्मिन् पक्षे अन्त्यजा इति वर्णबाह्या म्लेच्छादय उच्यन्ते । अस्मिन् जन्मनि म्लेच्छा वा स्युः श्वपचा वा स्युः । जन्मान्तरे ब्राह्मणा अपि स्युः । क्षत्रियादयोऽपि स्युः । यज्जन्मनि या जातिः तज्जन्मनि सा निष्ठेति सामाजिको न्यायः । तस्मात् तज्जन्मनि नामज्ञानाधिकारिण एव विष्णुभक्ता अपि मोक्षयोग्या अपि । स्त्रीशूद्रब्रह्मबन्धूनामपि समानोऽयं न्याय इति ॥

अतः स्वरूपतः **त्रैवर्णिकानां** मुक्तियोग्यतया स्वभावत एव **सम्यक्** सर्वाधिकतया **हरौ भक्तिमतां** केवलं **वेदोक्ते**ऽधिकारः । कारणान्तरवशात् त्रैवर्णिकेषु जाता अपि तस्मिन् जन्मनि वेदोक्तेऽधिकारिणो भवन्ति यदि विष्णुभक्ताः ॥

स्त्रीणां न वेदाधिकार इति सामान्यं वचः । तत्रापवादमाह– **आहुरपीति** । वैदिके वेदमन्त्रदर्शने वेदाध्ययने च । यथोर्वशी । 'किमेता वाचा कृणवा तवाहम्' (ऋ.१०.९५.२) इत्याद्या उर्वशीदृष्टा मन्त्राः । 'ओ चित् सखायम्–' (१०.१०.१) इत्याद्या यमीदृष्टा मन्त्राः । 'सोम एकेभ्यः पवते' (१०.१५४.१–५) इत्याद्याश्च । 'उदसौ सूर्यो अगादुदयं मामको भगः' (१०.१५९.१–६) इत्याद्याः शचीदृष्टा मन्त्राः । 'परा हीन्द्र धावसि वृषाकपेरति व्यथिः' (१०.८६.२) इत्याद्याः, 'इमां खनाम्योषधिं वीरुधं बलवत्तमाम्'(१०.१४५.१–६) इत्याद्याश्चेन्द्राणीदृष्टाः । शच्येव हीन्द्राणी । **यथोर्वशी यमी**

**यतो नारायणप्रसादमृते न मोक्षः, नच ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्त्तव्या ॥**

---

ब्रह्मजिज्ञासाया मोक्षहेतुत्वं सूचितम्, तत्कथमित्यत आह– **यतो नारायणप्रसादमृते न मोक्ष** इत्यादि ॥ ❋ ॥

अत्राऽह, बन्धस्याज्ञानकार्य्यत्वेन मिथ्यात्वाज्ज्ञानादेव निवृत्तेर्न्न प्रसादान्मोक्ष इति । तदयुक्तम् । अज्ञानासम्भवात् । नहि परमात्मनः सर्वज्ञस्याज्ञानं सम्भवति । आश्रय-विषयाभावात् । नच स्वयं प्रकाशमानस्याज्ञातत्वम्, स्वज्ञातत्वात् । नन्वपराधीनप्रकाशत्वं

---

**च एव एवं शच्याद्याश्च** देवतास्त्रियः । आदिना दाक्षायणी अदितिः (ऋ.१०.७२), सावित्री सूर्या (१०.८५), सार्पराज्ञी (ऋ.१०.१८९) इत्याद्या गृह्यन्ते । यथा देवतास्त्रियः तथा पराः मुनिस्त्रियः मन्त्रद्रष्ट्र्यः । ताश्च आत्रेयी विश्ववारा, आत्रेयी अपाला, शश्वती आङ्गिरसी, घोषा काक्षीवती, गोधा ऋषिका, रोमशा ब्रह्मवादिनी, लोपामुद्रा, निषदुपनिषदौ, गार्गी चेत्याद्याः । नरेषु जाता देवतामुनिस्त्रियश्च अदृष्टमन्त्रा अपि वेदाध्ययनाधिकारसम्पन्नाः । **तथा पराः** मानुषेषूत्तमस्त्रियश्च याः परित्यक्तसंसारबन्धना ब्रह्मवादिन्यो बुभूषन्ति । **तथा अपराः** शच्यादिभ्यो देवस्त्रीभ्योऽवरा इति वा । याश्चातिप्रतिभादियुक्ता वेदाध्ययन एव रतिमत्यश्च । तथाहि तात्पर्यनिर्णये–

'देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि ।
'उत्तमा इति विज्ञेयास्तच्छूद्रैरप्यवैदिकम् ।
'ज्ञेयमन्यैर्हरेर्नाम निजकर्तव्यमेव च' (२९.३८) इति ।

## मायावादे कस्याज्ञानम्?

**सूचितम्** अत इत्यनेन । **अत्राऽह** मायावादी । तन्मते **अज्ञानासम्भवात्** । **आश्रयविषयाभावा-दिति** । नहि सर्वज्ञोऽज्ञानस्याऽश्रय इति युक्तम् । नापि सर्वज्ञस्याज्ञातं किमप्यस्ति । तस्मादाश्रयविषययोरभाव

ब्रूमो न स्वदृश्यत्वम्, कर्त्तृकर्म्मत्वविरोधात् । तन्न । शृङ्गवत्त्वपुच्छवत्त्ववदविरोधात् । नच द्रष्टृदृश्यनिरपेक्षं दृग्रूपत्वं निरूपणीयम् । अतोऽपराधीनप्रकाशत्वं स्वाधीनप्रकाशत्वमेव । तस्मादेतदपि निर्विशेषत्वाभिनिवेशदोषदूषितशेमुषीणां दुष्प्रतिपादम् । नचैकस्यैवाज्ञानाश्रयविषयत्वम् । निर्विशेषत्वादेव । सविशेषत्वे तु 'अहं मां न जानामि' इत्युभयविधा प्रतीतिः सम्भवति । अतो यद्यपि स्वयम्प्रकाशत्वं नः, तथाऽपि सविशेषत्वादज्ञातत्वम्, तथा ज्ञत्वज्ञातत्वे चेति नास्मत्पक्षे विरोधः । नच रूपयोर्भेदः, विशेषादेव द्वित्वाद्युपपत्तेः ॥

---

इति । नन्वात्मनिष्ठमात्मविषयकमेवाज्ञानमात्मैक्यज्ञानेन निवर्तत इति ब्रूमः । सत्यं ब्रूषे । किन्तु व्याहतं ब्रूषे । आत्मा स्वप्रकाश इति हि ते मतम् । तत् कोऽयं प्रदीपेऽन्धकारः?

एकस्मिन् कर्तृत्वकर्मत्वायोगान्न स्वप्रकाशत्वं नाम स्वदृश्यत्वमित्यपलपन्तमपहसति– **शृङ्गवत्त्वपुच्छवत्त्ववदविरोधा**दिति । मामहं जानामीत्यनुभवात् कोऽयं कर्तृकर्मविरोधो नाम? कर्तृकर्मणोः शृङ्गपुच्छयोरिव सामानाधिकरण्यमेव दृश्यते । यदि कर्ता न कर्मेति ब्रूषे तर्हि वयमपि ब्रूमः यदि ते गौः शृङ्गवान् न तर्हि पुच्छवानिति । तस्मादाभाससमानयोगक्षेमोऽयं ते कर्तृकर्मविरोधवादः ॥

ननु स्वप्रकाशत्वं नाम प्रकाशरूपत्वमेव, न प्रकाशविषयत्वम् । ततो नाऽत्मनः स्वदृश्यत्वमित्यत आह– **नचेति** । यदि दृग्रूप आत्मा, तस्य को द्रष्टा, कश्च विषय इति वक्तव्यम् । ज्ञातृज्ञेयविहीनं ज्ञानं न क्वापि दृष्टमिति नाऽत्मनो केवलदृग्रूपत्वं शक्यं निरूपयितुम् । तेन **अपराधीनप्रकाशत्वं** नाम **स्वाधीनप्रकाशत्वमि**त्येवाऽयातम् ॥

एकस्यैव कर्तृत्वं कर्मत्वं चानङ्गीकुर्वन्नप्यहो एकस्यैवाऽश्रयत्वं विषयत्वं च जजल्प–'आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला' इति । तदेतन्निरस्यति– **नचैकस्येति** । निर्विशेषायाश्चितेराश्रयत्वं विषयत्वं च विशेषौ कथं सम्भवतः? आश्रयत्वेन विषयत्वेन चेत्युभयविधता च । यद्यपि विषयभूतस्य परमात्मनः नः पक्षेऽपि स्वयम्प्रकाशत्वम् । तथाऽपि विशेषबलादेव सर्वनिर्वाहादविरोधः । नच द्वित्वं भेदसापेक्षमिति द्वयोः भगवद्रूपयोः भेदः शङ्कनीयः । विशेषस्य भेदप्रतिनिधित्वेन तेनैव तन्निर्वाहात् । विस्तृतमेतत् पुरस्तात् ॥

**ते चानन्ताः प्रतिवस्तु विशेषाः । विशेषविशेषिणोर्विशेषाणां च विशेषः स्वयमेव । एवम्भूते विशेषे किं प्रमाणमिति चेन्न प्रमाणप्रश्नः, सिद्धार्त्थत्वात् । एवम्भूतत्वं न विशेषाद् भिन्नम्, सामानाधिकरण्योक्तेः, अन्यथाऽनवस्थानाच्च । न च तयोः पर्य्यायत्वम् । अतस्तत्रतत्र प्रसिद्धो विशेषः ॥**

**ननु न वयं निर्विशेषत्ववादिनो विशेषमङ्गीकुर्म्महे । न । निर्विशेषत्वविशेषाङ्गीकारात् । नच तन्मिथ्या सविशेषत्वप्रसङ्गात् । अथ कथं तर्हि सविशेषत्वपरिहाररूपेण निर्विशेषत्वेनोक्तेन सविशेषत्वप्रसङ्ग इति चेत्, कथं वाचालत्वपरिहाररूपेण 'अहं मौनी' इति वचनावर्त्तनेनामौनित्वम् ॥**

---

**ते चानन्ताः** । वस्तूनामनन्तत्वात् तद्गता विशेषा अप्यनन्ताः । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इति ह्यनुव्याख्याने । **विशेषाणां च** परस्परं **विशेषः** भेदव्यवहारहेतुः **स्वयमेव** वस्तुस्वरूपमेव । भेद एव वा विशेषः । यदनुयोगिको विशेषः स तत्स्वरूपमित्यर्थः । नन्वियता प्रबन्धेन विशेषमनभ्युगच्छतामनुपपत्तिरेवोक्ता । न विशेषाख्यपदार्थविशेषसद्भावे काचिदुपपत्तिः । तामिह पृच्छाम इति वदन्तमाह– **न प्रमाणप्रश्नो** युक्त इति । अन्यथाऽनुपपत्तेरेव प्रमाणत्वात् । सर्वानुभवसिद्धं चैतदित्याह– **सिद्धार्थत्वादिति** । अर्थतः सिद्धत्वादनुभवतः सिद्धत्वाच्च । नहि दहनस्य दाहकत्वे किं प्रमाणमिति कोऽपि पृच्छति । ननु तत्र प्रश्न एव नोदेति । अत्र तु प्रश्न उदैत् । अतः पृच्छाम इति । अविमृश्यवादी भवान् । अत उदैत् प्रश्नः । स्वान्त एव किञ्चिद् विमृश । तदा जानीषे– किमप्यस्तीदृशं वस्तु । नाम तु न जानीम इति । अकृतनामाऽनवसितदशाहो बाल इवाऽसीदयं विशेषः । अथ भगवत्पादः शास्त्रमूलं विशेष इति विशेषनाम परिचाययामास ॥

एवम्भूतो नाम विशेष इति सामानाधिकरण्येन व्यवहारदर्शनात् **एवम्भूतत्वं** च **न विशेषाद् भिन्नम्** । एवम्भूतादेवम्भूतत्वस्य भेदः, तस्य च भेद इति भेदपरम्परया पूर्वोक्तदिशाऽनवस्थानाच्च । अथाप्यपर्यायत्वं विशेषगमकम् । अथापि निर्विशेषत्वमेवाऽग्रहेण वदन्तं परिहसति– **ननु न वयमित्यादिना** ॥

---

सर्वज्ञस्याप्यज्ञत्वमज्ञातत्वं च परमात्मन एकस्यैवौपाधिकभेदात् सम्भवतीति चेत्, कस्योपाधिरिति वक्तव्यम् । न तावच्छुद्धस्य । सर्वज्ञत्वात् । अज्ञानकार्य्यो ह्युपाधिः । अशुद्धस्य चेदनवस्था, परस्पराश्रयत्वं वा, अज्ञानसिद्धौ तत्कार्य्योपाधिसिद्धिः, तत्सिद्धौ चाज्ञानसिद्धिरिति । न च बीजाङ्कुरवदुपपत्तिः । मूलबीजस्य प्रकृतिकार्य्यत्वादवस्थितेः । दृष्टा च सा बीजाङ्कुरपरम्परा । नचात्र किञ्चिन्मानम् । अतो दुर्घटमिदमज्ञानकल्पितो बन्ध इति । अतस्त्वत्पक्षेऽप्यस्याविद्यामूलत्वमनुपपन्नम् । उपपन्नश्चेत् सत्यः स्यात् । उपपन्नोऽपि मिथ्या चेद् ब्रह्मणो मिथ्यात्वप्रसङ्गः । नच जगतो दुर्घटत्वम्, प्रत्यक्षादिप्रमाणदृष्टत्वात् ।

---

अज्ञानासम्भवादज्ञोऽधिकारी अज्ञातश्च विषयो मायावादे न सम्भवतीत्युक्तम् । अथ मायावादी रीत्यन्तरेण तत्सम्भवं शङ्कते– **सर्वज्ञस्याप्यज्ञत्वमज्ञातत्वं** चेत्यादिना । वस्तुतः भेदाभावेऽपि उपाधिना भिन्नौ जीवपरौ । यथा महाकाश एकोऽपि घटाकाशो मठाकाश इति भेदेन व्यवहारभाग् भवति । तथाऽत्रापि उपाधिवशादज्ञो जीवोऽधिकारी भवति । अज्ञातश्च भगवान् विषयो भवतीति । एवं वदन् प्रष्टव्यः कस्योपाधिसम्बन्धः? **न तावत् शुद्धस्य** ब्रह्मणः । तस्य सर्वज्ञत्वेनोपाधिसम्बन्धासम्भवात् । उपाधिः देहेन्द्रियादिः । अशुद्धस्य चेदुपाधिसम्बन्धः, उपाधिसम्बन्धात् पूर्वं कथमशुद्धत्वमिति वक्तव्यम् । तदप्युपाध्यन्तरसम्बन्धादिति चेत् तस्यापि तथेत्यनवस्थाप्रसङ्गः । उपाध्यन्तरानभ्युपगमे परस्पराश्रयत्वम् । नन्वस्त्वज्ञानोपाधिपरम्परयाऽनवस्था । प्रामाणिकत्वेऽनवस्था न दोषः । बीजाङ्कुरानवस्थावदिति केचिदाचक्षते । तमिमं बीजाङ्कुरानवस्थाभ्रमं वारयति– **मूलबीजस्य प्रकृतिकार्यत्वादवस्थितेः** । अभ्युपेत्यवादेनाऽह– **दृष्टेति** । कथञ्चिदभ्युपेयतां वा बीजाङ्कुरपरम्पराऽनाद्यनन्ता । मनुकुलपरम्परया दृष्टत्वात् । न कथञ्चनोपाध्यज्ञानपरम्परा । निर्मानत्वात् । **अतः** अज्ञानस्य दुर्घटत्वतः । दुर्घटमज्ञानकल्पितत्वं च बन्धस्य । न केवलमस्मत्पक्षे । **त्वत्पक्षेऽप्यस्य** बन्धस्य **अविद्यामूलत्वमनुपपन्नम्** । अनुपपन्नश्च बन्धः । **यद्युपपन्न** इत्यङ्गीक्रियते तर्हि बन्धः **सत्यः स्यात्** । ननूपपन्नः अथापि न सत्यः । किन्तु मिथ्या । तर्ह्युपपन्नत्वादेव ब्रह्मणोऽपि मिथ्यात्वं स्यात् ॥

ननु दुर्घटत्वाज्जगतो मिथ्यात्वमुच्यते । किं भवन्मतानुसारेण दुर्घटता, उत सर्वात्मना दुर्घटता? नाऽद्यः । नहि यस्यकस्यचिन्मतमवलम्ब्य जगतः सौघट्यदौर्घट्ये तिष्ठतः । न द्वितीयः । जगतः प्रमाणदृष्टत्वात् का नाम दुर्घटता? अतो मिथ्यात्वमेव दुर्घटम् ॥

**तस्मान्मिथ्यात्वं जगतो दुर्घटमतो न कल्पनीयम् । प्रमाणसिद्ध्यसिद्धी एव हि सौघट्य-दौर्घट्ये । नच ब्रह्माविद्योत्थो घटादिर्घटादिव्यवहारयोग्यः स्यात् । नहि शुक्त्यज्ञानोत्थं रजतं रजतार्थक्रियाकारि क्वापि दृष्टम् । नहि बाधानन्तरं कस्यचिदेतावन्तं कालमपि शुक्तिज्ञानं नाऽसीदिति प्रतीतिः, यथेदं रजतं नासीदिति । नच रजतस्यानिर्वचनीयत्वम् । नहि बाधकज्ञानेऽनिर्वचनीयत्वप्रतीतिः । नास्ति रजतमिहेति सर्वोऽनुभवति । ख्यातिबाधान्यथा-**

---

अथापि वदन्ति– ब्रह्माविद्याकल्पितोऽयं प्रपञ्चः । तेन मिथ्येति । तदेतन्निरस्यति– **नचेति** । योऽविद्योत्थो स नार्थक्रियाकारी । शुक्तिरजतवदिति । तथाच वयं ब्रूमहे– घटादिप्रपञ्चः न ब्रह्माविद्योत्थः, अर्थक्रियाकारित्वात्, आत्मवत्, व्यतिरेकेण वा शुक्तिरजतवदिति ॥

अपिच भ्रान्तौ प्रतीतस्याऽकारस्य निषेधो हि बाधो नाम । यथा नेदं रजतमिति । **बाधानन्तरमपि एतावन्तं कालं मम शुक्तिज्ञानं नाऽसीदिति** न कोऽपि मन्यते । आसीदेव हि शुक्तिज्ञानमन्यत्र । ब्रह्मण्यध्यस्ते तु जगति, एतावन्तं कालमज्ञातं जीवब्रह्मणोरैक्यं सम्प्रत्यहमधिजगे ब्रह्माहमस्मीतीति ऐक्यज्ञानेन जगतो बाधं मन्यमानः कथं नासङ्गतवादी? कथं वा तेन न जगत् सत्यमिति बाधज्ञानम्? अस्तु जीवब्रह्मणोरैक्यम्, मा भूज्जगदसत्यमिति ब्रुवाणं किं प्रतिब्रूषे? आहतुश्च हि भास्करवल्लभौ– ऐक्यं च सत्यम्, जगदपि सत्यमिति ॥

ननु न वयं जगतोऽसत्यत्वं ब्रूमः । किन्त्वनिर्वचनीयत्वम्, शुक्तिरजतवदिति । किमहो सिद्धवत्कृत्य शुक्तिरजतस्यानिर्वचनीयत्वमात्थ । न वयं शुक्तिरजतमप्यनिर्वचनीयं ब्रूमः । असदेवेदं रजतं प्रत्यभादिति सर्वोऽपि प्रत्येति, नत्वनिर्वचनीयं रजतं प्रत्यभादिति । तस्माद् गगनकुसुमायितमनिर्वचनीयत्वम् ॥

## अख्यातिवादनिरासः

ननु असन्न ख्यायते । नहि शशशृङ्गं कस्यापि कदाऽपि ख्यायेत । ख्यायते च शुक्तिरजतम् । तस्मान्नासत् । सच्च न बाध्यते । नह्यहं नाहमिति कदाऽपि कोऽप्यनुबभूव । बाध्यते च रजतम्– नेह रजतमासीदिति । तस्मान्न सत् । तेन सदसद्विलक्षणं शुक्तिरजतमित्यर्थादापतितम् ।

नुपपत्त्याऽनिर्वचनीयत्वं कल्प्यत इति चेन्न । असतः ख्यातिनिषेधासम्भवात् । ननु नासतः ख्यातिर्न्निषिध्यते, अपि त्वसतः सत्त्वप्रतीतिरेव । न । असतः सत्त्वप्रतीतिर्हि भ्रान्तिः । न ह्यनिर्वचनीयस्यानिर्वचनीयत्वं तवापि भ्रान्तौ प्रतीयते, सदिति प्रतिभानात् । न च तस्य सत्त्वमस्ति, सदसद्विलक्षणत्वात् । न चानिर्वचनीयस्य सत्त्वमनिर्वचनीयम्, अनवस्थानात् । नचानिर्वचनीयत्वे नानवस्थादोष इति वाच्यम् । अनिर्वचनीयस्याद्याप्य-सिद्धत्वात् । अन्ततो गत्वा येन रूपेण भ्रान्तौ प्रतीयते तेन रूपेण नास्त्येवेत्यङ्गी-कार्यम् । अन्यथा न भ्रान्तित्वं स्यात् । अतो न बन्धो मिथ्या ॥

दुःख्यहमित्यबाधितानुभवस्य भ्रान्तित्वं प्रत्यक्षानुमानागमविरुद्धस्य ब्रह्मास्मीति परोक्षाव-भासस्याभ्रान्तित्वमित्यहो महोन्मत्तानां प्रलापः । प्रत्यक्षतो हि दुःखित्वमनुभूयते । नच बाधो दृश्यते श्रूयते वा ॥

---

सदसद्विलक्षणत्वमेव चानिर्वचनीयत्वमिति । नैतदपि साधु । असदसत्त्वेन ख्यायते हि । ख्यायता-मसदसत्त्वेन । असत् सत्वेन न ख्यायत इति तु विवदिषामः । तदप्यचारु । असतः सत्वेन प्रतीतिरेव हि भ्रान्तिः ॥

अथचानिर्वचनीयं शुक्तिरजतं न तावद् भ्रान्ताविदमनिर्वचनीयं रजतमिति ख्यायते । अभ्रान्तित्व-प्रसङ्गात् । सदिदं रजतमित्येव हि सर्वेषामनुभवः । तथाचासदेव सत्त्वमख्यायतेति भवताऽप्यभ्युपेय-मापतितम् ॥

ननु न सत्त्वमसत् । ख्यायमानत्वादेव । किन्तु तदप्यनिर्वचनीयम् । तर्हि तत्र प्रतीयमानं सत्त्वमप्य-निर्वचनीयमित्यनवस्थानिर्वचनीयपरम्परयाऽनवस्थाग्रस्तो भवेः । ननु निर्वचनीयस्यैवानवस्था दोषः । अनिर्वचनीये तु सर्वं भूषणम् । यदाहुः– 'दुर्घटत्वमविद्याया भूषणं नतु दूषणम्' इति । निर्दुष्टतया निर्वचनीयं न भवतीत्येव किल तदनिर्वचनीयमाचक्षते । स्यादेवम्, यद्यनिर्वचनीयं नाम किञ्चिद् वस्तु प्रमाणप्रमितं स्यात् । निर्वक्तुं न शक्यत इति वदन् स्वस्याशक्तिमेव घोषयति । नहि जगतोऽ-

'अहमित्येव यो वेद्यः स जीव इति कीर्त्तितः ।
'स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः' इति परमश्रुतिः ॥

नच मिथ्यादुःखित्वपरिहाराय विपश्चिच्छ्रवणादौ प्रवर्त्तेत । न खल्वाप्तवचनाधिगतरज्जुसर्प्पस्वरूपो रज्जुसर्प्प(विष)परिहाराय विषविगमविद्यां चरति । नापि श्रुतशास्त्रो भोजनादौ प्रयतेत, अशनायाद्यतीतब्रह्मात्मतानिश्चयात् । नहि प्रमाणान्तरनिश्चितदिग्विशेषोऽन्यथाऽनुभवन्नपि तत्प्रयुक्तव्यवहारं करोति । दृश्यन्ते चैते स्वशरीरपोषणप्रयत्ता मायिनः

---

निर्वचनीयत्वम् । अथापि जगतोऽनिर्वचनीयत्वं जल्पते । अहो सर्वदोषाकरो भवानेव । एवं वदतस्ते 'अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः' ॥

**अतः** अज्ञानकल्पितत्वासम्भवात्, अनिर्वचनीयासम्भवाच्च **न बन्धो मिथ्या** । प्रत्यक्षतोऽनुभूतस्य दुःखस्य **बाधः** क्वचिदपि केनचिदप्यनुभूतो **न दृश्यते** । नापि कदाचिद् भविष्यतीति क्वापि श्रुतौ श्रूयते । प्रत्युत तद्विपरीतमेव श्रूयत इत्याह– **अहमित्येव यो वेद्य** इति परमश्रुतिवचनेन । यो लोके **अहमिति** प्रत्यय**वेद्यः स एव जीवः** । एवकारेण जडव्यावृत्तिः । वेद्य इति व्यवहारगोचर उच्यते । तेनेश्वरव्यावृत्तिः । **स** बन्धे **दुःखी च** । **स एव च** मोक्षे **सुख्येव** । तदेव स्फुटमाह– **स पात्रं बन्धमोक्षयो**रिति । तेन जडेश्वरयोरुभयोर्व्यावृत्तिः । तथाच अहमिति व्यवहारगोचरत्वम्, दुःखसमानाधिकरणसुखाश्रयत्वम्, बन्धपात्रत्वं च जीवसामान्यलक्षणम् । मोक्षपात्रत्वं च सात्विकजीवलक्षणमित्युक्तं भवति । बन्धपात्रत्वं वर्तमानेन कालेन भूतेन वा सम्बद्धम् । मोक्षपात्रत्वं वर्तमानेन भविष्यता वा सम्बद्धमिष्यते ॥

सत्यं श्रुतौ स दुःखीत्युच्यते । मिथ्यादुःखेन दुःखीत्यर्थ इत्यपलपन्तं प्रत्याह– **नचेति** । **'रज्जुसर्पपरिहाराय'** इति पाठे रज्जावारोपितस्य मिथ्यासर्पस्य दंशेन सम्भावितविषपरिहाराय । विषस्य विगमाय परिहाराय या विद्या जाङ्गली नाम सा विषविगमविद्या । आहितुण्डिकविद्या वा । **चरति** अभ्यस्यति । **नही**त्यादि । अपरिचिते देशे दिग्भ्रमो भवति । पूर्वामेव पश्चिमां मन्यते । कश्चिदेवं विभ्रान्तः तद्देशवासिनं पप्रच्छ सन्ध्यां विवन्दिषमाणः– काऽत्र प्राची दिगिति । स इयं प्राचीत्याह यामयं पश्चिमाममन्यत ।

सुनिश्चितनिर्ग्गुणात्मानः । अतस्तन्मतमत्यन्तहेयम् । अतः शास्त्रार्थत्वाय बन्धः सत्यः । स च सदागमगीयमानासमानस्वातन्त्र्यसार्वज्ञ्यादिगुरुतमगुणगणपरिपूर्ण्णपरमानन्दामृत-महार्ण्णवस्य विष्णोः प्रसादमन्तरेण नोच्छिद्यते–

‘यस्य प्रसादात् परमार्त्तिरूपादस्मात् संसारान्मुच्यते नापरेण ।
‘नारायणोऽसौ परमो विचिन्त्यो ‘मुमुक्षुभिः कर्म्मपाशादमुष्मात्’ इति हि श्रुतिः ॥

‘न तादृशी प्रीतिरीड्यस्य विष्णोर्ग्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।
‘तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव’ इति च ॥

तस्मात् सुष्ठूक्तम्– **यतो नारायणप्रसादमृते न मोक्षः, नच ज्ञानं विनाऽत्यर्थप्रसादः, अतो ब्रह्मजिज्ञासा कर्त्तव्येति** ॥

---

स तदा स्वेन प्राचीत्वेन मन्यमानां दिशं विहाय परोदीरितदिगभिमुख एव सन्ध्यामुपास्ते । एवं श्रुत्या स्वस्याशनाद्यतीतत्वनिश्चयवान् बुभुक्षमाणोऽपि न भोजनादौ प्रवर्तेत ॥

**स च सत्यो बन्धः** । **सदागमैर्गीयमानैः असमानैः स्वातन्त्र्यसार्वज्ञ्यादिगुरुतमगुणगणैः परिपूर्णश्चायं परमानन्दामृतमहार्णवश्च तस्य विष्णोः** । **अस्मात् परमार्तिरूपात्** परमदुःखरूपात् **संसारात् यस्य प्रसादान्मुच्यते** केवलम्, **नापरेण** केनापि विधानेन, **सोऽसौ नारायणः परमः** सर्वोत्तम इति **मुमुक्षुभिर्विचिन्त्यो** जिज्ञास्यः । अनेन जिज्ञासया प्रसादः प्रसादेन मोक्ष इत्युक्तं भवति । ज्ञानस्यैव मोक्षसाधनत्वे च श्रुत्यन्तरमाह– **न तादृशीति** ॥

पर्यवसितमाह भाष्यकारः– **यतो नारायणप्रसादमृते न मोक्ष** इति । ननूत्सूत्रमेतत् । यतो ब्रह्मप्रसादमृते न मोक्षः, अतो ब्रह्मजिज्ञासा कर्तव्या इति किल वक्तव्यम् । नोत्सूत्रमेतत् । सूत्रगत-ब्रह्मपदव्याख्यानरूपत्वात् । ब्रह्मपदेन न चतुर्मुखादिरुच्यते, नापि निर्गुणं ब्रह्म किन्तु गुणपूर्णो नारायण इति । एतेनैव ‘नारायणोऽसौ परमो विचिन्त्यः’ इति श्रुतिं च स्मारयति । **अत्यर्थप्रसादः** मोक्षहेतुरुत्तमः प्रसादः । स्फुटमेतदुत्तरत्र नारदीयवचने ॥

'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
'वाक्यं वेति सतां नीतिः सावकाशो न तद् भवेत्'
इति ब्रह्मसंहितायाम् ॥

---

**यत्रानवसरोऽन्यत्र** अन्यस्य पदस्य वाक्यस्य वेत्यर्थः ॥

---

## किमिति कर्तव्यपदमेवाध्याह्रियते?

ब्रह्मजिज्ञासा कर्तव्या इति भाष्यकरणेन सूत्रे कर्तव्येति पदमध्याहर्तव्यमित्युक्तं भवति । ननु कर्तव्यपदमेव किमर्थमध्याहर्तव्यम् । अथातो ब्रह्मजिज्ञासा आरभ्यते इत्यपि शक्यमध्याहर्तुम् । तद् यथा– अथ शब्दानुशासनमित्याचक्षते; शब्दानुशासनमारभ्यत इत्येव ह्याचक्षते । अत आह– **यत्रानवसर** इति । अन्यत्र इति सप्तम्यर्थस्त्रलत्र षष्ठ्यर्थे प्रयुक्त इत्याह टीकाकृत्– **अन्यत्र अन्यस्य पदस्य वाक्यस्य** वेत्यर्थ इति । **यत्र** यत् पदं वाक्यं वा विनाऽन्यस्य पदस्य वाक्यस्य वा **अनवकाशः तत्र** तदेव **पदं वाक्यं वा प्रतिष्ठितं** नियमेन स्थितं भवतीति **सतां** शब्दशास्त्रविदां विदुषां **नीति**रिति । निरवकाशत्वं चात्राध्याहरमन्तरा वाक्यार्थानिर्वाहः । तद्यथा माता बालं प्रत्याह– प्रविश पिण्डीमिति । गृहं प्रविश पिण्डीं भक्षयेत्येव तदाह । ननु गेहं प्रविश पिण्डीं खादेत्यपि स्यात् । सत्यं स्यात् । तेन यदर्थं पदं विनाऽन्यार्थस्य पदस्यानवकाश इति व्याख्येयम् ॥

अथ वाक्याध्याहारो यथा शास्त्रयोनित्वादिति । जगत्कारणस्य शास्त्रयोनित्वात् अनुमानतोऽन्ये न कल्पनीया इति वाक्याध्याहारः । एवमुत्तरसूत्रेष्वपि ॥

इदमुक्तं भवति । प्रथमसूत्रे तावत् कर्तव्यार्थं पदं विनाऽन्यस्य पदस्य नावकाशः । नन्वारभ्यते इत्यपि शक्यमध्याहर्तुमित्युक्तम् । दुरुक्तं तत् । अथशब्देनैवाऽरम्भार्थेन तदधिगमात् । तस्मात् कर्तव्येत्येव साधुः पदाध्याहार इति ॥

## वल्लभाचार्योक्तिनिरासः

यत् कश्चिदाह– अथशब्देनैवाऽरम्भार्थेन ब्रह्मजिज्ञासाऽऽरम्भणीयेति बोधसम्भवात् सावकाशतया न कर्तव्यपदाध्याहारो युक्त इति । शाब्दबोधानभिज्ञोऽयं मन्दः । अथशब्द आरम्भमात्रमभिधत्ते, नाऽरम्भणीयत्वं विधत्ते । अतो विध्यर्थलाभाय कर्तव्येति पदमध्याहर्तव्यमिति ॥

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते',
'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः',
'यमेवैष वृणुते तेन लभ्यः',
'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतिस्मृतिभ्यः ॥

---

**'प्रियो हि ज्ञानिनः–'** इति ज्ञानस्य प्रसादसाधनत्वे, **'तमेवं विद्वान्–'** इति प्रसादद्वारेण मोक्षसाधनत्वे, **'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः–'** इति जिज्ञासाया ज्ञानसाधनत्वे प्रमाणम् इति ॥

---

ननु तर्हि आरम्भणीयेति पदमेवाध्याह्रियताम् । किं कर्तव्यपदाध्याहाराग्रहेण । न भोः । कर्तव्यपदे यावान् विधिभरः प्रतीयते न तावानारम्भणीयपदे । अपिचाल्पाक्षरं कर्तव्यपदम् । तत् किमल्पार्थं बह्वक्षरं च मुधा पदमादीयेत ॥

**ब्रह्मसंहितायामिति** । विष्णुसंहिता, ब्रह्मसंहिता, ईश्वरसंहितेति पञ्चरात्रसंहिताभेदाः ॥ ❋ ॥

**'तमेवं विद्वान्'** (तै.आ.३.१२.१७; याजुषे पुरुषसूक्ते १७) इति ज्ञानस्य मोक्षसाधनत्वमाह । तच्च प्रसादद्वारेति गीतावचनादवगम्यते– **प्रियो हीति** । **'यमेवैष वृणुते'** (का.१.२.२३) इति प्रसादस्य मोक्षसाधनत्वमाह । विवृतमेतत् पूर्वमधिकारनिरूपणप्रस्ताव इति नात्र पुनर्व्याचख्यौ टीकाकृत् । भक्तिरधिकाराङ्गमिति सूचयितुं भाष्यकारस्तत्रेमां श्रुतिमुदाजहार । अत्र तु प्रसादस्य मोक्षसाधनत्वे । **जिज्ञासाया ज्ञानसाधनत्व** इति । 'तमेवं विद्वान्' इति पुरुषज्ञानेन मुक्तिमाह । पुरुषस्य नारायणत्वे न विवादः । 'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम्' इति सिद्धतया निर्देशात् । 'पुरुषो हवै नारायणः' इति श्रवणाच्च । ब्रह्मशब्दवत् पुरुषशब्दसमन्वयाय न पृथक् सूत्रं पपाठ सूत्रकृत् । 'पुरुषविधमपि चैनमधीयते' (१.२.२६) इति पपाठ च सिद्धवत्कृत्य । **'प्रियो हि ज्ञानिनः–'** (भ.गी.७.१७) इति स्वतो भगवद्वचनम् । **'यमेवैषः–'** इति कठश्रुतिरात्मज्ञानान्मोक्षमाह । 'नाय-मात्मा–' इत्युपक्रमात् । एवम्– **'आत्मा वा अरे द्रष्टव्यः–'** (बृ.उ.६.५.६) इति बृहच्छ्रुतिश्च । आत्मशब्दश्च विष्णावेव प्रसिद्धः । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति स्मरणात् ।

'कर्म्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।
'मद्ध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ॥
'प्रसादात् त्वधमाद् विष्णोः स्वर्ग्गलोकः प्रकीर्त्तितः ।
'मद्ध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ॥

---

अत एव च नाऽत्मशब्दसमन्वयाय पृथक् सूत्रं पपाठ । किन्तु सिद्धवत्कृत्य पपाठ च '–आत्मशब्दात्'(१.१.६) इति । एतत्सूचनायैवेह एतानि वचनान्युज्जहार भगवान् भाष्यकारः ॥

एतेनेदमप्याह– श्रवणमननध्यानरूपा जिज्ञासेति । तथाच न सन्प्रत्ययार्थभूता इच्छाऽत्र विवक्षितेति चोक्तं भवति । कर्तव्यपदाध्याहारेण चेदमसूचि । इच्छाया नियोगपर्यनुयोगानर्हत्वात् । **इत्यादिश्रुतिस्मृतिभ्य** इति । आदिपदेन 'यस्य प्रसादात्' इति, 'न तादृशी–' इति च टीकोदाहृते द्वे श्रुतिवचने विशिष्य गृह्येते । अन्यानि च तत्संवादीनि श्रुतिस्मृतिवचनानि यथासम्भवम् ॥

अत्यर्थप्रसादस्यैव मोक्षहेतुत्वं वदन्नारदीयवचनमाह– **कर्मणा त्वधमः प्रोक्त** इत्यादिना । **अधमो**ऽल्पफलद इत्यर्थः । तुशब्दो विशेषार्थः । भगवतोऽत्यल्पप्रीतिसाधनत्वं विशेषः । वैष्णवेन केवलेन **कर्मणा** लभ्यः **विष्णोः प्रसादस्त्वधमः** । तुना विष्णोः ज्ञानिप्रियत्वं नाम विशेषमाह– 'ज्ञानी त्वात्मैव मे मतम्' इति । तदेव पुनरवधारयत्युपरिष्टात्– **'प्रसादादधमात्तु'** इति । कर्मणा शुद्धसत्वस्य श्रवणमनननिदिध्यासनेषु क्रमेण प्रवृत्तिर्जायते । तेन **मध्यमः प्रसादः** । मोक्षादवरस्य ज्ञानफलस्य प्रापकत्वं मध्यमत्वम् । **ज्ञानसम्पत्त्या** अपरोक्षज्ञानेन लभ्यो **विष्णोः प्रसादस्तूत्तमः** । तुनाऽस्य प्रसादस्य सर्वाधिकत्वमाह । त्रिविधानां प्रसादानां प्रातिस्विकं फलमाह– **प्रसादात् त्वधमा**दिति । ननु 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति भगवद्वचनविप्रतीपमेतत् । न विप्रतीपम् । कर्मणा सहैव संसिद्धिमास्थिता इति हि गीतार्थः । अत्र तु प्रचुरं कर्म, अप्रचुरं च ज्ञानं स्वर्गफलकमुच्यते । **प्रकीर्तितः** प्राज्ञैः कथितः । प्रकटमसन्दिग्धतया कीर्तितः ॥

**मध्यमाज्जनलोका**दिरिति । जनलोकादिरिति तत्पुरुषो बहुव्रीहिश्च । जनलोकस्यादिरिति महर्लोकः । जनलोक आदिरस्य त्रिकस्येति जनलोकादिरिति जनस्तपः सत्यं च । तथाहि भागवते–

'त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ।
'योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः ।
'महर्जनस्तपःसत्यं भक्तियोगस्य मद्गतिः' (११.२४.१४) इति ॥

## अपरोक्षज्ञानेषु वैविध्यम्

अत्र तात्पर्यवचनम्– 'महरादीनामपि भक्तियोगोऽपेक्षित एव । आधिक्येनापेक्षितत्वात् 'भक्तियोगस्य मद्गतिः' इत्युक्तम्–

'नैव विष्णावभक्तस्य महर्लोकादिका गतिः ।
'भक्त्युद्रेकात् क्रमादूर्ध्वं यावद् विष्णोः प्रवेशनम् ॥

'एवं ज्ञानं विना नापि महर्लोकादिका गतिः ।
'ज्ञानोद्रेकात् क्रमादूर्ध्वं यावद् विष्णोः प्रवेशनम् ।
'नित्यशो भगवद्रूपस्याऽपरोक्ष्येण दर्शनम् ॥

'मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् ।
'ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः ॥

'सदैवाखण्डितध्यानं तप इत्युच्यते बुधैः ।
'अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ॥

'अपरोक्षदृशा नित्यमेकमात्रायुजा युतम् ।
'योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ॥

'तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।
'पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् ॥

'पादयोगान्महर्लोको जनलोकस्तु योगतः ।
'तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचित्' इति ध्यानयोगे' इति ॥

'योगेश्वराणां गतिमामनन्ति बहिस्त्रिलोक्याः पवनान्तरात्मा ।
'न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम्' (२.२.२४)
इति च भागवते ॥

तत्र तात्पर्यम्–

‘ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान् ।
‘तत्र मुख्या हरिं यान्ति तदन्ये वायुमेव तु ॥

‘अपक्वा ये न ते यान्ति वायुं वा हरिमेव वा ।
‘स्थानमात्राश्रितास्ते तु पुनर्जातिविवर्जिताः’ इति ब्रह्मतर्के’ इति ॥

अत्रैव चोपरि तृतीये भाष्यवचनम्–

‘सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्’ इति हि नारायणतन्त्रे ।
‘मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया’ इति,
‘दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचित्’ इति चाध्यात्मे’ (३.३.५३) इति ॥

सर्वेषां प्रमाणानामविरोधेनायमिह निर्गळितार्थः– स्वःपर्यन्तो लोकः कर्मसाध्यः, ततः परे ज्ञानसाध्या इति तावत् स्थितम् । ज्ञानमित्यपरोक्षमेव । न परोक्षम् । ‘पुनर्जातिविवर्जिताः’ इति ब्रह्मतर्कवचनात् । अपक्वेनापरोक्षज्ञानेन महरादयः सत्यान्ताश्चत्वारो लोकाः । तथाच **श्रवणादिभिः** श्रवणमननध्यानसहकृतया भक्त्या जनितेनापक्वापरोक्षेण **मध्यमः प्रसाद** इत्यर्थः । ज्ञानसम्पत्त्या परिपक्वेनापरोक्षेण, महाज्ञानेनेति यावत्, **उत्तमः प्रसाद** इति सतां **मतः** पन्थाः ॥

ननु भगवदपरोक्षे जातेऽपि केयमपक्वता? अपरोक्षस्य पादयोगयोगतपोज्ञानान्यतमत्वं महाज्ञानादवरत्वं वाऽत्रापक्वत्वं विवक्षितम् । तथाह्यस्मत्कृतायां भागवततात्पर्यटिप्पण्याम्–‘भूर्भुवः स्वरिति लोकत्रयमपरोक्षज्ञानविधुराणां कर्मिणामपि प्राप्यम् । तदेतदुक्तम्– ‘त्रिलोक्यां गतयः सर्वाः कर्मणां त्रिगुणात्मनाम्’ इति । तदुपरि चत्वारो लोका महर्जनस्तपः सत्यमिति । परमपदं च वैकुण्ठाख्यम् । अपरोक्षज्ञानिनामेवात्र सञ्चार इत्येतदत्रोच्यते– **योगस्येत्यादि** । योगो द्विविधः– पादयोगो योग इति । ज्ञानं च द्विविधम्– ज्ञानं महाज्ञानमिति । तत्र पादयोगेन महर्लोकः । योगेन जनलोकः । तपसा तपोलोकः । ज्ञानेन सत्यलोकः । महाज्ञानेन विष्णुलोक इति व्यवस्था । मात्राकालस्य चतुर्थभागावच्छेदेन विद्युच्चपलं भगवदापरोक्ष्यं येनोपासनेन भवति तावदुपासनं तदनुगुणा भक्तिश्च पादयोगशब्देनोच्यते । ततोऽधिका भक्तिः, अधिकं च साधनम्, तेन च मात्राकालावच्छेदेनापरोक्षं च योगपदेनोच्यते । ताभ्यां महर्जनलोकौ । ततोऽधिका भक्तिः, अधिकं चोपासनम्, ततः

'श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
'साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।
'न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन' इति नारदीये ॥ * ॥

---

षण्मात्राकालमपरोक्षदर्शनं तप इत्युच्यते । तदीदृशं तपस्तपोलोकं गमयति । ततोऽप्यभिवृद्धया भक्त्योपासनया च यन्मुहूर्तव्याप्यपरोक्षज्ञानं तज्ज्ञानम् । तद्वान् सत्यलोकमर्हति । एतावदपक्कापरोक्षस्य क्षेत्रं भवति । ततोऽप्यतिवृद्धया स्वयोग्यतानुगुणं परिपूर्णया, अत एव परिपक्कया भक्त्या परिपक्कमपरोक्षज्ञानं भवतीति तदेतन्महाज्ञानमुच्यते । तदेतत् पूर्णभक्तिरूपं महाज्ञानं मोक्षं गमयतीति' इति ॥

सोऽयमुपासनाविभागः प्रतीकालम्बनानां भवति । अथाप्रतीकालम्बनानामपि किञ्चिदिवेदमन्वेति– **मध्यमाञ्जनलोकादिरिति** । तथाहि साक्षात्कृतसर्वगतब्रह्मरूपाणां ब्रह्मादीनामस्ति रामकृष्णाद्य-वतारसाक्षात्कारोऽपि । सोऽयं मध्यमः प्रसादः । तेन तेषां यावन्मोक्षं सत्यलोकादिप्राप्तिरिति । प्रसादस्य मध्यमत्वं नाम मोक्षेतरज्ञानसाध्यसुखभोजकत्वम् । तथाहि पण्डिताचार्यवचनम्, 'न सामान्यात्–' (३.३.५३) इति सूत्रव्याख्याने– 'दर्शनमात्रान्मोक्ष इत्यनङ्गीकारे केषाञ्चिद् दर्शनानां नैष्फल्यं स्यात् । तथाच सर्वगतत्वदृष्ट्यादीनामवताराददिदृष्टयो नैवाऽकाङ्क्ष्येरन्नित्यत आह– न सामान्यादित्यादि सूत्रम् । ब्रह्मविषयत्वेन स्वयोग्यरूपदर्शनेन समानतया वर्तमानं सामान्यदर्शनम् । तेनोर्ध्वलोकप्राप्तिरेव' इत्यादि ॥

यान्येव श्रवणादीनि मध्यमप्रसादसाधनानि तान्येव परिपक्कानि उत्तमप्रसादमपि साधयन्तीत्याह– **श्रवणमित्यादिना** । मोक्षयोग्य**ज्ञानसम्पत्तौ** । 'कर्मणा ज्ञानमातनोति', 'कर्मणैव हि संसिद्धिमास्थिताः' इत्यादिना कर्माप्यप्रधानं स्यादिति तद्व्यावृत्तये **प्रधानं साधनमित्याह** । सुखप्रारब्धसमानाधिकरणं श्रवणादिचतुष्टयं मध्यमप्रसादहेतुः । तद्विरहितं तदेवोत्तमप्रसादहेतुः । अपरोक्षत्वसामान्यात् । **नान्यत्** किमपि साधनान्तरं ज्ञानिभि**रिष्यत** इति । 'चैव', 'तथैवच' इत्यादिकं समुदितं समुच्चयार्थे वर्तत इति पदविदो वदन्ति । अथाप्यर्थविशेषानुसन्धानं महते फलायेति तदन्वेषणीयमिह भवति । **'श्रवणं मननं च'** इति **'ध्यानं भक्तिश्च'** इति चकारौ परस्परसमुच्चये । प्राधान्ये च । श्रवणादपि मननं प्रधानमिति 'मननं च' इत्याह । श्रवणादित्रयादपि भक्तिः प्रधानेति **'भक्तिश्च'** इत्याह । न ह्यभक्तेन

ब्रह्मशब्दश्च विष्णावेव–

'यमन्तः समुद्रे कवयोऽवयन्ति–' इत्याद्युक्त्वा, 'तदेव ब्रह्म परमं कवीनाम्' इति हि श्रुतिः । 'तन्नो विष्णुः–' इति वचनाद् विष्णुरेव हि तत्रोच्यते ॥

---

'**ब्रह्मशब्दश्च विष्णावेव**' इत्यादेरयमर्थः–

'सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्म्मणि' ।

'ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः' ।

'अहं सुवे पितरमस्य मूर्द्धन्मम योनिरप्स्वान्तःसमुद्रे' ।

'समुद्रेऽन्तः कवयो विचक्षते मरीचिनां पदमिच्छन्ति वेधसः' ।

इत्यैतरेयश्रुत्युदितं विष्णुमेव हि 'अम्भस्यपारे भुवनस्य मद्ध्ये–' इत्याद्या तैत्तिरीयश्रुतिः, 'यस्मिन् देवा अधि विश्वे निषेदुः', '**यमन्तः समुद्रे कवयोऽवयन्ति**', 'यतः प्रसूता जगतः प्रसूती' इति यच्छब्दैः परामृश्य, 'विवेश भूतानि चराचराणि' इति विष्णुशब्दयोगेन चानूद्य, '**तदेव ब्रह्म**' इत्याह । '**तन्नो विष्णुः–**' इति च स्पष्टं जगौ । यश्च देवतामीमांसान्ते 'विष्णुरेव हि तच्छ्रुतेः', 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति सर्वदेवोत्तमत्वेन प्रतिज्ञातो ब्रह्मत्वेन चोक्तः, स एव ब्रह्मशब्देनोत्तरमीमांसायां विचार्य्यत्वेनोच्यते ॥

---

कृतं श्रवणादिकं भगवद्दर्शनाय भवति । श्रवणादिचतुष्टयं साधनमेव इत्येवकारान्वयः । चतुष्टयमेव साधनमिति च । तमेवान्ययोगव्यवच्छेदं मुखत आह– **नान्यदिष्यत** इति । अर्थान्तरं च पूर्वमुक्तम् । यथा श्रुत्युदितं **तथैव भक्तिरिति** । 'यथा देवे तथा गुरौ' इति श्रुतिं चानेन स्मारयति । एतेन भगवति सर्वाधिका भक्तिः, ब्रह्मादिषु परिवारतया भक्तिः, स्वगुरौ च तदुचिता भक्तिः करणीयेत्युदितं भवति । एवकारेणावधृतं चायोगव्यवच्छेदं तात्पर्यद्योतनाय स्फुटमभिधायोपसंहरति– **नचैतानीति** । **एतानि** चत्वारि प्रधानसाधनानि । **कुतश्चन** साधनान्तरात् ॥ ✲ ॥

यथा पुरुषात्मशब्दौ तथा **ब्रह्मशब्दश्च विष्णावेव** । अथच विष्णुस्तुतिरूपाया ऐतरेयश्रुतेः संवादेन तैत्तिरीयश्रुतिपठितः **ब्रह्मशब्दश्च विष्णावेव** । तेन सूत्रपठितः **ब्रह्मशब्दश्च विष्णावेव** इत्याशयवानाह– **सप्तार्द्धगर्भेत्यादि**–

**'सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।**
'ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि यन्ति विश्वतः' (ऋ.१.१६४.३६)
इति ॥

**'ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।**
'यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते' (३९)
इति चास्यवामीये मन्त्रद्वयम् ।

## सप्तार्द्धगर्भीयश्रुत्यर्थः

प्रथममन्त्रस्य पूर्वार्धं टीकाकृतैव व्याख्यातम्– 'सा च प्रशासनात्' (१.३.११) इति सूत्रभाष्य-टीकायाम्– 'सप्त महदादिदेवता ब्रह्मादयः अर्द्धाः आ समन्तादृद्धाः । गर्भा गरणेन भ्रियन्त इति । भूमा वननीयश्चेति भुवनः । भुवनस्य विष्णोः रेतोरूपाश्च ते । तस्यैव प्रदिशा प्रदेशेनाऽदेशेनाऽज्ञया विविधधर्मणि तिष्ठन्ति' इति ॥

अयमर्थः– महदाद्याः प्रकृतिविकृतयः सप्त । महानहङ्कारः पञ्च तन्मात्राणि च । तद्देवताश्च सप्त । महतो ब्रह्मा । अहङ्कारस्य गरुडशेषरुद्राः । पञ्चतन्मात्राणां सुपर्णीवारुणीपार्वत्यः । शब्दस्पर्शयोः सुपर्णी । रूपरसयोः वारुणी । गन्धस्य पार्वती । इति ब्रह्माद्याः **सप्त** । कीदृशास्ते? इन्द्रादिभ्यो देवेभ्य आ समन्तात् ऋद्धाः इत्यर्द्धाः । गरणेन स्तवनेन साधकैर्हृदये भ्रियन्त इति गर्भाः । अर्द्धाश्च ते गर्भाश्च । पूर्णो भवतीति भूः भूमा । वन्यते सर्वैः सेव्यत इति वनः । भूश्चासौ वनश्चेति भुवनः । भूशब्दस्य दीर्घलोपः 'सर्वानुभुम्' इतिवत् । **भुवनस्य विष्णोः रेतः** सृष्टिसारभूताश्च ते । 'प्रजापते रेतो देवाः' इति श्रुतेः । अत एव ते **विष्णोः प्रदिशा** आज्ञया विविधधर्मवति स्वस्वस्थाने कर्मणि वा **तिष्ठन्तीति** । ते मनसा मननेन धीतिभिर्ध्यानप्रकारैश्च विश्वतः विश्वस्माद् देवतागणात् उपरि भवन्ति । द्वितीयार्थे वा तसिः– विश्वं परि भवन्तीति । **परिभुवः** सर्वं परिभाव्य सर्वोपरिगतास्त एव मुख्यतो **विपश्चित** इति ॥

‘विष्णोरादित्यस्य’ इति सायणः । तस्योत्तरं भगवत्पाद एवाऽह– **‘नच प्रसिद्धार्थं विनाऽन्यो युज्यते’** इति, **‘नचाविरोधे प्रसिद्धः परित्यज्यते’** इति च । श्रुतिर्हि प्रथमं साधनं तात्पर्यनिर्णये ॥

न केवलं ब्रह्माद्याः सप्तैव, किन्तु **विश्वे** सर्वेऽपि **देवाः** सर्वाधिके **यस्मिन् निषेदुः** आश्रिता वर्तन्ते तस्मिन् गुणैरोतत्वाद् विशेषेणावतीति सर्वरक्षकत्वाद् वा, सर्वगतत्वाद् वा व्योम्नि, आऽदि-क्षान्तैर्वर्णैर्वाच्यत्वेन रमत इति, अक्षयत्वादभीष्टक्षरणादक्षेषु रमणाच्च **अक्षरे परमे** ब्रह्मणि विष्णवाख्ये **ऋचः** तदुपलक्षिताः सर्वे वेदा वाचकत्वेनाऽश्रिता वर्तन्ते । ‘सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः प्राण एव’ इति श्रुतेः । **यः तत्** विष्णवाख्यं परमाक्षरम्, **तत्** विष्णोः सर्वपदवाच्यत्वं वा **न वेद स** विनाऽर्थज्ञानं वृथा पठितया **ऋचा किं करिष्यति** । भारहरः केवलमयं न फलभाक् । **ये** पुनस्**तद्विदुः त एव इमे** सम्पूर्णे विष्णावासते स्थिता भवन्ति, पूर्वं मनसा पश्चात् स्वरूपतश्च । सर्वदेवाधार एव सर्ववेदवाच्य इत्युक्तं भवति । ‘यो देवानां नामधा एक एव’ इति चान्या श्रुतिर्जगौ ॥

आभ्यां मन्त्राभ्यां ब्रह्मादिसकलदेवोत्तमत्वमुदितम् । अथ लक्ष्म्या अप्युत्तमत्वं लक्ष्मीसूक्तेनैवाऽह– **अहं सुव** इति–

> **‘अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वान्तः समुद्रे।**
> ‘ततो वि तिष्ठे भुवनाऽनु विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि’ (१०.१२५.७)
> इति समग्रो मन्त्रः ॥

## अम्भ्रिणीशब्दनिर्वचनेन सायणादिमतनिरासः

अहमिति मन्त्रद्रष्ट्री स्वयं लक्ष्मीरम्भ्रिणीत्युदिता । अत्र सायण आह– ‘अम्भृणस्य महर्षेर्दुहिता आम्भृणी वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता’ इति । सर्वमिदमसङ्गतम् । नह्यम्भृणो नामर्षिः क्वापि प्रसिद्धः । तेन आम्भृणीत्यपपाठोऽयम् । महानत्र पाठभ्रमः । अम्भृणीत्यपरे । अम्भ्रणीत्यन्ये । श्रुतिदुष्टानामियमपश्रुतिः । अम्भ्रिणीत्येव साधुपदम् । ‘वागाम्भृणी तुष्टावाऽत्मानम्’ इत्यनुक्रमणिकापाठोऽपि भ्रान्तिमूलः । ‘वागम्भ्रिणी तुष्टावाऽत्मानम्’ इत्येव युक्तः पाठः । वेदवाङ्मानिनी अम्भ्रिणीनामा लक्ष्मीरित्यर्थः । तथाहि पैङ्गिश्रुतिः–

> ‘श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा’ इति ॥

का निरुक्तिः– अम्भसि रमत इत्यम्भ्रो नारायणः । तस्येयमम्भ्रिणी भवति । अकारवाच्यं नारायणं बिभर्तीति च । यदपि सायणेनोक्तम्– 'सर्वगतः परमात्मा देवता' इति । या यत्र स्तूयते सा तस्य देवतेति हि नियमः । 'स्वात्मानमस्तौत्' इति स्वयमेवाऽह । तेन अम्भ्रिणी वागेव देवतेति वक्तव्यम् । युक्तमाह बृहद्देवतायां शौनकः–'अहं वाक्सूक्तम्' इति । वाग्देवत्यं सूक्तमित्यर्थः । सर्वासङ्गतीनामाकरः सायणः । तस्मात् वागम्भ्रिणी ऋषिः, सैव देवतेति युक्तम् । तदन्तर्यामिणो नारायणस्य स्तुतिरिति त्वन्तर्यामिवादिनां तत्ववादिनां मतम् । न सायणेनैवं वक्तुं शक्यम् । नन्वात्मानमेव ब्रह्मत्वेन पश्यन्ती एवं तुष्टावेति तन्मतम् । तथाऽप्यात्मस्तुतिरित्येव वक्तव्यं न ब्रह्मस्तुतिरितीति सर्वथाऽनादरणीयं तद्वचः । बृहद्देवताविरोधाच्च ॥

अयं मन्त्रार्थः– अस्य जगतः मूर्ध्नि सर्वोपरि स्थितम्, जीवोत्तममित्यर्थः, अस्य पितरं जनकं चतुर्मुखमहं सुवे सुषुवे । चतुर्मुखस्य विष्णुः पिताऽहं मातेत्यर्थः । नाभिकमलाद्धि चतुर्मुखो बभूव । तत् कथं रमाया मातृत्वम्? नाभिकमले जननात् पूर्वं रमायाः सकाशादपि ब्रह्मणो जननमस्ति । तथाहि निर्णये–

'पुनश्च माया त्रिविधा बभूव सत्वादिरूपैरथ वासुदेवात् ।
'सत्वात्मिकायां स बभूव तस्मात् स विष्णुनामैव निरन्तरोऽपि ।
'रजस्तनौ चैव विरिञ्च आसीत् तमस्तनौ शर्व इति त्रयोऽस्मात्'
(३.१९–२०) इति ॥

## प्राचीनटीकायामर्थविशेषः

तथाच पितुर्नाभेरुत्पन्नः । मातुर्मूर्ध्नि सीमन्तप्रदेशे । तदेतदाह– **अहं सुवे पितरमस्य मूर्धन्निति** । 'अहमस्य पितरं ब्रह्माणं मूर्ध्नि सुषम्नया सुषुवे' इति तत्वमञ्जरी । 'अस्य जगतः पितरं ब्रह्माणं मूर्धनि सीमन्तप्रदेशे सुवे जनयामि' इति पद्मनाभतीर्थीयम् । ममापि योनिः कारणभूतः समुद्रेऽन्तरप्सु नारायणः । ततो नारायणस्यानुग्रहादेव विश्वानि भुवनान्यनुविश्य विविधं तिष्ठामि । अमूं द्यामुत प्रकाशरूपं वैकुण्ठलोकमपि वर्ष्मणा उपस्पृशामि व्याप्नोमि । न ज्ञानमात्रेणेति ॥

'पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।
**'समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः'**
(१०.१७७.१) इति चतुर्थो मन्त्रः ॥

## पतङ्गमन्त्रार्थः

पतङ्ग ऋषिः। जगती च्छन्दः। प्राणस्थः परमात्मा देवता। अस्योत्तरार्द्धं किञ्चिदिव व्याख्यातं टीकाकृतैव 'अन्तस्तद्धर्मोपदेशात्'(१.१.२९) इति सूत्रभाष्यव्याख्यायाम्– 'कवयः सन्तो वेधसः मरीचीनामाश्रयभूतं विचक्षणायेच्छन्ति। 'मरीचिर्मितरुक्त्वतः' इति वचनान्मरीचिर्जीवः' इति। तथाचायमर्थः–पततीति पतङ्गः, अग्निर्वायुरादित्यश्च। अत्र तु विशिष्य वायुवचनः। 'अपश्यं गोपाम्' इत्युपसंहारात्। असुषु प्राणेषु रममाणस्य भगवतो मायया इच्छया अक्तं स्वकर्मणि सक्तम्, भगवताऽऽविष्टं वा, पतङ्गं सदागतिं वायुम्, तत्स्थं च परमात्मानम्, विपश्चितः हृदा प्रीतिपूर्वकं मनसा मननेन साक्षात्कुर्वन्ति। 'वायौ मुख्यधिया' इति स्मरणात्। मनुष्योत्तमाः पतङ्गमग्निस्थं ऋषयश्च पतङ्गं सूर्यस्थं पश्यन्तीति चावगन्तव्यम्। कोऽयमग्निवाय्वादित्यस्थः पतङ्गः? आह– **समुद्रे अन्तः कवयो विचक्षते**। तमेतं क्षीरसमुद्रशायिनं प्रळयार्णवस्थं वा नारायणं कवय आचक्षते। यं च उपासनां विदधत इति वेधसो भगवदुपासका ब्रह्माद्या ज्ञानिनः मरीचीनां जीवानां पदं परमगम्यमिच्छन्ति। परमगम्यत्वेनोपासत इत्येतत्। मितरुचयो मरीचय उच्यन्ते। अस्मिन् पक्षे 'वि चक्षते' इति द्वे पदे। चक्षत इति लटो बहुवचनम्। अथच 'विचक्षते' इत्येकं पदमिति विवक्षित्वाऽर्थान्तरमगादि पण्डिताचार्येण– 'विचक्षते विचक्षणाय' इति। विचक्षयते इत्यर्थे विचक्षत इति च्छान्दसं रूपमित्युक्तं भवति। तथाचायमर्थः– मरीचीनां पदमाश्रयभूतं समुद्रान्तस्थं नारायणं कवयः स्वतो ज्ञानिनः पुनरधिकतया ज्ञातुमिच्छन्तीति। अत्र सर्वजीवोत्तमाभ्यां ब्रह्मवायुभ्यामप्यधिक उत्तमोत्तमो नारायण इत्युदितम्॥

एवमैतरेयश्रुतौ प्रथममण्डले पठितयोर्द्वयोः, चरममण्डले च द्वयोर्मन्त्रयोरुद्धरणेन, उपक्रमोपसंहाराभ्यां मध्यगता अपि मन्त्रा विष्णुपरा इति सूचयामास॥

यानि ऐतरेयश्रुतिपठितानि विशेषणानि तान्येव तैत्तिरीयश्रुतौ विष्णुपरतयाऽवधार्यन्त इत्यतश्चैतत् सिद्धमित्याह– **अम्भस्यपार** इत्यादिना–

> **अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।**
> **शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः॥** (ऐ.आ.१०.१.१.)

यस्मिन्निदं सं च वि चैधि **यस्मिन् देवा अधि विश्वे निषेदुः ।**
तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् ॥ (२)

येनाऽवृतं खं च दिवं मही च येनाऽदित्यस्तपति तेजसा भ्राजसा च ।
**यमन्तः समुद्रे कवयोऽवयन्ति** तदक्षरे परमे प्रजाः ॥(३)

**यतः प्रसूता जगतः प्रसूती** तोयेन जीवान् व्यससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूंश्च **विवेश भूतानि चराचराणि** ॥ (४)

अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥ (५)

तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् ।
इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥ (६)

इति समग्रा नारायणोपनिषन्मन्त्रानुपूर्वी ॥

## ‘अम्भस्यपारे’इति श्रुत्यर्थः

अयं मन्त्रार्थः– सृष्टेः पूर्वमपारेऽम्भसि प्रळयार्णवे गतः । सृष्टेरनन्तरं चतुर्दशभुवनस्य मध्ये गतः । नाकस्य पृष्ठे वैकुण्ठे च गतः । एवं बहिर्महतो महीयान् । शुक्रेण शोकरहितेन तेजोरूपेण सूर्यादिज्योतींषि समनुप्रविष्टः । स एव वर्धमानाः प्रजाः पालयन् गर्भेऽन्तश्चरति । अत्र ‘अम्भस्य+पारे’ इति पदपाठं पठन्तश्छान्दसाः शोच्याः । यस्मिन्नाश्रितमिदं सम्यक् च विविधं चैधते । यस्मिन् विश्वे देवा अधिनिषेदुः । तदेव भूतम्, तदेव भव्यं भावि, आततं तदेवेदं वर्तमानं च । तदेतत् अक्षरे नाशरहिते परमे व्योमन् अव्याकृताकाशे आततम् । आः आसीदिति वा । येन खमावृतम् । दिवं महीं चेति प्रथमार्थे । द्यौश्च मही चाऽवृते । येन तेजसा समेधित आदित्यः भ्राजसा मण्डल-प्रभया जगत् तपति । यमन्तः समुद्रे कवयोऽवगच्छन्ति । तस्मिन् विनाशवर्जिते परमात्मनि प्रजा आश्रिताः । यतः जगतः प्रसूती जननी प्रकृतिः, प्रसूता प्रादुर्भूता सती, तोयेन तन्मिश्रितैः पञ्चभूतैः, तोयेन कर्मणा वा साधनभूम्यां जीवान् व्यससर्ज विससर्ज । अडागमश्छान्दसः । यदोषधीभिः सह पुरुषान् पशूंश्च चराचराणि भूतानि च विवेश । अतः परमधिकं नान्यदस्ति । तदणीयसमणोर-

णीयः । यन्महतो महत् परात् परं च । न चक्षुषा दृश्यत इत्यव्यक्तम् । स्वप्रसादं विना न दृश्यत इति वा । अथाप्यनन्तरूपम् । विश्वान्तर्गतम् । तमसः परस्तादप्राकृतदेहम् । वेदैः ऋतमवगतम् । सत्यं सद्भिर्गम्यं ज्ञेयं च । तदेव कवीनां मते परमं ब्रह्म । 'ऋतं सत्यं परं ब्रह्म' इति श्रुतिः । साधकैः क्रियमाणं इष्टं यागादि पूर्तं तटाकादि च, सर्वकर्मोपलक्षणम्, फलदानेन बिभर्ति । एवं जातं जायमानं च विश्वं बिभर्ति, भुवनस्य नाभिराश्रयः ॥

## प्राचीनटीकायामर्थविशेषः

तत्वमञ्जर्यां केचनार्थविशेषाः– 'तदक्षरे तस्मिन्नक्षरे । यतः पराधीनविशेषं प्राप्ता श्रीः । तोयेन कर्मणा जीवान् भूम्यां प्रकृत्यां व्यससर्ज व्याससर्ज । छन्दोभङ्गपरिहारार्थं ह्रस्वत्वम् । 'इन्द्रावरुण वामहम्' इतिवत् । यत् परमक्षरं नियमनार्थं चराचराणि भूतानि विवेश । पुरुषान् पशूंश्च ओषधीभिः व्रीह्याद्योषध्यन्तर्यामिरूपैश्च विवेश । अतस्तत्र विशेषसन्निधानम् । अतोऽन्यत् परं विशिष्टं नास्ति । अथवा अन्यत् जगत् अतः परं विशिष्टं न । किन्तु एतत् परात्परमक्षरं प्रति यत् गच्छत् प्रळये मुक्तौ च । यदव्यक्तं सूक्ष्मं ब्रह्म एकमपि विशेषेणानन्तरूपम् । विश्वं पूर्णम् । तमसः परस्तात् प्रकृतेर्बहिः । प्रकृतिकार्येभ्यो जन्मादिभ्यो बाह्यमित्यर्थः । ऋतं शश्वदेकप्रकारम् । सत्यं साधुगुणपूर्णम्' इति ॥

भाष्ये आहेत्यध्याहारः– **'तदेव ब्रह्म परमं कवीनामिति हि आह श्रुतिरिति** । अत्र समुद्रान्तस्थत्वादिलिङ्गैः विष्णुरेव ब्रह्मेति स्फुटम् । नारायणोपनिषद्गता एत इति श्रुत्या च विष्णुपरत्वमवसीयते । न केवलं तावदेव । **'तन्नो विष्णुः'** इति स्फुटं विष्णुनामनिर्देशाच्च । तथाहि विष्णुगायत्री– 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' (तै.आ.१०.१.३०) इति । विष्णुरेव हि तत्रोच्यते । तेन सूत्रगतः ब्रह्मशब्दश्च विष्णावेव ॥

## देवतामीमांसासंवादः

ननु गायत्र्याः प्रथमपादे नारायणशब्दोऽपि श्रूयते– नारायणाय विद्मह इति । तेन ब्रह्मशब्दश्च नारायण एवेति च शक्यं वक्तुम् । तेनोपक्रमसंवादश्च स्यात् । सत्यम्, शक्यं वक्तुं नारायण एवेति । अथापि विष्णुपदप्रयोगेऽन्यदेवासाधारणं कारणमस्तीत्याह– **यश्च देवतामीमांसान्त** इति । **'विष्णुरेव हि तत्रोच्यते'** इति भाष्यसूचितोऽयमर्थः । कर्ममीमांसा देवतामीमांसा ब्रह्ममीमांसा चेति विंशतिलक्षणमेकं

शास्त्रमिति परेऽप्याचक्षते । तत्र प्रथमं द्वादशलक्षणं कर्ममीमांसाशास्त्रम् । ततश्चतुर्लक्षणं देवतामीमांसा-शास्त्रम् । तत्रान्तिमे द्वे सूत्रे– 'विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति । ततश्चतुर्लक्षणं ब्रह्ममीमांसाशास्त्रम् । तस्याऽदिमं सूत्रम्– 'अथातो ब्रह्मजिज्ञासा' इति । तथाचाव्यवहितपूर्वसूत्रे स्वतो भगवता बादरायणेन विरचिते विष्णुं ब्रह्मेत्याचक्षत इत्युक्तम् । अतोऽत्रापि सूत्रे तदनुवृत्त्या **ब्रह्मशब्दो विष्णावेव** ॥

एतेन 'ब्रह्मसूत्रसङ्ख्येयत्तासूचनार्थं विष्णुपदोपादनम्' इति प्रज्ञावाद एवेत्यवधार्यते । नापि तावन्ति सूत्राणि (५६४) मूलकोशेषु पठ्यन्ते । किन्तु ५६२ सूत्राण्येव । तदिदमात्मशब्दोदितम्– म इति ५ । त इति ६ । आ इति २ ॥

## अनुव्याख्यानविरोधपरिहारः

ननु 'स विष्णुराह हि' इत्युपान्त्यसूत्रम् । न 'विष्णुरेव हि तच्छ्रुतेः' इति । अनुव्याख्यानविरोधात् । तथाहि तत्र भगवत्पादवचनम्–

> 'स्वयं भगवता विष्णुर्ब्रह्मेत्येतत् पुरोदितम् ।
> 'स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥
>
> 'आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ।
> 'मध्यं तदाज्ञया पैलशेषाभ्यां कृतमञ्जसा ।
> 'अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत्' इति ॥

न तावत् 'स विष्णुरेव हीत्यन्ते' इत्येव मूलपाठः स्यादिति शक्यं वदितुम् । अनुपलम्भात् कोशेषु, अपरिग्रहाच्च पद्मनाभतीर्थादिभिः । तथाहि सन्न्यायरत्नावल्याम्– 'देवताकाण्डस्यान्ते 'स विष्णुराह हि', 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति पूर्वमेव सूत्रकृतोक्तम्' इति । नाप्ययमर्थानुवादः । सन्न्यायरत्नावळ्यादिविरोधादेव । तर्हि स एव सूत्रमूलपाठोऽस्तु । तदपि न सम्भवति । तत्वप्रदीपादि-विरोधादेव । तर्हि कथं निर्णीयेत । प्रायः सन्देह एव शरणम् । यत्र साक्षाच्छिष्यावेव विवदेते इव तत्र कथङ्कारमहो वयं निर्विवादं निर्णयेम, अयमेव मूलपाठः नायमिति । एवं तु सम्भाव्यते– 'स विष्णुराह हि । विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति देवमीमासान्ते त्रीणि सूत्राणि क्रमिकाणीति । अयमर्थः– सः वेदेषु ब्रह्मेत्युदितः विष्णुः । आह हि भगवती स्मृतिः–

नचेतरशब्दात् तत्प्राप्तिः–

'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।

'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'

इति भाल्लवेयश्रुतेः ॥

---

**न चेतरशब्दात् तत्प्राप्तिः** । न च 'तदेवाग्निस्तद्वायु(स्तत्सूर्य्य)स्तदु चन्द्रमाः' इत्यादिशब्दात्, तत्रतत्र रुद्रादिशब्दाच्च तेषां ब्रह्मत्वप्राप्तिः । **विश्वानि नामानि लोकेऽभितो न सन्ति**

---

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति । तथाऽपि विष्णुरेवेति कथं निर्णयः? तच्छ्रुतेः 'तदेव ब्रह्म परमं कवीनाम्' इति सावधारणश्रुतेरिति ॥

ननूत्तरमन्त्रेऽग्न्यादीनामपि ब्रह्मशब्दवाच्यत्वमुच्यते–

**'तदेवाग्निस्तद् वायुस्तत् सूर्यस्तदु चन्द्रमाः ।**

'तदेव शुक्रममृतं तद् ब्रह्म स प्रजापतिः' (१०.१०.७.) इति ॥

तेन ब्रह्मशब्दो विष्णावपि स्यात् । विष्णावेवेति न युक्तं वचः । अपि च एतस्मिन्नेवानुवाके गायत्रीप्रकरणे बहवो देवाः प्रस्तुताः । 'पुरुषस्य विद्महे । सहस्राक्षस्य महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात्' (१०.१.२३) इति, 'तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्' (२४) इति च रुद्रः । 'वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात्' (२९) इति चतुर्मुखः । 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' (३०) इति विष्णुः । एवमन्ये गरुडादयोऽप्युच्यन्ते । एवं स्थिते मध्यपतितामेकां विष्णुगायत्रीमुद्धृत्य **'तन्नो विष्णुरिति वचनाद् विष्णुरेव हि तत्रोच्यते'** इति त्वाहोपुरुषिकामात्रम् । शक्यमन्यथाऽपि वक्तुम्– 'तन्नो रुद्र इति वचनाद् रुद्र एव हि तत्रोच्यते' इत्यादि ॥

तामेतां शङ्कामुपस्थापयति भाष्यकारः– **नचेतरशब्दात् तत्प्राप्तिः** । तदेतद् व्याचष्टे टीकाकृत्– **नच तदेवेत्यादिना** । इतरेषां अग्निवाय्वादीनां **शब्दात्** तेषां अग्निवाय्वादीनां तस्य ब्रह्मशब्दवाच्यत्वस्य **प्राप्तिः** इत्यर्थमभिप्रेत्याऽह– **तेषां ब्रह्मत्वप्राप्तिः** । भाल्लवेयश्रुत्यर्थमाह– **विश्वानि नामानीति** । **मुख्यतो न सन्तीति** । **अभि** मुख्यार्थाभिधायकाः सन्तः न सन्तीत्यर्थः । **यं च वाचकत्वेनेति** । सर्वाणि

मुख्यतो न सन्ति, न मुख्यतो लोकवाचकानि । किन्तु यतो विष्णोरस्य जगतोऽ**नृतस्य** जन्मलयादिकं **सर्वमाविरासीत्**, यं च वाचकत्वेन **नामानि** '**आ**' समन्ताद् **विशन्ति तं विष्णुमुत्तमं** वदन्ति ॥

'ऋ गताविति धातोस्तु पूर्वावगतवत् सदा ।
'स्थितेर्ब्रह्मर्त्तमित्युक्तमनृतं परिणामतः ॥

'प्रकृतिप्राकृतं प्रोक्तमसत् तदशुभत्वतः ।
'असतां बुद्ध्यगम्यत्वादसत्यमिति चोच्यते' इति व्यासस्मृतिः ॥

'एतेषां वेदानामेतेषां देवानामेतेषां कालानामेतेषां नाडीनामन्यस्य च सर्वस्य यानि नामानि तानि नारायणस्य नामानि' इति नारायणश्रुतिः ॥

---

नामानि अमुं विशन्तीति विष्णुः । तेन सर्वशब्दवाच्यत्वमपि विष्णुशब्देनैव ज्ञायत इत्यर्थः । अत एव च **ब्रह्मशब्दश्च विष्णावेव** इति विष्णुपदमुपादत्त ॥

श्रुतावनृतस्येति जगतो मिथ्यात्वमुच्यत इति शङ्कां वारयति व्यासस्मृतिवचनेन– **ऋ गताविति धातोस्तु** । **धातोः** धातुपाठादित्यर्थः । **पूर्वै**र्ज्ञानिभिर्यथाऽवगतं तथैव एकरूपतया सदा स्थितेः । पूर्वैरृतमिव सदाऽप्यर्यत इत्यृतमित्यर्थः । 'अग्निः पूर्वेभिरृषिभिरीड्यो नूतनैरुत' इति श्रुतेः । यत् पूर्वावगतवन्न तिष्ठति विपरिणमते तदनृतम् । ब्रह्मविलक्षणत्वात्, परिणामित्वाच्च । ह्यो मृदासीत् । अद्य घटो बभूव । श्वः शकलानीति । **अशुभत्वतः** दोषवत्त्वात् । सत्त्वं हि निर्दुष्टत्वम् । असद्भिरपीयते ज्ञायत इति **असत्यम्** । **वेदानां** ऋग्यजुरादि**नामानि**, सूक्तानुवाकादि**नामानि**, निषदुपनिषदादि**नामानि** च । **कालानां** कृतत्रेतादि**नामानि** क्षणलवादि**नामानि** च । **नाडीनां** सुषुम्नावज्रिकार्यादि**नामानि** ॥

इदमुक्तं भवति । यदुक्तं पूर्वपक्षिणा– 'तदेवाग्निस्तद् वायुः' इत्यादिश्रुतिवचनेनाग्न्यादीनामपि ब्रह्मपदवाच्यत्वमिति । दुरुक्तं तत् । तदेव विष्ण्वाख्यं ब्रह्मैव कवीनां मतेऽग्न्यादिपदवाच्यमिति ह्यत्रोच्यते । तदेवाग्निः । तात्स्थ्यात् ताच्छब्द्यम् । अग्नौ स्थितमग्निशब्दमुख्यवाच्यं चेत्यर्थः । तस्याग्नित्वं हि विधीयते । नत्वग्नेस्तत्त्वम् । उपक्रमविरोधात् । एवकारश्च व्यर्थस्तत्पक्षे । तद् ब्रह्मेति पुनरुक्तं च । तस्मात् विष्ण्वाख्यस्य ब्रह्मणः विद्वद्रूढ्या सर्वपदवाच्यत्वं शृङ्गग्राहिकया 'तदेवाग्निः–' इत्यादिना

**'यो देवानां नामधा एक एव' इति चैवशब्दान्नचान्येषां सर्वनामता । 'अजस्य नाभौ–' इति तस्य हि लिङ्गम् ॥**

---

निरूप्यते । तदेव पुनर्गायत्रीभिर्विव्रियते 'तन्नो रुद्रः' इत्यादिना । तेन न केवलं ब्रह्मशब्दः किन्तु अग्न्यादिशब्दाः रुद्रादिशब्दाश्च विष्णावेव । सर्वासां गायत्रीणां विष्णुपरतयाऽर्थचिन्तनसरणिरस्मत्कृते नारायणोपनिषद्भाष्ये द्रष्टव्या ॥

ननु रुद्रादयः शब्दा विष्णावेवेति भवतोच्यते । विपरीतं किं न स्यात्– विष्ण्वादयः शब्दा रुद्र एवेति । तथाच भाल्लवेयश्रुतिरपि विष्णुनामानं रुद्रमेव सर्वाणि नामान्याविशन्तीत्याह । नैतद् युक्तम् । प्रसिद्धेन पदेन हि विधेयमुल्लिख्य किमप्यप्रसिद्धं विधीयते । नत्वप्रसिद्धेन पदेन । प्रसिद्धं नारायणे विष्णुपदम् । न रुद्रे । अपि च विष्णोरन्यस्य सर्वनामत्वं श्रुतिरेव निराचष्टे– **यो देवानां नामधा एक एवेति । इति एवशब्दाच्च** इत्यन्वयः । चकारेण विष्णुशब्दस्य नारायण एव प्रसिद्धत्वाच्चेत्याह । अथ च न केवलमेवशब्दात्, एकशब्दाच्च । अन्येषामपि सर्वनामत्वे एक एवेति पदद्वयमपि व्यर्थं विरुद्धार्थं च । **'यो देवानां नामधा'** इत्येव पर्याप्तम् । **नचे**त्यवधारणे । **अन्येषां** नैव सर्वनामतेत्यर्थः । अथच– नान्येषां सर्वनामता, अत एव न ब्रह्मनामता च इति समुच्चयार्थे ॥

ननु **'यो देवानां नामधा एक एव'** (ऋ.सं.१०.८२.३) इति विश्वकर्मसूक्ते पठ्यते । तथाहि मन्त्रः–

'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
**'यो देवानां नामधा एक एव** तं सम्प्रश्नं भुवना यन्त्यन्या' इति ।

पातीति पिता । जनयतीति जनिता । जनयिता । 'जनिता मन्त्रे' (अ.सू.६.४.५३) इति णिलोपः । धात्र् धारणपोषणयोः । विधाता सर्वस्य धारयिता ज्ञानमोक्षदानेन पोषयिता च । य उत्पन्नानां नः योग्यानि धामानि वेद । यो विश्वानि भुवनानि च वेद । य एक एव सर्वदेवानां नामधारकः, सम्पृच्छनीयं तं विश्वकर्माणं सर्वाण्यन्यानि भूतजातानि आश्रयत्वाय यन्तीति विश्वकर्मणः सर्वनामत्वमुच्यते । तेन विष्णोः किमायातम्?

ननु विश्वकर्मेति विष्णुरुच्यते– 'विश्वकर्मा मनुस्त्वष्टा' इति हि विष्णुसहस्रनामसु । स्यादपि विष्णुः । विष्णुरेवेति कथं निगम्यते? विष्णुलिङ्गश्रवणादित्याह– **अजस्य नाभाविति तस्य हि लिङ्गम्** । तथाहि मन्त्रः–

नच प्रसिद्धार्त्थं विनाऽन्यो युज्यते–

‘अजस्य नाभाविति यस्य नाभेरभूच्छ्रुतेः पुष्करं लोकसारम् ।

‘तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे’

इति स्कान्दे ॥

---

**नच प्रसिद्धार्त्थं विनाऽन्यो युज्यत** इति । न च नाभ्यर्प्पितमेकं विश्वाधारभूतं पद्मादन्यद् युज्यते । न च नाभिपद्मान्नारायणात् प्रसिद्धादन्यो युज्यते । अश्रुतकल्पनाप्रसङ्गात् । समस्तविश्वविभूतयो येन व्यस्ताः स ‘व्यस्तसमस्तविश्वविभूतिः’ । अथवा व्यस्ताः समस्ताश्च विश्वविभूतयो येन ॥

---

‘तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।

**अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः**’ (१०.८२.६) इति ॥

**विश्वकर्मसूक्तमन्त्रार्थः**

‘किं स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे’ इति पूर्वमन्त्रे प्रस्तुतस्य प्रश्नस्यात्रोत्तरमाह– तमिद् गर्भं प्रथमं दध्र आप इति । गर्भं जगत उत्पत्तिस्थानं गरणेन भरणीयं वा तमेव नारायणमापः प्रथमं दधिरे । ‘आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वम्–’ इति स्मरणात् । यत्र यस्य गर्भे विश्वे देवाः समगच्छन्त प्रळयकाले । अथ सृष्टिकाले तस्याजस्य नाभावधिकमेकं विश्वात्मकं कमलमर्पितम्, यस्मिन् कमले चतुर्दश भुवनानि तस्थुरिति पद्मनाभत्वं नारायणस्यासाधारणं लिङ्गमस्य विश्वकर्मणः नारायणत्वं निरवकाशमवगमयतीति ॥

ननु लिङ्गमप्यस्फुटम् । नह्यत्र पद्मवाचकं पदमस्ति । एकं किमप्यन्यत् स्यादित्यपलपन्तं मुद्रितलपनं कर्तुं श्रुतिव्याख्यानरूपं स्कान्दवचनमाह– **अजस्य नाभावितीति** । **अजस्य नाभाविति श्रुतेः यस्य नाभेर्लोकसारं पुष्करमभूत्** । लोकसारं लोकस्य सारभूतोंऽशः । अस्य तु नान्यार्थता वक्तुं शक्या । श्रुतिप्रतीकग्रहणपूर्वकं व्याख्यानात् । अत्र तु स्फुटं पद्मवाचकं पदं पठ्यते पुष्करं लोकसारमिति । वेदानां विभाजकेन व्यासेनैव स्वतः तदर्थवर्णनान्नात्र विवादावकाशः । ‘इतिहासपुराणाभ्यां वेदं

**'परो दिवा पर एना पृथिव्या–' इति च समाख्याश्रुतौ, 'यं कामये तं तमुग्रं कृणोमि–' इत्युक्त्वा, 'मम योनिरप्स्वान्तः समुद्रे' इत्याह ॥**

---

**'परो दिवा–'** इत्यादेरयमर्थः । इतश्चैतस्मिन् सूक्ते विष्णुरेवोच्यते । इह हि द्यावापृथिव्योः पर इत्याख्या श्रूयते । श्रीसूक्ते चैतयाऽऽख्यया समाख्या श्रूयते । तत्र हि **'यं कामये तन्तमुग्रं कृणोमि** तं ब्रह्माणं तमृषिं तं सुमेधाम्' **इति** ब्रह्मादीनां देव्यधीनत्व**मुक्त्वा, 'मम योनिरप्स्वान्तः समुद्रे'** इति तस्य विष्णवधीनत्ववचनेन विष्णोः सर्वोत्तमत्वं प्रतिपाद्यते । **'परो दिवा'** इति पञ्चम्यर्थे तृतीया । द्यावापृथिव्योः श्रीभूम्योः परः समुद्रशायी । अहम् 'एतावती' यथोक्तप्रकारा महिम्ना नाधिकेति ॥

---

समुपबृंहयेत्' इति च स एव ह्याह । व्यस्ताः तत्तद्योग्यतानुगुणं व्यस्य वितीर्णाः । धर्मो ज्ञानमैश्वर्यं वैराग्यमिति चतस्रो विभूतयः । ता व्यस्ता जीवेषु समस्ताश्च ब्रह्मवाय्वोर्येन । केचनाऽचार्या विभूतिपदेन सृष्ट्याद्यष्टकमुच्यत इति मन्यन्ते । तत्पक्षे जडेषु व्यस्ता आद्याश्चतस्रः, समस्ताश्च चेतनेषु प्रायः । तत्रापि सात्विकानां सुखरूपो मोक्षः । तामसानां तु दुःखरूपः । राजसानां नित्यसंसार इत्यादि ॥

एवं बलवल्लिङ्गसहकृतया श्रुत्या विश्वकर्मा विष्णुरित्युक्तम् । इदानीं समाख्याबलादपि तत् समर्थयते । शब्दतोऽर्थतश्च समानाऽऽख्या समाख्या । विश्वकर्मसूक्ते किलैवमाख्या श्रूयते– 'परो दिवा पर एना पृथिव्या' (ऋ.सं.१०.८२.५) इति । अम्भ्रिणीसूक्ते चैतत्समाख्या श्रूयते– **'परो दिवा पर एना पृथिव्या'** (१०.१२५.८) इत्येव । विश्वकर्मसूक्ते चायं मन्त्रपाठः–

'परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
'किं स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे' इति ॥

अम्भ्रिणीसूक्ते च–

'अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ।
'परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव' इति ॥

अयं मन्त्रद्वयार्थः—

दिवा दिवः परस्तात्, श्रियः परम् । **एना पृथिव्या** अस्या भूमेरपि परस्तात् । असुषु नियामकतया रममाणैः ब्रह्मादिदेवैरपि परस्तात् । किं बहुना? यदस्ति चेतनजातं ततः सर्वस्मादपि परस्तात् । एतादृशं कं जगद्गर्भमापो दधिरे प्रळयकाले? यत्र यदुदरे मुक्ता विश्वे ब्रह्माद्या देवाः समपश्यन्त सङ्गताः पश्यन्तीति विश्वकर्मसूक्तमन्त्रार्थः ॥

अहं विश्वानि भुवनानि आरभमाणा सृजन्ती वातइव सर्वत्र व्याप्नोमि । यथा वातः सर्वगतोऽपि न दृश्यते तथाऽहमपि सर्वगता न दृश्ये । मम योनिरिरिति पूर्वमन्त्रादनुवर्तते । अथापि मम योनिरप्स्वन्तःस्थः समुद्रशायी नारायणः श्रीभूमिरूपाया मत्तः परः उत्तमः । अहं त्वेतावती भगवन्नियम्य-त्वविशिष्टान्यनियामकत्ववती महिम्ना सम्बभूवेत्यम्भ्रिणीवचनार्थः ॥

समाख्याश्रुतौ च ब्रह्माद्युत्तमत्वं स्फुटमुक्तमम्भ्रिण्याः—

'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।
'**यं कामये तन्तमुग्रं कृणोमि** तं ब्रह्माणं तमृषिं तं सुमेधाम् (५)

'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
'अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश (६)

'**अहं सुवे पितरमस्य मूर्द्धन्—'**

इति मन्त्रद्वयेन सपादेन **ब्रह्मादीनां देव्यधीनत्वमुक्त्वा—**

'**—मम योनिरप्स्वान्तः समुद्रे** ।
'ततो वितिष्ठे भुवनाऽनु विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि' (७) इत्याह ॥

## 'अहमेव' श्रुत्यर्थः

देवेभिर्न केवलम्, सर्वैः मनुष्यैश्च सेव्यमिदमहं स्वयं सतात्पर्यं वदामि । यमुग्रं रुद्रपदयोग्यं प्राप्तरुद्रपदं कर्तुं कामये तमुग्रं करोमि । यं ब्रह्माणं तं ब्रह्माणम् । यमृषिं तमृषिम् । यं सुमेधसं यथार्थज्ञानिनं तं सुमेधसं करोमि । अहं रुद्राय हन्तवै उ रुद्रं हन्तुमेव । कीदृशाय? शरवे संहारशीलाय । ब्रह्मद्विषे । अत्र पद्मनाभतीर्थीयम्— 'शरवे हिंसकाय, ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे, रुद्राय

उग्रो रुद्रः । समुद्रेऽन्तर्न्नारायणः । प्रसिद्धत्वात् सूचितत्वाच्चार्थस्य । न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एतमेव वदन्ति ॥

---

**नचाविरोधे प्रसिद्धः परित्यज्यते,** श्रुतहानिप्रसङ्गात् ॥ **उक्तन्यायेन** चेति । प्रत्यधिकरणं वक्ष्यमाणैश्च न्यायैरित्यर्थः ॥

---

हन्तवै रुद्रस्य हननाय धनुरातनोमि विस्तारयामि' इति । अहं सात्विकजनाय समदं मदेन आनन्देन सहितं सततानन्दं मोक्षं ददामि । अहमेव द्यावापृथिव्योराविष्टा तत्रत्यान् सर्वान् सृष्टिसंहारादिना नियमयामि । अहं सुवे पितरमिति पूर्वं व्याख्यातम् । एवमादौ ब्रह्मरुद्रादिसकलजीवानां सृष्टिस्थिति-संहारनियमनज्ञानाज्ञानबन्धमोक्षाणां स्वाधीनत्वमुक्त्वा ममैतादृशमहिम्नः कारणभूतः समुद्रेऽन्तरि-त्याह । अनया च समाख्यया विश्वकर्मा विष्णुरित्यवसीयते ॥

नन्वेतत् परैरन्यथा व्याख्यातम् । तथाहि व्याचक्षते– 'यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं पुरुषमुग्रं कृणोमि । सर्वेभ्योऽधिकं करोमि । तमेव ब्रह्माणं स्रष्टारं करोमि' इत्यादि । अन्यथा च शक्यं व्याख्यातुम्– यमुग्रं क्रूरं कर्तुमिच्छामि तं क्रूरं करोमि यं सात्विकं ब्राह्मणं कामये तं ब्राह्मणं करोमीत्यादि । एवं द्वितीयमन्त्रेऽपि– शरवे हिंसकाय अत एव रुद्राय लोकरोदकाय वेदब्राह्मणद्विषे रक्षसे हन्तवै धनुरातनोमीति । तस्मात् सावकाशमिदं नाम्भ्रिण्या ब्रह्मरुद्राद्युत्तमत्वगमकमिति । अत आह भाष्यकारः– **उग्रो रुद्रः । समुद्रेऽन्तर्नारायण** इति । यतः **प्रसिद्धार्थं विनाऽन्यो न युज्यते,** असति बाधके ॥

ननु किमिदं प्रसिद्धत्वं नाम? न तावद् विद्वद्रूढिसिद्धत्वम् । तत्पक्षे उग्रशब्दस्य विष्णुवाचकत्व-प्रसङ्गात् । तस्माल्लोकरूढिसिद्धत्वं प्रसिद्धत्वमिति वक्तव्यम् । लोके तावत् त्रिष्वर्थेषु प्रसिद्धोऽयं शब्दः– क्रूरे, शूद्रायां क्षत्रियाज्जाते, रुद्रे च । तथाच कोशकारा आमनन्ति– 'उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिषूत्कटे' इति । तत् कथं **प्रसिद्धत्वादुग्रो रुद्र** इति ॥

शृणु । प्रसिद्धत्वमिति विद्वद्रूढिसिद्धत्वमेव । विद्वद्रूढिश्च तारतम्यवती भवति । प्रथमतस्तावत् सर्वे शब्दा विष्णुपराः । सति बाधके तदवरार्था इति । न तावदत्रोग्रशब्दो नारायणपरः । यतः समुद्रेऽन्तरिति

नारायणः पृथगुक्तः । लक्ष्मीनियम्यत्ववचनाच्च नायमुग्रो नारायणः । तत् कोऽयं नारायणादनन्तरः उग्रपदवाच्यः लोकवेदयोः प्रसिद्धः? स्फुटं रुद्र एव । नहि लोकवेदयोः प्रसिद्धे रुद्रे सम्भवति श्रुत्यर्थे ततोऽप्यवरः यः कश्चनोग्रपदवाच्य इति वक्तुं युक्तम् । तद् युक्तमुक्तम्– **उग्रो रुद्रः प्रसिद्धत्वादिति** ॥

अस्तु वा लोकरूढिरेव प्रसिद्धिर्नाम । लोकसिद्धेष्वर्थेषु प्रमुखस्यैव प्रथमप्राप्तिः । असति बाधके तस्यैव ग्रहणं व्यवहारसिद्धम् । तद् यथा अज इत्युक्ते ब्रह्मैव प्रथमं प्रतीयते, न बस्तः, 'अजा ब्रह्महरच्छागाः' इति सहपाठेऽपि कोशे । तथाच लोकसिद्धेषु प्रमुखः प्रसिद्ध उच्यते । तदिदमुक्तम्– **उग्रो रुद्रः प्रसिद्धत्वात्** ॥

अथ सिद्धपदेन सह प्रयुक्तत्वं प्रसिद्धत्वम् । ब्रह्माणमिति सिद्धपदं चतुर्मुखवचनम् । 'ब्रह्माणं स्रष्टारम्' इति परैरपि व्याख्यातत्वात् । तत्सान्निध्यादुग्रशब्दोऽपि रुद्रवचनः । अपिचोत्तरमन्त्रे रुद्रपदेनायमुग्रः परामृश्यते । ब्रह्मा च ब्रह्मद्विष इति ब्रह्मपदेनैव । तदेवं रुद्रपदेन सान्निध्यादप्ययमुग्रो रुद्रः । एवं समुद्रेऽन्तरित्युक्तोऽपि नारायण एव । न यःकोऽपि समुद्रान्तर्वर्ती । प्रसिद्धत्वात् लोकवेद-सिद्धत्वात् । नारायणप्रतिपादके नारयणोपनिषदि 'अम्भस्यपारे', 'समुद्रे अन्तः कवयोऽवयन्ति' इत्यादिभिरस्यार्थस्य प्रकटं सिद्धत्वात् ॥

'अहं रुद्राय' इति परामर्शेन **सूचितत्वाच्चोग्रो रुद्रः** ।

उग्र इति पदेन अयं रुद्र इत्यस्यार्थस्य सूचितत्वाच्च । समानार्थके हि ते पदे । उच्यति क्रोधेन संयुज्यत इत्युग्रः । उरूनपीन्द्रादीन् ग्रसतीति उग्रः । क्रोधेन संहरन् रोदयतीति रुद्र इति । समुद्रेऽन्तरिति नारायणपदगदितस्यैवार्थस्य सूचितत्वाच्च । 'आपो नाराः–' इत्यादेः । एतत्स्मृतिसूचनायैवात्र नारायणपदमुपादत्त ॥

ननु तर्हि अनेनैव न्यायेन 'तन्नो रुद्रः प्रचोदयात्' इत्यत्रापि रुद्रपरत्वमेव स्यात् । प्रसिद्धत्वात् । तत्पुरुषमहादेवपदाभ्यां सूचितत्वाच्चास्यार्थस्य । स्यादेव । को नेत्याह । इयमत्र व्यवस्था । रुजं द्रावयतीति रुद्रपदोदितो नारायणः प्रथमसिद्धः । तस्मात् प्रथमसिद्धत्वात् रुद्रान्तर्गतो नारायणः प्रथमं गृह्यते ततश्चासौ पुरुषसूक्तवेद्यश्चेति तत्पुरुषः । द्वितीयार्थे च चतुर्थी । तत्पुरुषाय तदनुग्रहाय तं विद्महे विद्मः । महानयं सर्वोत्तमो देव इति महादेवः । तदनुग्रहाय तमेव धीमहि ध्यायेम । नस्तत् ध्यानं रुजां द्रवणात् रुद्रनामा नारायणः प्रचोदयात् प्रचोदयेदिति । ततो रुद्र इति वायुः । 'रुजां

'वेदे रामायणे चैव पुराणे भारते तथा ।
'आदावन्ते च मद्ध्ये च विष्णुः सर्वत्र गीयते' इति हरिवंशेषु ॥

---

द्रवणतो रुद्रो वायुः' इति स्मरणात् । ततः पार्वतीपतिरिति तृतीयोऽर्थः । तदेतदुक्तम्– 'त्रयोऽर्थाः सर्ववेदेषु' इति । एवं गरुडादिगायत्रीष्वपि मन्तव्यम् । तदेतदुक्तम्– **नचाविरोधे प्रसिद्धः परित्यज्यते** इति । विरोधे च युक्तः प्रथमसिद्धपरित्यागः । यथाऽम्भ्रिणीसूक्ते अहं रुद्रायेति न विष्णुरुच्यते । किन्तु रुद्र एव । अथच लोकप्रसिद्धार्थपरित्यागे **श्रुतहानिप्रसङ्गात् अविरोधे** लोकप्रसिद्धार्थोऽपि **न परित्यज्यते** । तस्य नारायणस्यायं पुरुष इति तत्पुरुषो रुद्रोऽपि । महेन्द्रादपि महानयमिति महादेवः । स रुद्रो नः प्रचोदयेदिति । यत्र विरोधः तत्र लोकप्रसिद्धमप्यर्थं परित्यज्य प्रथमसिद्धो नारायण एवार्थः स्वीक्रियते । यथा 'विश्वस्मादिन्द्र उत्तरः' इति । यथा वा 'विश्वाधिको रुद्रः' इति । **नच नैव परित्यज्यते** सर्वात्मना त्यज्यते । नारायणस्य प्रथमार्थत्वेऽपि प्रसिद्धार्थस्य द्वितीयार्थत्वाभ्युपगमात् ॥

नच रुद्रादिपदानि नारायणे न प्रसिद्धानीति शङ्क्यम् । यतः 'नामानि सर्वाणि' इत्युक्तन्यायेन सर्वा अपि श्रुतयः सर्वाण्यपि नामानि विद्वद्रूढ्या एतमेव नारायणं वदन्ति । चकारात् **प्रत्यधिकरणं वक्ष्यमाणैश्च न्यायैः** । अत्र स्मृतिवचनसंवादमाह– **वेदे रामायणे चैव** । यथा वेदे तथा भारते पुराणे रामायणे च । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति श्रुतेः । एवकारेण एता एव सप्त मातरो मुख्यतो विष्णुप्रतिपादका इत्याह । **विष्णुरेव** मुख्यतया **गीयत** इति चान्वयः । परिवारतया इतरदेवतादिकथनेऽप्यन्ततो विष्णुरेव हि सर्वत्र गीयते । तन्महिमविस्तरात्मकत्वात् । रामायणमिति मुख्यतः मूलरामायणम् । तदनुगुणतया योजितं प्राचेतसीयं च । अत्र पञ्चरात्रमप्युपलक्ष्यते । तस्यापीतिहासत्वात् । पर्वत्रयविवक्षया हरिवंशेषु इति बहुवचनम् ॥

ननु बहवः शास्त्रकाराः । बहुविधानि च शास्त्राणि भवन्ति । यदुक्तम्– 'नैको मुनिर्यस्य वचः प्रमाणम्' इति । केचिदीश्वरमेव नाङ्गीकुर्वन्ति । सेश्वरा अपि केचिन्न विष्णुपारम्यवादिनः । सर्वान् देवान् समानान् मन्यन्ते । अभेदं वा सर्वेषाम् । केचिच्छक्तिं परमां मन्यन्ते । केचिच्छिवम् । केचिद् गणपतिम् । केचित् स्कन्दम् । केचित् सूर्यम् । एवं विवदमानेषु मुनिषु कमिह बहुमन्यामहे । तत्र द्वयी गतिः– सर्वमप्यप्रमाणं स्यात् । अन्यतमद् वा प्रमाणम् । द्वितीयेऽपि द्वयी गतिः । हरिवंशोक्त-

**न चेतरग्रन्थैर्विरोधः–**

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥

---

**नच** पाशुपतादि**ग्रन्थैर्विरोधः** । तेषां मोहनार्थं सृष्टत्वात् । **एष मोहं सृजामीति**, मोहकारणं सृजामीति, जनानामनादिकर्म्मवासनानुरूपमिति यावत् । अतो न मोहशास्त्रवक्ता

---

सप्तविद्याविरोधेन शैवादीनामप्रामाण्यं स्यात् । इतरग्रन्थैर्विरोधेन सप्तविद्यानां वा । एवं सन्दिहानं प्रत्याह– **नचेतरग्रन्थैर्विरोध** इति । इदमुक्तं भवति । अपौरुषेयत्वाद् वेदास्तावत् प्रमाणम् । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति तत्परिगृहीतत्वाद् भारतं रामायणं पञ्चरात्रं पुराणानि च । वेदतद्गृहीतान्यतरत्वमेव मूलशास्त्रत्वम् । तदनुकूलान्यन्यान्यपि शास्त्रपदव्यपदेशानि भवन्तीति वेदतदनुकूलान्यतरत्वमेव शास्त्रत्वमिति पर्यवसितम् । तथाचात्रेतरशब्देन वेदानुकूलग्रन्थेभ्य इतरे ग्रन्था उच्यन्ते । तदेतदाह– **नच पाशुपतादिग्रन्थैरि**ति । वेदाननुकूलत्वमादिपदग्राह्यतावच्छेदकम् । प्राचुर्यात् पाशुपतस्य मुखतो ग्रहणम् । न तैर्विरोधः । न विरोधादप्रामाण्यं चेत्यर्थः । प्रत्युत वेदवैदिकग्रन्थैस्तेषामेव विरोधः । विरोधादप्रामाण्यं च । नहि विरोधमात्रमत्रोच्यते । तस्य यथार्थत्वेनानिषेध्यत्वात् । तस्मादप्रामाण्यमेव पर्यवसितोऽर्थः ॥ तदेव च नचेति चकारेणाऽह ॥

## मोहशास्त्रकरणेऽपि भगवतोऽविप्रलम्भकत्वम्

ननु किमर्थं विदितवेद्या अप्यृषयो वेदविरुद्धान् ग्रन्थान् प्रणिन्युरित्यत आह– **तेषां मोहनार्थं सृष्टत्वात्** । मोहनार्थमिति विपरीतज्ञानार्थं संशयार्थं च । ननु ज्ञानार्थं ग्रन्थं प्रणयन्ति । निर्णयार्थं च प्रणयन्ति । तत् किमियं मोहनार्था सृष्टिरिति? शृणु । त्रिविधा हि जीवा भवन्ति– सात्विका राजसास्तामसा इति । तत्र तत्तत्स्वभावानुगुणं सात्विकानां ज्ञानजननमिव तामसानां विपरीतज्ञानजननं राजसानां संशयजननं च स्वाभाविकी स्थितिः । तेन भगवान् तन्नियताश्च ज्ञानिनस्तामसानां राजसानां च मोहनार्थं मोहशास्त्राणि निरमिमत इति वस्तुस्थितिः । तदिदं ज्ञानिनां मोहशास्त्रकरणं भगवत्सेवारूपं भवतीति न तेऽपि विप्रलम्भकाः । किन्तु भगवदाज्ञापालनात् पुण्यभाज एव । इयांस्तु विशेषः– भगवत्कृतेषु पुराणेषु यदेव तामसानां तामसमर्थं गमयति तदेव सात्विकानां सात्विकमर्थं गमयति

'अतत्थ्यानि वितत्थ्यानि दर्शयस्व महाभुज ।
'प्रकाशं कुरु चाऽत्मानमप्रकाशं च मां कुरु' इति वाराहवचनात् ॥

---

विष्णुराशङ्कनीयः । 'अजस्यावक्रचेतसः' इति हि श्रुतिः । 'निरनिष्टो निरवद्यः' इति च । त्वं च मोहशास्त्राणि कुरु, अन्यैश्च कारय । अतथ्यानि अविद्यमानानि लिङ्गमूलमार्ग्गणादीनि । वितथ्यानि ततो विगतत्वे सति तथ्यानि स्रष्टृत्वादीनि ॥

---

पूर्वपक्षसिद्धान्तरूपत्वेन । रुद्रादिप्रणीतानि तु शास्त्राणि दुर्जनमोहार्थमेव प्रणीतानीति तामसान्येव । कानिचिदनिर्णयजनकानीति राजसानि च ॥

तदेतत् प्रमेयजातं पुराणवचनेनैव ग्राहयति– **एष मोहमिति** । यो दुर्जनान् आशु मोहयिष्यति तादृशं मोहं मोहकारणं पुराणजातं एषोऽहं व्यासरूपेण सृजामि । जन इति प्राचुर्याद् दुर्जन उच्यते । दुर्जनार्दनं हि जनार्दनमाहुः । दुर्जनमेजयं च जनमेजयम् । क्वचित् प्रारब्धवशात् सुजनानपि । ननु तर्हि भगवतोऽपि विप्रलम्भकत्वं स्यात् । न स्यादित्याह– **जनानामिति** । विस्तृतमेतत् पुरस्तात् । अतो **न मोहशास्त्रवक्ता विष्णुराशङ्कनीयः** । यदयथार्थं गृह्णाति च ग्राहयति च तद् वक्रम् । स्वयमज्ञानाद्यनिष्टरहितः **निरनिष्टः** । विप्रलम्भकत्वाद्यवद्यरहितो **निरवद्यः** । स्वतोऽनिष्टमनिष्टम् । परेषामनिष्टजननमवद्यम् । यो जनान्, योजनात् ल्यबर्थे पञ्चमी, योजनान्तरमाश्रित्य मोहयिष्यति । पूर्वपक्षमेव सिद्धान्तत्वेन योजयित्वा मुह्यन्तीत्यर्थः । भगवद्विषयमेतत् । अन्यशास्त्राणि तु सतामसतां च सहैव मोहकारणानि ॥

**त्वं कारय च** इति चकारलब्धार्थमाह– **त्वं च कुर्विति** । **अतथ्यानि वितथ्यानि** सिद्धान्तत्वेन दर्शयस्व । पुराणेष्वपि अतथ्यानि वितथ्यानि दृश्यन्ते । किन्तु तानि परपक्षानुवादत्वेन पठितानि । न सिद्धान्तत्वेन । पाशुपतादिशास्त्रेषु तु पशुपत्यादीनां पारम्यादि सिद्धान्तत्वेन पठ्यत इत्यर्थः । एवं मोहशास्त्रकरणेन भगवदाज्ञापालनेन महानात्मलाभ इत्यात्मनेभाषा । एतेन मोहशास्त्रकरणेऽपि पापाभावं तेषामाह । महान्तौ शत्रुक्षपणदक्षौ बलिष्ठौ बाहू अस्येति महाबाहुः । महाभुजो महाभोगः । एतेन मोहशास्त्रकरणेन महान् सुखभोगो रुद्रस्येत्याह । अन्येषां च रुद्राज्ञापालनेन यथायोग्यम् । एवमतथ्यवितथ्यवचनैरात्मानं **प्रकाशं** लोकेषु विततयशसं **कुरु** । **मां चाप्रकाशम्** ।

**शैवे च स्कान्दे–**

'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।
'तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुखः' इति ॥

---

नच शैवादिपुराणविरोधोऽपीत्याह– **शैवे चेति** । यदि च शैवादिपुराणानां शिवाद्युत्तमत्वे तात्पर्य्यमिष्यते, तर्हि पूर्वापरविरोधादप्रामाण्यं स्यात् । तेष्वपि विष्णोः सर्वोत्तमत्वप्रतिपादनात् । तस्मात् पाशुपतादिपरिकल्पितशिवाद्युत्तमत्वपरिपाटी पूर्वपक्षो दर्शनभाषया

---

अथच वराहवचनस्यार्थान्तरम्– **एष मोहं** मोहजननीं मायां **सृजामि । त्वं च मोहशास्त्राणि** कुरु । मायामोहिताश्च जना मोहशास्त्राण्येव सदागमान् मन्यमाना यथा पथः प्रच्यवेरन् । जना इत्यसन्तः, स्वयोग्यतातिरिक्तशुभवन्तः सन्तश्च ॥

'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।
'चकार शास्त्राणि विभुरृषयस्तत्प्रचोदिताः ॥

'दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।
'चक्रुर्वेदैस्तु ब्राह्माणि वैष्णवान् विष्णुवेदतः ॥

'पञ्चरात्रं भारतं च मूलरामायणं तथा ।
'तथा पुराणं भागवतं विष्णुवेद इतीरितः ।
'अतः शैवपुराणानि योग्यान्यन्याविरोधतः' इति हि नारदीये ॥

अत्र नरहरितीर्थाः– 'सृष्टत्वबद्धत्वोपासकत्वादीनि तथ्यानि शर्वादेः । असृष्टत्वाबद्धत्वानुपासकत्वादीन्यतथ्यानि । स्रष्टृत्वमोचकत्वोपास्यत्वादीनि वितथ्यानि । एवं सर्वोपास्यत्वादीनि तथ्यानि विष्णोः । अनुपास्यत्वादीन्यतथ्यानि । उपासकत्वादीनि वितथ्यानि । दधीच्याद्या अन्यान्युपपुराणानि चक्रुः' इति ॥

नन्वास्तां पाशुपतादिविरोधवार्ता । पाशुपतानुसारिशैवपुराणविरोधस्तु स्यादेव । 'शैवान् पाशुपताच्चक्रे' इति ह्यामनन्ति । नेत्याह– **शैवे च स्कान्दे** । दर्शनभाषया प्राचुर्येण शिवपारम्यपरेऽपि स्कान्दे ।

**ब्राह्मे च ब्रह्मवैवर्त्ते–**

**'नाहं नच शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।**
**'बालः क्रीडनकैर्य्यद्वत् क्रीडतेऽस्माभिरच्युतः' इति ॥**

**नच वैष्णवेषु तथा । तच्च 'एष मोहम्–' इत्युक्तम् ॥ १ ॥**

**॥ इति प्रथममधिकरणम् ॥ ✻ ॥**

---

तेषूपन्यस्यत इत्यभिप्रायः । **न च वैष्णवेषु** पुराणेषु **तथा** विष्णोरन्यस्योत्तमत्वमुक्तम् । यदि च यत्र क्वापि कस्यचित् समत्वादिकमुक्तमिवप्रतिभाति तद्बुद्धिकालुष्यात् पूर्वपक्ष-सिद्धान्तविभागापरिज्ञानादित्युक्तम् । तदेतदाह– **तच्चैष मोहमित्युक्तमिति** ॥ ✻ ॥

**॥ इति जिज्ञासाधिकरणम् ॥ ✻ ॥**

---

पूर्वपक्षसिद्धान्तापरिज्ञानादिति दत्तोत्तरमेतत् । विशेषयुक्तिप्रदर्शनार्थं पुनराशङ्का । शिवपरेऽपि **स्कान्दे** विष्णुपारम्यमुच्यत इति शेषः । किं तेनेत्यत आह– **यदिचेति** ॥

एवं दर्शनभाषया **ब्राह्मे ब्रह्मवैवर्ते च** विष्णुपारम्यमुच्यते । 'ब्राह्मांश्च वेदतश्चक्रे' इत्यामनन्ति । अयमर्थः– वेदानां प्रातीतिकार्थमनुसृत्य अग्नीन्द्रादिपारम्यपराणि, तत्तत्प्रकरणे 'सर्वं खल्विदं ब्रह्म' इति सर्वस्यापि देवतागणस्य ब्रह्मताप्रतिपादकानि ब्राह्माणि पुराणानीति । स्रष्टृत्वेन ब्रह्मणः पारम्यवचनाच्च । **'नाहम्'** इति ब्रह्मणो वचनम् ॥

## दुर्जनमोहकान्यपि सतां सात्विकान्येव

एतेन स्फुटमवगम्यते– दर्शनभाषया पुराणेषु शिवाद्युत्तमत्वमुच्यते । क्वचिद् गुह्यभाषया च । समाधि-भाषया तु सर्वत्र विष्णुपारम्यमेवोच्यत इति । ननु तत्र दर्शनभाषा प्रचुरा । अल्पा च समाधि-भाषा । प्रचुरस्यैव प्राधान्यमुचितम् । दत्तोत्तरमेतत्– 'पूर्वपक्षाधिक्यं दुर्जनमोहनार्थमिति दर्शनरहस्यम्' इति ॥

समाधिभाषया वैष्णवेषु । शैवे ब्राह्मे च यथा विष्णोः शिवाद्युत्तमत्वमुच्यते तथा वैष्णवेषु पुराणेषु नच विष्णोरन्यस्योत्तमत्वमुक्तम् । यत्र क्वापि किञ्चिदिव तथा प्रतीयते– यथा विष्णुना शिवमुद्दिश्य तपः, तत् सर्वं विष्णुस्तथा दर्शयामासेति लोकदृष्ट्यपेक्षयोच्यते । इतिहासनिरूपणे दर्शनभाषाया अनिवार्यत्वात् । नहि 'वसुदेवं पितरं ननाम कृष्णः' इत्युक्ते तस्य मोहशास्त्रत्वं तामसत्वं वा वक्तुं युक्तम् । अन्तर्याम्यपेक्षया सर्वमपि सुन्दरम् । तथाहि स्मरन्ति–

'क्वचिच्छिवं क्वचिद्दृषीन् क्वचिद् देवान् क्वचिन्नरान् ।
'नमत्यर्चयति स्तौति वरानर्थयतेऽपि च ।
'लिङ्गं प्रतिष्ठापयति वृणोत्यसुरतो वरान् ॥

'सर्वेश्वरः स्वतन्त्रोऽपि सर्वशक्तिश्च सर्वदा ।
'सर्वज्ञोऽपि विमोहाय जनानां पुरुषोत्तमः' इति ॥

नहि वसुदेवं कृष्णो ननामेति स ततोऽवरो भवति । नरेषु जनने नरवदेव वर्तन्ते देवा अपि । तथा देवोत्तमोऽपि । तस्मात् सर्वेश्वरोऽप्यनीश्वरमिव स्वतन्त्रोऽपि पराधीनमिव सर्वज्ञोऽप्यज्ञमिव भगवानात्मानं दर्शयति । किमर्थम्? जनानां विमोहाय । सेयं भगवतो जनमोहनी लीला । तच्च भगवतो मोहजनकत्वं च पूर्वमेव उक्तम्– 'एष मोहं सृजामि' इति ॥

अर्वाचीना अधिकरणनामानि पठन्ति । स यथा– जिज्ञासाधिकरणम्, जन्माधिकरणमित्यादि । अध्यापकैः शिष्यबोधनसौकर्याय कल्पितान्येतानि । यथानुकूलमन्यथाऽपि कर्तुं शक्यन्ते । जन्माधिकरणं जन्माद्यधिकरणमपि स्यात् । पादान्त्यप्राणाधिकरणं प्राणानुगमाधिकरणमपि स्यात् । यथा 'याज्ञीयमन्त्रोपनिषदं केचिदाहुरीशोपनिषदिति । ईशावास्योपनिषदित्येके ॥ ✻ ॥

॥ इति प्रथमं जिज्ञासाधिकरणम् ॥ ✻ ॥

—०—

## द्वितीयमधिकरणम्
## (जन्माद्यधिकरणम्)
## (१.१.२.)

ब्रह्मणो लक्षणमाह–

**॥ जन्माद्यस्य यतः ॥ १.१.२. ॥**

सृष्टि-स्थिति-संहार-नियमन-ज्ञानाज्ञान-बन्ध-मोक्षा यतः ॥

---

### तत्वप्रदीपः

**ब्रह्मणो लक्षणमाह– जन्माद्यस्य यतः ।** सा च विष्णोर्ब्रह्मत्वविधात्री तैत्तिरीयश्रुतिर्य्यानि तस्य लक्षणान्याह तान्यनेन सूत्रेण भगवानाह ॥

---

### तत्वचन्द्रिका

किंलक्षणं तद् ब्रह्म यज्जिज्ञासा कर्तव्या? लक्षणप्रमाणाभ्यां हि वस्तुनिर्णयः । इत्यतो **ब्रह्मणो लक्षणमाह** । अथ च ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । असङ्ख्यानि लक्षणानि भवन्ति । तेषु कैर्लक्षणैर्विशिष्टं तज्जिज्ञासितव्यम्? इत्यतो **ब्रह्मणो लक्षणमाह** । जीवव्यतिरिक्तस्य ब्रह्मणो भाव एव जिज्ञासा सम्भवतीत्यतो जीवविलक्षणत्वेन **ब्रह्मणो लक्षणमाह** । एवमादयोऽर्थाः स्फुटप्रतिभानाः । अथचास्फुटं भाष्यस्यार्थान्तरमाह– **सा च विष्णोः** । **तैत्तिरीयश्रुति**र्महानारायणोपनिषद्रूपा– 'यमन्तःसमुद्रे कवयोऽवयन्ति तदेव ब्रह्म परमं कवीनाम्' इति । तैत्तिरीयोपनिषच्च– 'यतो वा इमानि–' इति वक्ष्यमाणा । **॥ जन्माद्यस्य यतः ॥** लक्षणमिति समुदायवचनमित्याह– **यानि तस्य लक्षणानीति** । सूत्रे 'जन्मादि' इति समुदायनिर्देशात् भाष्येऽप्येकवचनं **लक्षणमिति** । **सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा** इति बहुवचनेन स्वपदव्याख्यानात् टीकायां **लक्षणानीति** बहुवचनम् । एतेन जन्मादीति न समुदितं लक्षणम् । किन्तु प्रत्येकमष्टौ लक्षणानीति चोक्तं भवति । एतेन भगवतोऽष्टगुणत्वं चोक्तार्थम् । एतेन तानि कथं विष्णोरेव लक्षणानीति शङ्काऽपि परास्ता । तैत्तिरीयश्रुतेरेव ॥

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
'बन्धमोक्षौ च पुरुषाद् यस्मात् स हरिरेकराट्' इति स्कान्दे ॥

---

तथाहि– 'यतः प्रसूता जगतः प्रसूती', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति प्रकृतिकालसृष्ट्यभिधानेन तस्मादेव सर्वसृष्टिरुक्ता । तदधीनत्वादितरसृष्टेः । 'यस्मिन्निदं सं च विचैधि (सर्वं) यस्मिन् देवा अधि विश्वे निषेदुः' इति स्थितिः । 'वेनस्तत् पश्यन्

---

नन्वनन्तानि भगवतो लक्षणानि भवन्ति । किमित्यष्टावेवेति निगृह्यन्ते । प्रमाणानुसारेणेति चेत्, अन्यान्यपि प्रमाणान्तरे पठ्यन्ते– 'सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने । बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च' इति । सत्यं पठ्यन्ते । अत एवाष्टावित्यत्र नियम्यन्ते । कुतः? मोक्षफलका हि ब्रह्मजिज्ञासा । मोक्षार्थमुपास्यानि लक्षणानि चाष्टावेव । तदुक्तम्–

'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
'मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्नचान्यथा' इति ॥

विष्णुत एवेति ज्ञात्वैव मुक्तिरित्ययोगव्यवच्छेदः । **नचान्यथा**, विष्णुत एवेत्यज्ञात्वा, अन्यत इति, अन्यत एवेति वा ज्ञात्वा न मुक्तिरित्यन्ययोगव्यवच्छेदः । अतोऽष्टानामेवात्र ग्रहणमुचितमिति । प्रमाणान्तरे स्पष्टत्वाय पृथक् पठितानां सुखदुःखादीनामष्टस्वेवान्तर्भावाच्च । अत एवानन्तगुणोऽपि भगवान् 'अष्टगुणोऽष्टबाहुः' इति स्तूयते ॥

तानीमान्यष्टौ लक्षणानि तैत्तिरीयश्रुतौ न स्फुटं प्रतीयन्त इति तानि विविच्य दर्शयति– **तथाही**त्यादिना । प्रसूतिः, या जगत् प्रसूयते । षूङ् प्राणिप्रसवे । प्राणिग्रहणमतन्त्रम् । प्रसूतिरेव **प्रसूती** । सर्वाधिका प्रसूतिरित्येतत् । 'आधिक्येऽधिकम्' इति स्मरणात् । तेन **जगतः प्रसूती** जगदुपादानं प्रकृतिः, जगन्माता चित्प्रकृतिश्च । पराधीनविशेषावाप्तिरूपोत्पत्तिरस्ति हि तस्या अपि । स्वयमेव चाऽह– 'मम योनिरप्स्वान्तः समुद्रे' इति ॥

**निमेषाः** कालावयवाः । अवयवशो हि कालस्य सृष्टिः । न स्वरूपतः । **विद्युतः** सूर्यादिभासकात् । 'यदादित्यगतं तेजः' इत्यादेः । **पुरुषात्** पुरुषसूक्तप्रतिपाद्यात् पूर्णषड्गुणाद् विष्णोः । 'जगृहे पौरुषं

---

**विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम्' इति ज्ञानं संहारश्च । 'विवेश भूतानि चराचराणि' इत्यर्थान्नियमनम् । 'येनाऽदित्यस्तपति तेजसा भ्राजसा च' इति स्पष्टम् ।**

---

रूपमादौ लोकसिसृक्षया' इति हि भागवते । सूर्यादिसृष्ट्या ह्यहोरात्रपक्षमासादिसृष्टिरिति सूचयितुं **'विद्युतः पुरुषात्'** इत्याह । तथाहि समग्रा श्रुतिः–

**'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।**
'कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ।
'अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम्' इति ॥

'विद्युतो व्यद्युतदा३ इति न्यमीमिषदा३ इति' इति च तलवकाराणां श्रुतिः ॥

**तस्मादेव** विष्णोरेव । कथं प्रकृतिकालस्रष्टृत्वकथनेन सर्वसृष्टिरुक्ता स्यात्? आह– **तदधीनत्वादितरसृष्टेः** । सर्वस्यापीतरस्य प्रकृतिविकारत्वात्, कालनियतत्वाच्च सृष्टेः–

'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः ।
'भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्'(९.८) इति हि गीतासु ॥
'तोयेन जीवान् व्यससर्ज भूम्याम्' इति च स्फुटं जीवजडसृष्टिः ॥

**यस्मिन्निदं सर्वं** यथायोग्यं सम्यक् च विविधं च **एधि** एधते, **यस्मिन्** लोकाधिपा अपि **देवा** अधीनत्वेन निषण्णा **इति स्थितिः** । वं बलम् । तस्येनो वायुः । वायुर्हि बलदेवता । वेनो नाम गन्धर्व इति निष्प्रमाणं वदन् शोच्यः । **तद्** विष्ण्वाख्यं ब्रह्म **पश्यन् वेनो** वायुस्तत एव भगवद्दर्शनात्, दृष्टाद् वा भगवतः, **विश्वानि भुवनान्यपि विद्वान्** बभूवेति ज्ञानप्रदत्वम् । 'यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतिः । वायोः जीवकलामानित्वेन तस्मिन् कथिते सर्वे जीवा व्याख्याताः । **'यत्र विश्वं भवत्येकनीडम्'** इति संहारः । यत्र भगवति विश्वं भवत्येकाश्रयं प्रळये तद् ब्रह्म पश्यन्नित्यन्वयः । **भूतानि** नियन्तुं **विवेशेति** नियमनम् । अन्यथा सर्वगतस्य रूपविशेषेण प्रवेशवैयर्थ्यात् । 'तथ् सृष्ट्वा तदेवानुप्राविशत्' इत्युक्तं पुरस्तात् । नहि स्वप्तुं शय्यामिव भूतानि भगवान् विशति । अथापि नियमने निरायासताबोधनाय पुरि शेत इत्याचक्षते । तदेतदाह– **अर्थादिति** । **येनाऽदित्य** इति स्फुटमादित्यादिसर्वदेवनियमनम् । सर्वनियमनं नात्र स्फुटमिति पूर्ववचनोल्लेखः ।

'ऋतस्य तन्तुं विततं विवृत्य तदपश्यत् तदभवत् प्रजासु' इत्यज्ञानं बन्धश्च । 'य एनं विदुरमृतास्ते भवन्ति' इति मोक्षः ॥

तेज इति दाहकत्वम् । भ्राजः प्रकाशकत्वम् । '–तापनी च प्रकाशनी । नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा' इति हि स्मरन्ति । ताभ्यां **तपति** स्वकार्यं निर्वहतीत्यर्थः ॥

**ऋतस्य** भगवतः, तन्निर्मितमित्येतत्, तदावरकं **तन्तुं** जालं **विवृत्येत्यज्ञानं बन्धश्च** । एवं प्रजासु मोहजालं विवृत्य, **तत्** प्रजानां अज्ञानविजृम्भणं **स्वयमपश्यत्** । पश्यंश्च प्रजासु सन्निहितोऽभवद् भगवानिति मन्त्रखण्डार्थः । **य एनं विदुरि**ति स्फुटो मोक्षः । श्रुतावस्फुटं स्कान्दे स्फुटमिति पुराणेन वेदं समुपबृंहयति भाष्यकारः– **उत्पत्तिस्थितिसंहारा** इति । शैवेऽपि स्कान्दे विष्णोरेव सर्वकर्तृत्वं मुक्तकण्ठमुदितमिति पुराणस्य तत्र महत् तात्पर्यमवगम्यते । सूत्रार्थं स्वयं सूत्रकार एव स्कान्दे व्यवृणोदिति । तेन 'जन्मस्थितिभङ्गं समासार्थः' इति वदन्तः परास्ताः । एतेन– 'आत्मन आकाशः सम्भूत इति श्रुतेराद्यस्य आकाशस्य जन्म यतः' इति व्याख्यानं क्षुद्रत्वादेवोपेक्ष्यम् । 'आद्यस्य चतुर्मुखस्य' इति च । महार्थानि हि सूत्राणि भवन्ति ॥

## भावरूपमज्ञानम्

भाष्ये सृष्टिस्थितिसंहारनियमनानि चेतनाचेतनसाधारणानीति प्रथमनिर्देशः । ज्ञानाज्ञानबन्धमोक्षाश्चेतनमात्रधर्मा इति परतः । तत्रापि उत्पत्तिस्थितिसंहारा जगन्निष्ठाः । नियतिर्भगवन्निष्ठा चेति स्कान्दे पृथगुक्तिः । आवृतिरज्ञानम् । 'अज्ञानेनाऽवृतं ज्ञानम्' इति स्मरणात् । नन्वज्ञानमिति ज्ञानाभावः । तदचेतने घटादावप्यस्ति । भगवती भ्रान्तिरियं भवतः । अनुभवविरुद्धं भाषसे । नहि घटोऽयमज्ञ इति केनापि व्यवह्रियते । तेन ज्ञानसमानाधिकरणं भावरूपं पदार्थान्तरमज्ञानमित्यवगम्यते । एतदर्थमेवाऽवृतिपदमुपादत्त । नह्यभावेन किञ्चिदाव्रियते । यथा प्रकाशस्तमसाऽऽव्रियत इति तमः पदार्थान्तरम्, न प्रकाशाभाव एव, एवं ज्ञानमज्ञानेनाऽव्रियत इत्यज्ञानमपि पदार्थान्तरम्, न ज्ञानाभाव एव । तस्माद् युक्तमज्ञानप्रदत्वं भगवत इति ॥

'यतो वा इमानि भूतानि जायन्ते' ।

---

**'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति,**

---

ज्ञानादीनां चतुर्णां चेतनधर्मत्वेऽपि ज्ञानं विशिष्य सात्विकानाम् । आवृतिर्विशिष्य तामसानामिति पृथगुक्तिः । उभयेषामपि समानौ बन्धमोक्षाविति सहोक्तिः । सर्वेषामपि ज्ञानमावृतिरित्युभयं बन्धदशायाम् । सात्विकानां निरन्तरज्ञानरूपो मोक्षः । तामसानां निरन्तरमावृतिरूपं तम एव मोक्षः ॥

बद्ध एव च मुच्यते । न बद्धो मुच्यत एव । येषां ज्ञानमावृतिरित्युभयं स्वरूपधर्मस्तेषां बन्धोऽपि जीवधर्म इति कथं ते मुच्येरन्? तदुक्तम्– 'त्रिदिवनिरयभूगोचरान् नित्यबद्धान्' इति । चकारः सर्वसमुच्चये । पुरुषशब्दश्चेतनवचनः । एतदष्टककर्त्रा केनचित् पुरुषेण भाव्यम् । नहि जडस्य स्वतः कर्तृत्वं सम्भवति । स च परमपुरुषान्नान्य इत्याह– **हरिरेकराळिति** । यः सृष्ट्याद्यष्टकं जगतो हरत्याहरति, अन्ते च बन्धमेव हरति प्रापयति मोक्षमिति हि स हरिरुच्यते । हरिरेक एवैतदष्टककर्तृत्वेन राजत इत्येकराट् । एतेऽष्टावपि हरेरसाधारणधर्मा इत्युक्तं भवति ॥

## उत्पत्तिसृष्टिपदयोरर्थभेदः

इदमत्रावधेयम्– 'यतो वा इमानि भूतानि जायन्ते' इति विषयवाक्यानुगुण्याय सूत्रे **जन्मादी**त्याह । जन्म च द्विविधं भवति । विद्यमानस्याभिव्यक्तिः, अविद्यमानस्याऽकारस्य सृष्टिरिति । प्रथमं जन्म ब्रह्मण्यपि गतम् । तेन द्वितीयं जन्मात्र विवक्षितमित्याह भाष्यकारः– **सृष्टिस्थितिसंहारे**ति । अथ सृष्टिरपि द्विविधा भवति– स्वाधीना स्वस्यैव सृष्टिरेका । 'यत्र त्रिसर्गो मृषा' इति स्मरणात् । पराधीनविशेषावाप्तिरूपाऽपरा । तत्र पराधीनविशेषावाप्तिरेवात्र सृष्टिपदार्थ इति प्रमाणवचनेन स्पष्टयति– **उत्पत्तिस्थितिसंहारा** इति । तथाचायं सूत्रार्थः– अस्य सजडस्य रमाब्रह्मादिचेतनगणस्य जन्माद्यष्टकं यत इति श्रूयते श्रुतौ तदेव ब्रह्म जिज्ञास्यमिति । सूत्रे **'यतः–'** इति श्रुतिप्रतीकं च सूचयामास । तथाच भगवद्भिन्नत्वे सति भावत्वमिदंपदार्थः । 'यतः प्रसूता जगतः प्रसूती' इति चोक्तम् ॥

**तद् विजिज्ञासस्व, तद् ब्रह्म' इति तैत्तिरीयश्रुतिः विष्णोरेवैतानि स्रष्टृत्वादीनि प्रसिद्ध-लक्षणानीत्याह ॥**

यज्जिज्ञास्यमुक्तं विष्ण्वाख्यं ब्रह्म तस्यैवैतानि लक्षणानि इति तैत्तिरीयोपनिषत् स्फुटमुद्धोषयतीत्याह– **यतो वा इमानि भूतानि जायन्ते** । अनेन वाक्यखण्डेन द्वितीयसूत्रस्य पूर्वसूत्रेण सङ्गमनाय **'तद् विजिज्ञासस्व तद् ब्रह्मेति'** इत्यन्तं परिग्रहणीयमित्याह टीकाकारः– **यतो वा** इत्यादिना । एतेन विषयवाक्यं चोदाहृतं भवति । **प्रसिद्धलक्षणानीति** । असाधारणलक्षणानीत्यर्थः । विष्णोरेव प्रमाण-सिद्धानीत्येतत् ॥

## भूतशब्दार्थः

नन्वस्यां विषयश्रुतौ भूतानीति जीवजातान्युच्यन्ते । न जडानि । अभिसंविशन्तीत्युक्तस्य मोक्षस्य जडेऽन्वयायोगात् । तथा तत्र चत्वार्येव लक्षणान्युच्यन्ते, नाष्टौ । तथाहि– जायन्त इत्युत्पत्तिः । जीवन्तीति स्थितिः । प्रळये प्रयन्तीति संहारः । अभितः सर्वात्मना सम्यक्, यथा न पुनरावर्तन्ते, संशब्दवाच्यं विष्णुं विशन्तीति मोक्षः । तथाचैतदानुगुण्यायैवं सूत्रार्थो वर्णनीयः– अस्य जीवजातस्य जन्मस्थितिसंहारमोक्षा यतस्तद् ब्रह्मेति । न भोः, एतस्यामेव श्रुतावुत्तरत्र नारायणानुवाकेऽष्टा-नामप्युक्तेस्तेषामत्रोपलक्षणीयत्वात् । सङ्कोचे कारणाभावात् । अत एव तानि वाक्यान्युदाजहार टीकायाम् । तेन समग्रो नारायणानुवाक एतत्सूत्रस्य विषय इति चोक्तं भवति ॥

वस्तुतस्तु सूत्रं नैकश्रुतिविषयम् । श्रुतिषु तत्रतत्र कथितानि समाहृत्य सूत्रयामास भगवान् । विश्वतोमुखानि हि सूत्राणि भवन्ति । शृङ्गग्राहिकया शिष्यान् ग्राहयितुमेकं वाक्यमुदाजहार भाष्यकारः– **यतो वा इमानि भूतानि जायन्त** इति ॥

अपिचात्राप्यष्टौ लक्षणानि प्रतीयन्ते । तेन भूतानीति चेतनान्यचेतनानि च । जडभूतविवक्षायां जायन्ते जनिमन्ति भवन्तीत्यर्थः । चेतनविवक्षायां संसारे जायन्त इति सृष्टिः बन्धश्च, अज्ञानं च । जीवन्तीति स्थितिर्नियमनं चोभयसाधारणम् । प्रयन्तीति संहारमात्रं जडे । संहारो ज्ञानं च चेतने । अभिसंविशन्तीति मुक्तिः केवलं चेतनस्य । यथायथं चान्वयः । तदेतदाह पण्डिताचार्यः– **तैत्तिरीयश्रुतिर्विष्णोरेवैतानि स्रष्टृत्वादीनि प्रसिद्धलक्षणानीत्याहेति** ॥

‘य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा’ ।

---

**य उ त्रिधात्वित्यादि । प्रकृतिपुरुषकालधातृत्वात् ‘त्रिधातु’ । भूमिं श्रियं च दधार ॥**

---

इदानीं गतिसामान्यदर्शनाय तैत्तिरीयोक्तस्य बाह्वृच्येन संवादमाह भाष्यकारः । तत्र प्रथमं मुखतः स्थितिहेतुत्ववादिनीं नियमनवादिनीं चर्चमाह– **य उ त्रिधातु** । तेनैतेष्वेकैकमपि पृथग् भगवतो लक्षणं भवतीति च सूचितं भवति । विष्णुसूक्तगतमेतदिति नास्यान्यपरत्वशङ्कावकाशः । ‘विष्णोर्नु कम्’ इति षळृचं सूक्तं दीर्घतमस आर्षम् । तत्रेयमृक् चतुर्थी । अयं समग्रो मन्त्रपाठः–

‘यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
**य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा**’ (१.१५४.४) ॥

मध्वस्य चातिप्रियमिदं सूक्तम् । यत्र विष्णुना सह मध्वोऽपि स्तूयते । तथाह्युत्तरो मन्त्रः–

‘तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
‘उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः’ (५) इति ॥

अयं मन्त्रार्थः– यस्य विष्णोः मधुना आनन्देन पूर्णानि अक्षयाणि त्रीणि पदानि रूपाणि प्रणवाक्षरप्रतिपाद्यानि जाग्रत्स्वप्नसुषुप्तिप्रापकाणि सृष्टिस्थितिसंहारकराणि वा, त्रिलोकगतानि, प्राणावतारोपास्यानि रामकृष्णवेदव्यासाख्यानि वा उपासकान् स्वधया स्वरूपानन्देन मदयन्ति । एतेन ‘मुक्तानां परमा गतिः’ इत्यप्याह । स्वयं स्वरूपानन्देन मदन्ति वा । एतेन जगद्धारणादिकं भगवत आनन्दोद्रेकेणेत्यपि सूचितम् । एतदेवाऽह तैत्तिरीयश्रुतिरपि– ‘को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्’ इति । तेन सृष्ट्यादिमोक्षान्तसर्वकर्तृत्वं चात्र सूचितमेव सुधियामित्यवगन्तव्यम् । कीदृशानि पदानि? अक्षीयमाणानि नित्यप्रवृद्धानि । अक्षीयमाणया वा स्वधया । य एव त्रिधातु प्रकृतिपुरुषकालधारकं परतत्वम् । तदेव ब्रह्म परमं कवीनामिति नपुंसकलिङ्गप्रयोगः । ‘पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा धृतवान्’ इत्येके । ‘कालत्रयं गुणत्रयं वा दधार’ इत्यन्ये । तत्पक्षे व्यर्थमिदं विशेषणं न भगवति कश्चिद् गुणविशेषमादधाति । अल्पतृप्तानां

स्थूलदृश्वनामिदमुचितम् । वयं तु महार्थचिन्तनलोलुपाः । तस्मान्महार्थलाभाय प्रकृतिपुरुषकालधारकं ब्रह्मेत्येवोचिततरं व्याख्यानम् । तेन तैत्तिरीयसंवादश्च भवति । तत्र प्रकृतिपुरुषकालस्रष्टृत्वमुक्तम्–'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' इति, 'सर्वे निमेषा जज्ञिरे' इत्यादि च । तद्धारकत्वमत्रोच्यत इति सर्वं सुन्दरम् ॥

एवमपूर्वार्थाविष्करणायेव मन्त्रभागमिममिहोज्जहार भाष्यकारः । उद्धरणमात्रेण मा मूढा विज्ञासिषुरिति प्रियशिष्येण प्रकटयामास च तमर्थम् ॥

इदमुक्तं भवति– प्रकृतिरिति त्रिगुणात्मिका प्रकृतिस्तन्मानिन्यौ सरस्वतीभारत्यौ च । पुरुष इति जीवस्तन्मानिनौ ब्रह्मवायू च । काल इति तमोमानिनी दुर्गा च । न केवलं प्रकृतिपुरुषकालान्, किन्तु **पृथिवीमुत द्यामेको दाधार** । रजोमानिनीं पृथिवीमानिनीं भूमिं च । सत्वमानिनीं द्युमानिनीं श्रियं च । तदेवं परशुक्लत्रयं कथितम् । यद्यपि 'प्रकृतिः पुरुषः काल इति श्रीभूदुर्गाः' इत्यपूर्वमर्थान्तरमुपरिष्टात् वक्ष्यति टीकाकारः । 'पृथिवीमुत द्याम्' इति पुनरुक्तिः स्यादिति तदिह नाऽऽदृतम् । अपि च **विश्वा भुवनानि** चतुर्दशभुवनात्मकं ब्रह्माण्डं च दधार । एक इत्यसाधारणं लक्षणमेतदित्याह । मुख्यधारकत्वद्योतनाय दाधारेति दीर्घः । अवधारणे हि दीर्घं पठन्ति । एक एव दधारेत्यर्थः । यत् क्वचिदन्येषां विश्वधारकत्वमुच्यते तदवान्तरममुख्यं च धारकत्वमिति नातिव्याप्तिशङ्केति ॥

## विष्णुसूक्तस्य भगवत्पादपरता

अत्र कश्चनापूर्वोऽर्थः परमगुरुपरतया स्फुटं प्रतिभाति– यस्य यदीयस्य मुख्यवायोः त्रीणि पदानि रूपाणि हनुमान् भीमो मध्व इति मधुना आनन्दमयेन मधुरानाथेन पूर्णानि, आनन्दपूर्णानि वा । स्मरन्ति हि– 'मदधिर्मध्विति प्रोक्तः' इति, 'मध्वित्यानन्द उद्दिष्टः' इति च । गुणैरक्षीयमाणानि । शत्रुभिर्हिंसितान्यप्यक्षीणसामर्थ्यानि । उक्तं हि– 'त्रिष्वप्येवावतारेष्वरिभिरपघृणं हिंसितो निर्विकारः सर्वज्ञः सर्वशक्तिः सकलगुणगणापूर्णरूपप्रगल्भः' इति । स्वं स्वतन्त्रं भगवन्तं धत्त इति स्वधया भगवद्गुणबोधिन्या वाग्धारया स्वयं सदा मदन्ति हृष्यन्ति सुजनगणं च मदयन्ति । य उ य एव नारायणस्त्रिधातु पृथिवीमुत द्यामेको दधार भुवनानि विश्वा, अस्य श्रीभूमिपतेः सकललोकपतेः नारायणस्याभितः सर्वात्मना प्रियं पाथः पन्थानं तत्ववादाख्यमश्यामनुभवेयमिति मन्त्रद्रष्टा स्वयमाह । यत्र तत्ववादे देवं नारायणमिच्छन्तीति देवयवो नरो मनुष्या मदन्ति । स हि तत्ववादप्रणेता विशिष्य तृतीयावतारो

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' ।

---

**चतुर्भिरि**ति । वासुदेवादिनामवद्भिः रूपैः **'व्यतीन्'** विशेषतोऽधिकान् **'नवतिं' 'साकं'** युगपदेव **'अवीविपत्'** पर्य्यवर्त्तयत् । विप परिवर्त्तन इति धातोः । किमुतान्यान्?

---

मध्व इत्था इत्थमेव भगवद्गुणानां सत्सूपदेशेनोरुक्रमस्यान्तरङ्गबन्धुर्हि । स मध्वः सदा विष्णोः परमे पदे उत्स उत्सुक इति । उत्कृष्टे भगवति सदा सरतीत्युत्स उच्यते । अहो जगन्नाथस्य जगद्गुरोश्च स्तुतिरियं प्रथममुपादीयत भगवत्पादेन शिष्यशिक्षायै ॥

## अपूर्वार्थस्याऽविष्कारः

इत उत्तरं सूक्तमपि षळृचं वैष्णवं दैर्घतमसम् । ततोऽप्यपूर्वार्थां षष्ठीमृचमुज्जहार भाष्यकारः– **चतुर्भिः साकम्** । स्थितिः पूर्वमुक्ता । सृष्टिसंहारौ नियमनं च भगवदेकलक्षणमित्यनेन मन्त्रखण्डेनाऽह । अयं समग्रो मन्त्रः–

**'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।**
'बृहच्छरीरो विमिमान ऋक्वभिर्युवाऽकुमारः प्रत्येत्याहवम्'(१.१५५.६) इति ॥

तत्र पूर्वार्धं वेदरतैर्विस्मृतार्थं स्वयमाचार्यमुखाद् विदितार्थः पण्डिताचार्यो व्याचख्यौ– **वासुदेवादिनामवद्भिरित्यादिना** । नम्यन्ते शब्द्यन्त इति नामवन्तो नामानस्तैः । प्रसिद्धवचनं हि नामपदम् । **व्यतीन् विशेषतोऽधिकानि**ति । तथाहि खण्डार्थनिर्णये– 'विशेषेणाधिकत्वेन व्यतयो देवताः स्मृताः' इति । विशेषेणान्यानतियन्तीति व्यतय इत्यर्थः । परिवर्तमानं चक्रमिव । **विप परिवर्तन इति धातोरि**ति । धातुपारायणिकैर्विस्मृतोऽयं धातुः । भाष्यकारः पण्डिताचार्योपज्ञं प्रकटयामास । विपेश्चुरादेर्लुङि रूपमवीविपदिति । अर्वाश्चः पण्डिता विस्मृतप्रतनधातुपाठाः 'टु वेपृ कम्पने' इति धातुं पठन्तः कथञ्चिद् रूपं निर्वाहयन्ति । अर्थस्तु न स्वरस इति स्फुटम् । संसारे परिवर्तनमिति सृष्टिसंहारावुदितौ भवतः । सृष्टिसंहारपरम्परैव हि संसारो नाम । ज्ञानाज्ञानाभ्यां परिवर्तनम्, संसारे मोक्षे च परिवर्तनमित्यन्ततः सृष्ट्याद्यष्टकमप्युदितमेव ॥

प्रधानवायुना सह पञ्चाशन्मरुतः, वसवः, रुद्रादित्या एकादश, प्रजापतयश्च ब्रह्मदशमा नवतिर्देवाः । चतुर्भिर्नामवद्भिः कीर्त्तिमद्भिर्देवैः साकं नवतिं देवान् पर्य्यवर्त्तयदिति वाऽन्वयः ।

तथाचोक्तम्–

> 'आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
> 'बृहस्पतिश्च कामश्च मनुर्दक्षो विनायकः ॥

---

का चेयं व्यतीनां नवतिः? आह– **प्रधानवायुना सहेति** । **पञ्चाशन्मरुतः**, अष्टौ **वसवः**, रुद्रा **एकादश**, विष्णुमृते आदित्याश्चै**कादश**, विष्णुना वेपनीया ह्यत्रोच्यन्ते, मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुर्वसिष्ठो भृगुर्दक्ष इति नव **प्रजापतयो ब्रह्मदशमा** इति **नवतिर्देवाः** । यद्यप्यत्र द्व्यशीतिर्देवाः । अष्टौ महर्षयः । अथापि ते देवतागणमध्यपठिताः जातापरोक्षा इति देवा उच्यन्ते । एवं व्यतीनामेव परिवर्तने तदन्यनियमनं कैमुत्यसिद्धमित्याह– **किमुतान्यानिति** । **अन्यान्** देवानृषीन् मनुष्यादींश्च । एषां वस्वादीनां नामानि मत्कृतायां तारतम्यमीमांसायां द्रष्टव्यानि ॥

## प्रचलितपाठविमर्शः

अथास्य मन्त्रखण्डस्य स्वयमाचार्यमुखादधिगतमपूर्वमर्थान्तरं चाऽह– **चतुर्भिर्नामवद्भिः कीर्तिमद्भिरिति** । अहो एतदाविष्कारार्थमेव कृपाकूपारो भाष्यकारोऽमुं मन्त्रखण्डं स्वभाष्ये जग्रन्थेति । अर्थाविष्करणाय च प्रियशिष्यं लिकुचकुलतिलकं व्याख्यारचनाय चोदयामासेत्यूहामहे । यदि मन्त्रखण्डोऽयं भाष्ये नाग्रथिष्यत, तत्वप्रदीपकृता च न व्याख्यास्यत, हन्त कदाऽपि न व्यज्ञास्यतापूर्वोऽयं मन्त्रार्थः । महतीयं करुणा भगवत्पादस्य । तथाचायमर्थः– देवेष्वधिकत्वेन नम्यन्त इति नामभिः **कीर्तिमद्भिश्चतुर्भिर्देवैः** सह **नवतिं देवान्** स्वाधीनतया **पर्यवर्तयदिति** । तथाविधमर्थान्तरं च स्वयं भगवत्पादेनोक्तं रहस्यं स्वस्मिन् करुणया, स्वेन लोकेष्वाविष्करणाय चेत्याह– **तथा चोक्तम्** । के ते? आह– **आदित्या** इत्यादिना । प्रथमपादे गणदेवता उक्ताः । पूर्वोक्तदिशा एकादशाऽदित्याः, अष्टौ वसवः, एकादश रुद्राः, प्रधानवायोः पृथग्गणनादेकोनपञ्चाशन्मरुतः । संहत्य एकोनाशीतिः । अश्विनोः संयुक्तयोरेकत्वेन ग्रहणम् । तेनाश्विमुखा कुबेरान्ता एकादशेति **नवतिर्देवाः** । ततो

'विधु(भृगु)श्चैवानिरुद्धश्च धर्म्मो निरृतिरेव च ।
'कुबेरसहिता देवा नवतिः सम्प्रकीर्त्तिताः ।
'अनन्तो गरुडो वायुश्चत्वारो ब्रह्मणा सह' इति ।

विशिष्टाश्चत्वारः– शेषगरुडौ ब्रह्मवायू इति । अत्रेदमवगन्तव्यम्– टीकोदाहृते प्रमाणश्लोके– 'भृगुश्चैवानिरुद्धश्च' इति सर्वत्र प्रचुरः पाठः । तथैव चोदहारि व्याख्यातृभिश्च । असङ्गत इवायं पाठः । 'विधुश्चैवानिरुद्धश्च' इति पठनीयम् । नवतिर्हि देवा अत्र विवक्षिताः । तत्र भृगोरृषिगणप्रविष्टस्य नारदस्येव, वसिष्ठादीनामिव च नात्र परिगणनं युक्तं न केवलम् । आ अष्टादशकक्ष्यायाः सर्वदेवानां परिगणनेऽपि चन्द्रस्यैकस्य परित्यागे कारणाभावात् न्यूनता च तत्पक्षे । अतः 'विधुश्चैवानिरुद्धश्च' इत्येव पाठः साधीयान् । 'शीतगुश्चानिरुद्धश्चेति' वा । भृतगुर्भृगुरिति वा कथञ्चिद् व्याख्येयम् । सदारा एव सदा देवा गृह्यन्त इति तारतम्यकक्ष्यापठिताः कुबेरान्ताः प्रायः सर्वेऽपि देवा अत्रोपसमगृह्यन्तेतीममेवार्थं साधीयांसं मन्वानः पण्डिताचार्यः स्वोपक्रमं प्रकटीचकार । उत्तरार्धे न किमप्यपूर्वं प्रमेयमाविष्करणीयमस्तीति न व्याचख्यौ । अयमर्थः– **बृहच्छरीरः** व्याप्तज्ञानानन्दमयशरीरो मूलरूपी नारायणः प्रथमाभिव्यक्तैश्चतुर्भिर्वासुदेवादिरूपैः नवतिं देवान्, स्वयं नारायणश्चतुर्नवतिं वा देवान् सृष्ट्यादिभिः संसारे परिवर्तयन्नन्ते मोक्षदो भवतीति । कीदृशो विष्णुः? बृहच्छरीरतया अप्रमेयोऽपि **ऋक्वभिः** ऋङ्मन्त्रैः स्तुवद्भिः **विमिमानः** मीयमानो भवति । अथच **अकुमारो** युवा । नायं कौमारमनुभूय युवा बभूव । किन्तु नित्ययुवा । अकुत्सितानां मानं रमणं च येनेति वाऽकुमारः । कुमार इति वा प्रतृण्णम् । वामनावतारे कुमारो बभूव । व्यासाद्यवतारेषु जातमात्र एव युवा बभूवेति । कुत्सितं मारयतीति वा कुमारः । सोऽयं पश्चात्मा भगवानस्माकमाहवमाह्वानं प्रत्येति, प्रतीत्य च दर्शनेनानुगृह्णातीति निरीक्षामह इति । देवानामर्थे कुत्सितमारकः सन्नसुराणामाहवं युद्धं प्रत्येतीति च । देवानां मुक्तिस्रष्टा असुराणां तमःस्रष्टा चेत्येतत् ॥

## सायणाद्युक्तार्थविमर्शः

अविदितार्षसम्प्रदाया एवं मन्त्रार्थं व्याचक्षते– 'संवत्सर एकः, अयने द्वे, पञ्चर्तवः, द्वादश मासाः, चतुर्विंशत्यर्धमासाः, त्रिंशदहोरात्राः, अष्टौ यामाः, एकस्मिन् दिने पर्यावर्तमानानि मेषादीनि द्वादश लग्नानीति मिलित्वा चतुरधिकनवतिसङ्ख्याकानवीविपत्' इति । अयि भोः, एकस्मिन् दिने पर्यावर्त-

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' ।
'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' ।

---

**परो मात्रयेति** । मात्रायाः **'परः'** परिमाणातीतस्त्वं, **तन्वा वृधान** वर्द्धमान, देहेन पूर्ण्ण । इत्थम्भावे तृतीया । देहरूपेण पूर्ण्ण इत्यर्थः । यतश्चिदानन्दात्मको विष्णोरभिन्नश्च

---

मानानि निमेषकलाकाष्ठामुहूर्तादीनि किमिति पर्यत्याक्षीः । तेषां परिगणने सङ्ख्याधिक्यं भवति । अस्माकं तु यथाकथाच चतुरुत्तरनवत्या भाव्यमिति किल वक्षीष्ठाः । न वयं रोचयामहे तदिदं याथाकथाचम् ॥

ननु वयमपि वक्षीमहि– भवताऽपि यथाकथाचैव चतुर्नवतिर्देवानां सम्पादितेति । ब्रुवीथाः, किन्तु दुरुक्तं भवति । यतः 'आदित्या वसवः' इत्यादिप्रमाणप्रमितमस्मद्व्याख्यानम् । अपिच महदिदमकौशलम्– यद् वैष्णवसूक्तगतं मन्त्रमादित्यपरतया व्याख्यानम्, आदित्यात्मा विष्णुरित्यभेदपरतया कथञ्चिद् विष्णौ सङ्गमनं चेति । व्यतीनिति च व्यर्थं पदमिति ॥

एवं निदर्शनार्थमर्थविशेषद्योतनार्थं च सूक्तद्वयस्य मन्त्रखण्डयोरुद्धरणम् । समग्रमपि सूक्तद्वयं यथायथं विष्णोः सृष्ट्यादिकर्तृत्वमाहेत्यर्थः ॥

अथान्यस्मिन् विष्णुसूक्ते लक्षणानामेषां भगवदेकनिष्ठतां प्रतिपादयत् मन्त्रद्वयमुद्धरति–

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।**
'उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥

**'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।**
'उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः' इति ॥

(ऋ.सं. ७.९९.१–२)

सप्तर्चं वैष्णवं सूक्तम् । मैत्रावरुणस्य वसिष्ठस्यार्षम् । तत्राऽद्ये इमे द्वे ऋचौ । मात्रा परिच्छेद इयत्ता । तृतीया पञ्चम्यर्थे । **मात्रायाः परो**ऽतीतः । देशतः कालतो गुणतः शक्तितश्चापरिच्छिन्नः । न केवलं स्वरूपतः । **तन्वा**ऽपि **वृधान** पूर्ण । स्वरूपदेहत्वात् । एतदेव पूर्वमन्त्रेऽपि समाख्यातम्–

देहः । **ते** महिमानं नानुभवन्ति न प्राप्नुवन्ति च । त्वदीयायाः 'पृथिव्याः' प्रकृतेः 'रजसी' पुण्यपापे 'विद्म' । प्रकृते रजसा हि पुण्यपापे सृज्येते । 'परमस्य' ते रूपं महिमानं वा त्वमेव वित्से ॥

त्वमेव **'महिम्नो'** महिमसमुदायस्यान्तः । ब्रह्मणः श्रियो वा महिमानमतिशयितो हि विष्णुमहिमा । अन्यमहिम्नां **परमन्तं ते महिमानं न** कश्चिदाप ॥

यत्राकं नास्ति तन्नाकम् । उच्चैरस्तम्भयः । **'ऋष्वं'** प्रकाशरूपम् । **'पृथिव्याः'** पृथिव्यात्मकस्य

---

'बृहच्छरीरः' इति । देहेन कश्चित् प्रकारं प्राप्त इत्थम्भूतः । तस्य लक्षणं देहः । ततस्तृतीया । तथाहि पाणिनीयमष्टकम्– 'इत्थम्भूतलक्षणे'(अ.सू.२.३.२१) इति । **अश्नुवन्ति** । अशू व्याप्तौ । श्नुविकरणः । पाणिन्यभिमतमात्मनेभाषात्वं नाऽश्रितम् । सर्वस्मादुभयपदवादिनो हि वैदिकाः । अनेन फलस्य परगामित्वं नाम दोषमुद्भावयामास । यद्यश्नुवन्ति तर्हि विष्णोर्महित्वमन्यगामि स्यात् । तेन भगवल्लक्षणं व्यभिचरितं स्यात्, तस्मान्नाश्नुवन्तीति । व्याप्तिश्च द्विविधा भवति मनसा स्वरूपेण वेति । तदेतदाह– **नानुभवन्ति, न प्राप्नुवन्ति** च । एतदर्थद्वयसूचनायैवानुरुपासृज्यत । उत्तरत्र च आपेति स्फुटं प्राप्तिवचनम् ॥

ते पृथिव्याः **त्वदीयायाः प्रकृतेः** । रजोमानिनी हि भूमिः । **रजसी पुण्यपापे** इति । सत्वेन पुण्यम् । तमसा पापम् । रजसा हि पुण्यं च पापं च । 'अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः' इत्यर्जुनप्रश्नस्य भगवानप्येवमेवोत्तरमाह– 'काम एष क्रोध एष रजोगुणसमुद्भवः' इति । कार्ये कारणोपचारः **पुण्यपापे रजसी** इति । एवं प्रकृतिबद्धा वयं प्रकृतेः **परमस्य** ते महिमानं न विद्म । त्वमेव केवलं **वित्से** । यतस्त्वमेव सर्वमहिम्नामन्तः परा काष्ठा । तं ते महिमानं जातो न कश्चिदाप । जायमानो नाऽप्नोति । 'परम्+अस्य' इति वा प्रतृण्णम् । **अस्य ते रूपं महिमानं वा परं** केवलं **त्वमेव वित्से** । जनिष्यमाणो नाप्स्यति । जीवमहिम्नामन्तो ब्रह्मा, परतन्त्रमहिम्नामन्तः श्रीः । त्वं **सर्वमहिमसमुदायस्यान्तः** । बृहन्तं नाकं परमसुखरूपं मोक्षम् । तदेतदाह– **यत्राकं** दुःखं **नास्ति** तदेव मुख्यतो **नाकमिति** । **उच्चैः** सर्वोपरि अस्तम्भयः अस्थापयः । 'अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु' इति

'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा'
इत्यादि च ॥ २ ॥

**॥ इति द्वितीयमधिकरणम् ॥ ❋ ॥**

---

ब्रह्माण्डस्य प्राचीं दिशमुत्थापनेन 'दाधर्थ' इति सर्वधारणोपलक्षणम् । देवान् पर्य्यवर्त्तयदित्युक्त्यैव सृष्ट्यादयः स्पष्टोदिता अतिमहिमोक्त्याऽपि सन्दर्शिताः ॥

---

हि भागवते । **ऋष्वं ज्ञानमयप्रकाशरूपम्** । ऋषतीति ऋष्वम् । 'ऋष ज्ञाने' इति प्राचीनम् । अथच पृथिव्या **ब्रह्माण्डस्य प्राचीं दिशमधारयः** । किं प्राचीमेव? नेत्याह– **सर्वधारणोपलक्षणम्** । यथा पृथिवीति न केवलं भूरुच्यते किन्तु सत्यान्तं सकलं ब्रह्माण्डम्, एवं प्राचीति न केवलं पूर्वा दिगुच्यते किन्तु सर्वा दिशः । तथाच पृथिव्याः प्राचीं ककुभं दाधर्थेति ब्रह्माण्डस्य सर्वा दिश उत्थाप्याधारय इत्युक्तं भवति । कथं पृथिवी ब्रह्माण्डम्? पृथिव्यात्मकत्वात् । पृथिव्यप्तेजसां समवायो हि ब्रह्माण्डं नाम । तत्र धारणी स्थिरता पृथिव्यंशेनैव । कथं प्राची सर्वा दिशः? काकेभ्यो दधि रक्ष्यतामिति यथा । प्राधान्यात् प्राच्या मुखतो ग्रहणम् । तदुक्तमैतरेयब्राह्मणे– 'ऋचां प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषामपाराम् । अथर्वणामङ्गिरसां प्रतीची साम्नामुदीची महती दिगुच्यते' (३.१२.९.१) इति ॥

ननु नात्र सृष्ट्यादीनामष्टानां कर्ता विष्णुरित्युच्यते । तत् किमनेन मन्त्रजातेनोद्धृतेन? आह– **देवान् पर्यवर्तयदित्युक्त्यैवेति** । संसारचक्रे सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धैः पर्यवर्तयदिति किलार्थः । देवानेव पर्यवर्तयत् किमुतान्यान्? तेन सर्वजीवान् परिवर्तयतीति गम्यते । अर्थाज्जडानपि यथासम्भवम् । चतुर्षु रूपेषु वासुदेवोऽपि प्रस्तुतः । तेन परिवर्तनं मोक्षान्तमिति मोक्षोऽपि सूचित एव । प्रकृतिपुरुषकालधारकत्वोक्त्या च प्रकृत्यतीता कालातीता च पुरुषमुक्तिस्तदधीनेति ज्ञायत एव । 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इति हि श्रुतिः । अनन्तमहिमत्वव्याप्यं सर्वकर्तृत्वं तस्याव्यभिचरितं लक्षणमित्युत्तरमन्त्राभ्याम् । 'कर्तृत्वात् सगुणं ब्रह्म' इति च भागवते ॥

---

**यो नः पिता** पाता । 'स एव पितृसंस्थस्तु पातृत्वात् पितृनामकः' इत्यैतरेयसंहितायाम् । **विधाता** धारणपोषणकर्त्ता, पोषणं ज्ञानमोक्षप्रदानेन ॥ ✻ ॥

**॥ इति जन्माद्यधिकरणम् ॥ ✻ ॥**

---

अथान्ते पूर्वसूत्रभाष्य एव ग्राहितविष्णुपरत्वस्य विश्वकर्मसूक्तस्य मन्त्रार्धमुद्धरति– **यो नः पिता** (ऋ.सं.१०.८२.३) । उत्तरार्धं तु पूर्वमेवोदहारि– **'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या'** इति । विश्वकर्मणो भौवनस्याऽर्षम् । तद्बिम्बभूतो विश्वकर्मनामा विष्णुर्देवता । 'रूपंरूपं प्रतिरूपो बभूव' इति श्रुतिः । 'विश्वकर्मा मनुस्त्वष्टा' इति च विष्णुसहस्रनामसु ॥

पिता जनितेति पुनरुक्तिभ्रमं वारयति– **पिता पाता** । **नः** सर्वेषां जीवानां **पाता** । तेन स्थितिहेतुत्वं नाम लक्षणं चोदितं भवति । **जनिता** जनयिता चेति सृष्टिहेतुत्वमुक्तम् । 'जनिता मन्त्रे' (अ.सू. ६.४.५३) इति णिलोपः इत्युक्तम् ॥

अथच पा पाने । प्रळये जगतः पातृत्वादत्तृत्वाच्च पाता । 'त्रेधा वा इदमन्नं विहितम् । अशनं पानं खादः' इति श्रुतेः । तेन संहर्तृत्वं चोक्तं भवति । विधातेति नियमनज्ञानमोक्षाः । तदाह– **धारणपोषण-कर्ता** । धत्ते स्वयं सर्वं दधन्नियमयति । **ज्ञानमोक्षदानेन** विशेषेण धत्ते च । 'डु धाञ् धारणपोषणयोः' इति हि धातुपाठः । 'डु धाञ् दानधारणयोः' इति क्षीरस्वामी । तदपि स्यात् । तेन विषादं संसारबन्धमज्ञानं दधाति ददातीति विधाता । तदेवं सृष्ट्याद्यष्टकमप्युदितम् । वस्तुतस्तु ज्ञानमोक्षदाता इत्यर्थादज्ञानबन्धौ च कथितौ । य एक एव च **विश्वानि** चतुर्दश **भुवनानि**, तत्र गतानि सुरनरादीनां **धामानि** स्थानानि, स्वरूपाणि शरीराणि च, स्वस्यानन्तसामर्थ्यानि च **वेदेति** च स्फुटमितरेषामज्ञान-मुक्तम् । यो देवानाम्, किमुतान्येषाम्, नाम्ना दाम्ना बध्वा धारक इति बन्धश्च । नामानि सर्वाणि स्वयं धारयति, स्वान्येव नामानि देवादीनां दधाति ददाति चेति नामधाः । तं सम्प्रश्नं सम्यक् पृच्छाविषयं विजिज्ञास्यं विष्णुं विश्वानि भुवनानि शरणं यान्ति, प्रळये तदुदरं यन्ति । प्रश्नं+सं+ यन्तीति वा प्रतृण्णम् । मोक्षे तं सम्यग् यन्तीति स्फुटं नियमनसंहारमोक्षाः ॥

## मन्त्रोद्धारस्य क्रमिकता

साकूतोऽयं क्रमिको मन्त्रोद्धारः। 'य उ त्रिधातु–' इति, 'चतुर्भिः साकम्' इति च प्रथममण्डलगते ऋचौ। 'परो मात्रया–'इति, 'न ते विष्णो–' इति सप्तममण्डलगते। 'यो नः पिता–' इति दशममण्डलगता। तेन बाह्वृच्यस्याऽदिमध्यान्तगताश्च मन्त्रा उद्धृताः। तेन उपक्रमोपसंहाराभ्यां समग्रस्यापि बाह्वृच्यस्य विष्णुपरतां सूचयामास। मध्यग्रहणेन स्मारयति स्म च स्मृतिवचनम्– 'आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इति।

अथच 'यो नः पिता जनिता–' इत्ययं मन्त्रः किञ्चित् पाठभेदेन तैत्तिरीयेऽपि पठ्यते– 'स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा' (तै.आ.१०.१.४.) इति। यत्र विष्णोरेव ब्रह्मत्वमुदघुष्यत– 'तदेव ब्रह्म परमं कवीनाम्' इति। तैत्तिरीयसंहितायामपि पेठुः (४.६.२.१)। कठा अप्येनं पठन्ति। वाजसनेयिनो माध्यन्दिना अपि। 'स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा' (२.१.३.) इति चाथर्वसंहितायाम्। एतेन विष्णोः सर्वकर्तृत्वे सर्ववेदसमाम्नाय-माह ॥ * ॥

॥ इति द्वितीयं जन्माद्यधिकरणम् ॥ * ॥

—०—

# तृतीयमधिकरणम्
## (शास्त्रयोनित्वाधिकरणम्)
## (१.१.३.)

अनुमानतोऽन्ये न कल्पनीयाः–

**॥ शास्त्रयोनित्वात् ॥ १.१.३. ॥**

---

## तत्वप्रदीपः

जगत्कारणत्वं विष्णोरुक्तं केचित् प्रधानरुद्रादीनां कल्पयन्ति, तन्निराकरोति– **अनुमानत** इत्यादिना । **अनुमानतोऽन्ये न कल्पनीयाः** कारणभूता इति कुतः? ॥ **शास्त्रयोनित्वात्** ॥

---

## तत्वचन्द्रिका

॥ **शास्त्रयोनित्वात्** ॥ ननु शक्यं सूत्रे एते अन्यथाऽपि व्याख्यातुम्– आद्यस्य चतुर्मुखस्य जन्म यतः तद् ब्रह्म । तथा हि श्रुतिः–'यो ब्रह्माणं विदधाति पूर्वम्' इति । तथा, **शास्त्रयोनित्वात्** ब्रह्मणः प्रथमोपदेशेन शास्त्राभिव्यक्तिकारणत्वाच्च जिज्ञास्यम् । तथाहि श्रुतिः– 'यो वै वेदांश्च प्रहिणोति तस्मै' इति । भागवतं च संवदते– 'जन्माऽद्यस्य यतः' इति 'तेने ब्रह्म हृदा य आदिकवये' इति चेति । शक्यं शतधा व्याख्यातुम् । विश्वतोमुखानि हि सूत्राणि भवन्ति । नभः पतन्त्यात्मसमं पतत्रिणः । अथापि यथा महार्थलाभस्तथा सूत्राणि व्याख्येयानि भवन्ति । सर्वस्रष्टरि ब्रह्मस्रष्टृत्वं चोक्तमेव । सृष्टिश्च नामरूपयोरिति द्वितीयसूत्रेणैव शास्त्रस्रष्टृत्वं चाभिहितमेव । तत् किमित्याम्रेड्यते । उक्ता जिज्ञासायाः कर्तव्यता । उक्तं च लक्षणं जिज्ञास्यस्य । इदानीं द्वयमिह वक्तव्यम्– किम्प्रमाणको जिज्ञास्यो नारायण इति । बहूनि चाऽनुमानिकानि जिज्ञास्यानि वादिनो वदन्ति । किमिति तान्यपहाय

**'नावेदविन्मनुते तं बृहन्तम्–', 'औपनिषदः पुरुषः' इत्यादिश्रुतिभ्यः ॥**

---

जगत्कारणस्य शास्त्रयोनित्वे प्रमाणमाह– नेत्यादि । **'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं सम्पराये'** इति । **तं** पूर्ण्णं वेदेनैव मनुते । सर्वमनुभवतीति 'सर्वानुभुः' ।

---

नारायणाख्यं ब्रह्मैव जिज्ञास्यमिति । अत आह भगवान् भाष्यकारः– **अनुमानतोऽन्ये न कल्पनीयाः** । अनुमानानीत्यनुमानमात्रबलास्तत्तत्समयाश्च । स्वमनीषामात्रानुगतेषु हि तेषु तेषां मानत्वाभिमानः । अनुमानत इति ल्यब्लोपनिमित्ता पञ्चमी । स्वप्रज्ञाविलसितं मानमनुसृत्यान्ये प्रधानरुद्रादयः **न कल्पनीयाः** । ननु धूमानुमानेन वह्निः कल्प्यते । तत् कथमनुमानतोऽन्ये न कल्पनीयाः? अतो वाक्यशेषोऽध्याहर्तव्य इत्याह टीकाकारः– **कारणभूता** इति । जगज्जन्मादिकारणभूता इत्यर्थः । तदप्यपर्याप्तम् । उत्तरसूत्रेणान्वयार्थम्, **'इति कुतः'** इत्यप्यध्याहर्तव्यमित्याह– **कारणभूता इति कुत** इति । सूत्रमपि साध्याहारम् । तेन **कुत** इति प्रश्नस्योत्तरम्– जगज्जन्मादिकारणस्य **'शास्त्रयोनित्वात्'** इति सूत्रम् ॥

प्रधानं प्रकृतिरेव जगत्कारणमिति साङ्ख्याः । तथाहि भणन्ति– 'प्रकृतिः कर्त्री । पुरुषस्तु पुष्करपलाशवन्निर्लिप्तः' इति । प्रकृतिर्नटी । पुरुषस्तु मूकप्रेक्षक इति । सर्वप्रधानभूता शक्तिरेव जगत्कारणमिति शाक्ताः । यदाचक्षते– 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्' इति । शिव एवेति शैवाः । एतेषां प्राधान्यान्मुखतो ग्रहणम्– **प्रधानरुद्रादीनां कल्पयन्तीति** । तैरादिमन्तः स्कन्दसूर्यविनायकाः । अथ चावैदिकाः केचित् शून्यं जगत्कारणमाहुः । सिद्धपदवीं प्राप्ता अर्हन्त एव जगत्कारणभूता इत्यन्ये । अकारणं जगदित्यपरे ॥

ननु किं ब्रह्मा विस्मृतः? श्रूयते च– 'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता' इति । 'प्रजापते न त्वदेतान्यन्यो जातानि परि ता बभूव' इत्यादीनि च । तस्मात् प्रधानब्रह्मरुद्रादीनां कल्पयन्तीति वक्तव्यम् । न वक्तव्यम् । ब्रह्मणोऽपि जगत्कारणत्वेन शास्त्रयोनित्वात् । तर्हि गतं भगवतोऽसाधारणलक्षणत्वं जन्मादीनाम् । तस्योत्तरमुत्तरसूत्रे वक्ष्यति– चतुर्मुखवाचकानां पदानां मुख्यतः विष्णावेव समन्वयेन मुख्यकारणत्वं विष्णोरेव । पितृत्वाच्च । अमुख्यं सर्वकारणत्वं

**सम्यक् परस्मिन्नयनम्, 'सम्परायः' । तादर्थ्ये सप्तमी । 'औपनिषदः' उपनिषदेकगम्यः । 'पुरुषः' पूर्णषड्गुणः । नहि पूर्णगुणात् सर्वज्ञादन्यस्य जगत्कारणत्वम् ॥**

ब्रह्मणोऽपि । पुत्रत्वात् । एतदपि सूचितं पूर्वसूत्रेण– **जन्म आद्यस्य यत** इति । एतदप्युक्तम्– 'यत्र वा पितुस्तद् वा पुत्रस्य' (महै.उ.१.६.८.) इति ॥

**जगत्कारणस्येति** । जगज्जन्मादिकारणस्येत्यर्थः । 'जन्माद्यस्य यतः' इति तस्यैव प्रस्तुतत्वात् । शास्त्रस्य योनित्वं प्रमाजनकत्वेन । शास्त्रं योनिः प्रमाणं यस्य तच्छास्त्रयोनि नारायणाख्यं ब्रह्मेति । शास्त्रशब्दार्थं वक्ष्यति ।सावधारणं वचनम् । शास्त्रैकगम्यत्वात् । जगत्कारणस्य शास्त्रयोनित्वे किं प्रमाणम्? शास्त्रवचनमेव । तत्र द्वे मुखत आह– **नावेदविदित्यादिना** । तथाहि समग्रा श्रुतिस्तैत्तिरीयब्राह्मणान्ते–

### तैत्तिरीयब्राह्मणस्योपक्रमोपसंहारविमर्शः

'येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान् योनियोनौ ।
**'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं सम्पराये ॥**

'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् ।
'तस्यैवाऽत्मा पदवित् तं विदित्वा न कर्मणा लिप्यते पापकेन' इति ॥

(३.१२.९.१७-१८)

येन नारायणेन स्वतेजसा समेधितः सूर्यस्तपति । 'यदादित्यगतं तेजः' इत्यादेः । यश्च जगतः पिता पाता च जनकश्च । अथापि पुत्रेण चतुर्मुखेन पितृमान् बभूव । 'कविर्यः पुत्रः स ईमाचिकेत यस्ता विजानात् स पितुष्पिताऽसत्' इति श्रुतेः । कथं पुत्रेण? योनियोनौ जातेन पुत्रेण । जगद्योनेः चित्प्रकृतेः योनौ स्वस्मिन्नेव जातेन । 'मम योनिरप्स्वान्तः समुद्रे' इति श्रुतेः । अथच योनेश्चित्प्रकृतेः योनौ मूर्धनि जातेन । 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति स्मरणात् । 'अहं सुवे पितरमस्य मूर्धन्' इति श्रुतेः । ननु 'ब्रह्मविद् ब्रह्मैव भवति' इति जीवस्यैव ब्रह्मभावःश्रूयते । तत् कथं पितृत्वादिना तस्योपासनमिति । आह– **पिता पुत्रेण** । पितृमान् पुत्रः स्वभार्यागर्भे जातेन पुत्रेण स्वयं च पिता भवति । नतु येन पितृमान् स एव पिता भवति । पितुः पुत्र एव सन् स्वपुत्रस्य पिता भवति ।

**नच द्वयोः पूर्णत्वम्, पूर्णत्वविरोधात् । आदिशब्दात्, 'सर्वे वेदा यत् पदमामनन्ति', 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादि च द्रष्टव्यम् ॥**

एवं पूर्णब्रह्मवित् स्वयमपि पूर्णो भवति नतु तदेव ब्रह्म भवतीति भ्रमितव्यमित्यर्थः । **तं बृहन्तं पूर्णं अवेदविन्न मनुते** । किमुक्तं भवति? **वेदेनैव मनुत** इत्युक्तं भवति । **सर्वमनुभवतीति सर्वानुभुः** । भवतेर्डुः । शम्भुरितिवत् । **सम्यक्** पुनरावृत्तिरहिततया **परस्मिन् अयनं** निलयनं **सम्पराय** इति । सम्पराय इति युद्धमाचक्षते । तत्र पर इति शत्रुः । अत्र पर इति परमात्मा । तेन मुख्योऽयं सम्पराय इति । **सम्पराये मोक्षार्थम्** । तदाह– **तादर्थ्ये सप्तमीति** । तथाहि वार्तिकम्– 'निमित्तात् कर्मयोगे सप्तमी वक्तव्या' (अ.सू.२.३.३६) । उदाहरन्ति च– 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्' इति । तदेव स्फुटमुत्तरमन्त्रेणाऽह– **एष नित्य** इति । **ब्राह्मणस्य** वेदवेद्यस्य नारायणस्यैव **एष नित्यो महिमा** । नान्यस्य कस्यचित् । कोऽयं महिमा– **न कर्मणा वर्धते नो कनीयान्** । जीवस्तु कर्मणा बध्यते तं विदित्वा मुच्यते । तं **विदित्वा** जीवोऽपि **न कर्मणा लिप्यते पापकेन** । 'उत्तरपूर्वाघयोरश्लेषविनाशौ' इति हि सूत्रम् । तं **विदित्वैव तस्य पदविद्** भवति, पदं मोक्षाख्यं विन्दत इति । स **एव** च **तस्याऽत्मा** प्रियो भवति । 'ज्ञानी त्वात्मैव मे मतम्', 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्यादेः । एवं ब्राह्मणस्योपसंहारे पठित एव सर्वनामवाच्यतयोपक्रम उपाक्रम्यत (तै.ब्रा.१.१.१)–

> 'स प्रथमः सङ्कृतिर्विश्वकर्मा स प्रथमो वरुणो अग्निः ।
> 'स प्रथमो बृहस्पतिश्चिकित्वान् तस्मा इन्द्राय सुतमाजुहोमि' इति ॥

'सङ्कृतिः' सम्यग् जगत्कृतिर्येनेति सकलजगत्कर्ता 'सः' नारायण एव 'प्रथमः विश्वकर्मा' विश्वकर्मशब्दमुख्यार्थ इत्यर्थः । तस्मात् स एव मुख्यतया अग्निवरुणबृहस्पत्यादिशब्दवाच्य इत्येतत् । शब्दमुख्यार्थ इत्यर्थः । तस्मात् **तस्मा एव इन्द्राय** परमेश्वराय **सुतं** भक्त्याद्यलङ्कृतं मन **आजुहोमि** समर्पयामीति । तदुक्तं विष्णुतीर्थीये–

> 'पदेन प्रथमेनाऽसावाद्य इत्येव चाऽगतम् ।
> 'न चेत् सुव्यर्थता तस्य स्थितस्याऽदौ प्रतिप्रति ।
> 'तस्मान्नामानि सर्वाणि तस्यैवेति प्रतीयते' (१.१५०) इति ॥

नचानुमानस्य नियतप्रामाण्यम्–

‘श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
‘निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ॥

---

**नचानुमानस्य नियतप्रामाण्यम्** । अनुमानत्वादेव । प्रमाणान्तरानुकूलत्वे यन्मानं, नान्यथा, तद्ध्यनुमानं नाम ।

---

पदेन प्रथमेनेति । ‘स प्रथमः’ इति श्रुतावाम्रेडितेन प्रथमपदेनेत्यर्थः । सकृदुक्तिरेव व्यर्था । आम्रेडनं तु सुव्यर्थम् । एतेन ‘स प्रथमः’ ‘देवानां मध्ये मुख्यः’ इति सायणीयं व्याख्यानं दत्तोत्तरम् ॥

स एव च पुनरारण्यके उपनिषदारम्भे सतात्पर्यमाम्रेड्यते– ‘शं नो मित्रः शं वरुणः । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः’ इति ॥

नावेदविदिति पूर्ववचनसंवादात् **‘औपनिषदः पुरुषः’** इत्यपि सावधारणतया व्याख्येयमित्याह– **उपनिषदेकगम्यः** । पुरवः पूर्णाः षड्गुणा अस्येति **पुरुषः पूर्णषड्गुणः** । **नहि पूर्णगुणादिति** । ‘कर्तृत्वात् सगुणं ब्रह्म’ इति हि भागवते । तेन पूर्ववचने गुणपूर्णत्ववाचिना बृहन्तमित्यनेन सर्वकर्तृत्वमुक्तम् । आततगुणवाचिनाऽऽत्मशब्देन च । पूर्णगुण एव हि कर्ता भवितुमर्हति । **‘औपनिषदः पुरुषः’** इति पुरुषशब्देन । ज्ञानेच्छापूर्वा हि कृतिः । नह्यसर्वज्ञः सर्वकर्ता भवितुमर्हति । ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि हि षड्गुणाः । तेन सर्वज्ञत्वं पुरुषशब्दार्थः ॥

ननु द्वौ पूर्णौ स्याताम् । द्वौ सर्वज्ञौ स्याताम्? न स्यातामित्याह– **न च द्वयोः पूर्णत्वम्** । सर्वज्ञत्वस्याप्युपलक्षणम् । सर्वगुणपूर्णत्व एव सर्वज्ञत्वस्याप्यन्तर्भावान्न पुनरुक्तम् । **पूर्णत्वविरोधादिति** । इदमुक्तं भवति– न ह्यपूर्णत्वसमानाधिकरणं पूर्णत्वम्, अज्ञानसमानाधिकरणं सर्वज्ञत्वं वा शब्दार्थः । किन्तु सर्वाधिकं पूर्णत्वं सर्वज्ञत्वं च । नहि द्वयोः सर्वाधिकत्वं नाम सम्भवति । परस्परविरोधादिति ॥

**श्रुतिभ्य** इति बहुवचनसूचितमादिपदोपात्तं श्रुतिवचनमाह– **‘सर्वे वेदा यत् पदमामनन्ति** तपांसि सर्वाणि च यद् वदन्ति’ (१.२.१५) इति काठके । ‘तं त्वौपनिषदं पुरुषं पृच्छामि’ (५.९.२६.)

**‘श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयमिति, श्रुतिर्वेदोऽक्षजं प्रत्यक्षम्, पूर्वोक्तिरैतिह्यम्, युक्तिरनुमानम्’ इति च तुरश्रुतेरैतिह्यादपि पाश्चात्त्यत्वादनुमानस्य न तेषां विरोधे, तन्निरपेक्षत्वे वा प्रामाण्यम् ।**

इति बृहदारण्यके । ‘नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः’ इति च सावधारणा पिप्पलादश्रुतिः । अतः काठकेऽपि **सर्वे वेदा** एव केवलं **यत् पदमामनन्ति**, तपांसि वेदमूला युक्तयश्च सर्वा यदेव वदन्तीत्यर्थः ॥

ननु विप्रतिषिद्धमिदमुच्यते– सर्ववेदैकगम्य इति उपनिषदेकगम्य इति । यद्युपनिषदेकगम्यः गतं तर्हि सर्ववेदगम्यत्वम् । न भोः । अनधिगताशयो भवान् । नात्र वेदा इति चतस्रो वेदसंहिता एव । नोपनिषद् इति वेदशिरांस्येव । सच्छास्त्रत्वं वेदपदार्थः । रहस्यविद्यात्वं चोपनिषत्त्वम् । अत एव सूत्रकारः शास्त्रयोनित्वादित्याह, न वेदयोनित्वादिति । नाप्युपनिषद्योनित्वादिति । भगवदुदितत्वतदनुकूलत्वान्यतरत्वमिह सत्त्वं शास्त्रेषु । सच्छास्त्राण्येव च निरुपपदेन शास्त्रपदेनोच्यन्ते । अतः शास्त्रयोनित्वादित्येवाह सूत्रकारः ॥

## तुरश्रुत्यर्थविमर्शः

**नचेति** चकारेण जगत्कर्तुरनुमानागम्यत्वे युक्त्यन्तरं चेदमित्याह । केवलस्यानुमानस्य न नियतं प्रामाण्यम् । ननु न प्रतिज्ञामात्रेण वस्तुसिद्धिः । न भोः । हेतुगर्भेयं प्रतिज्ञेत्याह– **अनुमानत्वादेवेति** । अनुमानशब्दवाच्यत्वादेव । तस्य हेतुत्वं स्फुटयति– **प्रमाणान्तरेति** । प्रमाणान्तरस्य प्रत्यक्षस्याऽगमस्य वा यदनुकूलं मानं तदेव किलानुमानमित्युच्यते । अनुमानपदसूचितं प्रमेयान्तरं चाऽह– **श्रुतिरिति** । श्रुतिः प्रत्यक्षमैतिह्यमनुमानमित्येतच्चतुष्टयं प्रमाणमिति श्रुतिप्रतीकग्रहणपूर्वकं तुरश्रुतिस्तां स्वयं व्याख्याति– **श्रुतिर्वेद** इत्यादिना ॥

तामेतां तुरश्रुतिं चतुरश्रुतिरिति मत्वा परे परिहास्या आसन् । तामेतां भ्रान्तिं तेषां द्रढयन्नाह– **इति च तुरश्रुतेरिति** । चतुरा चेयं तुराणां श्रुतिः स्वार्थसाधने परमोहने च । **इति तुरश्रुतेश्च नानुमानस्य नियतप्रामाण्यमित्यर्थः** ॥

'श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
'प्रमाणपदवीं गच्छेन्नात्र कार्य्या विचारणा ॥

---

श्रुतेस्तु क्वापि प्रत्यक्षानुमानानन्तर्य्यवचनं प्रवृत्तिक्रमापेक्षम् । **श्रुतिसाहाय्यरहितमनुमानं** प्रत्यक्षं च श्रौतेऽर्थे न क्वापि प्रमाणम् । यथा हिंसाधर्म्मत्वानुमानम्; यथा च

---

यद्यपि श्रूयत इति शब्दमात्रं श्रुतिरुच्यते । तथाऽपि न तथा व्यवहरन्ति । सावधारणं हि व्यवहरणं भवति । श्रूयत एव केवलं न केनापि क्रियत इत्यपौरुषेयः शब्दः श्रुतिरुच्यते । श्रूयतेऽनयैव केवलं भगवत्तत्वं तदङ्गतया धर्मादिकं चेति च । तदेतदाह– **श्रुतिर्वेद** इति । यद्यपि वेदयतीति शब्दमात्रं वेदपदार्थः स्यात् । तथाऽपि न तथा व्यवहरन्ति । असाधारणं हि व्यवहरणं भवति । नित्यं विद्यन्त इति वेदाः । विद सत्तायाम् । नित्यमुपलब्धत्वाद्वा । विद्लृ लाभे । भगवन्तं धर्मादिकं च वेदयन्तीति वेदाः । विद ज्ञाने । तदुक्तम्– 'वेदास्ते नित्यविन्नत्वाच्छ्रुतयश्चाखिलैः श्रुतेः' इति । तस्मान्निर्वचनसाम्यात् श्रुतिरिति वेद एवोच्यते न शब्दमात्रमित्यर्थः । ननु तर्हि न्यूनता स्यात् । निर्दोषो लौकिकोऽपि शब्दः प्रमाणमिति कथं तस्य प्रहाणं चतुष्टये? अलौकिकप्रमाणगणनमेतदिति गृहाण । तर्हि कथं प्रत्यक्षस्य ग्रहणम्? आह– **प्रत्यक्षमक्षजमिति** । न क्षीयते जात्विति **अक्षजं** स्वरूपेन्द्रियमुच्यते । कथमन्यथा ज्ञानसाधनप्रस्तावे मध्ये पुनरक्षजन्यं ज्ञानं प्रस्तूयेत? विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षम्, न त्वक्षजम् । स्वरूपेन्द्रियेण च कालाकाशादिकं गृह्णाति, सुखदुःखे च, पक्केन च भगवन्तं साक्षात्करोति । तदुक्तम्– 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (का.उ.१.३.४.) इति । स्वरूपेन्द्रियमनोयुक्तमिति ह्युक्तं भवति । अतीते चातीन्द्रिये च विषये पूर्वेषां विदुषामनुभवोक्तिरिति परम्परया श्रूयमाणा लौकिकी श्रुतिरै**तिह्यम्** । इति ह किलेति यदाचक्षते तदैतिह्यम् । ननु श्रुतिरपि पूर्वोक्तिः, स्मृतयोऽपि पूर्वोक्तयः । पूर्वविद्वदुपक्रममियमुक्तिरिति श्रुतिव्यावृत्तिः । अत एव लौकिकी श्रुतिरित्यवादिष्म । परम्परया श्रूयमाणा, न त्वध्येष्यमाणेति स्मृतिव्यावृत्तिः । अपि च स्मृतेरपि क्वचिदैतिह्यान्तर्भावे न नः किञ्चिद्धीयते । श्रुत्यादीननुसरद् यद् युक्त्याख्यं तदपि अतीन्द्रियार्थसाधने भवति तुरीयं प्रमाणमिति । अत्र पूर्वम्पूर्वं बलीय इति सर्वस्मादपि पाश्चात्यमनुमानमतीन्द्रियार्थनिर्णये दुर्बलतमं मानमित्यायातम् । एतदवगमयितुमेव मूले श्रुतिपदमनुमानपदं च प्रायुङ्क्त– **'इत्यादिश्रुतिभ्यः'** इति, **'नचानुमानस्य'** इति च ॥

रामकृष्णादेर्म्मानुषत्वादिविषयं प्रत्यक्षम् ॥

## प्रमाणनिर्देशक्रमः

ननु तर्हि प्रत्यक्षमनुमानमागम इति कः क्रमः । दुर्बलप्राथम्ये चानुमानं प्रत्यक्षमागम इति स्यात् । आह– **क्वापीति** । प्रवृत्तिक्रमापेक्षोऽयं व्यवहारः । यथा लोके धूमं पश्यति । ततोऽग्निमनुमिनोति । तयोरविनाभावमजानन् वृद्धवचनेन निश्चिनोति– 'अयि वत्स, यत्र धूमस्तत्राग्निर्भवत्येव । यदि नाग्निः स्यान्न तर्हि धूमः स्यात्' इति । यथा वा प्रथमं पश्यन्ननुभवति । यन्न शक्यं द्रष्टुं तदनुभवेनानुमिनोति– ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरादिति । सा कन्याऽपि पुंयोगिनी गुर्विणीत्वादिति । यत्रोभयमप्यशक्यम्, अज्ञानाद्वा, अतीन्द्रियत्वाद्वा तदाऽऽप्तवाक्येन श्रुत्या वा निश्चिनोति । तद्यथा– आदित्याज्जायते वृष्टिरिति, देवाश्चक्षुराद्यभिमानिन इति, विष्णुः सर्वोत्तम इति । कन्याया गुर्विणीत्वं पापहेतुरिति । सोऽयं प्रवृत्तिक्रमः । निवृत्तिक्रमापेक्षा वयम् ॥

अपरं च– यत्राऽगमपदेन शब्दसामान्यमुच्यते स प्रवृत्तिक्रमः । तत्राऽगमस्यान्ते निर्देशः । यत्र श्रुतिरागमः स निवृत्तिक्रमः । तत्र श्रुतेः प्राथम्यमिति ॥

अथ स्वपदानि प्रमाणवचनसंवादेन समर्थयते भाष्यकारः– **श्रुतिसाहाय्यरहितमिति** । ननु अयं घट इति प्रत्यक्षम्, पर्वतो वह्निमान् धूमादित्यनुमानं च श्रुतिसाहाय्यरहितमेव **निश्चयात् साधयेदर्थम्** । तत् कथं **न कुत्रचिदिति**? आह– **श्रौतेऽर्थे न क्वापीति** । प्रकरणलब्धोऽयमर्थः । **श्रुतिसाहाय्यरहित-मिति** सूचितश्चायमर्थः । किं तत् प्रमाणान्तरम्? आह– **प्रत्यक्षं च** । कथम्? त्रीणि हि प्रमाणानि प्रमितानि । तत्र श्रुत्यनुमानाभ्यामन्यत् प्रत्यक्षमेव हि । यथा यागीयहिंसाया अधर्मत्वानुमानम्, यथा क्षत्रियस्य दुष्टहननरूपाया हिंसाया अधर्मत्वानुमानम् । अथच यज्ञीयहिंसावत् हिंसामात्रस्य धर्मत्वा-नुमानम् । **रामकृष्णादेरिति** वेदव्यासादेर्भगवदवतारस्य, भीमादीनां देवतावताराणां च ग्रहणम् । भगवतः मानुषत्वं मनुष्यवत् भौतिककरचरणादिमत्त्वम् । आदिना बद्धत्वं दुःखादिमत्त्वम् । देवतान्तर-विषये मानुषत्वं मनुष्यजीवत्वम् । आदिना सञ्चितकर्मबद्धत्वम् । मूले 'प्रमाणान्तरमेव च' इत्येवकारेण कैमुत्यमाह– प्रत्यक्षमेव नार्थं साधयेत्, का कथाऽनुमानस्येति । चकारः परस्परसमुच्चये ॥

ननु तर्हि महता कण्ठेन 'प्रत्यक्षमेव च' इत्येव कथ्यताम् । किमनेन द्राविडप्राणायामेन? शृणु, केचिदन्यान्यपि प्रमाणान्याचक्षते अर्थापत्तिरुपमानमित्यादीनि । तेऽपि तुष्यन्त्वित्याह– सर्वमर्था-पत्त्यादिप्रमाणान्तरमपि नार्थं साधयेदिति ॥

'पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
'इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत्' इत्यादि कौर्म्मे ॥

---

उपक्रमोपसंहारादिलिङ्गैः ऊहनं तर्कः । श्रुतिनिरपेक्षः 'शुष्कतर्कः' । तस्मान्न स्वतन्त्रस्य तस्य प्रामाण्यं सम्भवति ॥

---

सहायस्य भावः साहाय्यं सहकारः । श्रुतिसहकारो नाम वेदतदनुसारिवचनसहकार इति स्फुटयन्नाह– **श्रुतिस्मृतिसहायं यदिति** । श्रुतयः स्मृतयश्च सहायाः सहकारिण्यः यस्य तत् **प्रमाणान्तरं** प्रत्यक्षमनुमानं च **उत्तमम्** । श्रुतिस्मृत्यनुसारित्वमेवोत्तमत्वम् । उत्तमत्वादेव **प्रमाणपदवीं गच्छेत्** । प्रमाणस्य पदवीं पन्थानम् । प्रामाण्यमिति यावत् । ननु क्वचिन्न गच्छेदपि? नेत्याह– **नात्र कार्या विचारणा** । **विचारणा** चर्चा । नात्र किञ्चिच्चर्चास्पदमित्यर्थः । यदुपजीव्यप्रमाणानुसारि तत् कथमप्रमाणं स्यात् । श्रौतेऽर्थे उपजीव्यविरोध एव ह्यप्रामाण्यबीजम् ॥

## कण्टकोद्धारस्तर्कः

ननु तर्हि परस्पराश्रयत्वम् । उपक्रमोपसंहारादियुक्तिसाहाय्येन श्रुतिस्मृत्यर्थनिर्णयः । निर्णीतार्थश्रुतिस्मृतिसाहाय्येन युक्तेः प्रामाण्यनिर्णय इति । कुशलोऽसि पूर्वपक्षिन्, एहि मन्ये तत्ववादं विजेष्यसे । न विजेष्यस इत्याह– **पूर्वोत्तराविरोधेन** । अयमर्थः– श्रुतिर्हि स्वतः प्रमाणी । नानुमानाधीनप्रामाण्या । अनुमानं तु श्रौतेऽर्थे नियमेन श्रुत्यधीनप्रामाण्यमित्यन्वयव्यतिरेकाभ्यां समर्थितम् । यत्र स्वमतिवैकल्येन श्रुत्यर्थो न यथावद् गृहीतः, तत्र कण्टकोद्धारस्तर्को भवति । यथा क्वचिद् गजपद्यायां कण्टका भवन्ति । तस्यां चलन् गजः कण्टकानवलोक्य न पुरश्चलति । अपगमितेषु कण्टकेषु चलति । न च तावता कण्टकापनयनं गजगमनकारणतां भजति । प्रतिबन्धापगमे गजः स्वयमेव गच्छति । एवं युक्तिः श्रुत्यर्थनिर्णयायोपसर्जनमात्रम् । नोपजीव्या । श्रुतिस्त्वनुमानस्योपजीव्या । अतो न परस्पराश्रयता ॥

## भासर्वज्ञमतविमर्शः

एतेन भासर्वज्ञोक्तमपि परास्तम्– वेदस्यापौरुषेयत्वेऽपि वेदार्थः पौरुषेय एवेति व्यर्थमपौरुषेयत्ववचनमिति । अर्थोऽप्यपौरुषेय एव । तदवगमे प्रतिबन्धकनिरासस्तर्केण क्रियत इति । तदेतदाह– **कोऽत्रार्थः**

**शक्यत्वाच्चानुमानां सर्वत्र–**

**'सर्वत्र शक्यते कर्त्तुमागमं हि विनाऽनुमा ।**
**'तस्मान्न सा शक्तिमती विनाऽगममुदीक्षितुम्' इति वाराहे ॥**

---

ननु स्वतन्त्रमेवार्त्थं साधयदनुमानं को निवारयति? तथाहि– विमतं सकर्त्तृकं कार्य्यत्वाद् घटवदित्यनपेक्षमेवेदं जगत्कर्त्तारमीश्वरं साधयतीति; तदयुक्तम् । उपाधिदोषदुष्टत्वात् तस्य । अस्मदादिप्रत्यक्षकर्त्तृकत्वं च उपाधिः । तेन हि घटादेः सकर्त्तृकत्वम् । तस्मान्न

---

श्रुत्यभिमतो **भवेदिति** । नन्वभिमतिरिति विवक्षोच्यते । श्रुतेर्वक्तुरेवाभावात् का विवक्षा? येन प्रथमं श्रुतिरुदचारि तद्विवक्षैव श्रुतिविवक्षा । अथच मन्त्रद्रष्टारो भगवदनुग्रहेण मन्त्रे यमर्थं ददृशुस्तदेव श्रुतेस्तात्पर्यं नाम । एतेन 'तात्पर्यगर्भ एव श्रुतिकुमार्याः पुंयोगे मानम्' इति वदन्नुदयनोऽपि दत्तोत्तरः । अनादिरियं कुमारी अनादितः पुंयोगिनीत्यङ्गीकारात् । स्थितस्यैव विमर्शेनावगम **ऊहनम्** । नत्वेतावता स्थितस्योहाधीनत्वम् । एतदवगमयितुमेव तर्कपदमुपादत्त । न युक्तिरित्याह । 'तर्कः भासार्थः' इत्याचक्षते । 'भासा दीप्तिरर्थो येषां ते भासार्थाः' इति व्याचक्षते । अनधिगतमर्थं तर्कयति भासयति दीपयति प्रकाशयतीत्यर्थः । भाषार्थ इत्यपरे । येषुयेष्वर्थेषु भाषायां प्रयुज्यते स सर्वोऽपि तदर्थ इत्यर्थः । श्रुतिस्मृतिसंवादरसधारयाऽनार्द्रीकृता युक्तिः **शुष्कतर्कः** । तं श्रौतेऽर्थे सर्वात्मना वर्जयेदिति तुनाऽऽह । यस्मादेवम्प्रकारं वचनं कौर्मे पठ्यते **तस्मान्न स्वतन्त्रस्यानुमानस्य** श्रौतेऽर्थे **प्रामाण्यं सम्भवति** ॥

## अनुमानुमानयोरर्थभेदः

ननु सम्भवति– यदाहुस्तार्किकास्तर्केणैवेश्वरं सिषाधयिषन्तः– विमतं महीधरादिकं सकर्तृकं कार्यत्वाद् घटवदिति । तेन सर्वशक्तः सर्वज्ञः कर्तेश्वरः सिद्ध्यतीति । तदेवं श्रुतिनिरपेक्षमेवानुमानमीश्वरं साधयितुमलमिति । तत्राऽह– **शक्यत्वाच्चानुमानां सर्वत्र** । पूर्वत्रानुमानपदं प्रायुङ्क्त– **'नचानुमानस्य नियतप्रामाण्यम्'** इति, **'अनुमानं न कुत्रचित्'** इति कौर्मवचनानुगुण्याय । अत्र पुनरनुमापदम्– **'शक्यत्वाच्चानुमानाम्'** इति, **'आगमं हि विनाऽनुमा'** इति वक्ष्यमाणवराहवचनानुगुण्याय । अर्थान्तरं चानेन द्योतितं भवति– स्वप्रज्ञानुगता मा वाक् प्रज्ञावाद इत्यर्थः । 'वाचो मा मातरः स्मृताः' इति

'रेतो धातुर्वटकणिका घृतधूमाधिवासनम् ।
'जातिस्मृतिरयस्कान्तः सूर्य्यकान्तोऽम्बुभक्षणम् ॥

---

स्वतन्त्रस्य प्रामाण्यमिति नियतप्रामाण्यं नास्तीत्युक्तम् । **तस्मान्नानुमाऽऽगमं विनाऽर्थ-मुदीक्षयितुं शक्नोति** ॥

नन्वेवमनुमानस्याप्रामाण्यात् तन्न्यायेनाऽगमस्याप्यप्रामाण्यात् प्रत्यक्षमेव सम्मतं प्रमाण-मस्तु । अतो न देहव्यतिरिक्तो जीवोऽस्ति, नापि जगत्कर्त्तेश्वरः, प्रमाणाभावादित्याशङ्क्याऽह– **रेतो धातुरित्यादि** । रेतः सिक्तं कालाच्छरीरं भवति । न च तस्य शरीरभावः प्रत्यक्ष-ग्राह्यः । वाक्याद् युक्त्या वा ज्ञायते, अतस्तयोः प्रामाण्यम् । नच तद् रेतो मृतशरीरे सिक्तं वर्द्धते । तस्माद्यदधिष्ठित एव वर्द्धते स देहव्यतिरिक्तो जीवोऽभ्युपगन्तव्यः । नच

---

हि स्मरन्ति । **सर्वत्र** यस्मिन्नर्थे प्रतिवादी युक्तिमाह तद्विपरीतेऽप्यर्थे । तथाहि नास्तिकस्तार्किकं प्रति ब्रूते– जगतः कर्ता न विद्यते, अदृष्टत्वात् । यद्यत् सकर्तृकं दृष्टं तस्य कर्ताऽपि दृष्टः । यथा घटस्य कुलालः । कुविन्दः पटस्य । पिता पुत्रस्य । नहि केनाप्यदृष्टः पिता पुत्रं जनयति । क्वचित् तयैव युक्त्या शक्यं तद्विपरीतोऽप्यर्थः साधयितुम् । यथा मायावादी ब्रूते– विश्वं मिथ्या दृश्यत्वादिति । यद् दृश्यते तन्मिथ्या । यत् सत्यं तन्न दृश्यत इति । नास्तिकः प्रत्याचष्टे– विश्वं सत्यं दृश्यत्वा-दिति । यद् दृश्यते तावदेव सत्यम् । यन्न दृश्यते तन्नास्त्येवेति । उभयेऽपि प्रज्ञावादिनः । **उदीक्षितुमिति** णिलुक् । **उदीक्षयितुं** सम्यग् दर्शयितुं इदमित्थमिति समर्थयितुमित्येतत् । यः स्वयमुदीक्षते सोऽन्येषामप्यु-दीक्षयेत् । स्वयमीक्षितुमप्रभवन्नन्धः कथमन्येषामुदीक्षयेत्? यत् किञ्चिल्लौकिकमपि वस्तु नेक्षते । कथमुन्नतं श्रौतं वस्तु ईक्षेत? ईक्ष्येत वा? इति कैमुत्यार्थे उदित्युपसर्गः । तस्माच्छ्रौतेऽर्थे तर्कोऽयमन्ध इति प्रत्याययितुं णिचं च लोपयामास । यतः स्वप्रज्ञामूलोऽयं वादः, न प्रमाणमूलः । यस्य प्रज्ञा बलवती स विजयते, न सत्यम् । तदेतदुक्तम्– **सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा** । हीति केवलानुमायाः प्रज्ञावादत्वं सर्वानुभवसिद्धमित्याह । हेत्वर्थश्चायं हिः । यस्मात् आगमं **विनाऽनुमा सर्वत्र शक्यते कर्तुं तस्मान्न सा शक्तिमतीति** ॥

जीवच्छरीरेऽपि नियमेन वर्द्धते । अतो यदिच्छया वर्द्धते न वर्द्धते च, स ईश्वरः । धातुर्वातादिरपथ्याद् विपरीयते । न च तयोर्हेतुहेतुमद्भावः प्रत्यक्षः । न च मृतशरीरे विकारो भवति । अपथ्यकरणेऽपि जीवच्छरीरेऽपि कदाचिन्न । वटकणिकाया वटभावो न प्रत्यक्षः । नापि भर्ज्जिता सा प्ररोहति । अभर्ज्जिताऽपि कदाचित् प्ररोहति, कदाचिन्न । घृतोपयोगात् पीनतेति न प्रत्यक्षम् । नापि मृतशरीरनिक्षिप्तेन तेन पीनता भवति । जीवतोपयुक्तेऽपि कदाचिन्न भवति । नच वृक्षे धूमाधिवासननिमित्तता पुष्पफलसम्भवस्य प्रत्यक्षा । नच धूमाधिवासनेऽपि शुष्के पुष्पादिसम्पत्तिः । जीवत्यपि क्वचिद्भवति, क्वचिन्न भवति । अनेन पुण्येनैव स्वर्गोऽनुभूयते, अनेन पापेनेत्थं नरकमनुभूतमित्यादिज्ञानं जातिस्मृतिमतामस्ति । एतमर्थमागमश्चावगमयति । तस्मादागमप्रामाण्यस्थापिका सा । नच देहव्यतिरिक्तस्य जीवस्यातीतवर्त्तमानदेहसम्बन्धमन्तरेण जातिस्मृतिरुत्पद्यते । सा च कस्यचिदेव भवति,

---

## लोकायतस्य मनःपरिवर्तनम्

ननु युक्तमवादि प्रतितर्कपराहतत्वादनुमानं न प्रमाणमिति । तेनैव न्यायेन नाऽगमोऽपि प्रमाणमिति सिद्ध्यति । तथाहि– केचिदागमा विष्णुं परमं मन्यन्ते । केचिच्छिवम् । केचिच्छक्तिम् । स्मरन्ति च– 'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम्' इति । तस्मात् परस्परं विप्रतिषिद्धवादिन आगमा अपि दुरभिमानान्धा अश्रद्धेया एव । तस्मात् प्रत्यक्षमेकमेव प्रमाणमिति रमणीयं लौकायतं मतम् । ततो न जिज्ञासिता, नापि जिज्ञास्यम्, नतरां जिज्ञासेति । तदेतन्निराह मोक्षधर्मवचनेन– **रेतो धातुरित्यादि** । ननु शुष्कतर्कं तु वर्जयेदित्यवोचः । पुनस्तर्केणैव प्रत्यवतिष्ठमानस्त्वदुक्तमेव किमित्युच्चरसे? भ्रान्तोऽसि । तदर्थमेव इत्यादियुक्तिभ्य इत्यनुक्त्वा **इति मोक्षधर्मवचना**दित्याह । तेन स्मृत्यनुकूलत्वं युक्तीनामाह । हन्त पुनरापदन्धौ पतितोऽसि । कं प्रतीयं वाचोयुक्तिः? ननु लोकायतं प्रति । न लोकायतो मोक्षधर्मं प्रमाणं मन्यते । सत्यम् । न स युक्तिमपि प्रमाणं मन्यते । अथापि युक्त्यैव तं प्रति युक्तिप्रामाण्यं ग्राहयामः । तथा मोक्षधर्मवचनेनैव वचनप्रामाण्यं च ग्राहयामः । तथाच मोक्षधर्मवचनादिति गुडजिह्विकेयम् ॥

'प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।

'मृते कर्म्मनिवृत्तिश्च प्रमाणमिति निश्चयः' इति मोक्षधर्म्मवचनान्न नास्तिक्य-वादो युज्यते ॥

---

**न सर्वस्य । नचायस्कान्तस्यायोभ्रामकशक्तिः प्रत्यक्षा । नचाजीवतश्चेष्टकत्वं दृष्टम् । नचैतादृशी वस्तुशक्तिः सर्वशक्तिमीश्वरमन्तरेण प्रतिनियममर्हति ।**

---

वस्तुतस्तु रेतो धातुरित्यादिर्न श्रौतोऽर्थः । तेन न श्रुतिस्मृतिसंवादापेक्षा । प्रत्यक्षानुगमेनैव प्रामाण्यं सेत्स्यति । तथाऽपि मोक्षधर्मेऽप्युक्तमिति प्रौढवादोऽयम् । प्रयोजनान्तरं च यथा प्रत्यक्षसंवादेन युक्तेः प्रामाण्यमनिच्छताऽप्यभ्युपेयमापतितम्, एवमागमप्रामाण्यमपीत्यनेनाऽह । तदुक्तम्– 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवाऽगमस्य हि' इति ॥

'पृष्टेनाऽगम एवाऽदौ वक्तव्यः' इति शिष्यशिक्षार्थं चैतदाह । नास्तिक्यवादेन लोकायतो यद्या-तिष्ठते तस्य पुरस्तूर्ष्णीं मोक्षधर्मवचनं निधेहि । स पुनरातिष्ठते– न म आगमो विभीषिकेति । तदा तं प्रति तदुक्ता युक्तीरुद्धाटय । तदाऽपि स पुनरातिष्ठेत– न मे युक्तिरपि विभीषिकेति । तदा युक्तेः प्रत्यक्षसंवादमनुभावय । तदा स तूष्णीकां चिन्तामग्नो भवति । तदा तं बोधय स्कन्धे बाहुं निधाय, अयि सुहृदय, चिन्तय चक्षुषी निमील्य– प्रत्यक्षसंवादाद् युक्तिरपि प्रमाणीत्यवगतं ननु । एवं प्रामाणिकीं युक्तिं करुणया बोधयन्ति मोक्षधर्मवचनान्यपि प्रमाणानि स्युरेव किलेति । एवं क्रमिकबोधनेन नास्तिकोऽप्यनास्तिको भवतीति ॥

**प्रमाणमिति निश्चय** इति । रेतआदीनि मृते कर्मनिवृत्त्यन्तानि द्वादश लिङ्गानि युक्तेरागमस्य च प्रमाणत्वे जीवेश्वरयोरस्तित्वे च निश्चितं प्रमाणमित्यर्थः । तदेव विविच्य दर्शयति पण्डिताचार्यः– **रेतः सिक्तमित्यादिना** । **रेतः सिक्तमेव शरीरं भवतीति** नास्तिकोऽपि जानीते । **नच तस्य शरीर-भावः** केनापि प्रत्यक्षेण गृह्यते । किन्तु भूयोदर्शनेनान्वयव्यतिरेकाभ्यामनुमिनोति । आगतं तर्ह्यनुमान-प्रामाण्यम् । कश्चिदगदङ्कारो ब्रूते– 'अन्तर्वत्नी ते पत्नी । गर्भे मनोज्ञमपत्यं वर्धमानं वर्तते' इति ।

**एवं सूर्य्यकान्तेऽप्यूहनीयम् । अम्बुभक्षणात् तृष्णानाश इत्येतन्न प्रत्यक्षम् । नच मृतशरीरे पात्रान्तरे वा निहितं तत् पच्यते । जीवच्छरीरेऽपि कदाचिदेव । प्रेतशरीरं भूतान्यप्येति, पूर्वं नाप्येति; यस्मिंस्तिष्ठति नाप्येति, गच्छत्यप्येति, स देहातिरिक्तोऽस्तीति गम्यते ।**

---

नास्तिकोऽपि वैद्यवचनेनान्तर्हृष्यति– पिताऽहं भविष्यामीति । आगतं तर्हि शब्दप्रामाण्यम् । रेतसः क्रमेण नवसु मासेषु शरीरभावं वैद्यशास्त्रं विवृणोति । श्रुतिस्मृती च । आगतं तर्ह्यागम-प्रामाण्यम् । **जीवोऽभ्युपगन्तव्यः** । ततश्च तत्साधकयोरनुमानागमयोः प्रामाण्यम् । **नच जीवच्छरीरेऽपि नियमेन वर्धते** । तेन गर्भे रेतसि वा किञ्चिदङ्गवैकल्यमनुमीयते । वैद्यशास्त्रं च तदाह । पुनर्मेधावी चिन्तयति– अस्याः सन्ततिरास । अस्या नाऽस । अस्याः पुत्र आस । अस्याः पुत्री । तत्र किं प्रमाणं स्यादिति । नह्यकारणं किञ्चिद् भवति । एकस्याङ्गसौष्ठवमपरस्य वैकल्यमित्यत्रापि किं कारण-मिति । तेन कर्मसिद्धान्त उदेति । यदुप्यते तदेव रोहतीति । तेन जन्मान्तरीयं सुकृतं दुष्कृतं वाऽस्मिन् जन्मनि फलतीत्यायातम् । नच जडस्य कर्मणः स्वतः कारणत्वं युक्तम् । कर्तृत्वस्य नियमेन चेतनत्वसामानाधिकरण्यदर्शनात् । **अतो यदिच्छया** कर्म फलति, येन च रेतो **वर्धते न वर्धते च स ईश्वरो**ऽवश्यमभ्युपेय आपतति । तेन तदावेदकस्य शास्त्रस्य च प्रामाण्यम् ॥

अपथ्यं प्रत्यक्षसिद्धम् । कफवातपित्तात्मकस्य धातोर्विपर्ययश्च । अथापि **तयोर्हेतुहेतुमद्भावो न प्रत्यक्षः** । नियतसाहचर्येण, आयुर्वेदाद्यागमेन, भिषग्वचनेन वा ज्ञायते । **नच मृतशरीरे** धातुविकारो **भवति** । तेन जीवसिद्धिः । **जीवच्छरीरेऽपि क्वचिदपथ्यकरणेऽपि** न धातुर्विक्रियते । तेनादृष्ट-प्रेरकस्येश्वरस्य सिद्धिः ॥

वटकणिका वटबीजम् । 'कणिका सूक्ष्मवस्तुनि' इत्यभिदधति । वटबीजं प्रत्यक्षम् । वटोऽपि प्रत्यक्षः । एवमतिसूक्ष्मेण वटबीजेन महत्तरोऽयं वटविटपी सञ्जात इति तयोः कार्यकारणभावो न प्रत्यक्ष इत्यादि यथापूर्वम् ॥

घृतोपयोगः प्रत्यक्षः । पीनताऽपि । अथापि घृतपीनतयोः कार्यकारणभावो न प्रत्यक्षः । भूयोदर्शनेन, भिषग्वचनेन, 'आयुर्वै घृतम्' इत्यादिश्रुत्या चावगम्यते ॥

घृतधूमयोरधिवासनम् । आधिक्येन वासनमुपसेवनमुपयोगः । वास उपसेवायाम् । घृतेन यथा देहस्य तथा धूमेन वृक्षस्य पुष्टिर्वृद्धिश्च भवतीति परिणामसामान्यात् सहोक्तिः । देहे पुष्टिः पीनता । वृक्षे पुष्पफलसमृद्धिः । धूमेन वृक्षस्य संस्कारविशेषो धूमाधिवासनम् । येन फलपुष्पसम्भवनिरोधकाः कीटा विनश्यन्ति ॥

जातिस्मृतिः पूर्वजन्मनां जन्मनो वा स्मृतिः । सुप्तस्य चित्तस्योद्बोधनेन त्रिचतुराणि पूर्वजन्मानि स्मृत्वा वर्णयन्तो हि दृश्यन्ते । तेन स्फुटं जीवसिद्धिः । यदनुग्रहेण कस्यचिदेव जातिस्मृति-रजनि तस्येश्वरस्य च सिद्धिः । तद्वादिनामागमानाम्, तन्मूलस्य चानुमानस्य प्रामाण्यसिद्धिः । अथचास्य किञ्चिदपूर्वमर्थान्तरमाह टीकाकारः– **अनेन पुण्येनेत्यादि** । स्यादपि पूर्वजन्मस्मरणम् । तत्राऽचरितपुण्यपापफलतया स्वर्गनरकानुभवस्मरणं तु दुर्लभतरं केषाञ्चिदेव सुकृतिनां भवति । तथाच यत्प्रेरणया केषाञ्चिद् भवति केषाञ्चिन्न भवति स ईश्वरः सिद्ध्यति । तदवबोधकस्याऽगमस्य च प्रामाण्यम् ॥

क्वचिदेवं भवति । कश्चिन्म्रियते । याति परलोकम् । अकस्मात् पुनः प्रत्यावर्तते । जीवति च पुनस्तेनैव शरीरेण । तादृशाः पुनरागत्य परलोके स्वानुभूतं कथयन्ति । तदिदमप्यत्र जातिस्मृतिपदेन गृह्यते । एकस्यामेव जातौ जनुषि उभयलोकयोः स्मृतिरिति । अनेन देहातिरिक्तो जीवः सिद्ध्यतीत्याह– **नच देहव्यतिरिक्तस्येति** ॥

अयस्कान्तः प्रत्यक्षः । अयोभ्रमणं प्रत्यक्षम् । भ्रमणहेतुः शक्तिर्न प्रत्यक्षा । कस्यचिदेव क्वचिदेव शक्तिरिति प्रतिनियमः । अयस्कान्त एवाऽकर्षति, नान्योऽश्मा । अय एवाऽकर्षति न ताम्रादि-कम् । तत् कथं स्वयमयस्कान्तस्य जडस्यायसि कामः समजनि? तेन ज्ञायते सर्वशक्तेन चेतनतमेन दत्तेयमयस्कान्तादिषु प्रतिनियता शक्तिरिति । एवं सूर्यकान्तेऽपि, चन्द्रकान्तेऽपि । प्रस्तरावेतौ । अथाप्यातपयोगेन सूर्यकान्तो ज्वलनमुद्गिरति । चन्द्रकान्तश्चन्द्रिकासङ्गमेन सलिलम् । आह हि भवभूतिरुत्तररामचरिते(६.१२)–

'व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
'विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः' इति ॥

**न च तस्य प्रेतस्य देहे भूताप्ययः स्वाधीनः । आगमविहितं देवताराधनादि कुर्वतः सा प्रत्यक्षा भवति । तत्प्रसादाद् यद् यथोदितमारोग्यपुत्रवित्तादि भवति । तस्मादागमप्रामाण्य-निश्चयः । सा च वरप्रदानाद्यतिशयवती देवता परलोकसुखादिदानेन देहादन्यं जीवमीश्वरं चावगमयति । ईश्वर एव वा सा स्यात् । मरणनिमित्तत्वं चेष्टानिवृत्तेर्न्न प्रत्यक्षम् । स**

---

एतेन सूर्यकान्त इति सूर्यकान्तिर्नाम कुसुमं कमलं चोच्यते । चन्द्रकान्तस्य कुमुदस्य चैतदुपल-क्षणम् ॥

अम्बुभक्षणात् तृष्णानाशं सर्वोऽप्यनुभवति । अथापि पञ्चम्यर्थो न प्रत्यक्षः । अम्बुभक्षणमित्यत्र भक्षणमपि कटाक्षयतीव । अम्बुपानमन्नभक्षणमिति । युक्तिसाम्यात् । टीकायामप्युभयसाधारणं तृष्णाशब्दं प्रयुयोज । अम्बुपानतृष्णा, अन्नभक्षणतृष्णा वा । तृष्णेति हि स्पृहोच्यते । बुभुक्षा वा स्यात् । पिपासा वा । **न पच्यते** न जीर्यते । पीतं च भुक्तं चाजीर्णं सदामयं जनयति ॥

**प्रेत्य** मृत्वा । आनन्तर्यं ल्यबर्थः । मरणानन्तरं जीवानधिष्ठितं **शरीरं पञ्चभूतान्यप्येति** । यतः पञ्चत्वमापेत्याचक्षते । यद्वा प्रेतस्य सम्बन्धि शरीरं प्रेत्यम् । प्रेत्यस्य भूतेष्वप्ययो विलयः । स च प्रेतस्य जीवस्य पूर्वदेहे दृश्यमानः भूताप्ययः न प्रेतजीवाधीन इति स्फुटम् ॥

देवतायामभीष्टस्योपयाचनम् । उपेत्युत्कर्षार्थे । विहितत्वमुत्कर्षः । आगमविहितेन विधानेन याचनम् । भक्त्याद्युपपन्नं याचनमुपयाचनम् । तदेतदाह– **आगमविहितं देवताराधनादि कुर्वत** इति । कृतं देवता-भ्युपयाचनम् । ततः किम्? ततः **सा** देवता, याममयमाराधयामास, **प्रत्यक्षा भवति** । ततश्च **यथोदितं** यथाऽभ्युपयाचितं फलमैहिकं **भवति** प्राप्नोति । अथच **तत्प्रसादात्** परत्र स्वर्गसुखमनुभवति । पुनरिह धनी विद्वान् योगिनां कुले जायते । जातिस्मृतिगर्भोऽयम् । ईश्वरानुग्रहात् त्वयेदं लब्धम्, तत् तमेवाऽराधयेति सा देवता ईश्वरं च गमयति । यदि स जीवः परमसात्विकः, **ईश्वर एव वा सा**ऽनुग्रहीत्री देवता **स्यात्** । यथाऽच्युतप्रज्ञादेः स्वयं भगवान् कस्मिंश्चिदाविश्याऽदिदेश ॥

गुर्वर्थदीपिकायामन्यादृशं च विवरणम्– 'मम सम्पदादिकं जायते चेत् तवैतावद् धनं दास्यामीत्याकारेण वेङ्कटपत्यादिदेवतायाः प्रार्थनम् । यद्यपि जन्मान्तरीयदेवताभ्युपयाचनेन सम्पदादिकं भवतीत्यस्माकमभि-

दर्शनाच्च तपआदिफलस्य ॥

---

च चेष्टावान्न देहः । न च तस्य मरणं स्वाधीनम् । स्वाद्ध्यायब्रह्मचर्य्यादिस्तपसस्तेजस्वितादि फलं दृश्यते । तप्तमाषादिदिव्यपरीक्षाणां च तत्थ्यविज्ञानादि फलम् । तस्मादागमोक्तस्य सर्वस्य सिद्धिः । अतश्च न नास्तिक्यवादो युज्यते ॥

---

मतम् । तथाऽपि प्रत्यक्षैकप्रमाणवादी चार्वाकस्तं नाङ्गीकरोति । अत ईदृशं देवताभ्युपयाचनमेव वक्तव्यम्' इति । वस्तुतस्तु प्रत्यक्षैकप्रमाणवादी नैतदप्यङ्गीकुर्यात् । अप्रत्यक्षत्वादेव हेतुत्वस्य । अथापि भूयोदर्शनेन, स्वानुभवेन वा नास्तिका अपि क्वचिदास्तिका भवन्तो लोके दृश्यन्त इत्येवमुक्तं स्यात् ॥

**मृते** जीवे । मृतशरीरे वा । मरणं वा मृतम् । निमित्तसप्तमी । मरणनिमित्ता कर्मनिवृत्तिः । अथापि निमित्तत्वं न प्रत्यक्षम् ॥

## स्वावतार एव तपआदिफलम्

स्वयं च लोकदृष्टं कारणान्तरमाह– **दर्शनाच्च तपआदिफलस्य** । तप इति किमुच्यते? आह– **स्वाध्यायब्रह्मचर्यादिस्तपस** इति । 'स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः' इति तैत्तिरीयश्रुतिः । 'ब्रह्मचर्यादिकं तपः' इति स्मृतिः । **तेजस्विता** ब्रह्मवर्चस्विता । येन ब्रह्मवर्चसाऽऽवृतं वदनं द्रष्टुर्दृष्टिमुपहन्ति । तपआदीत्यादिपदार्थमाह– **तप्तमाषादिदिव्यपरीक्षाणां चेति** । तदुक्तं स्कान्दे प्रथमे माहेश्वरखण्डे तत्रापि द्वितीये कौमारिकाखण्डे (४४.५५–५९)–

'अथातः सम्प्रवक्ष्यामि तप्तमाषविधिं शृणु ।
'कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
'चतुरङ्गुलखातं तु मृण्मयं वाऽपि कारयेत् ।
'पूरयेद् घृततैलाभ्यां पलैर्विंशतिभिस्ततः ।
'सुतप्ते निक्षिपेत् तत्र सुवर्णस्य तु माषकम् ॥

'वह्न्युक्तं विन्यसेन्मन्त्रमभिशस्तस्य मूर्धनि ।
'अङ्गुष्ठाङ्गुलियोगेन तप्तमाषं समुद्धरेत् ।
'शुद्धं ज्ञेयमसन्दिग्धं विस्फोटादिविवर्जितम्' इति ॥

अयमर्थः– षोडशाङ्गुलमिति वृत्ताकारं पात्रं परितः षोळशाङ्गुलमितमित्यर्थः । 'मृण्मयं वाऽथ मण्डलम्' इत्यन्यत्र पाठः । 'पलैर्विंशतिभिः' इति प्रतनानां प्रयोगपरिपाटी । विंशत्या तु पलैस्तु तत्' इति वीरमित्रोदये । विंशतिपलमिताभ्यां घृततैलाभ्यामित्यर्थः, घृतमिह गव्यं विवक्षितम् । केवलेन घृतेन पश्येदित्येके । 'सौवर्णे राजते ताम्रे वाऽऽयसे मृण्मयेऽपि वा । गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः' इति बृहस्पतिस्मरणात् । ६४माषमानं पलम् । सुवर्णनिर्मितो माषः सुवर्णमाषकः । माषाकारं माषमितं सुवर्णमित्येतत् । अभिशस्तस्य अपवादग्रस्तस्य अपराधित्वेन शङ्काविषयस्य मूर्धनि हस्तं विन्यस्य वह्न्युक्तं मन्त्रं विन्यसेत् । पुरोहितो जपेदित्यर्थः । तथाहि वह्न्युक्तो मन्त्रः–

'ॐ त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
'पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे ॥
'त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ।
'जठरस्थोऽसि भूतानां ततो वेत्सि शुभाशुभम् ॥
'पापेषु दर्शयात्मानमर्चिष्मान् भव पावक ।
'अथवा शुद्धभावेषु शान्तो भव महाबल' इति ॥

अङ्गुष्ठाङ्गुलियोगेनेति । अङ्गुष्ठतर्जनीभ्यां तप्तमाषं समुद्धरेदभिशस्तः । अङ्गुष्ठतर्जनीमध्यमाभिरित्येके । यदाऽग्निर्न दहति तदा तं शुद्धं विजानीयात् ॥

तदिदमाह टीकाकरः– तप्तमाषादिदिव्यपरीक्षाणां विज्ञानादि च फलमिति । तप्तमाषादीत्यादिपदेन तस्मिन्नेवाध्याये नारदेनार्जुनायोक्ताः दिव्यपरीक्षा गृह्यन्ते । 'परशुमस्मै तपत' इत्यादि च । तत्थ्यविज्ञानादीत्यादिना पापिनामेव शिक्षा निरपराधिनां मोचनं च ॥

'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
'मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।

---

दर्शनाच्चेति चकारो मोक्षधर्मोक्तकारणसमुच्चायक इत्याह– **अतश्च न नास्तिक्यवादो युज्यते** ।।

ननु तपआदिफलमिति देवताभ्युपयाचनमित्यनेनैव शक्यमुपसङ्ग्रहीतुम् । तत् किमिति महता कण्ठेन पृथगुच्यते– **दर्शनाच्च तपआदिफलस्येति**? अस्ति किञ्चिदिह रहस्यम् । स्वदृष्टान्तेन विशिष्य स्वशिष्यान् ग्राहयितुं स्ववचनेन पृथगिदमाह– अस्मिन्नेव कलौ युगे, इहैव भूमाविहैव जन्मनि **दर्शनाच्च तपआदिफलस्येति** । तथाहि मध्यगेहभट्टः गुणगणाढ्यपुत्रलाभाय रजतपीठे द्वादशाब्दं तपश्चचार । आदिना उपवासादिव्रतं च । तत्फलतया च स्वयमवततार । तदिदं स्वावताररहस्यं ग्राहयितुमेव करुणया पृथग् वाक्यमादत्त– **दर्शनाच्च तपआदिफलस्य स्वावतारस्य न नास्तिक्यवादो युज्यत** इति ।।

ननु शास्त्रयोनित्वादिति सूत्रं जगत्कारणे शास्त्रं ज्ञापकमित्याह । भाष्ये च नावेदविदिति औपनिषद इति वेदोपनिषन्मात्रमुच्यते । ननु वेदा अपि शास्त्रम् । उपनिषदश्च । किं तावदेव, उतान्यदपि । अन्यदपि । तर्हि वक्तव्यं शास्त्रपदग्राह्यतावच्छेदकम् । शृणु तर्हि । सूत्रकृतैवोक्तं स्कान्दवचनम्– **ऋग्यजुःसामाथर्वाश्च** । ऋक् च यजुश्च साम च आथर्वश्चेति विग्रहः । अथर्वणा दृष्ट आथर्वो वेदः । ननु तर्ह्याथर्वण इति वक्तव्यम् । न वक्तव्यम् । अस्ति ह्यकारान्तोऽप्यथर्वशब्दः– 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति । 'नाचिकेतमुपाख्यानम्' इतिवत् । सब्राह्मणारण्यकोपनिषदः ऋग्यजुःसामाथर्वाख्याः संहिताः । नारायणेन मूलरूपेणैवोक्तं पञ्चरात्रम् । 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति हि स्मरन्ति । सकलं पञ्चरात्रं पञ्चरात्रकम् । साकल्यार्थेऽपि क्वचित् कन् प्रत्यय इष्यते । 'पञ्चरात्रमथाखिलम्' इति संवादात् । 'मूलरामायणं नाम शतकोटिप्रविस्तरम् । श्रीहयास्यात् श्रुत्वा ब्रह्मणा नारदायोक्तम्' इति नरहरितीर्थाः । नारदश्च वामलूरजाताय प्राचेतसाय प्राह । स पुनः सङ्गृह्य वाल्मीकीयं नाम रामायणं प्रणिनाय । सम्प्रत्यनुपलब्धं मूलरामायणम् । यत्र टीकाकृत् पण्डिताचार्यः स्वयं विजहार । तदुक्तं सङ्ग्रहे–

'सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
'विहरन्तो महीयांसः प्रीयन्तां गुरवो मम' इति ।।

'यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्त्तितम् ।
'अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्' इति स्कान्दे ॥

'साख्यं योगः पाशुपतं वेदारण्यकमेव च' इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्म्मेष्वपि ॥

---

**अनुकूलं पुराणादि ॥**

**'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।**
**'ज्ञानान्येतानि भिन्नानि उताऽहो नेति चोच्यताम् ॥**

---

एतावदेव शास्त्रमित्यभिधीयते । हितं विहितं वा शासद्धि शास्त्रमुच्यते । तदनुगुणतया समन्वयने वाल्मीकिरामायणमपि प्रमाणमेव । तदाह– **यच्चानुकूलमेतस्य । अनुकूलं पुराणादी**ति । आदिशब्दः प्रकारवचनः । पुराणप्रकारं सर्वमपि शास्त्रमेव । अष्टादश पुराणानि, वाल्मीकीयं रामायणम्, वेदाविरुद्धा मन्वाद्याः स्मृतयश्च । **अतोऽन्यो** वासिष्ठरामायणादिः **ग्रन्थविस्तारः** वाग्वागुराविस्तरणम् । तत् केवलं मृगाणामिवाज्ञानां बन्धाय । अतो **नैव शास्त्रं** तत् । किन्तु कुशास्त्रम् । तदिमे निर्णेय-ग्रन्थाः । ब्रह्ममीमांसायाः शास्त्रोत्तमत्वेऽपि निर्णायकत्वान्नात्र गणनम् ॥

**'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।**
**'ज्ञानान्येतानि भिन्नानि उताहो नेति चोच्यताम्'** ॥ (शान्तिप.३५९.१.)

इति जनमेजयो वैशम्पायनं पप्रच्छ । अत्र वेदपदेन संहिता उच्यन्ते । आरण्यकपदेन ब्राह्मणान्या-रण्यकान्युपनिषदश्च । आरण्यकस्य पूर्वभागो हि ब्राह्मणम् । उत्तरभाग उपनिषत् । चतुर्णा-मैकार्थ्यादेकवचनम् । एवकारेण तस्य प्रामाण्यमवधारयति । वेदारण्यकं तावत् प्रमाणमेव । न तत्र संशीतिः । अथ साङ्ख्यं योगः पाशुपतमिति यानि श्रूयन्ते किं तानि वेदभिन्नार्थतया न प्रमाणानि, उताहो एकार्थतया ग्राह्याणीति विविच्योच्यतामिति प्रश्नार्थः ॥

साङ्ख्यं कपिलेन हरिणा प्रणीतम् । योगो ब्रह्मणा प्रणीतः । पाशुपतं पशुपतिनेति त्रिमूर्तिकृतानीमानि शास्त्राणीति मन्वानो जनमेजयस्त्रीण्येव प्राधान्येन मुखत उल्लिलेख । वैशम्पायनस्तु द्विविधं साङ्ख्यं

[१]'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।
'ज्ञानान्येतानि भिन्नानि नात्र कार्य्या विचारणा ॥

'साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
'प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ।
'हिरण्यगर्भो योगस्य वक्ता चैव चतुर्म्मुखः ॥

'उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
'उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते ॥

'ज्ञानेष्वेतेषु सर्वेषु साङ्ख्यपाशुपतादिषु ।
'यथायोगं यथान्यायं निष्ठा नारायणः परः ॥

'ससंशयास्ते सर्वेऽपि पञ्चरात्रमसंशयम् ।
'निस्संशयेषु सर्वेषु नित्यं वसति केशवः ॥

१. अयमिदानीं निर्णयसागरे मुद्रितः, टि. आर्. कृष्णाचार्येण टि. आर्. व्यासाचार्येण च सम्पादितः, प्रचलितः दाक्षिणात्यो भारतपाठः (क्रि.श.१९०७)–

जनमेजय उवाच–

साङ्ख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च । ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥

किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने । प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥

(शान्तिप.मो.प.३५९.१-२)

वैशम्पायन उवाचः–

साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥

साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते । हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥

अपान्तरतमाश्चैव वेदाचार्यः स उच्यते । प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥

उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥

पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम् । सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥

यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः । नचैनमेवं जानन्ति तमोभूता विशाम्पते ॥

तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥

निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान्नाध्यावसति माधवः ॥

पञ्चरात्रविदो ये तु यथाक्रमपरा नृप । एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥ (३५९.६४-७२)

दाक्षिणात्यपाठेऽपि नैककण्ठ्यम् । चेन्नपुर्यां मुद्रिते 'वाविळ्ळरामस्वामिशास्त्रुलु अण्ड् सन्स्' इत्येतैः दाक्षिणात्यशाखानुसारेण प्रकाशिते पुस्तके (क्रि.श.१९३६) पुनः किञ्चिदिवान्यादृशः पाठः ।

गोरखपुरे गीताप्रेस्द्वारा मुद्रित उत्तरभारतीयपाठोऽप्येवमेव । पुण्यपत्तने BORIद्वारा मुद्रितः पाठोऽप्येवमेव ।

इदानीं मुद्रिताः सर्वेऽपि पाठाः अनन्विताः क्वचिदसङ्गताश्च । सप्तशतेभ्यः पुरातनः पण्डिताचार्यसमुद्धृतः पाठो रमणीयश्च सुसङ्गतश्च । नाप्यर्वाचीनपाठवत् चर्वैबहुलश्च । आचार्योक्तिरवश्यमत्र स्मर्तव्या भवति–

'क्वचिद् ग्रन्थान् प्रक्षिपन्ति क्वचिदन्तरितानपि । 'कुर्युः क्वचिच्च व्यत्यासं प्रमादात् क्वचिदन्यथा ॥

'अनुत्सन्ना अपि ग्रन्था व्याकुला इति सर्वशः । 'उत्सन्नाः प्रायशः सर्वे कोट्यंशोऽपि न वर्तते ॥

'ग्रन्थोऽप्येवं विलुलितः किम्वर्थो देवदुर्गमः । कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ॥

'हरिणा निर्णयान् वच्मि विजानंस्तत्प्रसादतः । 'शास्त्रान्तराणि सञ्जानन् वेदांश्चास्य प्रसादतः' इति ।
(म.भा.ता.नि. २.३-६.)

अत्रोक्तस्य सर्वस्यापि ग्रन्थलौलित्यस्यात्रोक्ता एत एव श्लोका उदाहरणम् । तथाहि–

१. 'अपान्तरतमाः....' इत्यादिरनन्वितः प्रक्षेपः ।

२. 'ज्ञानेतेष्वेतेषु सर्वेषु साङ्ख्यपाशुपतादिषु' इत्यन्तरितम् ।

३. 'साङ्ख्यं योगः पाञ्चरात्रम्....' इत्यादिः पाठव्यत्यासः ।

४. 'प्राचीनगर्भं तमृषिम्....' इत्यस्य, हिरण्यगर्भो योगस्य...' इत्यनयोः पूर्वापरीभावेन क्रमव्यत्यासः ।

५. बहवः प्रामादिकाः पाठाः । अथापि 'योगस्य वक्ता' इति वक्तव्ये 'हिरण्यगर्भो योगस्य वेत्ता' इति प्रामादिकः पाठः ।

अहो एवं षट्सप्तेष्वेव श्लोकेषु एतावान् पाठभेदः । का कथा समग्रस्य भारतस्य? भयानकमिदं शास्त्रशोधकानाम् । दुरन्ता दुस्तरा चेयं परिस्थितिः ।

एतादृशेऽपि नैराश्ये महदिदमस्माकं भागधेयं यत् पण्डिताचार्यस्य करुणया एतत्प्रकरणसङ्गतं श्लोकजातं सुरक्षितमुपलब्धम् । कृतज्ञा वयं पण्डिताचार्यस्य । अहो धन्या माध्वाः ॥

'ससंशयान् हेतुबलान् नाद्ध्यावसति माधवः ।
'पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
'एकान्तभावोपगता वासुदेवं विशन्ति ते' इति ॥

ज्ञापयन्तीति 'ज्ञानानि' । 'परमर्षिः स उच्यते' नतु परमऋषिः परमज्ञानी । प्राचीना ब्रह्मादयो यस्य गर्भाः स 'प्राचीनगर्भः', तं प्राचीनगर्भं केचिदज्ञा वदन्ति ।

'कपिलो वासुदेवाख्यस्तन्त्रं साङ्ख्यं जगाद ह ।
'ब्रह्मादिभ्यश्च देवेभ्यो मन्वादिभ्यस्तथैव च ।
'तथैवाऽसुरये सर्ववेदार्थैरुपबृंहितम् ॥

परिगृह्योत्तरं ददौ । हरिणा कृतं सेश्वरं साङ्ख्यम्, कपिलाख्येन केनचिदृषिणा रचितं निरीश्वरं साङ्ख्यम् । उभयं मनसिकृत्य वैशम्पायन उवाच–

**'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।**
**'ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा'** (३५९.६४.) इति ॥

प्रथमप्रश्नस्य गुह्यभाषयैव निगूढमुत्तरमाह– **साङ्ख्यं योगः पाशुपत**मिति **ज्ञानान्येतानि भिन्नानि** । यतः **साङ्ख्यं वेदारण्यकमेव** । विषयैक्यात् । योगः पाशुपतं च भिन्नमध्वानमनुपतत इति ॥

अथ द्वितीयं पक्षमाश्रित्योत्तरमाह– निरीश्वरं **साङ्ख्यं योगः पाशुपतं वेदारण्यक**मिति चत्वार्यपि **ज्ञानानि भिन्नानि** भिन्नविषयत्वादिति । एवमितरेषां साङ्ख्ययोगपाशुपतानां वेदारण्यकाद् **भिन्नमतत्त्वं प्रदर्श्य,** उपरिष्टात् **पञ्चरात्रस्यैव प्रामाण्यमुक्तम्–**

**'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।**
**'ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद् विशिष्यते'** इति ॥

कथमेवमुच्यते? पञ्चरात्रं तावत् पूर्वमप्रस्तुतम् । तदिह उल्लिख्यते । पूर्वप्रस्तुतं वेदारण्यकमत्र परित्यक्तम् । तेनैतदवसीयते वेदारण्यकपञ्चरात्रयोरेकार्थत्वाभिप्रायेण **पञ्चरात्रस्यैव** इह **प्रामाण्यमुक्तमिति** । अन्यथा प्रसक्तपरित्यागोऽप्रसक्तपरिग्रहश्च स्याताम् ॥

'सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह ।
'साङ्ख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितम्' इति पाद्मे ॥

## द्वौ कपिलौ

अत्र ज्ञानानीति ज्ञानजनकानि शास्त्राण्युच्यन्ते । कथम्? **ज्ञापयन्तीति** ज्ञापनानि । पकारलोपेन **ज्ञानानि** । णिलुग् वा । अवैदिकस्य **साङ्ख्यस्य वक्ता** कश्चन **कपिलो** नामर्षिः । केवलं रूढ्या **परमर्षिः** कपिलमहर्षिरित्युच्यते । नतु परमः सर्वोत्तमः ऋषिर्ज्ञानीति । अथापि अवैदिकसाङ्ख्यस्य वक्ता कपिलोऽयमन्यः, देवहूत्यै परमसाङ्ख्योपदेष्टा भगवान् कपिलवासुदेवोऽन्य इति तथ्यमजानन्तः केचिदज्ञास्तमेव **प्राचीनगर्भं** नारायणं **प्रवदन्ति** प्रवादतो **वदन्ति** । प्रवादमात्रमेतदिति यावत् । प्रमादतो वदन्ति वा । कथं प्राचीनगर्भो नारायणः? आह– **प्राचीना ब्रह्मादयो यस्य गर्भा** अर्भका इति । 'गर्भो भ्रूणेऽर्भके कुक्षौ' इति ह्यभिदधति ॥

ननु कुतः कपिलद्वयकल्पना? सूत्रकृद्वचनादेवेत्याह– **कपिल** इत्यादिना पाद्मवचनेन । **वासुदेवाख्यः** कपिलवासुदेवनामा भगवान् कार्दमः **कपिलः** सन् **साङ्ख्यं** नाम **तन्त्रं** शास्त्रं **जगाद** । शुद्धात्मतत्वविज्ञानं साङ्ख्यम् । तद्विज्ञापनं शास्त्रं च । सङ्ख्यया सर्वार्थसङ्ग्राहकं साङ्ख्यम् । तनोति विपुलानर्थान् त्रायते च महतो भयादिति तन्त्रं नामेह च परत्र चोभयार्थप्रयोजकं सिद्धान्तनिरूपकं मुख्यशास्त्रम् । तथाह्यभिदधति–

'तन्त्रं कुटुम्बकृत्ये स्यात् सिद्धान्ते चौषधोत्तमे ।
'प्रधाने तन्तुवाये च शास्त्रभेदे परिच्छदे ।
'श्रुतिशाखान्तरे हेतावुभयार्थप्रयोजके ।
'इतिकर्तव्यतायां च–' इति ।

जगाद हेत्यद्भुतं भगवदुपक्रमं शास्त्रमिदमित्यास्वदते । केभ्यो जगाद? मातरं देवहूतिमुपधीकृत्य **ब्रह्मादिभ्यो देवेभ्यो जगाद** केवलम् । **तथैव** स्वायम्भुवमन्वादिभ्यश्च, ऋषिभ्यश्च । तथैवाऽसुरिनाम्ने शिष्याय । असौ वायौ रता असुरा मुनयस्तेषामयमासुरिनामा कश्चिन्मुनितनयः । तदिदं **सर्ववेदार्थैरुपबृंहितं**

वैदिकं साङ्ख्यम् । **उपबृंहितं** समेधितम् । भगवतोऽन्यः कश्चिदृषिरपि कपिलनामा 'मोहशास्त्राणि कारय' इति भगवदाज्ञावलम्बी **सर्ववेदविरुद्धमन्यदेव साङ्ख्यं** नाम कुशास्त्रं **जगाद ह** । भगवद्भक्तोऽपि वेदविरुद्धं जगाद हेति भगवल्लीलाया अनुल्लङ्घ्यतां स्वदमानो विस्मयते । कस्मै जगाद? **अयमन्यस्मा आसुरये** शिष्याय । असुरप्रकृतित्वादेवायमासुरिः । वेदविरुद्धत्वादेव कुतर्कैः परिबृंहितं परिपुष्टम् । ग्रन्थस्य गुरुशिष्ययोश्च नामैक्यं भ्रान्तिकारणं बभूवेत्यर्थः ॥

कुत इदं नामैक्यम्? तदपि चतुर्मुखवरादेव भगवदिच्छया । तथाहि श्रीमच्छन्दोगोपनिषद्भाष्ये कापिलेयवचनम् (३.४)–

'महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।
'कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरातनाः ॥

'सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने ।
'मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ ॥

'स्वात्मशिष्यप्रशिष्याणां नामैक्यं कपिलस्तथा ।
'एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः ॥

'तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः ।
'तस्मात् तन्नामिनस्त्वासन्स्त्रयस्ते मुनयोऽपि हि' इति ॥

अयमर्थः– **महिदासस्त्वैतरेयोऽन्यः** । **कृष्णो देवकीसुतश्च** अन्यः । **पुरातनाः** ऋषयः । ब्रह्माणं परमेष्ठिनमुद्दिश्य । **उभौ** प्रथमोक्तौ ऐतरेयो महिदासः, देवकीसुतः कृष्णश्च । **विष्णुना स्वस्य नामैक्यम्** । विष्णुमात्रा **स्वमातुश्च नामैक्यम्** । स्वात्मनः कपिल इति शिष्यस्य आसुरिरिति प्रशिष्यस्य पञ्चशिख इति त्रयाणामपि **नामैक्यं कपिलो** वव्रे इति ॥

योगशास्त्रस्य **वक्ता** तु **हिरण्यगर्भश्चतुर्मुख एव** । न कपिल इवान्यः कश्चन मुनिः सनामा । चकारेणान्येऽपि हिरण्यगर्भोक्तदिशा योगमार्गं वितेनुरित्याह ॥

यद्यपि मिथ्यावचनं व्यग्रताहेतुरस्ति । तथाऽपि परमाज्ञया मोहनार्थम् 'अव्यग्रमुक्तवान्' । साङ्ख्यपाशुपताभ्यां योगो विशिष्यत इत्यवगम्यते । वक्तुर्दोषासूचनात् । नच तत्र विष्णोरुत्तमत्वनिषेधः । 'यथायोगं' सर्वशब्दानां ब्रह्मणि वृत्त्या । 'यथान्यायं' यथा विष्णौ

---

उक्तौ साङ्ख्ययोगौ । अथ पाशुपतोदन्तमाह– योगशास्त्रकर्तुर्ब्रह्मणः **सुतः शिवः पाशुपतं शास्त्रमुक्तवान्** । किमर्थमुक्तवान्? उक्तमिति भावे क्तः । उक्तं 'मोहशास्त्राणि कारय' इति वचनं भगवदादेशः । तद्वान् । भगवतोक्तमित्ययमुवाचेत्यर्थः । उमा वाग्देवता, उपस्थानन्ददेवता च । यदधीनो जिह्वोपस्थजयः । भूताश्च तपोविघ्नकरास्तमःप्रचुराः । अतस्तेषां पतिस्तमःप्रचुरां मोहनीं वाचमुक्तवान् । यो भगवदाज्ञया विषं पीत्वाऽपि **श्रीकण्ठो** बभूव । तथा तामसशास्त्रप्रणयनेऽपि श्रीमुख एव बभूव न दुर्मुखः । आज्ञापालनरूपपुण्यसाधनत्वात् । अत एव **'अव्यग्रमुक्तवान्'** इत्याह । तस्य भावं स्फुटमाह टीकाकारः– **यद्यपीति** । इदं लोकेषु विततं पशुपतिपारम्यप्रतिपादकं **ज्ञानं** शास्त्र**मुक्तवान्** । भगवत्सेवारूपमित्यव्यग्रतया । व्यग्रो व्याकुलः ॥

ननु चतुर्मुखः परमाप्तः । भगवता प्रथमं गृहीतवेदः । नापि तामसमोहनार्थं भगवताऽऽज्ञप्तः । तत् कथं तदुक्तं वेदारण्यकाद् भिन्नम्? साधुरयमनुयोग इत्याह– **साङ्ख्यपाशुपताभ्यां** भगवदाज्ञया तामसमोहनार्थमेव प्रणीताभ्यां हिरण्यगर्भप्रणीतो **योगो विशिष्यत** उत्कृष्यत इति । कपिलमुनेरिव शिवस्येव वक्तुर्हिरण्यगर्भस्य दोषाकथनात् । नापि साङ्ख्यपाशुपतयोरिव नास्तिक्यं वा विष्णोरनुत्तमत्वं वा तत्र बोध्यते । विष्णोरुत्तमत्वं स्फुटं न घुष्यत इतीयानेव भेदः । तदपि विष्णुर्वा स्यादन्यो वा स्यादीश्वर इति राजसानां संशयार्थम् । रजोमानी हि सः । अथच पाश्चात्यैस्तत्परम्पराप्रवर्तकैस्तदन्यथैव विस्तृतमिति तदपि वेदारण्यकाद् भिन्नमेव सञ्जातमित्याशयः । यथा पुराणेषु वायुप्रोक्तं मुखतो वेदारण्यकाद् भिन्नं भासते । एतदप्यत्रैवोक्तम्– **'ससंशयास्ते सर्वेऽपि पञ्चरात्रमसंशयम्'** इति ॥

एतेन बादरायणकृतमिति प्रथितं पातञ्जलयोगसूत्रभाष्यमपि कपिलेन साङ्ख्यमिव केनापि नूतनेन बादरायणेन कृतमिति स्फुटम् । नह्यनुन्मत्तः कश्चित् स्वयं भाष्यं प्रणीय सूत्रेषु तत् प्रत्याख्यातुमर्हति– 'एतेन योगः प्रत्युक्तः' इति ॥

तात्पर्य्योपपत्तिः । 'निस्संशयेषु' यथानिश्चितार्त्थेषु । 'हेतुबलान्' हेतुमात्रबलान् । 'यथा-क्रमपराः' यथोक्तदेवतातारतम्यक्रमपराः । पञ्चरात्रस्य साक्षाद् वेदारण्यकैकार्त्थतास्पष्टीकरणाय वेदारण्यकस्थाने पञ्चरात्रस्य प्रामाण्यमुक्तम् । मोक्षधर्म्मेष्विति बहुवचनं धर्म्मभेदात् ॥

## पञ्चरात्रस्य प्राधान्यम्

तर्हि वेदारण्यकाभिन्नं शास्त्रं किमित्याकाङ्क्षायामाह– **पञ्चरात्रस्य कृत्स्नस्य** । यतः **कृत्स्नस्य वक्ता नारायणः स्वयं** सर्वज्ञतम आप्ततमश्च, यो वेदानां प्रथमो वक्ता ब्रह्मणे, अतः कृत्स्नं पञ्चरात्रं वेदारण्यकाभिन्नार्थं प्रमाणतममिति । एतेन पञ्चरात्रं भागशः प्रमाणं स्यात्, न कृत्स्नमिति वदन्तः परास्ताः । भारतविरोधादेव । अनेनैव 'उत्पत्त्यसम्भवात्' (ब्र.सू.२.२.४२) इति पञ्चरात्रनिषेधकं सूत्रमिति वदन्तोऽपि निरस्ताः । भारतविरोधादेव । न हि भगवान् बादरायणो भारते पञ्चरात्रस्य प्रामाण्यं प्रतिष्ठाप्य सूत्रे निराचकरेति वदन्ननुन्मत्तो भवितुमर्हति ॥

यत्तु कश्चिदाह– 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हातव्यानि हेतुभिः' इति भारतोक्त्या पाशुपतमपि शास्त्रपदगदितमिति । ननु एतदपि भारतगतम् । 'ज्ञानान्येतानि भिन्नानि' इति च । तेनोभयाविरोधेन व्याख्यातव्यं भवति । तेनात्र साङ्ख्यमिति वैदिकं साङ्ख्य-मुच्यते । तेन साङ्ख्यं योगः पञ्चरात्रं वेदा इत्येतानि आत्मविषये प्रमाणानीति स्फुटम् । तथा पाशुपतमपि गूढार्थग्रहणे आत्मप्रमाणमेव । अत आपातप्रतीतहेतुभिर्नाऽन्तराणि प्रमेयाणि हातव्या-नीत्यर्थः । तदप्यत्रोक्तम्–

> **'ज्ञानेष्वेतेषु सर्वेषु साङ्ख्यपाशुपतादिषु ।**
> **'यथायोगं यथान्यायं निष्ठा नारायणः परः'** इति ॥

तस्मादस्मत्पक्षे न कोऽपि विरोधः । परस्य तु मोक्षधर्मपर्ववचनं गलपाशायते ॥

**तस्मादेतेषु सर्वेषु एतत्** पञ्चरात्रं **विशिष्यते** । मुखतो निःसंशयं विष्णुपारम्यघोषणात् । अथापि **सर्वेषु** राजसतामसेष्वप्येतेषु शास्त्रेषु सर्वोत्तमो **नारायण** एव **निष्ठा** मुख्यतात्पर्यार्थः । कथम्? **यथा-योगम्** । सर्वशब्दानां गुणपरतया नारायणे ब्रह्मणि योगवृत्त्या । ननु योगाद् रूढिर्बलीयसी । अज्ञरूढेरपि योगमूला विद्वद्रूढिर्बलीयसीत्यवधत्स्व । **यथान्यायम्** । उपक्रमादिलिङ्गैः यथा विष्णौ

**शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ॥ ३ ॥**

**॥ इति तृतीयमधिकरणम् ॥ * ॥**

---

**शास्त्रं योनिः प्रमाणमस्येति** । **अस्य** विष्णोः **शास्त्रं योनिः** ज्ञप्तिकारणम्, प्रमाण-मित्यर्थः ॥ * ॥

**॥ इति शास्त्रयोनित्वाधिकरणम् ॥ * ॥**

---

तात्पर्योपपत्तिस्तथा समन्वयेन । अथापि **ससंशयास्ते सर्वेऽपि** । शिव इति किमुमापतिरुच्यते, अथ विष्णुरिति । उमेति किं शिवभार्योच्यते, उत उत्कृष्टा मा रमोच्यत इति । **पञ्चरात्रं** स्फुटं नारायणपारम्यं घोषयतीति **असंशयं** निश्चितार्थम् । **यथा निश्चितार्थेषु**, यथावत् यथा वेदगदितं तथा निश्चितार्थेषु **नित्यं वसति केशवः** । अत एव हि स **केशवः** । ससंशयशास्त्रकृतौ केशौ ब्रह्मेशानौ स्वयं तत्र प्रवर्तयतीति । **हेतुमात्रबलान्** श्रुतिनिरपेक्षहेतुबलान् । न तत्र ज्ञानिनां प्रत्यक्षं संवदते । नापि श्रुतिः । **नाध्यावसति** नातितरां सन्निहितो भवति । यतः स मायाः प्रमाया धवः । अतः प्रमाजनका-नेवाध्यावसति । 'उपान्वध्याङ्‌ वसः' (अ.सू.१.४.४८) इत्याधारस्य कर्मसञ्ज्ञायां द्वितीया । ये तु **पञ्चरात्रविदः**, अत एव तदभिन्नार्थकवेदारण्यकविदः, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति स्मरणात् । एकान्तेन भावेन अनन्यया भक्त्या उपगताः प्रपन्नाः मोक्षप्रदं **वासुदेवं विशन्ति** । मुक्ता भवन्तीत्येतत् । **नृपेति** जनमेजयं सम्बोध्य वैशम्पायन उवाच ॥

ननु उपक्रमे प्रस्तुतं वेदारण्यकमेव किमिति नोपसञ्जहार? आह– **पञ्चरात्रस्य** । तेन वेदारण्यक-मत्राप्यनुवर्तते । पञ्चरात्रमुपक्रमेऽपि । उपसंहारो बलवानेतमर्थमाक्षिपति । **बहुवचनं धर्मभेदादिति** । मोक्षधर्मपर्वणि कथितेषु धर्मेष्वयमप्येको मोक्षधर्म इति । एतेन पर्वनाम च विगृहीतं भवति– मोक्षधर्माणां पर्वेति ॥

## परभाष्यविमर्शः

अथ 'शास्त्रयोनित्वात्' इति सूत्रपदस्य विग्रहणे विवदन्ते । तथाहि शाङ्करं व्याख्यानम्– 'शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म' इति ।

'शास्त्रं योनिः प्रमाणं यस्य' इति भास्कररामानुजौ । 'शास्त्रमेव योनिर्ज्ञप्तिकारणं यस्मिन्' इति निम्बार्कः । 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' इत्येकं सूत्रं मन्वानो वल्लभो बभाण—'शास्त्रे योनिः शास्त्रयोनिः । शास्त्रोक्तकारणत्वादित्यर्थः' इति । 'शास्त्रयोनित्वमस्तीति शास्त्रयोनित्वात्' इत्यपि व्याख्यानान्तरम् । तत्र कमर्थं वयमिह साधीयांसमीहेमहीति जिज्ञासमानानन्तेवासिनः प्रत्याह भगवत्पादः— **शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि** । योनिरिति कारणमुच्यते । शास्त्रं ज्ञप्तेः कारणमिति स्फुटम् । तेन शास्त्रपदसहकृतं योनिपदं ज्ञप्तिकारणमाह । तदेतद् स्पष्टयति टीकाकृत्— **अस्य विष्णोरिति** । वस्तुस्थितिकथनमेतत् । विष्ण्वाख्यस्य ब्रह्मण इत्यर्थः । अन्यथा शास्त्रयोनिरिति स्यात् । अनेन 'अकारवाच्यस्य विष्णोः' इत्यर्थान्तरं च ध्वनयति । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति हि स्मरन्ति ॥

ननु नान्ये पक्षा निराकृताः । येनायमेवार्थ इति निश्चिन्वीमहि । न निराकर्तव्यम् । अन्तेवासिन एवं चिन्तयन्ति— 'यद् भगवत्पाद एकमर्थं निष्कृष्याऽह तेन ज्ञायते न तस्यान्येऽर्थाः सम्मता इति' इति । किमर्थमसम्मताः स्युरिति चिन्तयतां मनस्यन्येष्वर्थेषु दोषाः स्फुरेयुरेव । अपिचाऽचार्य एव स्वके गीताभाष्ये शाङ्करमर्थं निराचकार (३.१५)— 'शास्त्रं योनिर्यस्येति तु शास्त्रयोनित्वम् । 'जन्माद्यस्य' इत्युक्ते प्रमाणं हि तत्रापेक्षितम् । नतु तस्य जातत्वं वेदकारणत्वं वा । नहि वेदकारणत्वं जगत्कारणत्वे हेतुः । नहि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । नच सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा? तस्माद् वेदप्रमाणकत्वमेवात्र विवक्षितम्' इति । अत एव स्वस्य प्रथमवर्णके स्वयमप्रीयमाणः पुनर्वर्णकान्तरमाह परभाष्ये— 'अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगमे । शास्त्रादेव प्रमाणात् जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः' इति ॥

ननु भगवत्पाद एतत्सूत्रसङ्गतं प्रमेयं किमिति नात्राऽह । शृणु तथ्यम् । प्रथमं किल भगवत्पादो गीताभाष्यं प्रणिनाय । तत्र प्रसङ्गप्राप्तमिति शाङ्करं मतं निराह । तत्रोक्तमिति नात्र पुनराह । तत्वबुभुत्सुना बहुदर्शिना भवितव्यमिति सूचनाय च । अथ भास्कररामानुजयोरर्थे न विवादः । शास्त्रं योनिर्यस्मिन्निति वदन् निम्बार्कोऽपि न निन्दार्हः । ऐकार्थ्यात् । षष्ठी तु बह्वर्था भवति । अन्यत् सर्वं श्रवणत एवास्वरसमिति न खण्डनायापि प्रयतितव्यमित्यलम् ॥ ❊ ॥

**॥ इति तृतीयं शास्त्रयोनित्वाधिकरणम् ॥ ❊ ॥**

—०—

## चतुर्थमधिकरणम्
## (समन्वयाधिकरणम्)
## (१.१.४.)

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम् । कुतः?–

**॥ तत्तु समन्वयात् ॥ १.१.४. ॥**

---

### तत्वप्रदीपः

जगत्कारणस्य विष्णोः शास्त्रैकगम्यत्वं साधितम् । तस्यैव च शास्त्रगम्यत्वमित्याह– **अज्ञानामित्यादिना** । साङ्ख्यपाशुपतसौरशाक्तेयादीनां **प्रतीयमानमपीतरेषां** प्रधानरुद्रादीनां **न** शास्त्रगम्यत्वम् । **कुतः? तत्तु समन्वयात्** ।

---

### तत्वचन्द्रिका

#### पञ्चायतनमूलः प्रतनः पूर्वपक्षः

**शास्त्रैकगम्यत्वं** केवलशास्त्रगम्यत्वं मुख्यतः शास्त्रगम्यत्वं च **साधितमयोगव्यवच्छेदेन** । सम्प्रत्यन्ययोगव्यवच्छेदेन **तस्यैव शास्त्रगम्यत्वमित्याह** । चकारेणायोगव्यवच्छेदं समुच्चिकाय– **तस्यैव शास्त्रगम्यत्वमिति चाऽहेति** । भाष्ये– **अज्ञानामिति** । तत्वमजानताम्, वेदप्रामाण्यमजानताम्, तदभ्युपगमेऽपि वेदहृदयमजानताम्, वेदतदनुकूलानामेव शास्त्रत्वमित्यजानताम्, अन्ततः विष्णोरेव शास्त्रयोनित्वमित्यजानताम् । एवङ्गुणविशिष्टाः के ते? आह– **साङ्ख्यपाशुपतसौरशाक्तेयादीनामिति** । तत्वमजानतामिति सर्वेषां समानम् । तत्रापि वेदप्रामाण्यमजानतां निरीश्वरसाङ्ख्यानाम् । यद्यपि सेश्वराः केचन साङ्ख्या भवन्ति । तेऽपि जगत्कर्तृत्वे स्वयमीश्वरमनीश्वरं वदन्तीति वस्तुतो निरीश्वरा एव

वेदबाह्याः । वेदप्रामाण्याभ्युपगमेऽपि वेदहृदयमजानतां वेदवादरतानां **पाशुपतसौरशाक्तेयादीनाम्** । नहि कपिलवासुदेवोक्तं सम्यक्ख्यातिरूपं वैदिकं साङ्ख्यमिह विवक्षितम् । पूर्वपक्षपतितत्वात् । किन्तु सङ्ख्यया ये जगद् विभज्य निरूपयन्ति तेऽत्र साङ्ख्याः । 'तस्येदम्' (अ.सू.४.३.१२०) इत्यण् । पशुपतिं परदेवतां प्रतिपादयच्छास्त्रं पाशुपतम् । तमेव परदेवतां य उपासते ते पाशुपताः । 'अश्वपत्यादिभ्यश्च' (अ.सू.४.१.८४) इत्यण् । सूरस्येमे सौराः । ये सूर्यं परदेवतामुपासते । 'साऽस्य देवता'(अ.सू.४.२.२४) इत्यण् । सूर्यः पुनरष्टमूर्तेः पशुपतेरेका मूर्तिरिति परस्ताद् वचनम् । अथ ये स्त्रियं शक्तिं परदेवतामुपासते ते शाक्तेयाः । ननु शक्तिरेषां देवतेति शाक्ता इति वक्तव्यम् । कथं शाक्तेयाः? जानात्येव पण्डिताचार्यः 'साऽस्य देवता' इत्यणि शाक्ता इति रूपमिति । अथापि 'शाक्तेयाः' इत्याह । तेन ज्ञायते साकूतः पण्डिताचार्य इति । किमाकूतं स्यात्? इदमिह सम्भाव्यते– देवतेति शास्त्रविषयत्वमात्रमुच्यते । शाक्तास्तु 'शक्तिरेव सर्वकर्त्री वयं शक्तेरपत्यानि' इति कत्थन्ते सर्वकर्तारं जगत्पितरमनङ्गीकुर्वाणा इति परिहसन्निव तान् शाक्तेयानाह । तेन 'स्त्रीभ्यो ढक्' (अ.सू.४. १.१२०) इत्यपत्यार्थे ढक् । त्रिपदद्वन्द्वत्वात् 'अल्पाच्तरम्' (अ.सू.२.२.३४) इत्यस्य नायं विषयः । साङ्ख्यानां स्वोत्प्रेक्षितसमयेष्वनुमानतः प्रतीयमानम् । किं तत्? अचेतनस्य प्रधानस्य शास्त्रयोनित्वम् । इतरेषामापाततो वेदेषु प्रतीयमानं शास्त्रयोनित्वम् । केषाम्? रुद्रादीनाम् । ये चान्येश्वरवादिनस्तेषु केचिद्रुद्रं शास्त्रगम्यं मन्यन्ते । अपरे सूर्यं जगत्प्रसवितारम् । अन्ये शक्तिं जगत्प्रसवित्रीम् । शाक्तेयादीनामित्यादिपदेन स्कान्दा गाणपताश्च । ये पञ्चायतनपूजानिरता वैष्णवास्तेऽपि । ते हि विष्णुमुपासीना अपि इतरदेवतासमत्वेनोपासते । न विष्णुमेव शास्त्रयोनिम् । एतदप्याह भाष्यकारः– **अज्ञानामिति** । अकारवाच्यं विष्णुं कथञ्चिज्जानतामपि तत्पारम्यमजानतामिति । यदाहुः– 'शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथाऽपि । चेतो मदीयमतसीकुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरम्' इति । 'एको देवः केशवो वा शिवो वा' इत्यादि च ॥

अत्र पूर्वसूत्रे शास्त्रयोनित्वेन हिरण्यगर्भः प्रस्तुतः । तेन हैरण्यगर्भा अपि पूर्वपक्षकक्षे निक्षेपमर्हन्ति । सत्यम् । उपलक्ष्यन्तां तेऽपि । को नेत्याह? ननु टीकाकृन्नाऽह । अत एव व्याख्यायते– उपलक्ष्यन्तामिति । नेदमुत्तरम् । हेतुप्रश्ना वयम्– किमिति नाऽहेति? श्रूयताम् । उपासनार्थत्वाज्जिज्ञासाया उपास्य एव जिज्ञास्यते । यथा पञ्चायतनेषु रुद्राद्युपासना दृष्टा न तथा हिरण्यगर्भस्येति न तं मुखत आह टीकाकारः । एतेन वायुरपि व्याख्यातः । श्रीसरस्वतीभारत्यश्च । पूर्वपक्षे हिरण्यगर्भादीनां निवेशोऽपि न नो हानिः । अत एव 'अज्ञानाम्' इति सर्वं सङ्गृह्योवाच भगवान् भाष्यकारः ॥

अन्वय उपपत्त्यादिलिङ्गम् । उक्तं च बृहत्संहितायाम्–

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
'अर्त्थवादोपपत्ती च लिङ्गं तात्पर्य्यनिर्ण्णये' इति ॥

उपक्रमादितात्पर्य्यलिङ्गैः सम्यङ् निरूप्यमाणे तदेव शास्त्रगम्यम्–

---

**उपपत्त्यादिलिङ्गमिति** वचनादुत्तरोत्तरप्राबल्यं सूचितम् । उपक्रमादीनां सर्वेषामुपपत्तित्वेऽपि ब्राह्मणपरिव्राजकन्यायेन भेदोक्तिः । यद्यपि वेदैकदेशस्य देवतान्तराद्यन्वयः, स ब्रह्मणः सर्वोत्तमत्वप्रतिपादनार्त्थ इति तदेव सम्यगन्वयान्महातात्पर्य्यादमवगम्यते ॥

---

**कुतः? ॥ तत्तु समन्वयात् ॥** यतः **तत्** शास्त्रयोनित्वं **समन्वयात्तु** समन्वयादेव । अथच **समन्वयात्** तत्तु विष्णवाख्यं ब्रह्मैव शास्त्रयोनि । तेन पूर्वसूत्रभाष्यान्ते पठितं 'शास्त्रयोनि' इति पदमव्यवहितेनोत्तर-सूत्रेणान्वेतीति सूचयाम्बभूव– 'शास्त्रयोनि तत्तु समन्वयात्' इति । कोऽयं समन्वयो नाम? सम्य-गन्वयः । अथ कोऽयमन्वयो नाम? आह भाष्यकारः– **अन्वय उपपत्त्यादिलिङ्गम्** । यदनुगमेन शास्त्रार्थ ईयते, वाक्यस्य अनुरूपमयनं येन वा सोऽन्वयः । **वचनादिति** । बृहत्संहितायां चरमोपात्तस्योपपत्तिपदस्य भाष्ये प्रथमं **वचनात्** । प्रमाणोक्तक्रमव्यत्ययस्य कारणमुपपत्तेः प्राबल्यमिति स्फुटम् । तेन प्रमाणोक्तेषूपक्रमादिषु उत्तरोत्तरं प्राबल्यमवगन्तव्यमिति च सूचितं भवति भाष्यकारेण । एतेन उपपत्त्यादीत्ययमादिशब्दः न केवलं प्रकारवचनः, प्राधान्यवचनश्चेत्युक्तं भवति । **लिङ्गमिति** न युक्तिरुच्यते । पुनरुक्तेः । लिङ्गं चिह्नं गमकमित्यर्थः । 'लिङ्गं चिह्नेऽनुमाने च' इति मेदिनी । लिङ्ग्यते गम्यतेऽनेनेति लिङ्गम् । लिगि गतौ । लीनमर्थं गमयतीति च लिङ्गम् । उपपत्त्यादिसप्तकं लिङ्गं तात्पर्यगमकमिति ॥

### ब्राह्मणपरिव्राजकन्यायस्यौचित्यम्

ननूपपत्तिरित्येव पर्याप्तम् । उपपत्तिभेदा एव ह्युपक्रमादयोऽपि । आह– **ब्राह्मणपरिव्राजकन्यायेन भेदोक्तिरिति** । यद्यपि परिव्राजको ब्राह्मण एव । अथापि न परिव्राजक एव ब्राह्मणः । तेन पृथग् व्यवह्रियते– ब्राह्मणा आगताः, परिव्राजकोऽप्यागत इति । सोऽयं ब्राह्मणपरिव्राजकन्यायः । एव-

मिहापि– उपक्रमादयोऽप्युपपत्तय एव । अथापि नोपपत्तिरुपक्रमादय एव । अतः पृथग् व्यपदिश्यते– उपक्रमादयश्च उपपत्तिश्चेति । ननु ब्राह्मणत्वं व्यापकम् । व्याप्यं परिव्राजकत्वम् । उपपत्तित्वं व्यापकम् । व्याप्यमुपक्रमादित्वम् । व्याप्ये कथिते व्यापकं कथितं भवति । सत्यं कथितं भवति– यत्र द्वयोर्धर्मिणोर्व्याप्यव्यापकभावः धूमदहनयोरिव । अत्र धर्मयोर्व्याप्यव्यापकभावो न धर्मिणोः । परिव्राजकत्वब्राह्मणत्वयोर्हि व्याप्यव्यापकभावः । यत्र परिव्राजकत्वं तत्र ब्राह्मणत्वमिति । न परिव्राजकब्राह्मणयोः, यत्र परिव्राजकस्तत्र ब्राह्मण इति । तेन ब्राह्मणं विना परिव्राजकः स्यात् । परिव्राजकं विनाऽपि ब्राह्मणः । अत्रापि तथा– न सर्वेऽप्युपक्रमादय उपपत्तयो भवन्ति । न सर्वा अप्युपपत्तय उपक्रमादयः । ब्राह्मणा एव पारिव्राज्यमर्हन्तीति सम्प्रदायमनुसृत्येदमुदितम् । अद्यत्वे त्वब्राह्मणा अपि परिव्राजका बुभूषन्ति आर्हतबौद्धादयः । अपिच ब्राह्मण उपवीती भवति । अग्निहोत्री भवति । न परिव्राजकः । परिव्राजको दण्डी भवति मुण्डी भवति । न ब्राह्मणः । एवं तयोर्वैधर्म्यसूचनाय पृथगुक्तिः । एवमिहापि– उपक्रमादयः शब्दरूपा भवन्ति । निर्णेयतात्पर्यग्रन्थभागा भवन्ति । नोपपत्तिः । उपपत्तिः शब्दरूपाऽपि भवति । उपक्रमादिषट्कभिन्नाऽपि भवति । नोपक्रमादयः । एवं वैधर्म्याच्च पृथगुक्तिः । अपिच परिव्राजको हि ब्राह्मणेषु विशिष्टो भवति । ब्राह्मण ऐहलोकिकेऽपि व्यापृतो भवति । परिव्राजकः परं पारलौकिक इति । एवमुपपत्तिरुपक्रमादिभ्यो विशिष्टा भवति, नियत्या तात्पर्यनिर्णयसाधनत्वात् । उपक्रमादयोऽपि तात्पर्यनिर्णयने स्वयमुपपत्तितामेव हि भजन्ति । तस्माद् वैशिष्ट्याच्च पृथगुक्तिरिति । एवं वैशिष्ट्यद्योतनाय च भाष्ये प्रथमोक्तिः– उपपत्तिरादिर्मुख्या यस्योपक्रमादिषट्कस्येति ॥

एवं पूर्वपूर्वप्रबलतया उपपत्त्यादित्वेन पठनेऽन्यदपि प्रयोजनं भवति– यत् पूर्वंपूर्वं बलीयोऽन्यदपि आदिपदेनोपादीयेतेति । वक्ष्यति च स्वयमेवोत्तरत्र (१.३.२४)– 'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा । पूर्वपूर्वं बलीयः स्यादेवमागमनिर्णयः' इति । लिङ्गमित्येकवचनं सूत्रानुगुण्याय समाख्यास्मारणाय च ॥

ननूपपत्त्यादिलिङ्गेनाग्नीन्द्रादिपरत्वं ज्ञायते श्रुतेः । सत्यमन्वयादन्यपरताऽप्यस्ति भागशः । किन्तु समन्वयादनन्यपरतेत्यर्थः । इतरदेवतास्वन्वयमन्तरा विष्णौ समन्वयासम्भवात् । तथाहि– 'ब्रह्मा देवानां प्रथमः सम्बभूव' इत्याथर्वणिकाः पठन्ति । ब्रह्मा चतुर्मुखः देवानां प्रथमः सन् सम्बभूव विष्णोर्बभूवेत्यर्थः । नहि ब्रह्मशब्दस्यान्वयेन चतुर्मुखपरतामन्तरा शक्यं विष्णोश्चतुर्मुखजनकत्वरूपो गुणविशेषः

उपक्रमोपसंहारयोर्विशेषसामान्योक्तितया यत्राविरोधस्तत्र क्वचिदुपक्रमो बलवान्। प्रथम-प्राप्तत्वात् । तदनुरोध्युपसंहारः । यथा 'आत्मा वा इदम्' इत्युपक्रमसिद्ध आत्मा

---

प्रतिपादयितुम् । तदिदमवान्तरतात्पर्यम् । एवमन्वयसहितात् समग्रान्वयात् विष्णुरेव शास्त्रयोनि-रिति । तथाच सूत्रार्थः– समन्वयादित्यत्र समिति सहार्थे च । तत्तु शास्त्रयोनित्वं तु समन्वयात् अवान्तरार्थेऽन्वयसहितात्, सम्यक् महातात्पर्यपरतया समग्रादन्वयात् उपपत्त्यादिलिङ्गबलादिति । एवं समग्रान्वयबलात् तत्तु नारायणाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनीति च । तदेतत् सर्वं सङ्गृह्याऽह– **यद्यपि वेदैकदेशस्य देवतान्तराद्यन्वयः** दृश्यते स्वीक्रियते च । **स ब्रह्मणः सर्वोत्तमत्वप्रति-पादनार्थ इति** समन्वयानुकूल एवेति तदेव नारायणाख्यं ब्रह्म **सम्यगन्वयान्महातात्पर्यादवगम्यत** इति ॥

अथच उपक्रमादयः तात्पर्ये लिङ्गानि येषामित्येकदेशात उपक्रमादितात्पर्यलिङ्गा ब्रह्मादयः । तैः समन्वित्य समग्रे **निरूप्यमाणे** ब्रह्मादिजनकं **तदेव** शास्त्रगम्यमिति ॥

प्रमाणवचने– **उपक्रमोपसंहाराविति** । यद्यपि उपक्रम उपसंहारश्च स्वतन्त्रतया तात्पर्यं निर्णयतः । अथापि क्वचिन्मिलितावपि तौ लिङ्गं भवत इति सहोक्तिः । क्वचिदुपक्रमो बलवान्, क्वचिदुपसंहार इति विशेषसूचनाय च । तदेतदुपरि टीकायां स्फुटम् । ननु तर्हि कथमर्थवादोपपत्ती इति? तत्र तु कृत्यान्तरं भवन्ति । किं तत्? यथा उपक्रमादयस्तात्पर्यनिर्णये उपपत्तिरूपा एवमर्थवादरूपा अपि । यत्पारम्यार्थमयं सर्वोऽप्युपक्रमादिवाद इति । एवमुपक्रमादयः पञ्चापि अर्थवादोपपत्ती अपि भवतः । तथाच पञ्च ब्राह्मणाः द्वौ परिव्राजकावभूतामित्यभूतपूर्वोऽयं प्रयोगमहिमा । तात्पर्यनिर्णये विषये तात्पर्यनिर्णयाय वा । एतत् सप्तकमष्टकं वा लिङ्गं गमकमिति ॥

## उपक्रमस्य क्वचित् प्राधान्यम्

एतेषामुत्तरोत्तरं बलीयस्त्वं सोदाहरणं दर्शयति– **उपक्रमोपसंहारयोरित्यादिना** । ऐतरेयारण्यके द्वितीय-प्रघट्टकस्य तृतीयाध्यायोपक्रमे श्रूयते– 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्' (ऐ.उ.२.३.१) इति । आत्मोपनिषच्चेयम् । 'नारायणो वा इदमग्र आसीत्', 'वासुदेवो वा इदमग्र

'तन्मामवतु' इति सामान्योपसंहारेऽप्यनुगच्छति । यत्र विरोधस्तत्रोपसंहारानुरोधेनोपक्रमो व्याख्येयः । व्याख्यानरूपत्वादुपसंहारस्य ।

आसीत्' इत्यादिसमाख्याबलादात्मा नारायण इति स्थितम् । अस्या आत्मोपनिषद उपसंहारे पठ्यते– 'तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम्' (२.६.१) इति । अत्र तत्पदेन **सामान्योपसंहारेऽपि,** उपक्रमसिद्धमात्माख्यं ब्रह्मैव तदिति परामृश्यत इति निश्चीयत इति । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति च स्मरन्ति ॥

## उपसंहारस्य बलवत्त्वम्

यत्र विरोधस्तत्रोपसंहारो बलवान् । व्याख्यानतो हि विशेषप्रतिपत्तिः सति प्रामाण्ये । यथा 'स विष्णुराह हि' इति देवमीमांसान्ते पठ्यत इत्यनुव्याख्याने । किमयमर्थानुवाद उत शब्दतोऽपीति संशये– 'यश्च देवमीमांसान्ते 'विष्णुरेव हि तच्छ्रुतेः, तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इति सर्वदेवोत्तमत्वेन प्रतिज्ञातः' इति पण्डिताचार्यैः स्फुटं व्याख्यानादर्थानुवादत्वनिश्चयः । तथाहि मैत्रेयिब्राह्मणस्योपक्रमे पठ्यते– 'आत्मनस्तु कामाय सर्वं प्रियं भवति'(बृ.उ.४.४.५) इति । कोऽयमात्मा? जीवः स्यात् । न स्यात् । यतोऽस्योपदेशस्योपसंहारे श्रूयते– 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति । भगवद्विज्ञानेन सर्वविज्ञानं विहितम् । न जीवविज्ञानेन । तेन तद्विरोधात् उपक्रमेऽपि 'आत्मनः कामाय' इति न जीवकामाय, किन्तु परमात्मनः कामायेत्यवसीयते ॥

## उभयप्राबल्यम्

यत्रोभावप्येकरूपौ तदा मिलितावुपक्रमोपसंहारौ प्रकरणार्थं निर्णयतः । तद् यथा तैत्तिरीये–'नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि' इति प्रथमाध्यायस्योपक्रमे, 'त्वामेव प्रत्यक्षं ब्रह्मावादिषम्' इत्युपसंहारे च भगवता सह पञ्चात्मनः प्राणस्यापि प्रस्तावान्निश्चीयते नारायणादिपञ्चरूपेण भगवता सह पञ्चात्मा प्राणोऽपि प्रकरणप्रतिपाद्यः । 'पाङ्क्तं वा इदं सर्वम् । पाङ्क्तेनैव पाङ्क्तं स्पृणोतीति' इति । तदेतदुक्तं तद्भाष्ये– 'संहितायाः पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य

असकृदुक्तिः 'अभ्यासः' । 'अपूर्वत्वम्' प्रमाणान्तरागम्यत्वम् । अभ्यासः प्रमाणान्तरसिद्धविषयस्त्वपूर्वताबलेन नीयते । ज्ञानादिफलवत्त्वात् तस्याः । यथा- 'तदस्य

वायोरपि भवति । पृथिव्यन्तरिक्षमित्युक्तपाङ्क्तत्वं च । अत उपक्रमोपसंहारयोः 'त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि', 'त्वामेव प्रत्यक्षं ब्रह्मावादिषम्' इति युज्यते' इति ॥

## अभ्यासेनार्थनिश्चयः

एकस्यैव प्रमेयस्य एकस्मिन् स्थाने तात्पर्यगर्भा **असकृदुक्तिरभ्यासः** । सा च क्वचिदेकरूपा । यथा छान्दोग्ये– 'अतत्त्वमसि' (६.३.५–१६) इति नवकृत्वो भेदे महत् तात्पर्यमवगमयति । यथा वा तैत्तिरीये– 'श्रोत्रियस्य चाकामहतस्य' (२.१४–१६) इति मोक्षेऽपि जीवतारतम्यमीश्वरभेदं च सतात्पर्यमवधारयति ॥

क्वचिद् भागतोऽनेकरूपा । यथा च्छान्दोग्य एव– 'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (६.१.२), 'वाचाऽऽरम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम्'(३), 'वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम्' (४) इति देवभाषाया अपौरुषेयत्वं सतात्पर्यमाह । यथा वा काठके– 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (१.७.१०–११) इति, 'इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च' (२.४.८–९) इति च । नन्वियं पुनरुक्तिर्नाभ्यासः । व्याहतं भाषसे । सर्वोऽप्यभ्यासः पुनरुक्तिरेव हि भवति । को विशेषस्तर्हि? तात्पर्यगर्भा पुनरुक्तिरभ्यासो नाम गुणः । व्यर्था पुनरुक्तिर्दोष इति भेदः । अभीक्ष्णं अभिप्रायपूर्वं न्यसनं ह्यभ्यास इत्युच्यते ॥

## अपूर्वार्थस्य प्राबल्यम्

अभ्यासेऽपि प्रतीतोऽर्थः प्रमाणान्तरगम्यश्चेत्, अपूर्वतायै प्रमाणान्तरागम्योऽर्थोऽनुसन्धीयते । यत्राभ्यासो विदितमेव वेदयन्नातिफलवान्, अपूर्वता चापूर्वमर्थं ज्ञापयन्ती फलवती भवति । तद् यथा ऐतरेय्यां श्रुतावात्मोपनिषदि पठ्यते– 'तद् यदा स्त्रियां सिञ्चति, अथैनज्जनयति । तदस्य प्रथमं जन्म । ....एवं

प्रथमं जन्म', 'तदस्य द्वितीयं जन्म', 'तदस्य तृतीयं जन्म' इत्यभ्यासो जीवगः प्रतीतोऽन्तर्य्यामिविषयो भवति ॥

सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म...स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म' इति जीवजननमुच्यत इति स्फुटं जन्मशब्दाभ्यासेन प्रतीयते । ननु प्राणिनामपि विदितमेतत् यत् स्त्रियां रेतःसेचनेन सन्ततिर्भवतीति । तत् किं महता कण्ठेन श्रुत्याऽपि वक्तव्यम्? अतोऽपूर्वार्थलाभाय सर्वमेतदन्तर्यामिपरतयाऽवसीयते । तथाह्युक्तं भाष्योदाहृतायामैतरेयसंहितायाम्–

'अयं नारायणो देवः पुरुषे प्रथमं विशेत् ।
'अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते ॥

'तस्मिन् स्थितस्वरूपं स पुरुषस्थो बिभर्त्यजः ।
'तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः ॥

'स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः ।
'प्रथमं जन्म विष्णोस्तत्–' इति,

'पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ।
'एतद् रूपं निधायैव जीवार्थे धर्मकर्तवे ॥

'पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः ।
'पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः' इत्यादि च ॥

नन्वन्तर्यामी च प्रमाणान्तरगम्य एव । ज्ञानिप्रत्यक्षेण, श्रुतिमूलया युक्त्या, 'एष त आत्माऽन्तर्यामी' इति श्रुत्या, ऐतरेयसंहितादिस्मृत्या च गम्यत एव ह्यन्तर्यामी । तेन गतमपूर्वत्वम् । तर्हि सम्प्रति भवताऽप्यधिगतमिति गतमपूर्वत्वम् । मया पश्चादधिगतम् । श्रुतिः पुराणी । नहि पाश्चात्येनाधिगमेन पूर्वतनमपूर्वत्वं विहन्यते । पतितोऽसि पन्थानम् । ज्ञानिप्रत्यक्षादिकमपि पाश्चात्त्यमिति कथं तेन श्रुतेरपूर्वताभङ्गः? 'एष त आत्माऽन्तर्यामी' इत्यादिश्रुतिस्तु समाख्यैवेति नापूर्वताभञ्जनी । किन्तु समर्थनी । श्रुतेरन्यत् स्वतन्त्रं हि प्रमाणमिह प्रमाणान्तरं विवक्षितम् ॥

अफलादपूर्वात् सुपूर्वेऽपि फलवति तात्पर्य्यं स्यात् । किमुतापूर्वे? यथा–

स्नेहपूर्वेण मनसा यन्नः स्मरसि केशव ।
अपत्यमिव कूर्म्माणां तेन जीवामहे वयम्' इत्यादौ ॥

## केषाञ्चिदस्वरसं व्याख्यानम्

ननु तर्हीश्वरप्रत्यक्षेऽतिव्याप्तिः । तद्धि श्रुतिनिरपेक्षं स्वतन्त्रं प्रमाणमन्तर्यामिविषयम् । तेनेश्वर-प्रत्यक्षातिरिक्तप्रमाणान्तरागम्यमिति वक्तव्यम् । न वक्तव्यम् । वेदार्थं निर्णिनीषूणामिह प्रमाणान्त-रागम्यत्वमुक्तमिति नेश्वरप्रत्यक्षस्य प्रसक्तिः । अथापि केचिदाचक्षते– 'स्वबोधनीयपुरुषगताज्ञानादि-विरोधिना स्वानुपजीविमानान्तरेणाग्राह्यार्थत्वं प्रमाणान्तरागम्यत्वम् । ईश्वरप्रत्यक्षव्यावृत्त्यर्थं पूर्वदलम्' इति । विजयतां वाचाटता ॥

## फलस्यार्थनिर्णायकत्वम्

**अपूर्वादपि सुपूर्वे फलवति तात्पर्यमिष्यत** इत्यपूर्वतायाः फलं बलीयः । **किमुतापूर्वे** फलवति । उभय-समागमाद्धेम्नः परमामोदः । यथा पूर्वोक्तं श्रुतिवचनमन्तर्यामिविषयम् । अपूर्वत्वात् सुफलत्वाच्च । एतदप्युक्तमैतरेयसंहितायाम्–

'अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् ।
'सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् ॥

'नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् ।
'यो वेद देहबन्धात् स विमुक्तो नित्यमुत्तमान् ।
'भोगान् भुङ्क्ते यथायोगमिति वेदानुशासनम्' इति ॥

**सुपूर्वेऽपि फलवति तात्पर्यमित्यत्र** स्मार्तं दृष्टान्तमाह– **स्नेहपूर्वेण मनसा** । यथा कूर्माणामपत्यानि सहजे कवचे स्वाङ्गानि निलीय सुगुप्तानि जीवन्ति स्थले च जले च । एवं वयं तव स्नेहाख्येन

यदर्थमन्यस्यार्थजातस्य सृष्ट्यादेर्वादः, तस्मिन्नर्थवादवत्यश्रुतफले श्रुतफलादपि तात्पर्य्यं स्यात् । यथा– 'श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद' इत्यादौ श्रुतफलादपि

---

कवचेन गुप्ताः सुरक्षिता जीवामः सम्पदि चाऽपदि चेति । नेह किञ्चिदपूर्वम् । अथापि फलवानयं वादः । कुत्सितैरूरुभिर्मिताः कूर्माः पुंश्चल्य इति व्याख्याने स्यादपूर्वार्थता । किन्तु निष्फलमपूर्वार्थचापलं भवति ॥

यथा वा, ऐतरेये श्रूयते– 'श्रयन्तेऽस्मिन् श्रियो य एवमेतच्छिरसः शिरस्त्वं वेद'(ऐ.उ.१.६.४.२) इति । कोऽर्थः? चक्षुरादयः पुरुषशिरसि श्रिताः । एवं श्रितत्वाच्छ्रीशब्दवाच्याश्चक्षुरादयोऽस्मिन् श्रयन्त इति हेतोरस्य शिरसः शिरःशब्दवाच्यत्वमिति । अस्य वेदनेन श्रियः श्रयन्त इति सर्वेन्द्रियपाटवाख्य-फलश्रवणादयमर्थोऽवसीयत इति ॥

## अर्थवादप्राबल्यम्

युक्तमिदम् । अथापि स्थूलं दर्शनम् । त्रयोऽर्थाः सर्ववेदेष्विति अयमप्येकोऽर्थः स्यात् । न मुख्योऽर्थः । यत उत्तरमन्त्रे प्राणसंवादरूपोऽर्थवादः श्रूयते । 'ता अहिंसन्त– अहमुक्थमहमुक्थमस्मीति । ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम, तद् यस्मिन् न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति' इत्यादि । फलादपि बलीयानर्थवाद इति युक्तमस्य वाक्यस्य प्राणपरत्वम् । तेन देवतासु शिरःस्थानीयस्य पुरुषशिरसि गतस्य प्राणस्यैव मुख्यतः शिरःशब्दवाच्यत्वमिति ॥

## अर्थवादशब्दार्थः

ननु कोऽयमर्थवादो नाम? चतुर्विधं तावदर्थवादमाचक्षते । स्तुतिर्निन्दा परकृतिः पुराकल्प इति । एतच्चतुष्टयान्यतमत्वमर्थवादलक्षणमित्युक्तं भवति । नेदं स्वरसम् । लक्षयित्वा हि विभजनीयम् । नतु विभज्य लक्षणीयम् । अतोऽर्थवादपदलभ्यं स्वरूपलक्षणमाह– यदर्थमिति । यत्प्रशंसार्थं स्तुतिरूपो वादः सोऽर्थवादः । यत्प्रशंसार्थमन्यस्य निन्दावादः सोऽप्यर्थवादः । यदर्थं संवादतया परकृतेर्वाद एवं चकारेति सोऽप्यर्थवादः । यदर्थं पुरातनस्येतिहासस्य वाद एवमासेति सोऽप्यर्थवादः । व्यक्तिप्रधाना परकृतिः, घटनाप्रधानः पुराकल्प इति भेदः शब्दत एव ज्ञायते ॥

शिरस्त्ववेदनादश्रुतफले प्राणसंवादाद्यर्थवादवति प्राणोत्कर्षवेदने तात्पर्य्यं पर्य्यवसीयते । अर्थवादोऽप्युपपत्तिबलेन नीयते । यथाऽत्र प्राणगः प्रतीतः सर्वोत्तमत्वार्थवादस्तद-सम्भाव्यधर्म्मैरन्तर्य्यामिविषयो भवति । यथा चेन्द्राग्न्यादिगः प्रतीतः सर्वोत्तमत्वार्थ-वादस्तस्मिन्नेव प्रकरणेऽन्यत्र वा तेषां हीनत्ववचनाद्युपपत्त्या विष्णुपरोऽवसीयते । तस्मादर्थवादादुपपत्तिर्बलीयसी ॥

---

नैतावानेवार्थवादः । यस्मिन् भगवति महातात्पर्यार्थमवान्तरान्वयेन जगत्सृष्टिस्थितिसंहार-नियमनज्ञानाज्ञानबन्धमोक्षप्रदत्ववादः, भगवद्भक्तानामितिहासवादः, अभक्तानामधःपातवाद इत्यादि सर्वमप्यर्थवाद एव । भगवान् अर्थः । तदर्थमुच्यमानः सर्वोऽप्यवान्तरोऽर्थोऽर्थवाद इत्येतत् ॥

तत्र प्राणसंवाद इति पुराकल्पो नामार्थवादः । स्यादयमर्थवादबलात् प्राणमहिमप्रतिपादकः । सूक्ष्मतरदृश्वानः शार्कराक्षसदृक्षाः पुनरर्थवादादपि बलीयस्योपपत्त्याऽन्यमेवार्थं समर्थयन्ते । तथाहि अर्थवादान्ते श्रूयते– 'तदेतदुक्थं प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि' इति । त्वं सर्वस्मादुच्चैः स्थितोऽसि, सर्वोत्तमोऽसि सर्वगुणाधिकोऽसि इत्युक्तं भवति । तदेतत् नारायणधर्माणां प्राणे कथनमुपपत्त्या विरुद्ध्यते । अतः प्राणगतो नारायणोऽत्र स्तूयत इत्यवसीयते । प्राणशिरस्यपि गतस्य नारायणस्यैव मुख्यं शिरस्त्वमिति समग्रं प्रकरणं नारायणपरं निश्चीयते । प्राणादिशब्दाश्च नारायणे सावकाशाः । 'यो देवानां नामधा एक एव' इत्यादेः । सर्वोत्तमत्वाद्युपपत्तिर्नान्यत्र मुख्यवृत्त्या सावकाशा । 'सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' इत्युत्तराध्यायवचःसंवादाच्च । अनुपदमेव च वक्ष्यति भाष्यकारः– 'मां विधत्तेऽभिधत्ते माम्' इति ॥

उपपत्तिः सर्ववेदसमन्वयसाधनीत्याह– यथाचेति । बाहुल्य इन्द्रसूक्तान्यधिकानि । तत आग्नेयानि । तेन इन्द्राग्न्यादीत्याह । अभ्यर्हितत्वाच्चेन्द्रस्य । तेन 'लघ्वक्षरं पूर्वम्' इति बाधित्वा 'अभ्यर्हितं पूर्वम्' इति पूर्वत्वम् । तत्तत्सूक्तगततया इन्द्राग्न्यादिगतत्वेनाऽपाततः प्रतीतः सर्वोत्तमत्वरूपस्यार्थस्य वादो

'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम् ।
'इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' इति भागवते ॥ ४ ॥

॥ इति चतुर्थमधिकरणम् ॥ ✻ ॥

---

**'मां विधत्तेऽभिधत्ते माम्'** इति भागवतवचनार्थं दर्शयति । 'आत्मानमेव लोकमुपासीत',

---

मुखतो वचनम्, सर्वोत्तमत्वफलको वा गुणपूर्णत्वसर्वकर्तृत्वादिवादः 'विश्वस्मादिन्द्र उत्तरः' इत्यादिरूपः । **अन्यत्रेति** । तस्यामेव शाखायाम्, **अन्यत्र वा** शाखान्तरे वा । तेषामिन्द्राग्न्यादीनां विष्णोर्हीनत्ववचनोपपत्त्या, तेभ्यो विष्णोरहीनत्ववचनोपपत्त्या, विष्णोरेवेन्द्राग्न्यादिसर्वपदवाच्यत्व-वचनोपपत्त्या च, सर्वोऽपि विष्णुपरोऽवसीयते । तस्मादुपपत्तिः सर्वबलिष्ठेति ॥

इदानीं वेदानामन्वयेनावान्तरार्थपरत्वम्, तस्य च भगवतः सर्वोत्तमत्वप्रतिपादनपर्यन्तत्वम्, समन्वयेन च भगवत एव सर्ववेदगम्यत्वमित्येतत् सर्वमपि समन्वयसूत्रार्थं भागवतवचनेन संवादयति– **मां विधत्त** इत्यादि । प्रकृतार्थोपयोगितया पूर्वोत्तरार्धयोर्व्यत्यस्य पठनाद् **भागवतवचनार्थं दर्शयती**त्याह । सूत्रार्थमेव च भागवतवचनार्थं दर्शयतीति चार्थः । सूत्रभागवतवचनयोरैकार्थ्यमित्येतत् ॥

## भागवतवचनस्यार्थवैपुल्यम्

इयं भागवतवचनानुपूर्वी–

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
**इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ।**
**मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम्** ॥ (११.२१.४२)

उद्धवगीतायामुद्धवं प्रति भगवद्वचनमिदम् । अयमर्थः– 'अनन्तरूपां बृहतीम्' (४०) इति पूर्वं बृहतीपदेन प्रस्तुता वेदभारती किमिति किमपि विधत्ते? किमिति किञ्चिमाचष्टे, किमनूद्य विविधरूपतया वा कल्पयतीत्येव**मस्या हृदयं** मुख्यतात्पर्यं **मदन्य** ऋते मदुपदेशात् मदनुग्रहाद् वा, **साक्षात्** स्वातन्त्र्येण

**'ज्योतिष्टोमेन स्वर्ग्गकामो यजेत', 'ब्राह्मणो न हन्तव्यः' इत्यादि मामुद्दिश्यैव विधत्ते श्रुतिः । 'न ते विष्णो जायमानो न जातः', 'अग्न इन्द्र वरुण मित्र देवाः' इत्यादि मामभिधत्ते ।**

कोऽपि **न वेद** । यदि कश्चिदन्यः ना पुरुषः वेद तदपि मत् मत्त एव परमपुरुषात् । ममोपदेशादनुग्रहाद्वा । ननु स कः? **कश्चन** । ब्रह्मा च वायुश्च । उक्तं हि– 'तेने ब्रह्म हृदा य आदिकवये' इति । किं तद् हृदयमिति भगवानेव कृपया किञ्चिद् विवृत्य दर्शयत्युद्धवायापि– **मां विधत्ते** । केचिद् वेदवादरता वेदं मुधा द्विधा भिन्दन्ति । कर्मकाण्डं ज्ञानकाण्डं चेति । अकाण्डताण्डवमेतत् । वेदानां गतिसामान्यात् । अतः श्रुतिर्यत् कर्मजातं विधत्ते तत् **मामुद्दिश्यैव विधत्ते** । नहि कर्मार्थं कर्मविधिः । किन्तु भगवज्ज्ञानार्थं तत्प्रीत्यर्थं च । तथाच मामुद्दिश्य मम प्रमां वोद्दिश्य कर्माणि विधत्त इत्येतत् । 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृतीभवति' इति स्फुटवचनात् । 'तत् कर्म हरितोषं यत्' इति स्मरणाच्च । तथाहि श्रुतिर्विधत्ते– 'आत्मानमेव लोकमुपासीत' इति । किमुक्तं भवति? यत् कश्चिदुपासीत तदात्मानमुद्दिश्यैव, न यत्किञ्चित्, इत्युद्देश्यत्वेन विषयत्वेन च भगवन्तमेव विधत्ते । तदपि न यथाकथाच । किन्तु लोकत्वेन । लोकृ दर्शने । ज्ञानरूपत्वेन, सर्वलोकगतत्वेन सर्वाश्रयत्वेन च । न स्वाभेदेन । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति स्मरणात् । तथाच भगवदर्थ उपासनावादोऽयमिति भगवानेव मुख्यार्थः ॥

ननु कर्मवादान्तरे स्फुटमन्यार्थत्वं प्रतीयते– ज्योतिष्टोमेन स्वर्गकामो यजेतेति । नहि तत्र यजिक्रिया भगवन्तमुद्दिश्य । किन्तु स्वर्गमुद्दिश्य । न भोः । तत्रापि यदि कश्चित् स्वर्गकामः तर्हि स्वर्गप्रदभगवत्प्रीतिमुद्दिश्य ज्योतिष्टोमेन यजेतेत्येव वाक्यार्थः । भगवत्प्रीत्यर्थो ज्योतिष्टोमादिवादोऽयम् । एवमेव सर्वत्रापि भगवत्प्रीत्यर्थतैव कर्मविधिवाक्यानां हृदयम् ॥

एतेनैव निषेधवचनान्यपि व्याख्यातानीत्याह– **ब्राह्मणो न हन्तव्य** इति । निषेधोऽपि विधिगर्भ एवेति पृथगनुक्तिः । हननं निषिध्यत इत्यहननं विधीयत इत्येव किलार्थः । अथापि नाहनने मुख्यतात्पर्यम् ।

यतो ब्राह्मणो ब्रह्मज्ञानी भगवतोऽतितरां प्रियः । 'ज्ञानी त्वात्मैव मे मतम्' इति स्मरणात् । तस्मात् तद्धननस्य भगवदप्रीतिहेतुत्वात्, अहननस्य च भगवत्प्रीतिहेतुत्वात्, न ब्राह्मणो हन्तव्य इति भगवत्प्रीत्यर्थ एवायं वाद इत्यर्थवाद एवायम् ॥

एवं विदितावान्तरार्थस्य तत एव विदितपरमार्थस्योत्तमाधिकारिणः स्वरवर्णात्मकः सर्वोऽपि वेदो भगवन्तमेवाभिधत्त इत्याह– **अभिधत्ते माम्** । **मां विधत्त** इत्यन्वयः । **अभिधत्त** इति समन्वयः । अन्वयान्मामुद्दिश्य विधत्ते । समन्वयान्मामेवाभिधत्त इति । तथाच सूत्रार्थः– अन्वयात् इन्द्राग्न्यादिपरं ज्योतिष्टोमादिक्रियापरं च वचनं सम्यक् मुख्यवृत्त्या निरूप्यमाणे सं सर्वसारे भगवत्येवान्वयात् ब्रह्मैव शास्त्रगम्यमिति । अथच क्वचित् स्फुटं समाधिभाषया मामभिधत्ते । 'न ते विष्णो जायमानो न जातः' इत्यादि । क्वचिद् दर्शनभाषयाऽन्यपरतया प्रतीयमानमपि, 'नामानि सर्वाणि यमाविशन्ति' इति श्रुतिबोधितया गुह्यभाषया मामेव विष्णुमभिधत्ते । नामानि सर्वाण्यपि वाचकतया यं विशन्ति स किल विष्णुः । तथाहि श्रूयन्ते– 'उप त्वाऽग्ने दिवेदिवे', 'इन्द्र श्रेष्ठानि द्रविणानि धेहि', 'इमं मे वरुण श्रुधी हवम्', 'मित्रो जनान् यातयति', 'अतो देवा अवन्तु नः' इत्यादि ॥

## भगवति वेदस्वरवर्णसमन्वयः

अथ त्रिविधमिहाभिधानं भवति । वाक्यान्वयेन पदान्वयेन वर्णान्वयेन चेति । अग्निसूक्तमिति पठन्ति । अग्निगतो भगवानेवाग्निनामक इत्यवगमे समग्रं सूक्तमग्र्यन्तर्गतस्य भगवत एव सूक्तं भवतीति वाक्यान्वयः । ततोऽप्यन्तरङ्गप्रयाणे न देवतावचनम् । नापि क्रियावचनम् । सर्वमपि भगवन्नामैव । तदुक्तम्– 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि पठितानि न संशयः' इति । वर्णसमन्वयोऽयम् । तथाचैकैकमक्षरमेकपञ्चाशद्वर्णवाच्यभगवद्रूपप्रतिपादकमिति न किञ्चिदन्यदुच्यते । तथाहि– 'आत्मानमेव लोकमुपासीत' इति मन्त्रः । आकार आनन्दनामानमाह । तकारस्तारम् । मकारो मनुम् । पुनराकार आनन्दम् । नकारो नम्यम् । पुनरकारमकारावजमनू । एकार एकात्मानम् । वकारो वरम् । अकारोऽजम् । लकारो लक्ष्मीपतिम् । ओकार

ओजोभृतम् । ककारः कपिलम् । पुनरकारमकारोकारा अजं मनुमुग्रं च । पकारः परम् । पुनराकार आनन्दम् । सकारः सारात्मानम् । ईकार ईशम् । तकारस्तारम् । अकारोऽजमित्यादि । स्वरसमन्वयोऽप्यत्रैवान्तर्गतः । तथाहि– उदात्तो भगवद्गुणानामुच्चत्वमाह । अनुदात्तोऽव्ययत्वं नाम दार्ढ्यमाह । स्वरितो भगवदितरस्य तद्गुणादीनां च नीचतामाह । तेन चोदात्तानुदात्तसमाहाररूपत्वात् भगवद्गुणानां सुदृढं निरन्तरं निरन्तरायं सर्वत उच्चत्वमाह । प्रचयस्तु भगवत उच्चत्वं तदितरस्य नीचत्वं च यथास्थितम्, न कदाऽप्यन्यथाभावीत्याह ॥

स यथा– अ॒ग्निमी॑ळे । अ॒ग्निम् । ई॒ळे॒ । इति प्रतृण्णम् । तथाचान्यः स्वरार्थः प्रतृण्णे । अन्यश्च संहितायाम् । अ॒ इत्यनुदात्तम् । ग्निमित्युदात्तम् । समानं प्रतृण्णे च संहितायां च । दार्ढ्यमनुदात्तार्थः । उदात्तस्य चोच्चता । अत्तीत्यग्निः । अनुदात्तोऽकारः भगवद्गतस्यादनस्य अनाद्यन्तकालसम्बद्धत्वं नाम दार्ढ्यमाह । ग्निमित्युदात्त इकारः सर्वात्तृत्वरूपमुच्चत्वमाह । ई॒ळ॒ इति सर्वानुदात्तं पदं स्तुतेः दृढतरभक्तिमूलत्वं नाम दार्ढ्यमाह । अथ संहितायां व्यत्यस्तं स्वरद्वयमपूर्वमर्थमाविष्करोति–'अ॒ग्निमी॑ळे' इति । एकस्मिन् पद एकः स्वर उदात्तो भवति । अन्येऽनुदात्ताः । तत्रापि उदात्तात् परोऽनुदात्तः स्वरितो भवति । स्वरितात् परः प्रचयः । अत्रोदात्तस्य प्राधान्यादन्येषां तदधीनत्वाद् याजुषा उदात्तमेव केवलमङ्कयन्ति– 'अग्निमी॑डे' इति । तेन 'अ' इत्यनुदात्तः । 'मी' इतीकारः स्वरितः । उदात्तात् परत्वात् । 'ळे' इत्येकारः प्रचयः । स्वरितात् परत्वात् । 'नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः' । तथाचायं संहितास्वरार्थः । 'मी' इत्यत्र स्वरित ईकारः धात्वर्थाश्रयस्य स्तोतुः स्तुत्यादवरत्वं नाम नीचतामाह । तत एव स्तुत्यस्याग्निनारायणस्य सर्वोत्तमत्वम् । 'ळे' इत्येकारः प्रचयात्मा तदिदं स्तोतृस्तुत्यगतं नीचोच्चत्वं सदाऽपि यथावत् स्थितम् । न कदापि विपरिवर्तते, नश्यति चेत्याह ॥

## पदसमन्वयप्रकारः

अथ पदसमन्वयप्रकारो भगवत्पादेनैवेषत् प्रदर्शितः । वक्ष्यति च पण्डिताचार्यः– 'दर्शिता च सा भङ्गी भगवतैवानुव्याख्याने– 'जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः । आयङ्गेतश्चाऽयजेतो वसन्तिश्च वसंस्ततः' इत्यादिका'(१.४.१०) इति । 'वसन्तेवसन्ते ज्योतिषाऽयजेत' इति मन्त्रभागस्य

---

'द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं च', 'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च' इति विविधं कल्पयित्वा, 'नेति नेति', 'तत्र यस्स आत्मा स नित्यः शुद्धः केवलो

---

पदसमन्वयोऽयम् । एतेन 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिकमपि व्याख्यातम् । ज्योतिष्टोम-स्येनः । स्वः स्वरूपानन्दं गमयतीति स्वर्गः । ज्ञानिभिर्भवतरणाय काम्यत इति कामः । काम्येषूत्तम-त्वात् कामो, 'परस्मादुत्तमं प्रोक्तं परो' इतिवत् । ओ इति भिन्नं वा पदम् । अधिकोच्चत्वादो । आनन्दरूपत्वादुच्चत्वाद् वा । ओ इत्याह्वाने वा । 'उ तापेऽव्ययमीशे ना' इत्यभिधानम् । स्वर्गकाम उ इति वा प्रीतिसम्बोधने । यजनेनेतः पूजितो यजेतः । एवं बह्वोऽर्थाः परिस्फुरन्ति । अनादेशा-न्नोच्यते । उक्तं पण्डिताचार्येणापि– 'निखिलपदानां तद्वाचकत्वपदवी गुरुभिरेवोपसन्दर्शयितुं सुशकेति नास्माभिरत्र प्रयत्यते'(१.४.१०.) इति ॥

## विकल्प्य अपोहनम्

भगवतो विविधं कल्पनस्यापोहनस्य च प्रकारमाह– द्वे वावेत्यादिना । **'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च**, मर्त्यं चामृतं च, स्थितं च यच्च, सच्च त्यं च' (बृ.उ.४.३.) इति विविधं कल्पयित्वा, द्वे अपि न ब्रह्मणः स्वरूपे, किन्तु केवलं प्रतिमारूपे इत्युपरिष्टादपोह्यते– 'अथात आदेशो **नेति नेति**' इति । मूर्तमिति न, अमूर्तमिति च नेति । तथाहि भाष्यम्– 'इति न इति नेति मूर्तामूर्तविलक्षण इत्यर्थः । उभयसादृश्यनिषेधार्थं द्विवारम्' इति ॥

> 'मूर्तामूर्तमिदं रूपं ब्रह्मणः प्रतिमात्मकम् ।
> 'नैव स्वरूपमेतत् स्यात् तद्धि सर्वपरं सदा' इति च नारायणश्रुतिः ॥

द्विधा विकल्प्य द्वयोरपोहस्योदाहरणमुदितम् । इदानीमन्यतरापोहस्य दृष्टान्तमाह– **'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यस्स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च** । अथ **ह योऽनीदृशः सोऽनात्मा'** इत्यात्मशब्दोदितं भगवत्स्वरूपमिति विधाय, यदनीदृशमनात्मशब्दोदितं जीवजडात्मकं जगत् तस्य भगवद्भिन्नत्वकथनेन तद्गतदोषैरपोह्यते भगवान् । स्वयमेव व्याचख्यावुपरि पण्डिताचार्यः– 'द्वे वाव ब्रह्मणो रूपे' इत्यत्रानात्मनो ब्रह्मरूपत्वं तदधीनत्वात्, 'सर्वं खल्विदं ब्रह्म'

निर्गुणश्च । अथ ह योऽनीदृशः सोऽनात्मा' इत्यादिना दोषादपोह्यः, निर्दोषत्वेन विधेयोऽप्यहमेवेत्यस्य अभिप्रायमहमेव वेदेति ॥ * ॥

**॥ इति समन्वयाधिकरणम् ॥ * ॥**

---

इतिवत् तत्प्रतिमात्वाद् वा । रूप्यतेऽस्मिंस्तदिति तद्रूपमेतत्' इति । यः स इति योऽसावितिवत् । समस्तं भिन्नं वा । तदिदमपोहनं निर्दोषत्वगुणपूर्णत्वफलकमित्याह– **दोषादपोह्यः, निर्दोषत्वेन विधेयोऽप्यहमेवेति** । इत्यस्या हृदय**मभिप्रायं** सामस्त्येन मत्तोऽन्यः कोऽपि न वेद, मदुपदेशेन कः ब्रह्मा वायुश्च वेदेति । एतेन वेदहृदयं सूत्रकृत् साक्षाद् वेद, तदुपदेशेन वायुरहं च वेदेत्याह । 'अर्थोऽयं ब्रह्मसूत्राणाम्' इति भागवतविषयं पुराणवचनं च किञ्चिदिह विवृतं भवति ॥

## तात्पर्योक्तोऽपूर्वोऽर्थः

भागवततात्पर्ये भगवत्पादः पुनरर्थान्तरमस्य श्लोकस्याऽऽह । तथाहि तद्वचनम्–

'विविधरूपत्वेन कल्पना विकल्पः । चत्वारि वागित्यादि । तत्र वागित्यनुवादः ।

'विधिभागे हरेः पूजैवाभिधाने च तद्गुणाः ।
'विकल्पे तद्बहुत्वं चाप्यपोहे च तदप्रियम् ।
'उच्यते सर्ववेदेषु तच्च वेद स एव हि' इत्यागमतात्पर्ये ॥

'सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् ।
'सुरापानमिति प्रोक्तं तन्न कुर्यात् कथञ्चन ॥

'ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् ।
'ब्रह्महत्या समुद्दिष्टा तां न कुर्यात् कथञ्चन ।
'इत्याद्यपोहवाक्यार्थश्चिन्त्यो विष्णुर्बुधैर्जनैः' इत्यादि च ॥

'मदन्यः कश्चन कोऽपि न वेद' इति ॥

अयं तात्पर्यवचनार्थः– किमनूद्य विकल्पयेत् इत्यस्योदाहरणम्–

'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
'गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति ॥

## 'चत्वारि' श्रुत्यर्थः

वाङ्नामकं भगवद्रूपमनूद्य तस्य चतूरूपत्वं कल्प्यते । उच्यत इति वाक् । या सा वेदवाच्या भगवन्मूर्तिः तस्याश्चत्वारि पदानि रूपाणि । कीदृशानि? परितः मितानि प्रमितानि– 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इत्यादिवेदवचनैर्ज्ञानिभिश्च । तदेवाऽह– तानि विदुर्ब्राह्मणा वेदपरमार्थज्ञा ये मनीषिणः मनसामीशनशीला विद्वांसः । त्रीणि गुहायामव्यक्ततया निहितानि । 'त्रिपादस्यामृतं दिवि' इत्युक्तानि । तानि लीलयैव नेङ्गयन्ति लोकनियमनार्थं स्वात्मानं न व्यापारयन्ति । तर्हि कथं लोकयात्रा? तुरीयं वाचो रूपं लोकनियमनार्थं भूतेषु प्रविष्टं मनुष्या मननशीला ज्ञानिनो जानन्ति तथा वदन्ति च । 'पादोऽस्येहाभवत् पुनः' इत्यादि ॥

'वाक्परिमितानि' इत्येकं वा पदम् । परापश्यन्तीमध्यमावैखरीति चतुर्विधायां वाचि परिच्छिद्य मितानि चत्वारि भगवद्रूपाणि भवन्ति तन्नामभिरेव परिचितानि । तत्र त्रीणि नाभिकुहरे हृदयगुहायां कण्ठ-कुहरे च स्थितानि नेङ्गयन्ति नाऽत्मानं स्फुटं ज्ञापयन्ति । इगि गतौ । वाचो यत् तुरीयं रूपं तत्र-गतं भगवतो यत् तुरीयं रूपं वैखरीनामकं तन्मनुष्या वदन्ति । तेन मनुष्याणां श्रवणपथगामि भवति । तेन रूपेणाऽत्मानमिङ्गयति ज्ञापयतीति च ॥

## तात्पर्ये पुनरर्थविशेषः

**'मां विधत्ते'** इत्यस्य व्याख्यानं तात्पर्ये– 'विधिभागे हरेः पूजैव' इति । 'प्रातरुत्थायाथ सन्ध्यामुपासीत, यत्सन्ध्यामुपासते ब्रह्मैव तदुपासते, अथ देवान् नमेत्, जुहुयाद्, वेदानावर्तयीत, सोमं पिबेद्धुतशेषेण वर्तयेत्' इत्यादिविधिरूपो यो वेदभागस्तत्र हरेः पूजैव श्रुत्यर्थोऽनुसन्धेयः । यत् सन्ध्यामुपासीत, यद् देवान् नमेत्, यज्जुहुयात्, यद् वेदानावर्तयीत, यत् सोमं पिबेत्, यद्धुतशेषेण वर्तयेत् तत् सर्वं मदीया भगवत्पूजैव । तदुक्तम्– 'सर्वं त्वदाराधनमेव भूयात्' । भगवत्पूजाङ्गत्वेन सर्वाऽपि प्रवृत्तिर्भवती-

त्यर्थः । **अभिधत्ते माम्** । अभिधाने च तद्गुणाः । सर्वाण्यभिधानानि योगवृत्त्या गुणवाचकानीति तत्र तत्तद्गुणा अनुसन्धेयाः । सेयं विद्वद्रूढिर्नाम । उक्तं हि 'यानि नामानि गौणानि विख्यातानि महात्मनः' इति । केचिद् 'विकल्प्योऽपोह्यः' इति पाठं पठन्ति । वस्तुतस्तु विकल्प्यापोह्य इत्येव पाठः । 'विकल्प्य अपोह्यः' इति भिन्ने पदे इति विवक्षित्वा पण्डिताचार्यौ व्याचख्यौ । ऐकपद्य-विवक्षया तात्पर्यं प्रवृत्तम् । विकल्प्यश्चासावपोह्यश्चेति । तात्पर्यपक्ष एव जयतीर्थादिभिरनुसृतः । विकल्पे तद्बहुत्वं च । यत्र भगवतो विविधरूपक्रियादिकल्पना तत्रैकस्यापि भगवतो विशेषबलाद् बहुरूपत्व-मनुसन्धेयमित्यर्थः । यथा 'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादि । 'अपोहे च तदप्रियम्' । अपोहो निषेधः– 'न सुरां पिबेत्, न पलण्डु भक्षयीत, न भृशं वदेत्, न विस्मरेताऽत्मानम्' इत्यादिः । एवं निषेधप्रतिपादके वेदभागे यस्मात् सुरापानम्, पलण्डुभक्षणम्, भृशवचनमात्मविस्मरणं च भगवतोऽप्रियम्, तस्मान्न सुरां पिबेन्न पलण्डु भक्षयीतेत्यादिरेव श्रुत्यर्थः ॥

अथचापोह्य इत्यस्यार्थान्तरमाह– सुराः हरेर्गुणाः प्रोक्ताः । सुष्ठु रमणरूपत्वाद् राजनशीलत्वाद् वा सुरा हरेर्गुणाः । तेषां पानं स्वनिष्ठत्वचिन्तनम्, गुणिना हरिणा स्वस्याभेदचिन्तनं वा । तन्न कुर्यात् कथञ्चनेति 'न सुरां पिबेत्' इत्यपोहवाक्यार्थः । ब्राह्मणो न हन्तव्य इत्यपोहवाक्यम् । ब्रह्मणा वेदेनाण्यत इति ब्राह्मणो विष्णुः । स नास्तीति चिन्तनम्, निर्गुण इति वा चिन्तनं ब्राह्मणहननम् । तन्न कुर्यात् कथञ्चनेति 'ब्राह्मणो न हन्तव्यः' इत्यपोहवाक्यर्थ इति । मदन्यः कोऽपि ब्रह्माऽपि वायुरपि स्वातन्त्र्येण न वेदेति ॥

एवमन्यत्रापि । यथा– न पलण्डु भक्षयीत । पलाण्डुरिति कोशकाराः । 'पलति रक्षतीति पलाण्डुः । पल रक्षणे । आण्डुप्रत्ययः' इति वैयाकरणाः । पलण्डु इति प्रतनं रूपम् । तेन तत्पक्षेऽपि अण्डुप्रत्यय इति पर्याप्तम् । पलमिव कण्डयति मादयतीति पलण्डु इति तु वयम् । निरुक्तत्वात् ककारलोपः । यददनेन बुद्धिः माद्यति प्रमाद्यति वा तत् पलण्डु । भगवतेऽनर्पितम्, अर्पणानर्हं च यत्किञ्चिददनीय-जातम्, तत्सर्वमिह पलण्डुपदार्थः । न भृशं वदेत् । प्रज्ञावादी अतिवादी वा न भवेदित्यर्थः । शास्त्र-मतीत्य वादोऽतिवादः । न विस्मरेताऽत्मानम् । परमात्मानं न शास्त्रोक्तिविरुद्धतया स्मरेत । नापि स्वात्मानं विष्णुत्वेन स्मरेत– इत्यादिकमूह्यमित्यलम् ॥

ननु स्वयमाचार्योक्तमर्थं विहाय किमिति पण्डिताचार्योऽर्थान्तरं जगाद । मा स्म विभ्रमः । सत्यमर्थान्तरम् । किन्त्वाचार्योक्तमेव । ननु कुत्र? न कुत्रापि ग्रन्थे ग्रथितम् । किन्तु भागवतप्रवचनावसरे कथितम् । श्रुतं च पण्डिताचार्येण । भगवत्पादेन न ग्रथितमिति स्वयमत्र जग्रन्थ । अहो करुणामसृणाऽनुजिघृक्षा पण्डिताचार्यस्य । यदिदमिह पण्डिताचार्यो नाकथयिष्यत्, आचार्योदितमपूर्वमर्थान्तरं जिज्ञासुलोकस्य न कदाऽपि विज्ञातमभविष्यत् । तदिदं महद् वैशिष्ट्यं तत्वप्रदीपस्येति ॥ ✻ ॥

॥ चतुर्थं समन्वयाधिकरणम् ॥ ✻ ॥



## पञ्चममधिकरणम्
### (ईक्षत्यधिकरणम्)
### (१.१.५-११.)

ननु 'यतो वाचो निवर्त्तन्ते–', 'अशब्दमस्पर्शम्–', 'अवचनेनैव प्रोवाच', 'यद् वाचाऽनभ्युदितम्–', 'यच्छ्रोत्रेण न शृणोति–' इत्यादिभिर्न्न तच्छब्दगोचरम् । नेत्याह–

**॥ ईक्षतेर्न्नाशब्दम् ॥ १.१.५. ॥**

---

### तत्वप्रदीपः

एवं तावद् ब्रह्मणो जिज्ञास्यत्वं प्रतिज्ञाय, तस्य जन्मादिकारणत्वोक्त्या सर्वगुणपूर्ण्णत्वं प्रदर्श्य, अयोगान्ययोगव्यवच्छेदेन शास्त्रगम्यत्वमुक्तम् । अत्रेदमसहमानैर्म्मायिभिराक्षिप्यते– न ब्रह्म शास्त्रगम्यम्, शब्दागोचरत्वात् । 'यतो वाचो निवर्त्तन्ते–' इत्यादिश्रुतेः ॥

---

### तत्वचन्द्रिका

यो नैकेनापि पदेन वाच्यः स कथं सर्वशास्त्रवाच्यः, कथन्तरां सर्वशास्त्रगम्य इति मायिनः प्रत्यवतिष्ठन्ते । तेषामिदमुत्तरमुत्तराधिकरणम्– 'ईक्षतेर्नाशब्दम्' इत्यादि सप्तसूत्रम् । सप्तविद्यागम्यत्वस्मारणाय सप्त सूत्राणि जग्रन्थ ॥

मायिनो वादवैखरीमाह– **न ब्रह्म शास्त्रगम्यं शब्दागोचरत्वादिति** । तदिदमहो व्याहतिमोहमहामहोपाध्यायस्य विस्मयावहा वाचोयुक्तिः– यद् ब्रह्मेति शब्देन व्याहरन्नेव ब्रह्मणः शब्दागोचरत्व-

---

**गोचरत्वे घटादिवदब्रह्मत्वप्रसङ्गात् । औपनिषदत्वं तु लक्षणया तत्रोपनिषद्वृत्तेरिति । तन्निराकरणायेदमधिकरणमारभ्यते ॥ ईक्षतेर्नाशब्दम् ॥**

---

माह । तस्य च पुनः श्रुतिशब्दानेव प्रमाणत्वेनोपन्यास । तथाहि स पुनः श्रुतीरुदाहरति । प्रथमं तावत् तैत्तिरीयश्रुतौ श्रूयते– '**यतो वाचो निवर्तन्ते** अप्राप्य मनसा सह' (तै.उ.२.७) इति । अवाङ्मनसगोचरं ब्रह्मेत्युक्तं भवति । शब्दागोचरत्वमात्रं प्रकृतमिति तावदेवोज्जहार । काठके च– '**अशब्दमस्पर्शम**रूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' (१.८.२) इति । नन्वशब्दमित्यादिना पञ्चभूतान्यत्वमुच्यते । तेनाशब्दमित्यशब्दगुणकमाकाशाद् भिन्नमित्यर्थः । तत् कथमिदं शब्दागोचरत्वे प्रमाणं स्यादिति शङ्कापनुत्तये– '**अस्पर्शम्**' इत्याह । इदमुक्तं भवति– अस्पर्शमिति स्पर्शाख्यगुण-रहितं वायोर्भिन्नमिति व्याख्यानेऽपि, स्पर्शस्य प्रतियोगिसापेक्षत्वात् स्पर्शागोचरत्वमनिच्छता-ऽप्यङ्गीकर्तव्यमापतितम् । तत्साहचर्यादशब्दमित्यपि द्वावर्थौ गमयति– अशब्दगुणकं शब्दागोचरं च तदिति । '**यतो वाचो निवर्तन्ते**' इति '**अवचनेनैव प्रोवाच**' इति च पूर्वोत्तरवचनसंवादाच्चैतदवसीयत इत्याशयः । '**अवचनेनैव प्रोवाच**' इति बाष्कलानां बह्वृचानां श्रुतिसंवादमाह । अवचनेनेति मौनेनैव प्रोवाचेत्यर्थः । जल्पन्ति हि– 'गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः' इति । ननु श्रुतिः कथमवचनेनैव प्रवच्यात्? तर्हि अवचनेन वचनवृत्तिं विना लक्षणया श्रुतिः परं प्रोवाचेति गृहाण । प्रथमं यजुर्वेदगतं वचनद्वयम् । ततो बाह्वृच्यं बाष्कलीयम् । इदानीं सामवेदसंवादमाह–

> '**यद् वाचाऽनभ्युदितं** येन वागभ्युद्यते ।
> 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (तल.उ.२.१.) इति ॥
>
> '**यच्छ्रोत्रेण न शृणोति** येन श्रोत्रमिदं श्रुतम् ।
> 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (२.४) इति च ॥

कयाऽपि वाचाऽनभ्युदितम् । अत एव यत् न कोऽपि शृणोति, तदेव शुद्धं ब्रह्म । नेदं यत् सगुणं शबलमुपासते इत्यर्थः । आदिपदेन 'न चक्षुषा गृह्यते नापि वाचा' (आथ.उ.३.८) इत्यथर्ववेदवचनं गृह्यते ॥

## गोचरशब्दनिर्वचनम्

**न तच्छब्दगोचरमिति** । वैयाकरणा वदन्ति– 'गाव इन्द्रियाणि चरन्त्यत्रेत्यर्थे चरतेः पुंसि सञ्ज्ञायां घः प्रत्ययो भवति। तथा हि पाणिनीयमष्टकम्– 'गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च' (अ.सू.३.३.११९) इति । 'तेन इन्द्रियविषयत्वं पदार्थः । विषयत्वमात्रे सञ्ज्ञा' इति । तन्मतानुसारेण 'शब्दगोचरः' इति भाव्यम् । भगवत्पादः पाणिनीयं मतं नैकान्ततोऽनुसरतीति सुविदितं विदुषाम् । वैदिके व्याकरणे तस्य भरः । वैदिकास्तु गोचरशब्दं त्रिलिङ्गमाचक्षते । गोचरो गोचरा गोचरमिति । तथाहि प्रयुञ्जते– 'त्रयी न श्रुतिगोचरा' इति । अत एव 'पुंसि सञ्ज्ञायां घः प्रायेण'(अ.सू.३.३.११८) इति पाणिनिवचने 'प्रायेण पुंसि' इत्यप्यन्वेतव्यमित्याचार्याशयः । प्रायेण घः पुंस्येव, यत्र क्वचनान्यथा प्रतनः प्रयोगः तत्र नपुंस्यपीति व्यवस्था ॥

ननु श्रुतिर्ब्रह्मणः शब्दगोचरत्वमाह– 'औपनिषदः पुरुषः' इतीति पूर्वमेवाऽवेदितम्– शास्त्रयोनित्वा-दिति । उपनिषच्छब्दगोचरः पुरुष इति किलार्थः । य उपनिषदि भवति स औपनिषद इति पाणिनीयाः– 'अणृगयनादिभ्यः' (अ.सू.४.३.७३) इति । उपनिषच्छब्दश्च ऋगयनादिगणपठितः । य उपनिषदि प्रतिपाद्यो भवति स औपनिषद इत्युक्तं भवति । पुरुषशब्दगोचरत्वं च मुखत आह । सत्यमुपनिषच्छब्द-गोचरत्वमुच्यते । न रूढियोगाभ्याम् । किन्तु जहल्लक्षणया । अत एव पुरुष इत्याह । स किल न स्त्री न पुमान् । तथाऽपि लक्षणया अस्त्र्यपुरुषं चिन्मात्रमुच्यते । **'यतो वाचो निवर्तन्ते'**, **'अशब्दमस्पर्शम्'** इति स्फुटमगोचरत्वश्रवणात् । **'अवचनेनैव प्रोवाच'** इत्यादिना च । एतेन सर्वाऽपि ब्रह्मवादिनी श्रुतिर्व्याख्याता ॥

यन्मायिभिरुच्यते तन्न युक्तिक्षममित्याह भगवान् बादरायणः– **ईक्षतेर्नाशब्दमित्यादि** । किमुक्तं भवति? **तन्निराकरणायेदमधिकरणमारभ्यत** इत्युक्तं भवति । यावत्सु सूत्रेषु एकमेव प्रमेयं सोपस्करमधिक्रियते तदेकमधिकरणमित्युच्यते । विषयान्तरोपक्षेपे त्वधिकरणान्तरमिति । अत्र प्रस्तुतमीक्षणीयत्वं श्रुतत्वा-च्चेत्युपसंह्रियत इति सप्तसूत्रमेकमधिकरणम् ॥

**'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते'।**
**'आत्मन्येवाऽत्मानं पश्येत्' ।**

---

जीवघनो जीवसारो ब्रह्मा । तस्मात् तदुपदेशादित्यर्थः ॥

---

### ईक्षतिपदार्थः

प्रधानं विषयवाक्यमाह– **'स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते'** (ष.उ.५.६) इति । एतस्य विषयवाक्यत्वस्फोरणायैव 'ईक्षतेः' इति पदं प्रयुयोज । पूर्वपक्षिणा यदुक्तम् 'अशब्दमस्पर्शम्' इति स्वपक्षस्य प्रमाणत्वेन तन्निराकरणायैव नाशब्दमित्याह । नन्वीक्षतेरिति धातुवचनम् । 'इक्श्तिपौ धातुनिर्देशे' इति वार्तिकात् (अ.सू.३.३.१०८.) । तदिदमनन्वितम् । ईक्षतेरीक्षधातोरशब्दमिति ।

शृणु तावदन्वितमर्थम्– 'पुरुषमीक्षते' इति श्रुतावीक्षधातुश्रवणात् 'अशब्दमस्पर्शम्' इति श्रुत्या अशब्दं ब्रह्मेति न युक्तं वच इति । इदमुक्तं भवति । पुरुषमीक्षते इति पुरुषकर्मकमीक्षितृत्वमुच्यते । पुरुषस्येक्षणीयत्वमुच्यत इत्येतत् । तथाच यस्मादीक्षणीयं तस्मान्नाशब्दमिति ॥

नन्वीक्षणं न शब्दमपेक्षते । यः कोऽपि वीक्षेत विनाऽपि शब्दम्, यस्य वीक्षणमस्ति । अत आह– **स एतस्माज् जीवघनादिति** । **एतस्मात्** पूर्वप्रस्तुतात् **जीवघनात्** तदुपदेशादित्यर्थः । तदुपदेशं श्रुत्वा पुरुषमीक्षते । नहि वचनकर्मत्वमन्तरा श्रुतिकर्मत्वं सम्भवति । तस्माच्छब्दगोचरं ब्रह्मेति ॥

कोऽयं जीवघनो नाम यदुपदेशमाकर्ण्य जीवः पुरुषमीक्षते? आह– **जीवघनो ब्रह्मा** । कुतः? जीवसारत्वात् । यत्र जीवगुणाः भक्तिज्ञानानन्दादयः घनाः निबिडाः स **सर्वजीवसारो ब्रह्मा** चतुर्मुखः । तथाहि समग्रा श्रुतिः– 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं हवै स पाप्मना विनिर्मुक्तः, स सामभिरुन्नीयते ब्रह्मलोकम् । **स एतस्माज् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते'** इति । सः त्रिमात्रप्रणवोपासकः, उपासनेन तेजसि सूर्ये सम्पन्नः, तत एव पाप्मना विनिर्मुक्तः, तत एव च सत्यलोकं नीतः, **एतस्मात्** सत्यलोकगतात् जीवोत्तमात् पुनर्ज्ञानं प्राप्य सर्वजीवपुरिशयं **परात् परं** परमपुरुषं पश्यतीति । सर्वजीवपरात् जीवघनात् परं पुरुषं पश्यतीति वा ॥

## 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादिवचनैरीक्षणीयत्वाद् वाच्यमेव ॥

---

**'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः'** इति । **तमेव** शास्त्रादाचार्य्याद् **विज्ञाय** प्रकृष्टमपरोक्षं ज्ञानमापादयेत्, **'ब्राह्मणः'** ब्रह्मनिष्ठः ॥

---

'प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च । ज्ञानं चतुर्मुखात् प्राप्य मुच्यते नात्र संशयः' इति प्रमाणवचनेन समग्रं खण्डार्थं सञ्जग्राह भगवत्पादः ॥

अथवा, ईक्षतेरिति न धातुनिर्देशः । किन्तु धात्वर्थनिर्देशः । यथा यजतिरिति यजिक्रियोच्यते । तथाच 'पुरुषमीक्षते' इति पुरुषकर्मकेक्षणक्रियाश्रवणान्नाशब्दं ब्रह्मेति । फलितार्थमाह भाष्यकारः– **ईक्षणीयत्वाद् वाच्यमेवेति** ॥

एतेनेदमप्याह– यः पुरुषः शब्दगोचरः पूर्वमुक्तः 'औपनिषदः पुरुषः' इति तमीक्षत इतीयं श्रुतिराह । ननूक्तं जहल्लक्षणया पुरुष इति । दुरुक्तं तत् । पुरिशयं पुरुषमिति निर्वचनश्रवणात् । नहि लक्षणा निर्वचनमपेक्षते ॥

ईक्षतेरिति पदसूचितं श्रुत्यन्तरं चाऽह– **'आत्मन्येवाऽत्मानं पश्येत्'** (बृ.उ.६.४.२४) इति । उत्तरसूत्रोपक्षेपाय चेमां श्रुतिमुपादत्त ॥

व्याख्याता चेयं श्रुतिर्जिज्ञासाधिकरणे । नात्र शब्दगोचरत्वं स्फुटमुदितमिति पूर्ववाक्यं पठति– **विज्ञाय प्रज्ञां कुर्वीतेति** । अत्रापि शब्दगोचरत्वं कथं ज्ञायत इत्यत आह– **तमेव शास्त्रादाचार्याद् विज्ञायेति** । अयमर्थः– **तमेव** 'अज आत्मा महान् ध्रुवः' (बृ.उ.६.४.२१) इति पूर्वप्रस्तुतं परमात्मानमेव । अत्र विज्ञानादनन्तरं प्रज्ञानं सम्पादनीयमित्युच्यते । तेन प्रज्ञानमित्यपरोक्षज्ञानं विज्ञानं परोक्षज्ञानमिति स्फुटम् । परोक्षज्ञानं तु शास्त्रादाचार्याद्वा भवतीति स्फुटं शब्दगोचरत्वम् । **ब्राह्मण** इति पदं चैतदेव सूचयतीत्याह– **ब्राह्मणो ब्रह्मनिष्ठ** इति । ब्राह्मण इति न तावद् वर्णवचनम् । अब्राह्मणोऽपि विज्ञाय प्रज्ञां कुर्वीतैव । नापि ब्रह्माणतीति ब्रह्मज्ञानी । तस्येतः परं सम्पाद्यत्ववचनात् **विज्ञायेति** । तेन

**औपनिषदत्वान्नावचनेनेक्षणम्–**

**'सर्वे वेदा यत् पदमामनन्ति–', 'वेदैश्च सर्वैरहमेव वेद्यः–' इत्यादिभ्यश्च ॥**

---

**'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति'** इति । 'तप आलोचने' इति धातोरालोचनरूपा युक्तयस्तपांसि ।

---

ब्रह्मणोऽयं ब्राह्मण इति व्युत्पत्त्या **ब्रह्मनिष्ठो ब्राह्मण** उच्यते । ब्रह्मेति वेदश्च वेदवेद्यश्च । तेन भगवति भक्तिमान् वेदेष्वधीती च **ब्रह्मनिष्ठो ब्राह्मण** इत्यर्थः । तेन च वेदपदगोचरत्वं भगवत उक्तं भवति । इयं च समग्रा श्रुत्यानुपूर्वी–

> 'तमेव धीरो **विज्ञाय प्रज्ञां कुर्वीत** ब्राह्मणः ।
> 'नानुध्यायेद् बहूञ्छब्दान् वाचो विग्लापनं हि तदिति' (बृ.उ.६.४.२१) इति ॥

'न ग्रन्थानभ्यसेद् बहून् । न व्याख्यामुपजीवेत' (७.१४.८) इति च भागवते । बहून् शब्दान् नानुध्यायेदिति केवलं वेदशब्दानेवाभ्यसेदित्यर्थः । तेनापि शब्दगोचरत्वमेवोक्तं भवति । तदेव स्फुटमाह भाष्ये– **औपनिषदत्वान्नावचनेनेक्षणमिति** । उपनिषत्पदं सर्ववेदोपलक्षणमिति काठकवचनेनावगमयति–

> **'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति** ।
> 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि । ओमित्येतत्' (का.उ.१.६.१) ॥

कथं 'तपांसि वदन्ति'? आह– **तप आलोचन इति धातोरिति** । अर्वाचीनास्तु 'तप सन्तापे' इति पठन्ति । सन्तापः अनुतापः पश्चात्ताप इत्यादिषु मानसं चिन्तनमेव हि तापशब्दार्थः । ऋषयश्चीर्णतपस इति कोऽर्थः? चीर्णभगवच्चिन्तना इति किलार्थः । तस्मात् 'तप आलोचने' इत्येव स्वरसो मौलश्च धातुपाठः । अनधिगतमूलपाठानां याथाकथाचमेतत् तप सन्ताप इति । तेन तप्यते आलोच्यत एभिरिति युक्तयस्तपांसि । अथवा तपनमालोचनमेव तपः । तदेतदाह– **आलोचनरूपा युक्तय** इति । मधुरं व्याख्यानम् । उपनिषदि कृततपसामीदृशमर्थस्फुरणं भवति ॥

अवाच्यत्वादिकं त्वप्रसिद्धत्वात्–

'न तदीदृगिति ज्ञेयं न वाच्यं नच तर्क्यते ।
'पश्यन्तोऽपि न जानन्ति मेरो रूपं विपश्चितः' इतिवत् ॥

'अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः ।
'अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' इति गारुडे ॥

नचाशब्दत्वमितरसिद्धम् ॥ ❊ ॥

---

मेरोरप्रसिद्धत्वादवाच्यत्वेऽपि, ब्रह्मणस्त्वगोचरत्वादेवेत्याशङ्क्य विशेषप्रमाणमाह– **अप्रसिद्धेरवाच्यं तदिति** । **नचाशब्दत्वमितरसिद्धमित्यस्यायमर्थः**– उक्तन्यायेन वाच्यत्वाद् ब्रह्मणो मायिसिद्धमशब्दत्वं न श्रुत्यर्थः ॥

---

इतिहासपुराणाभ्यां वेदवचनं समुपबृंहयन् गीतावचनसंवादमाह–

'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
'**वेदैश्च सर्वैरहमेव वेद्यो** वेदान्तकृद् वेदविदेव चाहम्' (भ.गी.१५.१५) इति ॥

तर्हि पूर्वपक्षश्रुतीनां का गतिः? आह– **अवाच्यत्वादिकं त्वप्रसिद्धत्वात्** । अवाच्यत्वमतर्क्यत्वमज्ञेयत्वमग्राह्यत्वमदृश्यत्वं च । तथाहि **यतो वाचो निवर्तन्ते** सामस्त्येन वक्तुमप्रभवन्त्यः । सामस्त्येन शब्दागोचरमशब्दम् । अप्रकृष्टेनैव वचनेन प्रकृष्टं भगवन्तमुवाच । **यद् वाचा** साकल्येनानभ्युदितम् । **यत् श्रोत्रेण न** कोऽपि समग्रतया **शृणोति** इत्यादि । अत्र लोकानुभवसम्मतिमाह– **न तदीदृगिति ज्ञेयम्** । प्रत्यक्षतो न ज्ञेयम् । अत एव न शब्दैर्निरूप्यम् । नापि तर्केण गम्यम् ॥

मेरौ तथाऽस्तीति भगवत्यपि तथा भवितव्यमिति किं राज्ञामाज्ञा? एवं वदतः व्यासवचनेन विश्वासयति– **अप्रसिद्धेरवाच्यं तत्** । उपसंहरति– **नचाशब्दत्वमितरसिद्धम्** । इतरस्मिन् मायिमते सिद्धं प्रसिद्धं अशब्दत्वं ब्रह्मणः शब्दागोचरत्वं नैव श्रुत्यर्थः ॥

## ॥ गौणश्चेन्नाऽऽत्मशब्दात् ॥ १.१.६. ॥

न च गौण आत्मा दृश्यो वाच्यश्च, न निर्गुण इति युक्तम् । आत्मशब्दात्–

---

अस्यैव भाष्यस्यान्योऽर्थः– नचावाच्यत्वं ब्रह्मण इतरस्य मायिनोऽपि सिद्धम् । ब्रह्मणि व्यवहाराभावप्रसङ्गात् । अन्योऽर्थः कत्थ्यते– यन्मायिनोक्तं प्रधानस्याशब्दत्वं हेतुत्वेन 'अशब्दं हि तत्' इति साङ्ख्यं प्रति, तदितरस्य साङ्ख्यस्य न सिद्धम् । तेन प्रधानस्य वेदगम्यत्वाङ्गीकारात् । किञ्च, यदितरेण मायिनोक्तं प्रधानस्याशब्दत्वं सूत्रार्थत्वेन, तन्न तस्य सिद्धम् । स्वयमेव भगवद्गीताव्याख्याव्याजग्रन्थे प्रधानस्य शब्दगम्यत्वाङ्गीकारात् । नच समन्वयप्रतिपादनादन्यो व्यापारः, सत्यां गतौ सम्भवत्यस्मिन्नद्ध्याये । अत ईक्षतेर्नाशब्दमिति सूत्रं ब्रह्मणोऽशब्दत्वनिराकरणपरमिति सिद्धम् ॥ ✻ ॥

**गौणश्चेन्नाऽऽत्मशब्दात्** ॥ एकमेव ब्रह्माविद्यावस्थायां स्रष्टृत्वादिगुणैः सगुणम्, दृश्यम्, वाच्यं च; विद्यावस्थायां निर्गुणमदृश्यमवाच्यं चेति चेन्न । **आत्मशब्दात्** । तस्मिन्नीक्षणीये ब्रह्मणि, ताभिरेव श्रुतिभिः 'आत्मन्येवाऽऽत्मानं पश्येत्' 'अज आत्मा महान् ध्रुवः'

---

'भाष्यं चात्यर्थविस्तरम्' इति भगवता स्वयमुदितं भाष्यस्य विश्वतोमुखत्वं किञ्चिदिव दर्शयन्नाह– **अस्यैव भाष्यस्येत्यादिना** । अनेन 'सहस्रार्थस्य भाष्यस्य' इति स्वप्रतिज्ञावचनं चेषत् समर्थितं भवति । प्रधानस्य **शब्दगम्यत्वाङ्गीकारादिति** । तथाहि भगवद्गीताव्याख्याव्याजग्रन्थमङ्गलाचरण एव– 'नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्' इति ॥ ✻ ॥

### परेषामद्भुतं ब्रह्मणो द्वैविध्यम्

ननु द्विविधं ब्रह्म भवति । निर्गुणं सगुणं च । तत्र जगत्सृष्ट्यादिकारणं शबलं ब्रह्म सगुणम् । तदेव चात्र प्रस्तुतम्– **जन्माद्यस्य यत** इति । तदाविद्यकम् । यत्तु विद्यावस्थायां ब्रह्म प्रस्तूयते तन्निर्गुणमदृश्यमवाच्यं च । सगुणं शबलं ब्रह्मैव ईक्षणीयत्वेन शब्दगोचरत्वेन चोदितमिति चेन्न । ईक्षणीये आत्मशब्दश्रवणात्– **आत्मन्येवाऽऽत्मानं पश्येत्**' इति, 'अज आत्मा महान् ध्रुवः । **तमेव**

'यो गुणैः सर्वतो हीनो यश्च दोषविवर्ज्जितः ।
'हेयोपादेयरहितः स आत्मेत्यभिधीयते ॥

---

इत्यादिभिरात्मशब्दप्रयोगात् । नच सगुणस्याऽत्मशब्दवाच्यत्वमस्तीत्याह– **यो गुणैः सर्वतो हीन** इत्यादिना । **हेयोपादेयरहितः** स्वाभाविकदोषवर्ज्जितः, सर्वगुणपूर्ण्णः ।

---

**धीरो विज्ञाय–'** इति । अपि च आत्मन एव यः शब्दः पुरुष इति तस्य श्रवणाच्च **'पुरुषमीक्षते'** इति । पुरुषसूक्तप्रतिपाद्यो हि सः ॥

ननु तर्हि गौणं चेन्नेति वक्तव्यम् । कथं गौणश्चेन्नेति । एतामाशङ्कां निवारयन्नाह भाष्यकारः–**गौण आत्मेति** । ईक्षणीये तावत् आत्मशब्दः श्रूयते । पुरुषशब्दश्च । जगत्सृष्ट्यादिगुणकः मायाशबळ ईश्वर एवाऽत्मादिपदवाच्यः । तथाहि स्मरन्ति–

'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति ॥

तस्मात् गौणमात्मानमीक्षते, गौणमात्मानं पश्येत्, तमेव गौणमात्मानं विज्ञाय प्रज्ञां कुर्वीत इत्येव श्रुत्यर्थः । न शुद्धं ब्रह्म ईक्षत इत्यादि । एवं प्राप्ते सूत्रं निराह– **गौण आत्मा वाच्यो दृश्यश्च** न शुद्धं ब्रह्मेति चेन्न । कुतः? **आत्मशब्दात्** । निर्गुणवचनो ह्यात्मशब्दः । विप्रतिषिद्धमेतत् गौणश्च आत्मा चेति ॥

ननु जानीमो वयं आत्मशब्दो मुख्यतो निर्गुणवचन इति । अत एवात्र गौणो ह्यमुख्य आत्मोच्यते इति वदामः । वदसे वदनमस्तीति । अस्योत्तरं भाष्यकार एव वक्ष्यति– 'नच मुख्ये सत्यमुख्यं युज्यते' इति । ननु न सम्भवति मुख्यम् । तस्यावाच्यत्वात् । तदेतत् तव दुराशामात्रम् । नह्यवाच्यं नाम किञ्चिदस्ति ॥

अथच गौणः त्रिगुणबद्धः जीवात्मा अत्रोच्यत इति चेन्न । त्रिगुणातीतभगवद्वाचकात्मशब्दश्रवणादिति चार्थः ॥

'एतदन्यस्वभावो यः सोऽनात्मेति सतां मतः ।
'अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते' इति वामने ॥

'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र यस्स आत्मा स नित्यः शुद्धः केवलो निर्ग्गुणश्चाथ ह योऽनीदृशः सोऽनात्मा' इति तलवकार-ब्राह्मणम् ॥

न च मुख्ये सत्यमुख्यं युज्यते ॥ ✻ ॥

---

'**द्वे वाव ब्रह्मणो रूपे**' इत्यत्रानात्मनो ब्रह्मरूपत्वं तदधीनत्वात्, 'सर्वं खल्विदं ब्रह्म' इतिवत्, तत्प्रतिमात्वाद् वा । रूप्यतेऽस्मिंस्तदिति तद्रूपमेतत् ॥ ✻ ॥

---

### वामनोक्त आत्मशब्दार्थः

नन्वात्मशब्दः सगुणे च निर्गुणे च समानः । नेत्याह वामनवचनेन । प्राकृतैर्गुणैः सर्वैरपि सर्वात्मना रहितः । गुणशब्दो धर्मवचनः । तदेव स्फुटमाह– **यश्च दोषविवर्जितः** । दोषरूपैः गुणैः सर्वात्मना वर्जित इत्येतत् । तदेव शब्दान्तरेणाऽह– **हेयोपादेयरहितः** । हेयाः ये जगति स्वाभाविकाः सत्वादयो गुणाः, दोषाश्च । तै रहितः । तदेतदाह– **स्वाभाविकदोषवर्जितः** । पूर्णगुणत्वात् पुनरुपादेयेन गुणान्तरेण च वर्जितः । तदेतदाह– **सर्वगुणपूर्ण** इति । एतेन यः शुभगुणैः सर्वतोऽप्यहीन इति च मूलार्थो विवृतो भवति । **एतदन्यस्वभावः** साधुगुणरहितः, स्वाभाविकदोषवांश्च । तर्हि कथं जीवेष्वात्मशब्दः? मुख्यतः अनात्मन्यपि आत्मशब्दप्रयोगस्तु सोपचारः । उत्तमस्यालाभे अधमस्योपरि चरणमुपचारः । एवं विद्वद्रूढेरनुपपत्तावविद्वद्रूढेरनुसरणमुपचारः । एवमुपपदेन सह चरणमुपचारः । स यथा मुख्य आत्मा निरुपपदः प्रयुज्यते– आत्मेत्येव । अमुख्यः सोपपदः– जीवात्मेति ॥

अत्र श्रुतिसंवादं चाऽह– **द्वे वावेति** । **वावेति** समुचितं निपातद्वयं प्रसिद्धिवचनम् । साम्यवचनं च । द्वे एते ब्रह्मणो रूपे इवेति । एकं रूपमेव, द्वितीयं रूपमिवेत्यर्थः । **यस्स** इति समुचितं पूर्वप्रस्तुते

## ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ १.१.७. ॥

**न हि गौणात्मनिष्ठस्य मोक्षः ॥**

---

**तन्निष्ठस्य मोक्षोपदेशात् ॥** तस्मिन्नीक्षणीयत्वेनोक्त आत्मनि निष्ठस्य मोक्षोपदेशाच्च स निर्गुणः । न हि शबलब्रह्मनिष्ठस्य जीवनिष्ठस्य वा मोक्षस्तन्मतेऽपि ॥

---

वर्तते । तद् यथा यत्तत् सास्नादिमत् सा गौरिति । यथा वा–'यासा पद्मासनस्था' इति । **नित्यः** चतुर्विधनाशरहितः । तथाह्युक्तम्–

'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
'नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।
'तदन्येषां तु सर्वेषां नाशाः केचिद् भवन्ति हि' इति ॥

पावनत्वात् **शुद्धः** । असङ्ग इत्यर्थः । **केवलः** अचिदमिश्रः, समाधिकरहितश्च । निर्गुणो हेयगुण-वर्जितश्च । उक्तं हि– 'विना हेयैर्गुणादिभिः' इति । रूपमिति स्वरूपं प्रतिरूपमिति चार्थ इत्याह– **अनात्मनो ब्रह्मरूपत्वं तदधीनत्वात्, तत्प्रतिमात्वाद् वेति** । उभयत्रापि दृष्टान्तः– **सर्वं खल्विदं ब्रह्मेतिवदिति** । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति हि स्मरन्ति । तत्र रूपपदनिर्वचनमाह– **अस्मिन्** जगति **तद्** भगवत्तत्त्वं सन्निहितत्वेन **रूप्यते** अनुसन्धीयत **इति एतत्** जगत् तस्य भगवतो रूपमुच्यते । 'रूप रूपक्रियायाम्' इति धातुपारायणिकाः । रूपक्रिया रूपदर्शनम् । अस्मिन् किञ्चिदिव भगवत्सारूप्यं पश्यन्तीत्यर्थः । दण्डी चाऽह– 'रूपारोपात्तु रूपकम्' इति । 'इदं हि विश्वं भग-वानिवेतरः' इति च भागवते ॥

**नच मुख्ये सतीति** । नात्र सद्भावः सत्पदार्थः । किन्तु सम्भवः । नहि मुख्यं नास्तीति अमुख्यमर्थान्तरमुच्यते । प्रयोगान्तरे सद्भावात् । मुख्ये सम्भवति तु नामुख्यमर्थवचनं युज्यते । यत्रोभयविवक्षा तत्रोभयमपि । यथा– 'आत्मैव ह्यात्मनो बन्धुः–' (भ.गी.६.५) इत्यत्राऽत्मा विष्णुर्मनश्च ॥ ❊ ॥

'यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्दोघे गहने प्रविष्टः ।

'स विश्वकृत् स हि सर्वस्य कर्त्ता तस्य लोकः स उ लोक एव' इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते ॥

---

**यस्येत्यादेरयमर्थः**– **यस्य सर्वज्ञ आत्मा** यथावज्ज्ञातः । सन्दोघः कार्य्यकारणसङ्घातः । सन्दुह्यतेऽनेन पुरुषार्त्थ इति वा सन्दोहो देहः । तस्मिन् गभीरे **प्रविष्टः** । स **'विश्वकृत्'**

---

## सन्दोघशब्दनिर्वचनम्

**तन्निष्ठस्य मोक्षोपदेशात्** ॥ गौण आत्मा अविद्याकल्पितसार्वज्ञ्यादिगुणं शबलं ब्रह्म वा, त्रिगुण-बद्धोऽत एवामुख्यः आत्मपदार्थो जीवात्मा वा । तदेवाऽह– **नहीति** । 'प्रतिबुद्धः,' वीप्सायां प्रतिः, **सर्वज्ञः** । 'यस्यानुवित्तः' **यथावज्ज्ञातः** । 'मतिबुद्धिपूजार्थेभ्यश्च' (अ.सू.३.२.१८८) इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' (अ.सू.२.३.६७) इति यस्येति कर्तरि षष्ठी । सन्दोहशब्दः सङ्घातवचनः । प्रकृते तु कार्यकारणसङ्घातवचनः । 'शरीरं कार्यम् । कारणानि इन्द्रियाणि' इति गीताभाष्यम् । हस्य घः । किमनेन परिभ्रमणेन । साक्षान्निर्वचनमपि शक्यमित्याह– **सन्दुह्यतेऽनेन पुरुषार्थ** इति । दुह प्रपूरणे । 'प्रपूरणं पूरणाभावः, उपसर्गोऽत्र धात्वर्थं बाधते । प्रस्थानवत्' इति वैयाकरणाः । प्रपूरणं रिक्तीकरणमित्यन्ये । गां दोग्धि गवि पूर्णस्य दुग्धस्याभावं सम्पादयतीत्यर्थ इत्येके । गवि दुग्धं रिक्तीकरोतीत्यर्थ इत्यन्ये । उभयेऽप्यपूर्णदृशः । गां दोग्धि, गवि स्थितं दुग्धं दोहपात्रे पूरयतीत्यप्यर्थः । एवमत्र सन्दुह्यते सम्पाद्यत इत्यर्थः । प्रयोगतोऽनुगन्तव्या हि धात्वर्था भवन्ति । **गभीरे** दुर्गमे पद्मकोशप्रतीकाशे हृदये **प्रविष्टः** । एतादृश आत्मा यस्यानुवित्तः स आत्मज्ञानी 'विश्वकृत्' **कृतकृत्यः**, विश्वं कृतवान्, नास्य कर्तव्यमवशिष्यत इति । नन्वितः परमपि कर्तव्यमस्ति यावत्प्रारब्ध-कर्मपूर्तिः, नेत्याह– **स हि** प्रसन्नो भगवान् **अस्य ज्ञानिनः** यत् कर्तव्यमवशिष्टं तस्य **सर्वस्य कर्ता** अनायासेन सम्पादयिता भवति । **तस्य यो लोकः** मोक्षाख्यः स एवास्य **लोको** वासस्थानं भवति । 'उ' इति प्रसिद्धिवचनम् । तदाह– **तदेव हि** इति । तस्य मोक्षप्राप्तिः सर्वागमप्रसिद्धेत्यर्थः ॥

कृतकृत्यः । कुतः? **स हि परमात्मा प्रसन्नः सर्वशक्तिः सर्वमस्य ज्ञानिनः कार्य्यं करोति । 'तस्य' परमात्मनो यो लोकः स्थानम्, तदेव ह्यस्य स्थानं भवति ॥**

## अपूर्वं श्रुत्यन्तरम्

नेयं श्रुतिः बृहदारण्यकोपनिषद्गता । तत्र हि– 'अस्मिन् सन्देहे गहने प्रविष्टः' इति पाठः । अत्र तु 'अस्मिन् सन्दोघे गहने प्रविष्टः' इति । तेन श्रुत्यन्तरमिदम् ॥

उपरिष्टादप्येतादृशाः प्रयोगा भवन्ति । उक्तं च पण्डिताचार्येण– (१.३.१६) 'स सेतुरिति वक्तव्ये छन्दोगवाक्ये एष सेतुरिति वदता भगवता समानरूपं श्रुत्यन्तरमपि विषयवाक्यमादीयत इत्यावेदितम् । सर्वत्र च सर्वेषां समानजातीयानां श्रुत्यन्तराणां सहोपलक्षणार्थमेतदुपक्रमे च 'अस्मिन् ब्रह्मपुरे' इत्युदाहर्तव्येऽपि 'एतस्मिन् ब्रह्मपुरे' इत्युदाहृतम् । गायति त्रायति चेति श्रुत्यन्तरमेव सदृशमधस्ताच्च सूचयाम्बभूवे । उपरिष्टाच्च क्वचित्क्वचिदेवम्भूतेषु वचनभेदेष्वयमेवाऽशयो बोद्धव्यः' इति ।

श्रुत्यन्तरमेतदिति सूचनायेव पण्डिताचार्योऽस्य मन्त्रखण्डस्यार्थान्तरमाह, प्रायः भगवत्पादेन प्रवचनान्तरे प्रकटीकृतम् । बृहद्भाष्यरीत्या चास्य मन्त्रस्यायमर्थः– यस्य ज्ञातः सर्वज्ञः परमात्मा, अस्मिन् सन्देहे मध्यदेहे हृदयगुहायां प्रविष्टः, तस्य आत्मनिष्ठस्य लोकः स परमात्मनो लोक एव हि । स हि परमात्मा विश्वकृत् सर्वजीवोत्तमस्य वायोरपि जनकः, अतः तदवरस्य सर्वजीवगणस्यापि स्रष्टा, तथा न केवलं मोक्षस्य, सृष्ट्याद्यष्टकस्य च कर्ता स एव हीति । तथाहि बृहद्भाष्ये प्रमाणवचनम्–

'यस्य ज्ञातो नित्यबुद्धो भगवान् पुरुषोत्तमः ।
'तस्य लोकः स एवैको यो लोकः परमात्मनः ॥

'स हि विष्णुः परो वायोरपि कर्ता प्रकीर्तितः ।
'विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसङ्घतः ॥

'तदन्यस्यापि सर्वस्य कर्तैको विष्णुरेव हि ।
'प्रविष्टो गहने देहमध्ये सन्देहनामनि ।
'तज्ज्ञानी याति तल्लोकं तत्प्रसादाच्च वर्तते' इति ॥

**'अयमात्मा ब्रह्म' ।**

---

**ब्रह्मशब्देन पूर्वं प्रस्तुते विष्णौ 'गौणश्चेन्नाऽत्मशब्दात्' इत्यात्मशब्दः प्रयुक्तः । अस्य शब्दत्रयस्यैकार्थत्वे प्रमाणमाह– 'अयमात्मा' इति श्रुतिम्, भागवतवचनं च–**

---

'विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते' इति देवमीमांसान्ते ब्रह्मशब्देन प्रस्तुतो विष्णुरेव हि अत्रापि 'अथातो ब्रह्मजिज्ञासा' इति ब्रह्मशब्देन प्रस्तुतः । तस्मिन्नेव चात्राऽत्मशब्दः **प्रयुक्तः**– 'गौणश्चेन्नाऽत्मशब्दात्' इति । तदिदं नामत्रयं हरेरिति प्रमाणेन दर्शयति । प्रथमं श्रुत्या– **अयमात्मा ब्रह्मेति** । 'सर्वं ह्येतद् ब्रह्म । **अयमात्मा** ब्रह्म' इति माण्डूकोपनिषदि । ओङ्कारवाच्योऽयं विष्णुरात्मा ब्रह्मेति चोच्यत इत्यर्थः–

'सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा ।
'आदानादनकर्तृत्वादात्मा तेषामगोचरः ।
'इति मण्डूकरूपी सन् ददर्श वरुणः स्वयम्' इति च हरिवंशवचनं भाष्ये ॥

'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम**यमात्मा ब्रह्म** सर्वानुभूरित्यनुशासनम्'
(४.५.१९) इति बृहदारण्यके ॥

'नैवास्मात् पूर्वकं किञ्चिन्नैवास्मादपरं तथा ।
'सर्वस्माद् बाह्यतश्चासौ सर्वस्मादन्तरस्तथा ॥

'व्याप्तेरात्मेति स प्रोक्तो ब्रह्मेति गुणपूर्तितः ।
'स सर्वस्यापरोक्षज्ञ इति वेदानुशासनम्' इति वायुप्रोक्तवचनं भाष्ये ॥

'एक एव परो विष्णुर्हयशीर्षस्वरूपधृत् ।
'अनन्ततेजा नित्यश्च स एव ब्रह्म सर्वगः ।
'तदेव गुणपूर्णत्वात् ब्रह्म सर्वमनूनतः' इति च ॥

'आत्मनामा परो विष्णुः सर्वगो यः प्रकीर्तितः' इति च ॥

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' ।
'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्' ॥

'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
'जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ॥

---

'वदन्ति यत् तत्वविदस्तत्वं यज्ज्ञानमद्वयम् ।
**'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'** इति ॥

'अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।
**'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्'** इति च ॥

विष्णोरात्मत्वम्, ब्रह्मरुद्रादीनाममुख्यात्मत्वम्, तस्य सत्वादिगुणवर्जितत्वम्, सर्वोत्तमत्वम्, तज्ज्ञानान्मोक्षं पाद्मवचनेनापि साधयति ॥ ✻ ॥

---

अथ भागवतगतं वचनद्वयम् । प्रथमं प्रथमस्कन्धगतम् (१.२.११) द्वितीयं चतुर्थस्कन्धगतम् (४.१.१५) । प्रसिद्धमिति भाष्यकारो न नाम जग्राह । नापीतिकरणेन पृथक्चकार । अतः स्वयं पण्डिताचार्य इतिकरणेन भागवतवचनद्वयं स्वयमुज्जहार, मा मन्दधियः सर्वमपि पाद्मवचनमिति भ्रमिषुरिति । तेन चेतनस्तु इत्यादिकं श्लोकत्रयं पाद्मवचनमिति स्फुटं जानीयुरिति ॥

**अद्वयमसमाधिकं** ज्ञानरूपं **तत्वं यद् वदन्ति** तत् परं केवलं निरुपपदं **ब्रह्मे**ति, **आत्मे**ति, **भगवानिति** च **शब्द्यते** । अथच क्वचित् परं **ब्रह्मेति परमात्मेति** च ॥

**अनसूयाऽत्रेः** त्रीन् **पुत्रान् जज्ञे** जनयामास । **दत्त**मात्मसम्भवम् । **दुर्वाससमी**शसम्भवम् । **ब्रह्मा**विष्टं **सोमं** चेति । अत्राऽत्मशब्देन विष्णुरुच्यत इति स्फुटं चक्षुष्मताम् । प्रथमश्लोकेन ब्रह्मात्मशब्दयोरेकवाचकत्वमुदितम् । द्वितीयश्लोकेन तस्य विष्णुत्वम् । **आत्मैकस्तु जनार्दन** इति

'इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते ।
'तस्याऽत्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ॥

सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।
परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः' इति पाद्मे ॥ * ॥

## ॥ हेयत्वावचनाच्च ॥ १.१.८. ॥

'तमेवैकं जानथ आत्मानमन्या वाचो मुञ्चथामृतस्यैष सेतुः' इत्यन्येषां हेयत्ववचनादस्याहेयत्ववचनान्न गौण आत्मा ॥ * ॥

---

**हेयत्वावचनाच्च ॥ 'तमेवैकं जानथऽआत्मानम्'** प्रधानं जानथ । अत्र विवृत्तिः सर्वतो विलक्षणत्वप्रदर्शनार्था । अन्यविषया वाचः **'अन्या वाचः'** । अमृतस्याऽश्रय इति

---

विष्णोरेवाऽत्मशब्दमुख्यार्थत्वम्, **इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयत** इति ब्रह्मरुद्रादीनाममुख्यात्मत्वम्, **तस्याऽत्मनो निर्गुणस्ये**ति विष्णोः **सत्वादिगुणवर्जितत्वम्, परो हि पुरुषो विष्णुरि**ति तस्य **सर्वोत्तमत्वम्, 'निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः'** इति, **'तस्मान्मोक्षस्ततः स्मृतः'** इति विष्णुज्ञानादेव मोक्षश्चेति समग्रं प्रमेयं यत् सूत्रगदितं तत् **पाद्मवचनेनापि साधयति** । जनं जननमर्दयतीति जनार्दन इति मोक्षप्रदत्वमेव नाम्ना सूचितं मुखत आह– तस्येत्यादिना । **आत्मन** इति **ज्ञानात्**, ज्ञानादेव च, **मोक्ष उदाहृतः** उदीरितः 'तमेव विद्वानमृत इह भवति' इत्यादिश्रुतिषु । **अपरे सगुणाः** सत्त्वादिगुणबद्धाः । स्वयं बद्धाः कथमपरान् मोचयेयुः । तर्हि कथं जीवात्मान इत्यादिप्रयोग इत्यत आह– **इतरेषु** ब्रह्मादिष्विति । **विष्णुर्हि परः** सर्वोत्तमः, **पुरुषः** पूर्णगुणश्च । **तस्मात्** कारणात्, **ततः** विष्णोः, तज्ज्ञानाद् वा **मोक्ष** इति शास्त्रेषु **स्मृत** इति ॥ * ॥

**हेयत्वावचनाच्च ॥ तमेवाऽत्मानमेकं प्रधानं जानथ** जानीत । अवश्यं चैकशब्दः प्रधानवचनो वक्तव्यः । केवलार्थकत्व एवशब्देन पुनरुक्तिप्रसङ्गात् । अन्यान् ब्रह्मरुद्रादीन् तत्परिवारतया जानथ ।

## ॥ स्वाप्ययात् ॥ १.१.९. ॥

'पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते' ।
'स आत्मन आत्मानमुद्धृत्याऽत्मन्येव विलाययत्यथाऽत्मैव भवति' ।

---

मुक्ताश्रय इति श्रुत्यर्थः । अस्यां श्रुतौ अन्येषां **हेयत्ववचनात्**, **'अस्य'** दृश्यस्याऽत्मनः **अहेयत्ववचनाच्च** नायं **गौणः** ॥ ✲ ॥

॥ **स्वाप्ययात्** ॥ 'पूर्ण्णमदः पूर्ण्णमिदं पूर्ण्णात् पूर्ण्णमुदच्यते ।
**'पूर्ण्णस्य पूर्ण्णमादाय पूर्ण्णमेवावशिष्यते'** इति ॥

---

**विवृत्तिरिति** । संहितायां स्वरयोरसंहितता विवृत्तिरित्युच्यते । यथाऽत्र 'जानथऽआत्मानम्' इति । सा चतुर्विधा भवति– ह्रस्वादिः, दीर्घादिः, उभयह्रस्वा, उभयदीर्घा चेति । 'जानथऽआत्मानम्' इति ह्रस्वादिर्विवृत्तिः । 'विराजोऽअधि पूरुषः' इति दीर्घादिः । 'त्रिपादूर्ध्वऽउदैत् पुरुषः' इत्युभयह्रस्वा । 'नाभ्याऽआसीदतन्तरिक्षम्' इत्युभयदीर्घा । विवृत्त्यर्थमाह– **अत्र विवृत्तिरिति** । तेन सर्वविलक्षणः सर्वाधिकोऽयमात्मेत्युक्तं भवति । **'अन्याः'** अन्यदेवताविषयाः । तासां प्रधानत्वेनोपासनस्य हेयतया ता **वाचो मुञ्चथ** मुञ्चत । अवधारणार्थं तस्य थः । तदुक्तम्– 'तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे' इति । यद्यपि 'विमुञ्चथ' इति सार्वत्रिकः पाठः । किन्तु 'मुञ्चथ' इति विरहितः प्रतनकोशपाठः । **'अमृतस्य सेतुः'** इत्यत्र सेतुशब्दार्थं तावदाह– **अमृतस्याऽश्रय** इति । यथा सेतुर्जलादुत्तरणहेतुस्तथाऽयं संसारजलधेरुत्तरणहेतुरिति । इदानीं पदद्वयस्य तात्पर्यमाह– **मुक्ताश्रय** इति । मुक्तानामाश्रय इत्यर्थः । 'मुक्तानां परमा गतिः' इति हि विष्णुसहस्रनामसु । यत **एष** आत्मैव **अमृतस्य** मुक्तगणस्य **सेतु**राश्रय इत्यात्मनिष्ठस्यैव मोक्ष इत्यत्राप्युपदिश्यते । हेयत्वस्यावचनात्, प्रत्युताहेयत्ववचनाच्चेति सूत्रे चकारः । एवमन्यासां देवतानामपरिवारतयोपासनस्य अहेयत्वावचनात् हेयत्ववचनाच्चेति ॥ ✲ ॥

'स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः ।

'एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्' इत्यादि स्वस्यैव स्वस्मिन् अप्ययवचनात् । न हि निर्दोषस्य गौणात्मनि लयः ॥ * ॥

---

**पूर्ण्णमदः** मूलरूपम् । **पूर्ण्णमिदम्** अवताररूपम् । अमुष्मादिदं सङ्ख्यामात्रेण **'उदच्यते'** उद्रिच्यते, एकमेव बहुसङ्ख्याकं भवति, विशेषादेव । स्वस्य **'पूर्ण्णस्य'**, **पूर्ण्णम्'** इदम-

---

॥ **स्वाप्ययात्** ॥ सूत्रार्थतया विवक्षितम्, 'पूर्णमदः–' (बृ.उ.७.१.१.) इति मन्त्रस्योत्तरार्धमात्रं भाष्यकारः पपाठ । अतः पण्डिताचार्यः समग्रं मन्त्रं पठित्वा मन्त्रार्थमाह– **पूर्णमदो मूलरूपम्,** विप्रकृष्टत्वात् । **इदमवताररूपम्** । तदात्वे सर्वेषामपि प्रत्यक्षम् । ज्ञानिभिः साक्षात्क्रियमाणमन्तर्यामिरूपं च । पूर्णमिदमिति हृदयं स्पृशन् पठति । स यथैतरेये 'अयमावसथोऽयमावसथोऽयमावसथः' इति । पूर्णादमुष्मात् पूर्णमिदं **उदच्यते** ।अञ्चु गतिपूजनयोः । गत्यर्थे नलोपः । उद्गम्यते **उद्रिच्यत** इत्यर्थः । उद्रिक्तमुद्गतं क्रियते । फलितमाह– **एकमेव बहुसङ्ख्याकं भवति** । न पुनरेकत्वं परिहाय । किन्तु **विशेषादेव** । सदा **पूर्णस्य स्वस्यैव** इदं **पूर्णमवताररूपं स्वस्मिन्नेव आदाय** अन्तर्भाव्य, एकीभूयेत्येतत्, पूर्णं **मूलरूपमेवावशिष्यते** । तथाहि बृहद्भाष्ये प्रमाणवचनम्–

'अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः ।
'पूर्णं च तत् परं रूपं पूर्णात् पूर्णाः समुद्गताः ॥
'परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ।
'न देशकालसामर्थ्यैः पारावर्यं कथञ्चन ॥
'पूर्वरूपस्य पूर्णस्य पूर्णं यदवतारगम् ।
'रूपं तदात्मन्यादाय पूर्णमेवावशिष्यते ॥
'लौकिकव्यवहारो यो भूभारक्षपणादिकः ।
'तदद्दृष्टिं विना नान्यो लयः कृष्णादिनां क्वचित्' इति ॥

**नच कासुचिच्छाखास्वन्यथोच्यते–**

**॥ गतिसामान्यात् ॥ १.१.१०. ॥**

---

वताररूपम् **आदाय** तन्मूलरूपमेव **'अवशिष्यते'** । स्कान्दवचनेनापि **स्वस्यैव** अवतार-रूपस्य निर्दोषस्य **स्वस्मिन्** मूलरूपेऽप्यय उच्यते । **न हि निर्दोषस्य गौणात्मनि लयस्तैरभ्युपगम्यते** ॥ ✲ ॥

नच सगुणं निर्गुणं चेति द्विविधं ब्रह्म वेदेषु प्रतिपाद्यत इत्याह– **नच कासुचिदिति** ॥

---

अत्राऽत्मशब्दः न पठ्यत इति शङ्कमानं मन्दात्मानं प्रति तादृशीं श्रुतिं पठति– **स आत्मन** इत्यादि । **स** भगवान् **आत्मनः** स्वस्मादेव **आत्मानं** स्वरूपाभिन्नं रूपान्तरमुद्धृत्य पृथक् कृतमिव दर्शयित्वा पुनरात्मनि **मूलरूप एव विलाययति** । विलीनं करोति, यथा पृथङ् न दृश्येत । एकतामापद्यत इत्येतत् । **अथ आत्मैव** मूलरूपमेव **केवलमवशिष्टं भवति** । तस्य विष्णुत्वं स्फुटं घोषयत् पुराणवचनं पठति– **स देवः** । इत्यादि इत्यविभक्तिको निर्देशः सप्तम्यर्थे । **इत्यादिषु** श्रुतिस्मृतिषु **स्वस्यैव स्वस्मिन्नप्ययवचनात्** । **बहुधा भूत्वा** बहुरूपो भूत्वा सृष्ट्यादौ । **निर्गुणः** बहुधाभावेऽपि गुणत्रय-सम्बन्धरहितः । **निर्गुणः** सन्नेव **बहुधा भूत्वा** । **एकीभूय पुनः शेते** प्रळये । सर्वरूपेष्वपि सदा **निर्दोषः** । **आदिकृत्**, पुनः सृष्ट्यादावात्मानं बहुधा करोति । जीवजडात्मकं जगच्च व्यक्तं करोति । स्वयं सर्वस्याऽदिश्च कर्ता च सर्वस्य । तदर्थं जगदादिं चतुर्मुखमादौ करोति । ततः परं पालनार्थमादिकृत् विष्णुरूपस्याऽदानकृत् । अन्ते कृन्तति च सर्वमिति । विष्णुरयमिति स्फुटमाह– **पुरुषोत्तमो हरिरिति** । हरिरिति वाय्वादिषु सावकाशमिति माऽतिशङ्कीति **पुरुषोत्तम** इत्याह । 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति हि गीतासु । '**स देवः**–' इतीदं स्कान्दवचनमित्याह टीकाकारः– **स्कान्दवचनेनापि स्वस्यैवावताररूपस्येत्यादि** ॥

**नहि निर्दोषस्य** अत एव निर्गुणस्य **गौणात्मनि** शबलब्रह्मणि जीवे वा **लयस्तैरभ्युपगम्यते** ॥ ✲ ॥

'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव ।
'प्रकाशयन्ते न विरोधः कुतश्चिद् वेदेषु सर्वेषु तथेतिहासे' इति पैङ्गिश्रुतेः गतेर्ज्ञानस्य साम्यमेव ॥ ❋ ॥

---

॥ **गतिसामान्यात्** ॥ **'सुप्रमाणाः'** सुष्ठुप्रमाणाः, सुष्ठुप्रमाणान्तरसहिताः । **'प्रकाशयन्ते'** उत्पादयन्ति । **गतेर्ज्ञानस्य साम्यमेव,** ब्रह्मज्ञानस्य सर्ववेदेषु साम्यमेव । गुणानामनन्यथोक्त्या साम्यम् । नह्येकत्र ज्ञानानन्दादिकमुक्त्वाऽन्यत्राज्ञानदुःखादिरूपत्वं ब्रह्मण उच्यते ॥ ❋ ॥

---

॥ **गतिसामान्यात्** ॥ **कासुचिच्छाखासु** उपलब्धास्वेव मिथः । तदाह– **सगुणं निर्गुणं चेति द्विविधं ब्रह्म** कर्मकाण्डे ज्ञानकाण्डे च **प्रतिपाद्यत** इति । तथाहि मायिनो वदन्ति । अथच कासुचिद-ज्ञानामनुपलब्धासु च शाखासु स्यादिति सम्भाव्यत इति च ॥

सुष्ठु शोभनानि प्रमाणानि श्रुतयः स्मृतयः प्रत्यक्षं वा यासां सन्त्युपजीव्यतया ताः **सुप्रमाणा युक्तयः** । अनुसृत्य हि मानानि तानि । 'तपांसि सर्वाणि च यद् वदन्ति' इति चोक्तम् । **सर्वेषु** सब्राह्मणारण्यकोपनिषत्सु **वेदेषु, इतिहास** इत्युपलक्षणं वेदानुकूलग्रन्थजातस्य । **कुतश्चित्** प्रमाणान्त-रात् वेदवचनान्तराद् वा, भारतपुराणादिवचनान्तराद् वा । **वेदेषु** तदनुकूलेषु भारतादिषु च **गतेः ज्ञानस्य** समानत्वात् एकविषयकत्वाज्ज्ञेयं जिज्ञास्यं च निर्गुणं ब्रह्मेति ॥

**सर्वेषु वेदेषु** येये वेदशब्दवाच्यास्तेषु सर्वेषु । विशेषतश्च वेदानां सर्वासु शाखासु । विष्णुवेदेषु च । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति श्रुतिः ॥

किमिह साम्यं नामेत्याह– **गुणानामनन्यथोक्त्या साम्यम्** । अनन्यथोक्त्या प्रतीयमानमेकविषयकत्वं साम्यमित्यर्थः । ननु तर्ह्यल्पाक्षरत्वाय गतिसाम्यादिति वक्तव्यम् । किमित्यधिकाक्षरं सूत्रं प्रणिनाय? एतामाशङ्कां परिजिहीर्षन्नाचार्य एवकारं प्रयुयोज **साम्यमेवेति** । 'आधिक्येऽधिकम्' इति हि सूत्रम् । यत्राक्षरमधिकं तत्रार्थोऽप्यधिक इति । तेनात्राधिकाक्षरप्रयोगेणावधारणरूपोऽधिकोऽर्थो विवक्षितः । साम्यमेव, न क्वाप्यस्यापवाद इत्यन्ययोगमनेन व्यवाच्छिनदित्यर्थः ॥

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
'कर्म्माद्ध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्ग्गुणश्च' इति–

**॥ श्रुतत्वाच्च ॥ १.१.११. ॥**

---

सर्वभूतस्थानभेदेऽपि भेदरहितः **'एकः'** । द्योतनाद् **'देवः'** । देशतः कालतो गुणतो व्याप्नोतीति **'सर्वव्यापी'** । अन्तः स्थित्वा, आ सम्यक् तन्नियन्ता च माता चेति **अन्तरात्मा**, आदानादिकर्त्तृत्वाद् वा । **'कर्म्माद्ध्यक्षः'** कर्म्माधिपतिः प्रवर्त्तकः । उपर्य्यस्याक्षाणीन्द्रियाणि

---

अन्यच्चेदमनुसन्धेयम्– साम्यमित्येकरूपत्वमात्रमुच्यते । सामान्यमित्येकरूपत्वमुच्यते, मानान्तरसंवादित्वं चोच्यते मानैः सहितं समानमिति । एकस्याः श्रुतेः श्रुत्यन्तरैः, तदनुकूलतर्कैः, ज्ञानिप्रत्यक्षैश्च संवाद एव दृश्यते समन्वये सति, न क्वापि विवाद इति साम्यं मानातरसंवादेन समर्थयते– सामान्यादिति । विश्वतोमुखानि हि सूत्राणि भवन्ति । अपिच गतेः पूर्वप्रस्तुताया एकरूपाया अवगतेः सामान्यात् मानान्तरसंवादात् 'सर्वे वेदा युक्तयः सुप्रमाणाः–' इति पैङ्गिश्रुत्यादिमानसद्भावात् गतेर्ज्ञानस्य साम्यमेव । सर्वेऽप्येतेऽर्था भाष्यसूचिता एव । तस्मात् सूक्तम्– 'गतिसामान्यात्' इति ॥

## सम-समानशब्दौ भिन्नार्थौ

वस्तुतस्तु साम्यमिति सादृश्यमुच्यते । 'परमं साम्यमुपैति' इति यथा । सामान्यमिति एकत्वं सादृश्यं च । 'समानं वृक्षं परिषस्वजाते' इत्येकत्वम् । 'समानमस्तु वो मनः' इत्येकरूपत्वं नाम सादृश्यम् । 'ब्राह्मं ज्ञानं परमं त्वेकमेव' इति श्रुतिसंवादादत्राप्येकत्वमर्थः स्यादिति शङ्कानिरासायाऽह भाष्यकारः– **'साम्यमेव** सामान्यशब्दार्थः । नैकत्वम्' इति ॥

ननु श्रुतिः 'एकमेव' इत्याह । तस्यापीदमेवोत्तरम्– **साम्यमेव** श्रुतावुदितमेकत्वमपि । तेन **एकम्** एकरूपमित्यर्थः । 'न विरोधः कुतश्चित्' इत्युत्तरत्र स्वयमेव व्याख्यानात् । अहो 'साम्यम्' इत्येकेन पदेन श्रुतिगतं सूत्रगतं च पदं युगपदेव व्याचकार भाष्यकारः ॥

---

**वर्त्तन्त इति 'अद्ध्यक्षः' । सर्वभूतानामधिवासः । साक्षादीक्षत इति 'साक्षी' । साक्षादीक्षणं प्राकृतज्ञानेनापि भवतीति तन्निवृत्त्यर्थं 'चेता' इति । चैतन्यरूप इत्यर्थः । केवलोऽचिदमिश्रः,**

---

ननु तर्हि श्रुत्यानुगण्याय 'ज्ञानसामान्यात्' इति किं नाह सूत्रकारः? अतिशयेन श्रुत्यानुगुण्यायैव । तथाहि– श्रुतिर्न केवलं 'ज्ञानम्' इत्याह । किन्तु 'ब्राह्मं परमं ज्ञानम्' इत्याह । ब्राह्मं ब्रह्मविषयम्, मोक्षफलकत्वात् परमं च ज्ञानमिह विवक्षितम् । तमेतं श्रुत्यर्थं ग्राहयितुमेव गतिपदमुपादत्त । तथाहि गतिर्ज्ञानमिति स्थितम् । कीदृशं ज्ञानम्? गमयति भगवन्तमिति गतिः । ब्राह्मं ज्ञानमित्येवोक्तं भवति । पुनः कीदृशम्? गमयति मोक्षमिति गतिः । मोक्षफलकं परमं ज्ञानमित्येवोक्तं भवति । तेन परमं श्रुत्यानुगुण्यम् । गं ज्ञानम्, तिः मोक्षानन्दश्च यया सा भगवत्प्रज्ञा गतिरिति च । एतद् द्वयमेव ज्ञानानां साम्यम् ॥

'ज्ञानं परमम्' इति श्रुत्यानुगुण्यायैव च भाष्ये 'गतेर्ज्ञानस्य' इत्येकवचनेन विग्रहणम् ॥

एवं बहवोऽर्थविशेषा नृत्यन्तः परिस्फुरन्ति । ग्रन्थगौरवभयादनादेशाच्चोपरम्यते ॥

## प्रतिसूत्रमोङ्कारस्याननुवृत्तिः

न केवलं युक्त्या निर्गुणस्याऽगमगोचरत्वम्, मुखतः श्रुतत्वाच्चेतीदानीमाह– **श्रुतत्वाच्च** ॥

**साक्षी चेता केवलो निर्गुणश्चेति श्रुतत्वाच्चेति** सूत्रेणैकवाक्यतया भाष्यं सङ्गमयन्नाचार्यः प्रतिसूत्रमादावोङ्कारं पठन्तो न सम्प्रदायज्ञा इति स्पष्टमाचष्ट । नहि 'निर्गुणश्चेति ओं श्रुतत्वाच्च' इति वाक्यान्वयः सम्भवति । न भाष्ये पृथगोङ्क्रियते । 'जीवव्यतिरिक्तेश्वराभावात् तस्य च स्वयम्प्रकाशत्वान्न जिज्ञास्यतेति प्राप्ते 'अथातो ब्रह्मजिज्ञासा' इत्याह' इति हि न्यायविवरणे । न तत्वप्रदीपे । नापि हृषीकेशतीर्थीये ॥

## 'एको देवः' इति श्रुत्यर्थः

निर्गुणत्वमिति हेयगुणराहित्यमेव, न शुभगुणराहित्यमिति द्योतयितुं बहुगुणवचनं समग्रं श्वेताश्वतराणां मन्त्रमुज्जहार भाष्यकारः– **एको देवः** (श्वे.उ.६.११) । **द्योतनाद् देवः** । अयमर्थः– सृष्ट्यादिभिः क्रीडन् द्योतते । सर्वोपरि द्योतते । सर्वव्यवहारान् प्रेरयन् द्योतते । सूर्यादिप्रकाशान् द्योतयन् द्योतते । सर्वैर्वेदैः सर्वैर्घोषैः स्तूयमानो द्योतते । आनन्दरूपो द्योतते । सत्यसङ्कल्पो द्योतते । सर्वं जानन्

समाधिकरहितो वा । केवलचैतन्येनेक्षणमसम्प्रज्ञातसमाधिस्थस्य योगिनोऽपि भवति ।

सर्वं व्याप्य द्योतते । तथाहि प्रतनो धातुपाठः– दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदकान्तिगतिषु । अर्वाचीना मदं स्वप्नं चाधिकं पठन्ति । एतेन देवपदेन सृष्ट्याद्यष्टकर्तृत्वादयो बहवो गुणाः कथिता भवन्ति । द्योतते । अथापि **गूढः** । न ज्ञायते मन्दानाम् । हृदयगुहायां गूढतया निहितः सन् द्योतते ज्ञानिनाम् । सर्वजीवेषु बहुरूपः सन् गूढतया स्थितोऽपि, **स्थानभेदेऽपि** अनेकरूपत्वेऽपि **एकः** परस्परं मूलरूपेण च भेदरहितः । सर्वैः गुणैः सर्वेषु कालेषु सर्वं देशं व्याप्नोतीति **सर्वव्यापी** । एतेन कालतो देशतो गुणतः शक्तितश्चाऽनन्त्यमुक्तम् । सर्वभूतानामन्तः स्थित्वा आ सम्यक् स्वातन्त्र्येण तनोति तायते वेति तः, **नियन्ता । माता** ज्ञाता ज्ञात्वा स्रष्टा च संहर्ता चेति आत्मा । 'मानं ज्ञानं लयश्चैव निर्माणं चापि कथ्यते' इति हि स्मरन्ति । अथवा सर्वभूतान्तरः सन् **आत्मा** आदानादिकर्ता । 'यच्चाऽप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते' । आप्नोतीत्यात्मेति गतं सर्वव्यापीत्यनेन । अत **आदानादी**त्याह । भक्त्या दत्तं पत्रं पुष्पं फलं तोयमादत्ते, अत्ति चेत्यात्मा । अथच जीवं नियन्तुमादत्ते अत्ति च तत्र विषयानित्यात्मा–

> 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेवच ।
> 'अधिष्ठाय मनश्चायं विषयानुपसेवते' इति हि भगवद्वचनम् ॥

'पत्रं पुष्पम्–' इत्यादि च । सन्ततो भाव इति कालतोऽनन्तता चोक्ता सर्वव्यापीति । जीवकर्मणामधिपतिः **प्रवर्तक** इत्येतत् । 'अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि' इति गीतातात्पर्यनिर्णये (९.१०) शब्दनिर्णयवचनं मनसि निधायाऽह– **उपर्यस्याक्षाणीन्द्रियाणी**ति । 'अक्षमिन्द्रिये' इति यादवप्रकाशः । सर्वभूतेषु गूढः न केवलम्, सर्वभूतानि चामुमेवाधिवसन्तीत्याह– सर्वभूतानामधिको वास इति । **साक्षादीक्षत इति साक्षी** । किम्? स्वं च सर्वं जगच्च चेतनाचेतनात्मकम् । समतीतक्षराक्षर इत्येतत् । 'साक्षाद् द्रष्टरि सञ्ज्ञायाम्' (अ.सू.५.२.९१) इति हि पाणिनिः । साक्षादित्यव्ययम्; अव्यवधानं स्वातन्त्र्यं च पदार्थः । तस्य इनिः प्रत्ययो भवतीक्षितरि वाच्ये । उपद्रष्टेत्यर्थः । 'उपद्रष्टाऽनुमन्ता च' इति च भगवद्वचनम् । साक्षादव्यवधानेन दर्शनं प्राकृतज्ञानेनापि भवति, प्राकृतेन्द्रियेणापि भवति । तद्व्यावर्तनाय **चेते**ति । चेता चेतिता । चिती सञ्ज्ञाने । पदार्थमाह– **चैतन्यरूपः** । यस्य रूपं शरीरमपि चैतन्यम् । ज्ञानमयदेहः । मुक्तोऽपि चैतन्यरूप इत्यतः **केवल**

**नह्यशब्दः श्रूयते । नचाप्रसिद्धं कल्प्यम् ॥**

---

स हि स्वरूपचैतन्येनैवाऽत्मानमीश्वरं च योगस्थः पश्यति । न च तदा गुणाभिमानी । सा तुर्य्यावस्था नाम । तथाऽपि सगुण एवासौ । प्रारब्धकर्म्मणोऽप्रनष्टत्वान् । तद्व्यावृत्त्यर्त्थो निर्ग्गुणशब्दः प्राकृतगुणनिषेधात्मकः । एकत्वादिशब्दैरनेकगुणत्वप्रतीतेर्न्न स्वाभाविकगुणनिषेधः । एवं **श्रुतत्वाच्च न गौण आत्मा** । नाप्यशब्दः । **न ह्यशब्दः श्रूयते** । अशब्देऽपि लक्षणया श्रुतिर्वर्त्तत इत्यत आह– **न चाप्रसिद्धं कल्प्यमिति** ॥

अयमर्त्थः– नचावाच्यं ब्रह्मास्तीति शक्यं कल्पयितुम्, प्रमाणाभावात् । अवाच्ये शब्दस्य वृत्त्यभावात् । ब्रह्मणि प्रमाणान्तरानभ्युपगमाच्च । नच सगुणं ब्रह्म वाच्यं, निर्ग्गुणं लक्ष्यमिति कल्प्यम् । अप्रसिद्धत्वादेव । न ह्यनिर्वाच्यं मायाशबलं ब्रह्म जगत्कारणं प्रसिद्धम् । नच ज्ञानानन्दादिगुणशून्यं निर्ग्गुणं शुद्धं ब्रह्म प्रसिद्धम् ॥

---

इत्याह । कदाऽपि जडशरीररहितः **समाधिकरहितो वा** । एवमाद्यनन्तगुणोऽप्ययं निर्गुणश्चेति अलङ्कारराजोऽयं विरोधाभासो नाम । अथ चास्य विशेषणस्य विशिष्टं कृत्यमाह– **केवलचैतन्येनेक्षणमित्यादि** । स योगी तदा गुणातीतश्च भवति । अत एव गुणत्रयावस्था न भवतीति **तुर्यावस्था नाम** भवति । तथाऽपि न निर्गुणोऽसौ । प्रारब्धकर्मबद्धत्वात् । तेन प्राकृतधर्मरहितो निर्गुण इति निर्गलितार्थः ॥

श्रुतत्वादेव नाशब्दः । कुतः? **नह्यशब्दः श्रूयते** । केनापि शब्देनावाच्यः कथं श्रूयेत? ननु श्रूयेत लक्षणयेत्यतिशङ्कमानं गतमानं वितथाभिमानं प्रत्याह– **नचाप्रसिद्धं कल्प्यम्** ॥

## बह्वर्थं भाष्यवाक्यम्

नचावाच्यं ब्रह्मेति वृथा कल्पनीयम् । समर्थनीयं वा । यतः अप्रसिद्धं तत् । केनापि प्रमाणेन सिद्धं न भवतीत्यप्रसिद्धम् । प्रमाणं सम्भवत् शब्दः स्यात्, प्रत्यक्षादिकं वा स्यात् । नाऽद्यः । अवाच्यत्वात् । न ह्यवाच्ये शब्दः प्रवर्तते । न द्वितीयः । ब्रह्मणः प्रमाणान्तरावेद्यत्वाभ्युपगमात् । नच शबलं ब्रह्म वाच्यमिति कल्प्यम् । यतः शबलं ब्रह्मैव केनापि प्रमाणेनासिद्धम् । दूरे च तस्य

**सर्वशब्दावाच्यस्य लक्षणायुक्तेः ॥ ५ ॥**

**॥ इति पञ्चममधिकरणम् ॥ ✻ ॥**

---

नच तस्य निर्गुणस्य लक्ष्यत्वम् । वाच्यसम्बन्धायत्तायाः लक्षणावृत्तेरसङ्गे तस्मिन्नसम्भवात् । अविद्यासङ्कल्पितसम्बन्धाभ्युपगमे सगुणत्वप्रसङ्गात् । नचावाच्यं वेदसमन्वयसिद्धमिति कल्प्यम् । **सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः** ॥

नह्यवाच्यस्य लक्ष्यत्वं दृष्टम् । वाच्यमेव शब्दान्तरेण लक्ष्यते । यथा मञ्चादिशब्दैः पुरुषादयः । वाच्यत्वे प्रमाणान्तरगम्यत्वापात इति चेन्न । धर्म्मादिवदगम्यत्वोपपत्तेः । समानश्चायं न्यायो लक्ष्यत्वपक्षेऽपि । मानान्तरवेद्यमेव हि तीरादिकं लक्ष्यमीक्षामहे । तस्मान्न तस्मिन् ब्रह्मणि लक्षणयाऽपि शब्दो वरीवर्त्तीत्यभ्युपगन्तव्यम् । एवञ्च, न कयाचिदपि विधया तस्य सिद्धिः । अत एव चैतदाह– **नचाप्रसिद्धं कल्प्यमिति** ॥

✻ ✻ ✻

---

वाच्यत्वम् । नापि मायाशबलं जगत्कारणमिति वा शुद्धं ब्रह्म निर्धर्मकमिति वा केनापि प्रमाणेन सिद्धम् । सर्वमेतदप्रामाणिकं मायिनां प्रज्ञावादप्रसर एव ॥

**नचावाच्यस्य** लक्ष्यत्व**मप्रसिद्धं** कल्प्यम् । कुतः? अदृष्टत्वादेव । नह्यवाच्यस्य लक्षणा क्वापि दृष्टा । तस्मात् **सर्वशब्दावाच्यस्य** लक्षणाया अप्यसम्भवः । **शब्दान्तरेण वाच्यमेव शब्दान्तरेण लक्ष्यते** । यथा देवदत्तयज्ञदत्तादिशब्दैर्वाच्या एव 'मञ्चाः क्रोशन्ति', 'उष्णीषाः प्रवेश्यन्ताम्' इति **मञ्चादिशब्दै**र्लक्ष्यन्ते ॥

यद् दृष्टं यच्छ्रुतं यदनुमानेनावगतं तदुच्यते । तेन ब्रह्मणो वाच्यत्वे प्रमाणान्तरगम्यत्वं प्रसज्येतेति न वाच्यम् । **धर्मादिवत्** स्वर्गनरकादिवत् वाच्यत्वेऽपि प्रमाणान्तरेण **अगम्यत्वोपपत्तेः** ॥

सर्वप्रकारेणाप्रसिद्धं निर्धर्मकं ब्रह्म तव कल्पनामात्रमित्युपसंहरति– **नचाप्रसिद्धं कल्प्यमितीति** ॥

✻ ✻ ✻

ननु हन्त एवं तर्हि प्रकटमेतानि सूत्राणि ब्रह्मावाच्यत्वपक्षप्रतिपक्षभूतानि, यावताऽत्र तत्पक्षीयाः पूर्वपक्षीक्रियन्त इति किमिदमिह कुतूहलम्? प्रतीयन्ते हि तन्निराकरणपराणि मुखत एव कार्त्स्न्येन । तथाहि–

'अथातो ब्रह्मजिज्ञासा' इति सूत्रे तावद् ब्रह्मजिज्ञासा विषयः । सा किं कर्त्तव्या नवेति सन्देहः । तत्र तावदाचक्षते – ब्रह्मजिज्ञासा न कर्त्तव्या, अविषयत्वाद् ब्रह्मणः । विषयभूते हि वस्तुनि जिज्ञासादयो घटेरन् । विषयत्वे तु घटादिवदब्रह्मत्वप्रसङ्गो दुष्परिहारः ।

---

## मायावादनिरसनी पञ्चाधिकरणी

विस्मयावहमिदम्, यदिदमधिकरणपञ्चकमपि मुखत एव मायावादनिरासपरं प्रतीयत इति जिज्ञासुभिर्निर्मत्सरैरवधातव्यमित्याह– **ननु हन्तेति** । पूर्वं स्वेनाप्येतानि मायावादपराणीति कथं विभ्रान्तम् । अहो दुराभिमानमहिमेति विस्मयते– हन्तेति । पूर्वं कदाऽप्यप्रतिभातं भगवत्पादपरिचर्यया स्फुटं प्रत्यभादिति **किमिदमिह कुतूहलम्** ॥

**तन्निराकरणपराणीति** । ननु पाश्चात्यं शाङ्करं मतम् । पूर्वतनानि ब्रह्मसूत्राणि । कथं तानि तन्निराकरणपराणि? भ्रान्तोऽसि । नहि शाङ्करकृतान्तनिराकरणार्थान्येतानि सूत्राणीत्याह पण्डिताचार्यः । **ब्रह्मावाच्यत्वपक्षप्रतिपक्षभूतानीत्याह** । मायावादनिराकरणपराणीत्याह । नहि शङ्करोपज्ञं मायावादः प्रवृत्तः । आह च भगवत्पादः–

'अनादितो हि वर्तन्ते समया हि प्रवाहतः' इति ॥

'दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम् ।
'तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः ॥

'विद्वेषात् परमे तत्वे तत्ववेदिषु चानिशम् ।
'अनादिवासनायोगादसुराणां बहुत्वतः ।
'दुराग्रहगृहीतत्वाद् वर्तन्ते समयाः सदा' इति च ॥

नच ब्रह्मणि जिज्ञासया किञ्चित् प्रयोजनं प्रेक्षामहे । नहि स्वयं प्रकाशमानस्य तस्य कदाचिदपि तिरोभावः । नचाज्ञानात् स सम्भाव्यते । अज्ञानस्य सत्यत्वे श्रुत्युदिताद्वैतहानेः, निवृत्त्ययोगाच्च, भ्रममात्रादज्ञानसद्भावोऽभ्युपगन्तव्यः । न च स घटनामाटीकते । नहि शश्वद् विज्ञानरूपं ब्रह्म तत्वतो भ्रान्तं भवितुमर्हति । नच जीवस्य भ्रमादज्ञानसद्भावः सम्बोभवीति । ब्रह्मव्यतिरिक्तस्य जीवस्य तत्वतोऽभावात् ॥

तस्मादेवमधिकारिविषयप्रयोजनाद्यनुपलम्भान्न सुघटत्वबुद्ध्याऽऽरम्भणीयाऽसौ मीमांसेति ससंरम्भमुत्प्रेक्षितं पूर्वपक्षं प्रतिक्षिपति– **अथातो ब्रह्मजिज्ञासेति** । यत एवं सर्वस्याऽशीर्दुःखं नानुभूयासम्, सुखमाप्नवानीति अतो ब्रह्मजिज्ञासा कर्त्तव्या । नहि तामन्तरेण तयोरत्यन्त-परिहारप्राप्ती स्याताम् । जिज्ञासासमनन्तरसमुद्भूतसम्यग्दर्शनसञ्जातप्रसादः परमपुरुषानु-गृहीतो हि जीवः सकलपरिक्लेशप्रहाणेन प्रभूतानन्दानुभवोऽवतिष्ठते ॥

न चाविषयत्वं ब्रह्मणः । 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि-श्रुतिभिर्विषयत्वावधारणात् । अपि चायमविषयत्वप्रतिपादनप्रयासः किं ब्रह्मणि स्यात् आहोस्विन्नेति वक्तव्यम् । यदि तावदाद्यं पक्षमुत्प्रेक्ष्येत, न तर्हि ब्रह्मणो विषयत्वं प्रत्याख्यातं स्यात् । प्रत्युतान्वाख्यातमेव स्यात् । अविषयत्वप्रतिपादनप्रतिज्ञानेन च हीयेत । तद्विषयत्वाङ्गीकारात् । अथान्यतरं पक्षं मान्यं मन्येत, एवमपि सैव विषयता

---

**ब्रह्मव्यतिरिक्तस्य जीवस्येति** । तदिदमुक्तं न्यायविवरणे– 'जीवव्यतिरिक्तेश्वराभावात् तस्य च स्वयम्प्रकाशत्वान्न जिज्ञास्यता' इति । जीवो व्यतिरिक्तो यस्मात् तादृशस्येश्वरस्येति चार्थः । वदन्ति हि– 'जीवो ब्रह्मैव नापरः' इति । एवं वदन्तो वस्तुतो निरीश्वरवादिनो नास्तिका एवेति परिहसन्निवाऽह भगवत्पादः– ईश्वराभावात् । ब्रह्मव्यतिरिक्तो जीवो नास्तीति जीवव्यतिरिक्तं ब्रह्म नास्तीति चानर्थान्तरम् । ननु नैवं वदामः । न जीवस्य ब्रह्मव्यतिरेकः । तथाऽप्यस्ति ब्रह्मणो जीवव्यतिरेकः । तर्हि भेदाभेदवादी स्याः । नाभेदवादी । तस्मात् 'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्' इत्यादिकमज्ञजनविस्मापनं वाग्वागुरामात्रम् ॥

द्रढिमानमानीता । तदुपपादकान् पुरुषान् प्रत्यपि तदप्रत्यादेशात् । प्रत्यादेशः क्रियमाण-स्त्वविषयीकुर्वन् ब्रह्म न स्वोत्पत्तिमेव लभेत । तथाच स्वव्याहतिरव्याहता तस्य जाति-जाताकरस्य शिरश्शेखरीभूता भाति । अथ सर्वथाऽपि विषयत्वनिषेधे सत्यविषयत्वमत्राऽ-पततीति मतम्, अविषयत्वधर्म्माङ्गीकारे विषयत्वस्य कोऽपराधः? नचाविषयत्वं चाद्ध्यस्तमिति युक्तं वक्तुम् । भावाभावरूपयोर्विरुद्धधर्म्मयोर्द्वयोरेकस्यैवैकत्राद्ध्याससिद्धेः । न हि रजतत्वाद्ध्यासाधिष्ठाने शुक्तिकादावरजतत्वाद्यद्ध्यासोऽद्ध्यवसीयते । अपरथा नेदं रजतमित्युदीयमानं मानमप्यमानतामानीयेत । न च वचनं सध्रीचीनम्– भावधर्म्माणामेव विषयत्वादीनामभावं ब्रह्मणि ब्रूमो न पुनरभावरूपाणामविषयत्वादीनामपीति । अविषयत्व-योगस्य भावधर्म्मस्याभ्युपगमात् । या पुनरविषयत्वयुक्तिरुक्ता साऽनुभवानुमानागमविरोधाद-मानम् । घटस्य विषयत्वे पटादिवदघटत्वप्रसङ्ग इतिवदित्यास्तामयमविषयत्वनिराकरण-विस्तारः ॥

नच वाच्यमद्वितीयत्वाद् ब्रह्मणस्तद्व्यतिरिक्तस्याज्ञानादेर्म्मिथ्यात्वमिति । प्रत्यक्षादिसिद्ध-वस्तुभेदस्यानपलपनीयत्वात् । नच सजातीयादिभेदराहित्यमद्वितीयत्वम्; किन्तु समाधिक-राहित्यमेव । तस्मादज्ञानसत्यत्वेऽप्यद्वैतहानिभयभरेण न मनः खेदनीयम् ॥

यदप्यवादि– अज्ञानस्य सत्यत्वे निवृत्त्ययोगान्मिथ्यैवाज्ञानमिति, तदपि न घटना-मञ्चति । सत्यस्यैव निवृत्त्युपपत्तेः । मिथ्याभूतस्य नित्यनिवृत्तत्वान्न कादाचित्क-निवृत्तिः । नच मिथ्याशब्दस्यार्त्थान्तरमभिधीयेत । सदसद्विलक्षणवचनस्य स्वव्याहतत्वे-नानुत्तरावसरदत्वात् ॥

यच्चोक्तम्– ब्रह्मव्यतिरिक्तस्य जीवस्यैवाभावाद् ब्रह्मैवाज्ञं भवेदिति, तदपि भेदविद्वेषदोष-विषदूषितत्वात् प्रमुषितशेमुषीगुणोन्मेषैरभिलषितमिति मनीषिणो मन्यन्ते ॥

जिज्ञासासमनन्तरं समुद्भूतं भगवतः सम्यग्दर्शनं साक्षात्कारः । तेन सञ्जातप्रसादेन परमपुरुषेणानुगृहीतः । संसारहेतुकर्मबन्धविधुरोऽयं भूयादिति प्रसादः । एनमुद्धरिष्यामीत्यनुग्रहः । दोषबुद्धिविरहः प्रसादः । उद्दिधीर्षाऽनुग्रह इत्येतत् । अथवा सम्यग्दर्शनेन सञ्जातमनःप्रसादो जीवः । क्वचित् '–सञ्जातप्रसादपरपुरुषानुगृहीतः' इति समस्तं पठ्यते ॥

'प्रसादे सर्वदुःखानां हानिरस्योपजायते ।

'प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति'(भ.गी.२.६४) इति हि भगवद्वचनम् ॥

स्वाच्छ्यं प्रसादः । 'प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः' इति च भाष्ये ॥

**अन्वाख्यातमङ्गीकृतमेव** स्यात् । अविषयत्वसाधकवचनविषयत्वाङ्गीकारात् । विषयत्वनिरासकवचनविषयत्वाङ्गीकाराच्च । **अन्यतरं पक्षम्,** अविषयत्वप्रतिपादनप्रयासे न ब्रह्म विषय इति पक्षम् । तर्हि पुनर्ब्रह्मणो विषयत्वमेवावधृतं भवति । यतः विषयत्वोपपादकान् पुरुषान् प्रत्यपि मौनमेव ते प्रत्याख्यानं स्यात् । यदि मुखं व्यादत्से– ब्रह्मणो विषयत्वं न शक्यं वक्तुमिति हता ते प्रतिज्ञा । व्याहतिशिरोमणिरयमुन्मत्त इति प्रतिपक्षिभिरुपेक्ष्यसे । तदिदमाह– **स्वव्याहतिरव्याहतेति** । **अव्याहता** निरन्तरा । स्वमूलोच्छेदिवचनं जातिः । अवाच्यं ब्रह्मेति, अतत्वावेदका वेदा इति । तदुक्तम्– 'जनकस्यात्ययो जातिः' इति । तदिदमनोकहशाखाशिरोऽधिष्ठाय तन्मूलकर्तनम् । शेखरः शिरोभूषणं माल्यम् ॥

ननु ब्रह्म सर्वात्मना विषयत्वशून्यं निर्धर्मकत्वादिति स्यादविषयत्वमिति । तर्ह्यविषयत्वं धर्ममङ्गीकरोषि । मृतस्ते हेतुर्निर्धर्मकत्वम् । कथं स ते साध्यं जीवयेत्? यद्यविषयत्वं नाम धर्ममङ्गीकरोषि किमपराद्धं विषयत्वेन? तदप्यङ्गीक्रियताम् । नन्वविषयत्वमपि न वस्तुतो ब्रह्मण्यस्ति । किन्तु शुक्तिकायामिव रजतम्, अविषयत्वमप्यध्यस्तम् । भ्रमेणैव सर्वोऽपि व्यवहारः प्रवर्तते । नैतदपि युक्तम् । विरुद्धयोर्द्वयोरेकस्यैवाध्यासः शक्यसम्भवः । यदि शुक्तिकायां रजतत्वमारोपितम्, तर्ह्यरजतत्वमनारोपितं तथ्यमित्यायातम् । एवं यद्यविषयत्वमध्यस्तम्, विषयत्वमनारोपितं तथ्यमित्यायातम् । नहि 'इदं रजतम्' इतिवत् नेदं रजतमित्यपि भ्रम इत्यनुन्मत्तो वक्ति ॥

**'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्', 'द्वा सुपर्णा–' इत्यादिश्रुतेर्जीवब्रह्मभेदावगमात् । शकुनिसूत्रादिदृष्टान्तनवकेन 'अतत् त्वमस्यतत् त्वमसि' इति तत्तद्भ्रमापनोदेन नवकृत्वः सतात्पर्य्यं भेदोपदेशाच्च ॥**

**अथोच्येत– जीवो ब्रह्म भवितुमर्हति, चेतनत्वाद् ब्रह्मवदिति; तदनुभवादिविरोधात् कालात्ययापदिष्टम् । तस्मादस्ति ब्रह्मव्यतिरिक्तो जीवः । तस्य चाज्ञानिनो जिज्ञासया विज्ञायमाने सर्वज्ञे हरावज्ञाननिवृत्तिः, परमसुखावाप्तिरिति सकलमनाकुलम् । अतः कर्त्तव्या**

---

ननु निर्धर्मकत्वमिति भावधर्मविरह एव । तेन विषयत्वं नाम भावधर्मो निवार्यते । अभावधर्माः स्युरेव ब्रह्मणि । तथाह्याचक्षते– 'अनृतजडविरोधिरूपम्–' इत्यादि । तेनाविषयत्वं वास्तवमेव ब्रह्मणि स्यात् । भणितिभङ्गीभेदोऽयम् । भावत्वमभावत्वमिति न प्रमेयभेदः । ब्राह्मणो न हन्तव्य इत्युच्यते । अत्र हननं निषिध्यताम्, अहननं वा विधीयताम् । कोऽनयोर्विशेषः । एवं विषयत्वं निषिध्यत इत्याह । अविषयत्वाभावो निषिध्यत इत्येव तदाह । एवं विषयत्वाभावरूपो धर्मो भगवत्यङ्गीक्रियत इत्याह । अविषयत्वाख्यधर्मवान् भगवानित्येव तदाह । तदाहुः–'देहाभावश्च भस्मता' इति । ननु विषयत्वे दूषणमुक्तम्– विषयत्वे तु घटादिवदब्रह्मत्वप्रसङ्ग इति । तदेतदाभाससमानयोगक्षेममिति परिहसति– **घटस्येत्यादि** ॥

**अद्वैतहानिभयभरेण** । ब्रह्मणोऽद्वितीयत्वहानिभयभरेणेत्यर्थः । नन्वसत एव नित्यनिवृत्तत्वम् । न वयं मिथ्यात्वमसत्त्वं ब्रूमः । किन्तु सदसद्विलक्षणत्वमिति प्रत्यवतिष्ठमानं प्रत्याह– **नच मिथ्याशब्दस्यार्थान्तरमभिधीयेतेति** । सदसद्विलक्षणत्वरूप**मर्थान्तरम्** । अप्रसिद्धं स्वकपोलकल्पितं स्वव्याहतं चेति मायावादिनः स्वसमर्थनार्थं नावसरं ददातीदृशः प्रलाप इति ॥

**भेदविद्वेषेति** । भेदे यो विद्वेषो नाम दोषस्तदेव विषम् तेन दूषितत्वात्, विषपानेनेव विगलितप्रज्ञतयाऽपगतप्रज्ञाख्यगुणविकासैः । विद्वेषदोषो हि प्रज्ञागुणमपजहार । तेनायं न प्रज्ञानां वादः, किन्तु केवलं प्रज्ञावाद इत्यभिज्ञा मन्यन्ते । तेन कपिचापलमेतदित्यनुचिकम्पिषन्ते । ते प्रत्यवस्थातुमपि न योग्या इत्यर्थः । बालिश्यं हि न प्रत्यवस्थानमपेक्षते ॥

ब्रह्मजिज्ञासा । तदुपन्यस्तो विषयाद्यभावदोषस्तत्पक्ष एवाकर्त्तव्यतां विधत्ते । नास्मत्पक्षं कटाक्षेणापि वीक्षितुं क्षमते ॥

नच तस्य दुर्घटाऽपि जिज्ञासाऽऽरम्भणीया । अवास्तवत्वप्रसङ्गात् । ननु हन्त इदमियन्तं कालं न जानीषे यदिह वयमिदमखिलमत एव दुर्घटत्वादविद्यामयं प्रतिपद्यामह इति । तत्र पृच्छामः । किमेषा भाषिता युक्तिः सुघटा, किंवा दुर्घटेति । न तावत् सुघटता जाघटीति; सत्यत्वप्रसङ्गादात्मवत् । सुघटस्यापि मिथ्यात्वोररीकारे, आत्मनोऽपि मिथ्यात्वमनिवारितमापतेत् । भेदप्रपञ्चदौर्घट्यापादनायासश्च व्यर्थः स्यात् । सौघट्येऽपि

### कालात्ययापदिष्टशब्दार्थः

अथापि 'तत् त्वमसि' इत्येव प्रतृण्णमिति विभ्रान्ताः, अग्निर्माणवक इत्यादिलौकिकप्रयोगतोऽप्यनधिगतभाषाशास्त्रा अनुमिमते– **जीवो ब्रह्म भवितुमर्हति चेतनत्वाद् ब्रह्मवदिति** । मृत्युना केशेषु गृहीतोऽपि यद् वदति अहं कालातीत इति तत् **कालात्ययापदिष्टम्** । यदाहुः–

'अहन्यहनि भूतानि गमिष्यन्ति यमालयम् ।
'शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम्' इति ॥

बाधितमित्येतत् । आहुश्च गौतममतानुयायिनः– 'क्रमप्राप्तमतीतकालं लक्षयति । अतीतकालस्य समानार्थकत्वात् कालातीतशब्देनोक्तकालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रत्युक्तो हेतुः । साध्याभावनिर्णये साधनासम्भवादयमेव बाधितसाध्यक इति गीयते' इति । **अनुभवादिविरोधादिति** । आदिना 'द्वा सुपर्णा–' इत्यादिश्रुतिविरोधात्, वह्निरनुष्णो भवितुमर्हति द्रव्यत्वात् सलिलवत्, वन्ध्या माता भवितुमर्हति महिळात्वादित्यादिप्रत्यनुमानविरोधाच्च ॥

ननु जिज्ञासा किलाविद्याकार्यम् । नहि विद्वान् जिज्ञासते । अविद्या दुर्घटेति प्रत्यपीपदाम । तेन जिज्ञासाऽपि दुर्घटा, अविद्याकार्यत्वात् । यद्दुर्घटं तदवास्तवम् । तेन जिज्ञासाऽप्यवास्तवी भवितुमर्हति । अवास्तवमनारम्भणीयं मन्यन्ते तत्ववादिनः । ततश्चैवं प्रत्यवस्थीयते– जिज्ञासा अनारम्भणीया अवास्तवत्वादिति । तदा किं ब्रूषे? आह– **तत्र पृच्छामः** । एतावता शब्दजालेन या प्रलपिता युक्तिमाला सा तवैव गलपाशायते विकल्पासहत्वादिति दर्शयति– **किमेषा भाषितेत्यादि** । **व्यर्थः स्यादिति** । भेदप्रपञ्चवैतथ्यसाधनाय किल महताऽऽयासेन दौर्घट्यं साधितम् ॥

वैतथ्यसौलभ्यात् । अथोक्तदोषपरिजिहीर्षया मिथ्यात्वसाधने युक्तिर्दुर्घटेति मन्वीत, तर्हि न सा तत् साधयेत्; तत्साधने दुर्घटत्वात् । को नु खलु लोके घटनापरपर्य्यायां युक्तिं निजामपेतत्रपो दुर्घटां ब्रुवीत स्वव्याघातध्वजधरमेनमेकमृते? उक्तन्यायेन मिथ्यात्वमपि जगतः सुघटं चेन्न कल्पनीयम् । दुर्घटं चेत् तदा तस्य सत्यत्वमेव । तस्मादस्माकमेव जिज्ञासाऽऽरम्भणीयेति सिद्धम् ॥ * ॥

इदमिदानीं चिन्त्यते– किं तद् ब्रह्म निर्गुणमुत सगुणमिति । भेदे चाभेदे च गुण-गुणिभावस्यायुक्तत्वात् भेदाभेदपक्षस्य स्वव्याहतत्वात्, 'केवलो निर्गुणश्च' इति श्रुतेश्च निर्गुणमेव तदिति केचिदूचिरे । तत्र सूत्रमवतारयति– **जन्माद्यस्य यत** इति । यतोऽस्य जगतो जन्मस्थितिनाशनियमनादयः तत् स्रष्टृपातृसंहर्तृनियन्तृत्वादिगुणगणलक्षितं ब्रह्म जिज्ञास्यमिति । 'यतो वा इमानि भूतानि जायन्ते', 'यो नः पिता जनिता यो विधाता' इत्यादिश्रुतेः । गुणगुणिभावस्त्वेकत्रैव ब्रह्मणि विशेषाद् युज्यते । भेदभेदिभाववत्

---

**उक्तदोषपरिजिहीर्षयेति** । सुघटस्यापि मिथ्यात्वोररीकारे आत्मनोऽपि मिथ्यात्वमनिवारितमापते-दित्युक्तदोषपरिजिहीर्षया मिथ्यात्वसाधनी युक्तिरपि दुर्घटेति वदाम इति चेत् तर्हि **सा युक्तिर्न** सिषाधयिषितं **साधयेत्** । **दुर्घटत्वात्** । यदि साधयेत् तर्हि सुघटैव स्यात् । तस्मात् हास्यास्पदं तन्मतमिति पूर्वस्वमतं परिहसन्नुपसंहरति– **को नु खल्विति** । **तस्मादस्माकमेव जिज्ञासाऽऽरम्भणीया** नाभेदवादिना**मिति सिद्धम्** ॥ * ॥

अथ द्वितीयसूत्रमवतारयति– **इदमिदानीं चिन्त्यते** । **भेदे चेति** । भेदे सति गुणानां गुणिनश्च सम्बन्धो वक्तव्यः । स तु दुर्घट इति परेषां मतम् । **गुणगणलक्षितमिति** । गुणगणस्वरूपमित्यर्थः । 'लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यते' इति हि भागवततात्पर्यनिर्णये (३.११.१०) । यदि स्वरूपलक्षणं कथं तर्हि गुणगुणिभावः? नहि स्वरूपमेव स्वरूपवद् भवति । सर्वापदुत्तरणदक्षो विशेष एव तवोत्तरं ददातीत्याह– **गुणगुणिभावस्त्वेकत्रैव ब्रह्मणि विशेषाद् युज्यत** इति । घटभेदो घटस्वरूपमेव । भेदवांश्च घटः । तस्माद् भवति स्वरूपमेव स्वरूपवत् । अवश्यं चैतदभ्युपेयं मायिभिरपि सत्यज्ञानादि-पदानामपुनरुक्ततायै ॥

स्वरूपस्वरूपिभाववच्च । नच ब्रह्मणो निर्विशेषत्वं वाच्यम् । अखण्डवाक्यार्थखण्डन-प्रसङ्गात् । सविशेषत्व एव हि सत्यज्ञानादिपदानामपुनरुक्त्या ब्रह्मणि प्रवृत्तिः सम्भवति, अपरथा ब्रह्मपदेनैव स्वरूपसिद्धेः, पदान्तराणां वैयर्थ्यं प्रसज्येत । सत्यादिशब्दाः पर्य्यायाश्च स्युः, निर्विशेषैकार्थवृत्तित्वात् । निर्विशेषं ब्रह्मेति वचनादेव सविशेषत्वं प्राप्तम्; निर्विशेषत्वविशेषाभ्युपगमात् । न च वाच्यं निर्विशेषत्वं नाम ब्रह्मस्वरूपमेव केवलम्, न विशेष इति । तथा सति, ब्रह्मशब्दावृत्तिवन्निर्विशेषं ब्रह्मेति पर्यायोक्तिः स्यात् । नच तथा प्रसिद्धिः । तस्माद् 'अहं मौनी' इतिवादिवदयमहो मोहान्मुहुर्म्मुहुरपि तामेव जातिं निर्विशङ्कमङ्कमारोपयति, यामिह तज्जन्मलक्षणस्थितिविशेषज्ञा दोषज्ञा दोषशरीरां दूरादेव परिहरन्ति । तस्मादुक्तयुक्तिबलेन सविशेषत्वाद् ब्रह्मणो गुणवत्त्ववाद एव गुणवान् ।

या चोपन्यस्ता निर्गुणत्वे श्रुतिः, सा प्राकृतगुणविरहार्था । तस्मात् प्रथमसूत्रे जिज्ञास्यत्वेन प्रतिज्ञातं ब्रह्म स्रष्टृत्वादिगुणगणलक्षितमनेन सूत्रेण(उक्तम्)इत्यनवद्यम् ॥ * ॥

जगत्कारणं ब्रह्म विषयः । तत्किं तत्वमुतातत्वमिति संशय्यते । 'न तस्य कार्य्यं करणं च विद्यते', 'निष्कलं निष्क्रियं शान्तम्', 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतेर्न तत्वस्य

---

**तज्जन्मलक्षणस्थितिविशेषज्ञाः** । जनकस्य मूलप्रमाणस्यात्ययो जातिरिति हि तल्लक्षणम् । तदिदं पितरं व्याहत्य पुत्रजननम् । शाखामधिष्ठाय तन्मूलच्छेदः । स्वसमयविरोधे स्ववचनविरोधे चावस्थान-मस्याः । अत एव **दोषशरीराम्**, सर्वथा दोषरूपाम् । यस्याः शरीरे आलर्कं विषमिव दोष एव सर्वतः प्रसृतः । अत एव जातिमालर्कमिव **विषं दोषज्ञा दूरादेव** परिहरन्ति ॥ * ॥

अथ तृतीयं सूत्रमवतारयति– **जगत्कारणमित्यादिना** । शुद्धं ब्रह्मैव तत्वम् । जगत्कारणं तु शबलम् । तस्मादतत्वम् । तत्प्रतिपादकानि च वाक्यान्यतत्वावेदकानि । कार्यापेक्षं करणापेक्षं च कारणं भवति । मृदा घटं कुर्वन् हि कुलालो भवति । शुद्धं कार्येण करणेन क्रियया च शून्यम् । तथाहि श्रुतिः– **'न तस्य कार्यं करणं च विद्यते'** इति । तेन कार्यकरणयोस्तस्य नापेक्षेति स्थितम् । **'निष्कलं निष्क्रियं शान्तम्'** इति निष्क्रियत्वम् । **'अप्राणो ह्यमनाः शुभ्रः'** (आथ. १.३.२) इत्यकर्तृत्वं

कार्य्यकरणबुद्धिः । कर्त्तृत्वाद्यभावात् । कारणस्य च तदपेक्षणान्न जगत्कारणं तत्वमिति पूर्वपक्षे प्राप्ते प्रतिविधीयते– **शास्त्रयोनित्वादिति** । जगत्कारणं ब्रह्म तत्वमेव । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः', 'स कारणं कारणाधिपाधिपः', 'यदा पश्यः पश्यते रुग्मवर्ण्णं कर्त्तारम्', 'स इमांल्लोकानसृजत', 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः–' इत्यादिशास्त्रगम्यत्वात् तस्य । न खलु शास्त्रगम्यमतत्वं वक्तुं पार्य्यते ॥

नच वाच्यमेवंवादिवाक्यं वैदिकमपि द्वैतगोचरत्वादतत्वावेदकमिति । शास्त्रस्य तत्र तात्पर्य्यावगमात् । सकलजगत्सम्भवसंरक्षणसंहारैककर्त्तृत्वेनाखिलोत्कर्षवति वासुदेवे तात्पर्य्यं पर्य्यवसीयते वेदानाम्–

'सर्वोत्कर्षे देवदेवस्य विष्णोर्म्महातात्पर्य्यं नैव चान्यत्र सत्यम्' ।
'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इत्यादिश्रुतिस्मृतिभ्यः ॥

वेदतात्पर्य्यार्त्थो हि तत्वं नाम । विप्रतिषिद्धं चेदमागमः प्रमाणमतत्वावेदकमिति । प्राकृतकार्य्यकरणाद्यभावेऽपि न ब्रह्मणः कारणत्वविरोधः । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'यः सर्वज्ञः सर्ववित्–' इत्यादिश्रुतेः । 'निष्कलं निष्क्रियं शान्तम्–' इत्यादिश्रुतिश्च न विरुद्ध्यते । कलारहितत्वादक्रियमाणत्वाच्च ब्रह्मणः । तस्माज्जगत्कारणं तत्वमेवेति स्थितम् ॥ * ॥

---

शुद्धत्वं च । जानाति प्रथमम् । तत इच्छति । ततः करोति । अमनस्त्वादिच्छाभावः अप्राणत्वादक्रियत्वं च ज्ञायते । **कार्यकरणबुद्धिः** । कार्यस्य करणे या बुद्धिः । चिकीर्षेत्यर्थः । 'एतस्माज्जायते–' इत्युत्तरवाक्ये कर्तृत्वं श्रूयते । न दोषः । यः शुद्धः तस्मादेव शबलत्वं प्राप्ताज्जायन्ते प्राणादय इत्यङ्गीकारात् । तस्माज्जगत्कारणमतत्वमेवेति प्रलपति प्रतिवादिनि **शास्त्रयोनित्वादित्याह** । शास्त्रतात्पर्यगम्यमतत्वमिति शास्त्रमतत्वावेदकं चेति विप्रतिषिद्धं वच इत्यर्थः । अतत्वावेदकमथापि प्रमाणमिति च ॥

जगत्कारणस्य तत्वभावप्रदर्शनेनैव तदेव शास्त्रगम्यमित्युपक्षिप्तम्। तत् स्पष्टमिदमिदानीमाचष्टे– **तत्तु समन्वयादिति** । 'द्वे वाव ब्रह्मणो रूपे, मूर्त्तं चामूर्त्तं च' इत्यादिश्रुतेर्म्मायाशबलं शुद्धं चेति द्विविधं ब्रह्म, विद्याऽविद्यावस्थाभेदेन । तदुभयमपि शास्त्रात् सिद्ध्यतीति प्राप्त आह– यज्जिज्ञास्यं जगत्कारणत्वलक्षणं तत्वभूतं ब्रह्म, तदेव सर्व्ववेदसमन्वयादवगम्यते । न हि मायाशबलं नामास्ति, प्रमाणाभावात्। नच मायिनामभिमता माया प्रमाणपद्धतिमध्यास्ते। या तु वैदिकपौराणिकवचनगृहीता माया, सा भगवदिच्छा। तथाचोक्तं स्कान्दे–

'महामायेत्यविद्येति नियतिर्म्मोहिनीति च ।
'प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कत्थ्यते' इति ॥

सा च ज्ञानरूपा– 'मायेति भगवत्प्रज्ञा प्रकृष्टं हि मयाभिधम्' इति वचनात् । नच सा मिथ्या, तदभिन्नत्वात् । न हि ब्रह्मणो ज्ञानेच्छादयस्तद्व्यतिरेकिणो भवितुमर्हन्ति । 'सोऽभिद्ध्या स जूतिः', 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः। या च कचिज्जगदुपादानात्मिका माया श्रूयते स्मर्य्यते वा साऽपि नानिर्वाच्या; प्रमाणाभावादेव । तस्मादनिर्वाच्यभूताया मायाया मनोरथमात्रत्वाद् गगननळिनसदृशं मायाशबलं ब्रह्म । नच ब्रह्मद्वयाभिधायकं वचनमुपलभामहे। यत्पुनरुपन्यस्तम्– 'द्वे वाव ब्रह्मणो रूपे' इत्यादि, तत्र मूर्त्तशब्दशब्दितं

---

नन्वथापि 'निष्कलं निष्क्रियम्' इति निरवकाशा श्रुतिः शुद्धस्य निष्क्रियत्वमवधारयति । नावधारयति। केनापि न क्रियत इति सावकाशत्वात्। स्वयं तु कलाकलापरहितः सर्वकलानियन्ता षोडशकलः पुरुष एव निष्कल उच्यते ॥ ✻ ॥

समन्वयसूत्रमवतारयति– **तत् स्पष्टमिदानीमाचष्ट** इति । **प्रकृष्टं हि मयाभिधम्** । प्रकृष्टस्य भगवत इयं प्रज्ञा मायेत्यर्थः। 'माया वयुनम्' इति ज्ञानपर्यायतयाऽभिदधति च। वय गतौ। उनन्। **सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द'** इत्युपरिष्टाद् भाष्ये (१.४.२५)। अभिध्या मायाप्रकृत्यादिपदैरभिधीयमाना इच्छा । **जूतिः** प्रेरणा । सर्वमिदं भगवत्स्वरूपमेवेत्यर्थः । स्फुटार्थं सूत्रविवरणम् ॥ ✻ ॥

तु पृथिव्यप्तेजः, अमूर्त्तं वाय्वन्तरिक्षम् । इह हि, हरहिरण्यगर्भहरिहयदहनपवनादिभिरमरवरैरहरहरतिमहीयमानमहिमा मुरमथनो रूप्यते । तस्मादस्येदमुभयमपि रूपमिति भण्यते, प्रतिमात्वेन । अपरथा, रूपशब्दोऽपार्त्थः स्यात् । अचेतनस्य ब्रह्मस्वरूपत्वासम्भवात् । तस्माच्छुद्धमेव ब्रह्म समन्वयावगम्यमिति सिद्धम् ॥ * ॥

अथोत्तराधिकरणे ब्रह्म विषयः । तद्धि पूर्वसूत्रे समन्वयगम्यत्वेन प्रतिज्ञातम् । तच्छब्दगोचरो वा नवेति सन्देहः । वादिविप्रतिपत्तिरेवात्रापि संशयकारणम् । केचिदशब्दगोचरं ब्रह्म ब्रुवन्ति । 'यतो वाचो निवर्त्तन्ते–', 'यद्वाचाऽनभ्युदितम्–' इत्यादीनि वाक्यान्यत्र प्रमाणम् । नच मुख्ये सम्भवत्यमुख्योऽर्त्थो ग्राह्यः । येनैषामुपनिषद्वाक्यानामन्यार्त्थं प्रतिपद्येमहि । न चान्योऽर्त्थः प्रतीतिपथमवतरति । न चैतावता ब्रह्मप्रतिपादकानां शब्दानामानर्त्थक्यप्रसङ्गः । लक्षणया हि वृत्त्या तत्प्रतिपादयन्ति वेदान्ताः । न च वचनीयं सम्भवति मुख्ये नामुख्यकल्पना न्याय्येति । असम्भवादेव ब्रह्मणि मुख्यवृत्तेः शब्दानाम् । षष्ठीगुणक्रियाजातिरूढयो हि शब्दप्रवृत्तिहेतवः । न च ता ब्रह्मण्युपलभ्यन्ते । न तावच्छष्ठी सम्भाव्यते । सम्बन्धे हि सा वरीवर्त्ति । तं च 'असङ्गो ह्ययं पुरुषः' इत्यादिकोपनिषदेव विरुणद्धि । 'केवलो निर्गुणश्च' इत्यादिवेदवादैर्न्निरस्तत्वात् समस्तगुणस्य गुणाभ्युपगमो

---

अथेक्षत्यधिकरणमुपस्थापयति– **अथोत्तराधिकरणे ब्रह्म विषय** इति । **षष्ठीगुणक्रियाजातिरूढयो हि शब्दप्रवृत्तिहेतव** इति । षष्ठीति सर्वकारकार्थसङ्ग्रहः । सम्बन्धसामान्ये षष्ठीमाचक्षते । यदाह जयादित्यः– 'बहवो हि षष्ठ्यर्थाः– स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः' इति । कर्तर्यपि षष्ठी भवति । कर्मणि करणेऽपि भवति । अधिकरणेऽपि । यथा राज्ञः पुरुषोऽयं दण्डी देवदत्त आगच्छतीति । राज्ञ इति षष्ठी । भृत्यत्वमधीनत्वं कर्मकरत्वं चेत्यादयः षष्ठ्यर्थाः । पुरुषत्वं जातिवचनम् । देवदत्त इति रूढं नाम । दण्डीति गुणवचनम् । आगच्छतीति क्रिया । एषु नैकोऽपि ब्रह्मणि सम्भवतीत्याह– **नच ता ब्रह्मण्युपलभ्यन्ते** ॥

न गुणमावहति । 'निष्कलं निष्क्रियम्' इति च क्रियाऽस्य निषिद्ध्यते । जातिस्तु बहुव्यक्तिनिष्ठा परमात्मन्यद्वितीये दूरतो निवारिता । सङ्केतकर्तॄणां बहुलप्रयोक्तॄणां चाभावाद् रूढिरपि नैनमारोढुमर्हति । अतो न शब्दवाच्यं ब्रह्मेत्येतं पक्षं प्रतिक्षेप्तुम्– **ईक्षतेर्नाशब्दमिति** भगवान् सूत्रकार आह ॥

'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते', 'यदैनमनुपश्यन्त्यात्मानं देवमञ्जसा', 'आत्मा वा अरे द्रष्टव्यः–' इत्यादिश्रुतेर्न ब्रह्मावाच्यं भवितुमर्हति । एषु हि वाक्येषु ब्रह्मविषयमीक्षणं प्रतीयते । नचाप्रत्यक्षस्य वस्तुन आगममन्तरेणेक्षणीयत्वं सम्भवति । औपनिषदत्वं च तस्यावगम्यते । 'सर्वे वेदाः–', 'वेदा ह्येवैनम्–' इत्यादिश्रुतिबलात् । अत ईक्षणीयत्वश्रवणाच्छब्दवाच्यमेव ब्रह्म ॥

'यतो वाचो निवर्त्तन्ते' इत्यादिश्रुतिबलादवाच्यत्वमुपपादितमिति चेद्, दुरुपपादमेवैतन्मन्यामहे । अवाच्यत्वादिशब्दोऽप्रसिद्धत्वादेव हि युज्यते । 'अप्रसिद्धेरवाच्यं तत्' इत्यादेः । अद्भुतमपि चावाच्यमिति लौकिका वदन्ति । तस्मादवाच्यत्वादिवचनानामेवमेवाभिसन्धिः । अन्यथा 'यतो वाचो निवर्त्तन्ते' इत्यत्र यत्पदाविषयत्वाद् ब्रह्मणः, तस्यावाच्यत्वं न

---

**सङ्केतकर्तॄणामिति** । तत्ववादिनोऽपि हि न रूढ्या ब्रह्मणि शब्दप्रवृत्तिमुशन्ति । 'यानि गौणानि नामानि–' इति सर्वेषामपि पदानां गौणत्वाङ्गीकारात् । नच निर्गुणे तदपि सम्भवतीति न तत्ववादिनामिष्टसिद्धिः ॥

**अन्यथेति** । **'यतो वाचो निवर्तन्ते'** इति कोऽर्थः? यतो ब्रह्मणो वाचो निवर्तन्त इति किल वक्तव्यम् । तेन यत इति ब्रह्मोक्त्वा तस्य वाच्यत्वनिषेधे स्वव्याहतिः स्यात् । यद्यवाच्यत्वं श्रुतिर्विवक्षति तदा न वच्मीत्येवोच्यात् । नतु यतो वाचो निवर्तन्त इति । तेनाप्रसिद्धत्वादद्भुतत्वाच्च साकल्येन वक्तुमशक्यत्वमेव श्रुत्यर्थ इत्यनिच्छताऽप्यभ्युपेयम् । स्वव्याहत्यादिरूपो निग्रह एव महान् ग्राहः तन्तुनागाख्यो मकरविशेषः । येन गृहीतस्य न निर्मोचनाशा । पृथुलवादकथाप्रपथ एव सागरः ।

वेदोदितं स्यात् । अपिच, ब्रह्मावाच्यमिति वदन् वादी, ब्रह्म वक्ति वा नवेति विकल्पयामः । यद्याद्यपक्षकक्षीकारः, तर्ह्यवाच्यत्वं विवदिषतोऽस्मदभिमतवाच्यत्वानुमोदनात् स्वव्याहत्यादिनिग्रहमहाग्राहग्रस्ततया पृथुलकथाप्रपथसागरे प्रमाणतर्कतदाभासवीचीतरङ्गमालाजालावलोळिते निमज्जतो वादिनो निर्ण्णयपारदर्शनं दुःशकं प्रसज्येत । अथ द्वितीये पक्षे पक्षपातं करोति, तदा कस्यावाच्यत्वमयं प्रतिजानीते? नह्यनभिधीयमानस्य धर्म्मिणो धर्म्मविधानमुपपद्यते । किञ्च ब्रह्मशब्दोऽपि लक्षयति केवलं न पुनर्ब्रवीतीति चेत्, किं तल्लक्ष्यमिति वक्तव्यम् । येनकेनापि वचनेनाभिधीयमाने, नावाच्यत्वं स्यात् । अतो 'माता मे वन्ध्या' इतिवदत्यन्तविरुद्धोऽयमीदृशः प्रलापः ॥

यदपीदमुदितम्– षष्ठ्यादीनां मुख्यवृत्तिहेतूनामभावादशब्दं ब्रह्मेति, तदपि निखिलवेदवाक्यसमन्वयपरिनिर्ण्णीयमानपरमपुरुषगतगुरुतरगुणगणागण्यताकर्ण्णनं कर्ण्णशूलमिव दुःसहमसहमानानां स्वमतमानदुर्बलानां बालिशानामिवाऽक्रोशमात्रमुत्पश्यामः । 'यः सर्वज्ञः–','एष सर्वेश्वर एष भूताधिपतिः', 'गुणाः श्रुताः सुविरुद्धाश्च देवे–','अथैनमाहुस्सत्यकर्म्मेति सत्यं ह्येवेदं विश्वमसौ सृजते', 'नित्यो नित्यानां चेतनश्चेतनानाम्–', 'कश्छन्दसां योगमावेद धीरः–', 'वचसां वाच्यमुत्तमम्' इत्यादिश्रुतिस्मृतिभ्यः सम्बन्ध-

---

क्षुद्रस्तरङ्गो वीची । महती वीची तरङ्गः । तत्ववादिनां सदागमास्तर्काश्च तरङ्गाः । मायिनां तदाभासा वीचयः । अल्पाच्कमिति वीचीति पूर्वमुक्तम् । अवलोळितः व्यालोळः । लुड विलोडने ॥

**निखिलेत्यादि** । निखिलवेदवाक्यानां समन्वयेन परिनिर्णीयमाना परमपुरुषगतानां गुरुतरगुणगणानामगण्यता । तस्या आकर्णनम् । आक्रोशः दुराग्रहगर्भः प्रलापः । **यः सर्वज्ञ** इत्यादि । सर्वज्ञ इति ज्ञानसम्बन्धः । सर्वेश्वरत्वादिर्गुणः । **सत्यकर्मेति** क्रिया । **विश्वमसौ सृजत** इति स्फुटम् । नित्यत्वचेतनत्वादिर्जातिः । **कश्छन्दसां योगमावेदेति** योगवृत्तिः । **'वचसां वाच्यमुत्तमम्'** इति रूढिः । रूढिरेव हि वाच्यस्योत्तमत्वं नाम । भगवति योगमूलाऽन्वर्था विदुषां रूढिरित्युत्तमोत्तमं वाच्यत्वं तस्य । अत एव **'वचसां वाच्यमुत्तमम्'** इत्युक्तम् ॥

गुणक्रियाजातियोगरूढिसम्भवात् । नच वेदस्य मिथ्यावादित्वम् । तत्त्वमसिवाक्यस्यापि तथात्वप्रसङ्गात् । अपिच षष्ठीगुणक्रियाजातिरूढयो हि शब्दवृत्तिहेतवः । तेषामन्यतमोऽपि नाऽत्मनीति चेन्नैष लक्ष्यः । नहि सम्बन्धादिभिर्विना लक्षणावृत्तिर्दृष्टा । नचावाच्यस्य लक्ष्यत्वम् । माधुर्य्यविशेषोऽपि नावाच्यो लक्ष्यते । माधुर्य्यविशेषशब्दवाच्यत्वात् । विविच्यानभिधानं तु गुणविवेकापरिज्ञाननिबन्धनमेव, न पुनरवाच्यत्वात् । वदन्ति च तद्विदो माधुर्य्यविशेषान् विविच्य–

'विशदं क्षीरमाधुर्य्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
'गुडस्य पनसादीनां निर्हारीत्यभिधीयते' इत्यादि सूदशास्त्रे ॥

तस्मान्नावाच्यस्य लक्ष्यत्वमिति सिद्धम् ॥ ✻ ॥

यदपीदमधिकरणं साङ्ख्यपरिकल्पितप्रधानाशब्दत्वनिराकरणपरमपरे मन्यन्ते । तदपि मुखतः पौर्वापर्य्यानुसन्धानाच्च सुप्रतीतं स्वमतनिरासमात्रपरत्वं सूत्राणां संवरीतुमुत्प्रेक्षितम्; न पुनः सूत्रतात्पर्य्यपर्य्यालोचनयेति न बहुमन्यामहे ॥

नहि साङ्ख्यानां प्रधानस्याशब्दत्वं सिद्धम् । सिद्धवदेव च तैः 'अशब्दं हि तत्' इति हेतुत्वेनोच्यते । अतः प्रकृताननुसारित्वाच्चायं प्रलापो महोन्मत्तानामिवावभाति । प्रधाने

---

**क्षीरमाधुर्यं विशदमित्यभिधीयते** । **आज्यस्य** माधुर्यं **स्थिरमित्यभिधीयते** । **गुडस्य** माधुर्यं तीक्ष्णं **तीक्ष्णकं** वा । पनसादिफलानां माधुर्यं **निर्हारीत्यभिधीयते** । ननु तर्हि फलविशेषमाधुर्यस्य न विविच्याभिधानम् । फलविशेषमाधुर्यमित्येवाभिधीयते । चौतं निर्हारि पानसं निर्हारीत्यादि च । **तस्मान्न** क्वापि **अवाच्यस्य लक्ष्यत्वमिति सिद्धम्** ॥

**न बहुमन्यामहे** । न तन्निराकरणाय बहु प्रयतितव्यमित्यर्थः । अनादरणमेव तस्यौषधम् ।

यतः प्रधानस्याशब्दत्वं न साङ्ख्यसमयसिद्धम्, **अतः** कारणात्, अस्य प्रमेयस्य **प्रकृताननुसारित्वाच्च** कारणात् ॥

त्वसमन्वय उपरिष्टात् प्रतिपादयिष्यते सूत्रकारेणैव–'ईक्षतिकर्म्मव्यपदेशात् सः', 'नच स्मार्त्तम्–', 'अनुमानिकम्–' इत्यादिसूत्रेषु । तस्मात् 'ईक्षतेर्न्नाशब्दम्' इति ब्रह्मणोऽशब्दत्वमेव निराक्रियते ॥

इतश्च तदेवाभ्युपगन्तव्यम् । अन्वयो हि नाम शब्दानां मुख्यवृत्तिः । समन्वयस्तु परममुख्य-वृत्तिः । तत्र शब्दानां ब्रह्मण्यनन्वयवादिनोऽन्वयमात्रप्रतिज्ञानेऽपि संरम्भमारभन्ते । किम्पुनः समन्वयप्रतिज्ञायाम्? अतः 'तत्तु समन्वयात्' इति समन्वयं सूत्रितमाकर्ण्य ब्रह्मावाच्यत्ववादिनः प्रत्यवतिष्ठन्ते । यावत् तदभिमतं ब्रह्मणोऽशब्दत्वं न निराकृतम्, तावदन्वयोऽपि दूरस्थः । किमुत पुनः समन्वयः सन्निधीयेत । अतो मुख्यत एव तन्मतव्युदासेन समन्वयप्राप्त्यसम्भवाशङ्कामुच्छिनत्त्यनेनाधिकरणेनेति श्लिष्यते ॥ * ॥

आनन्दमयाधिकरणे तु, अन्नमयाद्यानन्दमयान्तमब्रह्मरूपं कोशपञ्चकमत्यन्तहेयमुपन्य-स्यन्नानन्दमयस्य ब्रह्मत्वमुपदिदिक्षूणि 'आनन्दमयोऽभ्यासात्' इत्यादीनि सूत्राणि स्वयमेव मायी पूर्वपक्षीचकार । अनयैव दिशा उत्तरसूत्रेष्वपि सुखतरमूहनीयोऽयं न्यायः । प्रकट-भावाद् ग्रन्थबाहुल्याच्चैवमुपरम्यते ॥

**॥ इति ईक्षत्यधिकरणम् ॥ * ॥**

---

'**ईक्षतिकर्मव्यपदेशात् सः**' (१.३.१३) इत्युत्तराधिकरणेनाक्षरशः पुनरुक्तं चैतत् । '**नच स्मार्तमतद्धर्माभिलापात्**' (१.२.१९) इति, '**आनुमानिकमप्येकेषामिति चेन्न शरीररूपक-विन्यस्तगृहीतेर्दर्शयति च**' (१.४.१) इति चार्थतः ॥ * ॥

**आनन्दमयाधिकरणे** तु स्फुटं निर्लज्जमुत्सूत्रं भाष्यकरणमित्याह– **स्वयमेव मायी पूर्वपक्षीचका-रेति** । तथा हि तद्भाष्यव्याजे ग्रन्थे– 'तस्मादन्नमयादिष्विवाऽऽनन्दमयेऽपि विकारार्थ एव मयड् विज्ञेयो न प्राचुर्यार्थः' इति । 'तस्मादानन्दमयविकारावयवो ब्रह्मेति तदवयवयोग्यानन्दमयो विकार इह नोपास्यत्वेन विवक्षितः । किन्तु स्वप्रधानमिह ब्रह्म पुच्छं ज्ञेयत्वेनेति सिद्धम्' इति च भामत्यां वाचस्पतिमिश्रः ॥ * ॥

**॥ इति पञ्चममीक्षत्यधिकरणम् ॥ * ॥**

—०—

## षष्ठमधिकरणम्
## (आनन्दमयाधिकरणम्)
## (१.१.१२-१९.)

तमेव समन्वयं प्रकटयति 'आनन्दमयोऽभ्यासात्' इत्यादिना समस्तेनाध्यायेन, प्रायेण, अन्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे ॥

---

### तत्वप्रदीपः

**तमेवे**त्यादिनोत्तराधिकरणजातस्य सङ्गतिं दर्शयति । समन्वयसूत्रेण यः सामान्योक्तः समन्वयः, **तमेव** विशेषतः पृथक्पृथक् कथयतीति । ब्रह्मविचारे च प्रथमप्रतिज्ञाते प्रत्यधिकरणं सङ्गतिः समस्ति ॥

---

### तत्वचन्द्रिका

अस्ति सङ्गतिः पूर्वाधिकरणैः पञ्चभिरपि । अथापि समन्वयाध्यायोऽयमिति मुखतः समन्वयसूत्रेण सङ्गतिमाह भाष्यकारः– **तमेव समन्वयमि**ति । तमेवेति कमेव? आह– **समन्वयसूत्रेणे**त्यादि । तत्र यः समन्वय उक्तः **तमेव समन्वयं** समस्तवेदपदवर्णानामुपक्रमादिभिर्मुख्यतो विष्णुपरत्वं **प्रकटयति** पृथक्पृथक् विविच्य कथयति भगवान् सूत्रकार इति ॥

### पक्षान्तरनिरासः

चतुःसूत्री पीठिका । ईक्षत्यधिकरणतः समन्वयाध्यायारम्भ इति रामानुजीयाः । तथाह्याचक्षते– 'शास्त्रारम्भं चतुःसूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः' (अधि.सारावली.२२) इति, 'अद्धा निर्धार्यतेऽ-

तश्चतुरधिकरणी ब्रह्मचिन्तोद्यमार्था' (२५) इति च । प्रथममेकमेव पीठिकासूत्रम् । द्वितीयसूत्रादेव शास्त्रारम्भ इति तत्पक्षीया एव केचित् । तदप्युक्तं तत्रैव- 'शास्त्रारम्भार्थमेकं त्रितयमिह परं शास्त्र-मित्याहुरेके' (२४) इति । स्वपक्षीयाणामप्येवं विकल्पना मा भूदिति भाष्यकारः स्फुटमाह- **आनन्द-मयोऽभ्यासादित्यादिनाऽध्यायेनेति** । इदमुक्तं भवति । नहि पञ्चस्वधिकरणेषु कस्यापि नाम्नो विशिष्य समन्वयः श्रूयते । तस्मात् पञ्चाधिकरणीयमध्यायपीठिकेति स्फुटम् । तद् यथाश्रुतमङ्गीक्रियताम् । किमनया वृथाजल्पमूलया विकल्पनयेति ॥

## चतुर्थपादार्थविचारः

तत्रापि चतुर्थे पादे प्रधानस्य श्रौतत्वमेव निराक्रियते इति परे मन्यन्ते । तथाहि मायावादभाष्यम्- 'यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धम् । कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाण-त्वात् । अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते । तद् यावत् तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते तावत् सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभवेत् । अतस्तेषामन्यपरत्वं दर्शयितुं परः सन्दर्भः प्रवर्तते' इति । तथैव च रामानुजीयं भाष्यं चतुर्थपादार्थसङ्ग्रहमाह- 'इदानीं कपिलतन्त्रसिद्धान्यन्यात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधान-कारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद् वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते' इति । एतेनान्येऽपि व्याख्याताः । सर्वेषामत्रैककण्ठ्यम् । तन्निरा-करणायोक्तं **समस्तेनाध्यायेनेति** । यदि प्रधानस्याशब्दत्वनिराकरणायेमानि सूत्राणि, तर्हीक्षत्यधिकरणा-नन्तर्यं स्यात् । किं पादत्रयव्यवधानेन । यदि प्रधानकारणत्वप्रतिपादनच्छायानुसारिश्रुतिविरोधपरिहारार्थोऽयं पादः, अहो तर्हि द्वितीयाध्यायान्तर्भावः स्यात् । तस्मादन्यत्रैव प्रसिद्धानां नाम्नां समन्वयः पादार्थ इत्येव साधु वचः ॥

एतेनैव पञ्चानामप्यधिकरणानां समन्वयाङ्गतया सङ्गतिः सूचिता । तामेव स्फुटमाह- **ब्रह्मविचारे चेत्यादिना** । प्रथमसूत्रेण ब्रह्मविचारः कर्तव्य इति प्रत्यज्ञायि । स एव ब्रह्मविचारः सर्ववेदानां भगवति समन्वयेन प्रकटमुपस्थाप्यते समस्तेन समन्वयाध्यायेनेति प्रत्यधिकरणं प्रथमसूत्रेण सङ्गतिः । एवं

जन्मादिसूत्रेण च तत्र ब्रह्मणोऽनन्तगुणत्वप्रदर्शनात्, तेषां च गुणानामुत्तरसूत्रैरनुवर्ण्यमानत्वात् । शास्त्रयोनिसूत्रेणापि तत्रतत्र शास्त्रयोनित्वप्रसाधकानामधिकरणानामस्त्येव सङ्गतिः । **समस्तेनाध्यायेन समन्वयं** वक्ति । **प्रायेणे**ति देवताधिकरणादौ प्रासङ्गिकाधिकारादिविचारात्, तत्र गत्यन्तराभावात् । **प्रायेणान्यत्र प्रसिद्धानां शब्दानामिति** च सम्बन्धः ॥

---

द्वितीयसूत्रेण 'कर्तृत्वात् सगुणं ब्रह्म' इति ब्रह्मणो गुणपूर्णत्वमुदितम् । समस्तेन चाध्यायेन गुणपूर्णतैवानुवर्ण्यते सर्वशब्दवाच्यत्वेन सर्वगुणोदीर्णं ब्रह्मेति । तृतीयसूत्रेण च ब्रह्मणः सदागमैकविज्ञेयत्वमुच्यते । तदेव समस्तेनाध्यायेन स्फुटीक्रियते । समन्वयसूत्रेण च सङ्गतिरुक्ता भाष्य एव । सर्वशब्दावाच्यस्य कथं शास्त्रयोनित्वम्, कथन्तरां सर्वशब्दसमन्वय इति शङ्कापनोदाय पञ्चममधिकरणमिति तत्प्रपञ्च एवायमध्याय इति पीठिकाक्रमः ॥

**प्रायेण** बाहुल्येन । तेन किञ्चिदन्यदपि समन्वयपूरकं प्रसङ्गप्राप्तमुच्यत इत्युक्तं भवति । किं तत्? आह– **देवताधिकरणादौ** । मनुष्याधिकारत्वादिति पूर्ववचनेन देवानामप्यनधिकार इति प्राप्तम् । तत्परिहाराय देवताधिकरणमष्टसूत्रम् (१.३.२६–३३) । तेनैव वचनेन शूद्राणामप्यधिकार इति प्राप्तम् । तत्परिहारायापशूद्राधिकरणं पञ्चसूत्रम् (३४–३८) इति ॥

## अनुक्तमप्युक्तमेव

मध्यगततया प्रायेणेति देहलीदीपोऽयमित्याह– **प्रायेणान्यत्र प्रसिद्धानां शब्दानामिति च सम्बन्धः** । एतेन 'प्रायेण' इति द्विः पठन्तः स्वयमनवगतप्राचीनसम्प्रदायाः शोच्या एव । **अन्यत्र प्रसिद्धानां** नामात्मकानां **शब्दानामित्यर्थः** । ननु नैवं भाष्यकार आह । केवलं शब्दानामित्याह । सत्यम्, केवलं शब्दानामित्याह । अत एव व्याख्याय बोध्यसे । भाष्यकारः स्वयं किमिति मुखतो नाऽह? पूर्वोत्तरानुगुण्येन भाष्यार्थोऽनुसन्धेय इति शिष्यशिक्षायै । तथाहि द्वितीयपादाभ्यादाने भाष्यम्– 'लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयत्यस्मिन् पादे' इति । तत्र चान्यत्र च प्रसिद्धानां तृतीयपादे समन्वयात्, 'अन्यत्र प्रसिद्धानां शब्दानाम्' इतीतस्तत्रानुवर्तनीयम् । ततश्चान्यत्र प्रसिद्धानां

आनन्दादिगुणवाचिनामानन्दमयादिगुणिवाचिनां च शब्दानां समन्वयसिद्ध्यर्थमानन्द-मयाधिकरणे लिङ्गविचारात्, इन्द्राग्न्यादिबहुनाम्नां समन्वयसौलभ्यायोत्तरेऽन्तस्थत्वलिङ्ग-विचारात् । तस्मात् **प्रायेणान्यत्र प्रसिद्धानां** नामशब्दानां ब्रह्मणि समन्वयं वक्त्यस्मिन् पादे ॥

---

लिङ्गात्मकानां शब्दानामित्युक्तं भवति । ततश्चात्र नामात्मकनानां शब्दानामित्यर्थतः सिद्धमेव । तदियं महतां सरणिः– उत्तरं स्मरन्त एव पूर्वं पठन्ति । पूर्वं स्मरन्त एवोत्तरं पठन्ति । नह्यर्थात् सिद्धमपि महान्तो मुखतो वदन्ति । तदिदमाह टीकाकारः– **तस्मात् प्रायेणान्यत्र प्रसिद्धानां नामशब्दानां ब्रह्मणि समन्वयं वक्त्यस्मिन् पाद** इति । एतेन प्रकटयतीति मूलस्य 'प्रकटं वक्ति' इत्यर्थान्तरं च सूचितम् । कटे वर्षावरणयोः । उपसर्गो धात्वर्थं बाधते । प्रकटयति अनावृतं करोतीत्यर्थः ॥

ननु शब्दाश्चतुर्विधा इति वैयाकरणाः नामाख्यातोपसर्गनिपातभेदेन । तेन लिङ्गात्मकाः शब्दा अपि नामान्येव । तत् किमिदमपूर्वमुच्यते नामात्मकानां लिङ्गात्मकानां च शब्दानामिति? शृणु । विवक्षाभेदेन व्याहारा भवन्ति । सुबन्तानि नामानीति हि वैयाकरणानां विवक्षा । वस्तुतः सुबन्तानि द्विविधानि भवन्ति– विशेष्यवचनानि विशेषणवचनानीति । तदिह विशेष्यवचनानि नामान्युच्यन्ते । लोकोऽपि तथैव व्यवहरति । विशेषणवचनानि लिङ्गानि ॥

## श्रुतिलिङ्गयोः परस्परपूरकत्वम्

अत एव च 'श्रुतिर्लिङ्गं समाख्या च' इति पठन्ति । तथाहि व्याचक्षते– 'श्रुतिर्नाम समुद्दिष्टं लिङ्गं तल्लक्षणं स्मृतम्' इति । तल्लक्षणमिति तस्य नाम्नो लक्षणमसाधारणो धर्म इत्यर्थः । तद् यथा रामो दाशरथिः । राम इति नामधेयम् । दाशरथिरिति लिङ्गम् । राम इति बलभद्रेऽपि भार्गवेऽपि साव-काशम् । दाशरथित्वेन लिङ्गेन लक्ष्मणाग्रजत्वं निश्चीयते । अथच दाशरथिरिति लक्ष्मणादिष्वपि सावकाशम् । राम इति नाम्ना कौसल्यानन्दनत्वं निश्चीयते । यथा वा– पार्थो धनुर्धरः । धनुर्धर इति सावकाशं लिङ्गम् । पार्थ इति रूढनाम्ना कौन्तेयत्वं निश्चीयते । अथच पार्थ इति त्रिष्वपि समानम् । धनुर्धरत्वलिङ्गेन गाण्डीवित्वं निश्चीयते ॥

## लिङ्गसमन्वयौचित्यम्

उत्तरवाक्येऽपि प्रायेणेत्यनुवर्तत इत्युक्तम् । तेन लब्धमर्थमाह– **आनन्दादिगुणवाचिनामित्यादिना** । **गुणिवाचिनां** लिङ्गात्मकानामानन्दमयादिशब्दानाम्, तथाऽन्नप्राणादिनामशब्दानाम्, तथा गुणवाचिनामानन्दादिनामशब्दानां च समन्वय एकस्य आनन्दमयत्वलिङ्गस्य समन्वयेन साध्यत इति महान् लाभः । तथाहि– आनन्दमयशब्देन अन्नमयप्राणमयमनोमयविज्ञानमयाः वाङ्मयचक्षुर्मयश्रोत्रमयाश्च ब्रह्मणो रूपविशेषा इति निर्णीयते । तेन नामसमन्वये फलितोऽयं लिङ्गसमन्वयः । तानि चैतानि भगवतो लिङ्गानि नामानि चेति । तद् यथा पार्थ इति कौन्तेयस्य नामवचनं लिङ्गवचनं च । अनेनैव च अन्नं प्राणो मनो विज्ञानमानन्द इति, चक्षुः श्रोत्रं वागिति नामानि च भगवति भवन्ति समन्वितानि । तेन प्रथमाधिकरणे महानामसमन्वयोऽयं मुखतो लिङ्गसमन्वय इत्यतिसुन्दरम् । अपिच गुणगुणिनोरभेदश्चानेनाभिहितो भवतीति हेम्नः परमामोदः । अत आनन्दमयत्वलिङ्गसमन्वयार्थमिदम-धिकरणमित्याह– **आनन्दमयाधिकरणे लिङ्गविचारादिति** । अयमत्र विशेषः– अस्मिन्नधिकरणे पूर्वपक्षिणामानन्दमयत्वलिङ्गम्, तदेवोत्तरपक्षिणां नाम च भवति । अत एवोक्तमनुव्याख्याने–'आनन्द-मयनाम हि' इति । तेन 'आनन्दमयमात्मानमुपसङ्क्रामति' इत्यस्य आनन्दमयनामानं नारायणरूपं परमात्मानमुपसङ्क्रामतीत्यर्थः । उत्तराधिकरणे तु पूर्वपक्षिणामुत्तरपक्षिणां च लिङ्गसमन्वय एवेत्याह– **इन्द्राग्न्यादिबहुनाम्नां समन्वयसौलभ्यायोत्तरेऽन्तस्थत्वलिङ्गविचारादिति** । एवमाद्ये द्वे अधिकरणे लिङ्गसमन्वयपरे, तत उत्तराणि चत्वारि नामसमन्वयार्थानीति **प्रायेणेत्युक्तमिति** ॥

## आनन्दमयस्य लिङ्गत्वम्

ननु किमनेन प्रथमचुम्बने दन्तभङ्गेन । आनन्दमयनामसमन्वय इत्येवोच्यताम् । 'आनन्दमयनाम हि' इत्यनुव्याख्यानं चैतमेव पक्षं कटाक्षयतीव । न भोः । नह्यानन्दमय इति नाम क्वाप्यन्यत्र प्रसिद्धं लोकेषु वेदेषु वा । ननु श्रूयन्तेऽन्नमयादयः पञ्चकोशाः– 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इति । कोशनामान्येव हि तानि । नामान्तराश्रवणात् । योगरूढानि रूढानि वा नामानि । तानीमानि योगरूढानि नामानीत्यमुख्यतया कोशनामत्वं सिद्धान्तिनामपि सम्मतमिति ।

स्यादपि । किन्त्वत्राऽनन्दमयत्वेनोट्टङ्कितेषु ब्रह्मादिदेवसङ्घे प्रकृतौ जीवेषु वा न काप्यानन्दमयनामता । कोशानां जडप्रकृत्यन्तर्भावेऽपि प्रकृतिविकारनामान्येव तानि । न प्रकृतिनामानि । आनन्दमयत्वलिङ्गेनैव हि ब्रह्मादीनां प्राप्तिरिति पूर्वपक्षी मन्यते । ननु कोशा अपि पूर्वपक्षे निक्षिप्यन्ताम् । न निक्षिप्यन्ते । ब्रह्मशब्दादेव । नहि रूपप्रपञ्चे कापि चेतनानधिष्ठितस्य केवलजडस्य ब्रह्मपदवाच्यत्वम् । अत एव प्रकृतिपक्षेऽपि 'मम योनिर्महद् ब्रह्म' इति चित्प्रकृतिमेवोदाजहार भाष्यकारः । आनन्दमयशब्दश्च स्वसरतश्चेतनवचनः । नहि चेतनानधिष्ठते जडे आनन्दमयमिदमिति लोको व्यवहरति । अतः ब्रह्मादिर्देवसङ्घः, चित्प्रकृतिः, जीवश्चेति चेतनानामेव पूर्वपक्षीकरणम् । जडप्रकृतेः कथञ्चिदधिष्ठिततयैव ग्रहणमिति । ननु 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इति जडस्य कोशस्याऽनन्दमयनामता श्रुत्यैव स्फुटमुदिता? न भोः । शुध्यन्तामिति शुद्धिप्रार्थना किल तत्र क्रियते । नहि जडं केनापि प्रज्ञावता प्रार्थ्यते । तस्माज्जडकोशमानिनो देवा एव तत्रोच्यन्ते । पञ्चकोशमानिनो देवा मे जडकोशान्, मां वा, शुध्यन्तां शोधयन्तु इत्येवार्थः । आनन्दमयपदवाच्या चित्प्रकृतिरेव कोशमानिनीति । 'प्रकृतिः' इति भाष्येण इदमपि गदितप्रायम् । चिदधिष्ठिततयाऽञ्जरूढ्या कोशस्याप्यानन्दमयनामतेति न कोऽपि दोषः । सिद्धान्तरीत्या तु अन्नमयादिपञ्चरूपी भगवान् मे मां शोधयन्तु इत्यन्तर्णीतणिच् स्वातन्त्र्यार्थ इति सर्वमतिसुन्दरम् । तस्माद् युक्तमुक्तम्— **आनन्दमयाधिकरणे लिङ्गविचारादिति** । बहूनां नाम्नां समन्वयार्थोऽयमेकलिङ्गसमन्वय इत्यन्ततो नामसमन्वय एवायमित्यतिसुन्दरम् ॥

'ब्रह्मजिज्ञासा' इत्युपक्रमात् **'ब्रह्मणि समन्वयं वक्ति'** इति टीकायाम् । स एव चेक्षत्यधिकरणे— 'गौणश्चेन्नाऽत्मशब्दात्' इत्यात्मशब्देन प्रस्तुत इति— 'परमात्मनि समन्वयः' इत्याह भाष्यकारः । तेन ईक्षत्यधिकरणेन चास्य सङ्गतिं सूचयति । अन्यथा ब्रह्मणि समन्वय इत्येवावक्ष्यत् । अनेन गुरुशिष्यौ— 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवतवचनं स्मारयतः ॥

## भाष्यस्यापूर्वमर्थान्तरम्

अथच गमनिकान्तरम्— आत्मशब्दादिति प्रस्तुते **आत्मनि समन्वयः प्रदर्श्यते** । केषां शब्दानाम्? **परं केवलमन्यत्रप्रसिद्धानां नामशब्दानाम्** । नोभयत्र प्रसिद्धानाम्, नाप्यन्यत्रैव प्रसिद्धानाम् । एतेनान्यत्र प्रसिद्धानामन्यत्रैव प्रसिद्धेभ्यो भेदं च सूचयाम्बभूव । ये केवलमन्यत्र लोके प्रसिद्धाः, न भगवति

विरुद्धास्तेऽन्यत्र प्रसिद्धाः । यथा लोके पङ्कजपदम् । शङ्खभेकादिभ्योऽन्यत्रारविन्दे प्रसिद्धं केवलम् । न शङ्खादिषु विरुद्धम् । यत्तु भगवति विरुद्धम्, तदन्यत्रैव प्रसिद्धम्, दुःखी, अज्ञः, बद्ध इत्यादिकम् । यथा पङ्कजपुष्पम् । अन्यत्रैवारविन्दे प्रसिद्धम् । विरुद्धं च शङ्खादौ ॥

तथाचान्यत्र प्रसिद्धानां परमात्मनि समन्वय उभयत्रप्रसिद्धता स्यात् । न स्यात् । यतस्तेषां मुख्यवृत्त्या **परं केवलमात्मनि समन्वयः प्रदर्श्यते** । तेन इतरेष्वप्यन्वयोऽनुमतः । समन्वयः केवलं निवार्यते । तदेवं समन्वयसूत्रे सामान्यत उक्तः **समन्वयः, अस्मिन् प्रथमपादे** तावदन्यत्र **प्रसिद्धानां नामशब्दानां** पृथक् युक्तिकथनेन प्रकटं **दर्श्यते 'आनन्दमयोऽभ्यासात्' (१२) इत्यादिना,** 'जीवमुख्यप्राण-लिङ्गात्–' (३१) इत्यन्तेन विंशत्या सूत्रजातेन । स च **समन्वयः** यथावत् प्रदर्श्यतेऽस्माभिर्भाष्ये इति चार्थः ॥

तदेवं सूत्रानुकारिभिः पदैः सूत्रार्थं वर्णयदत्यर्थविस्तरमिदमेव मुख्यतो भाष्यपदगदितम् । अन्ये परं वाचाटाः ॥

## वल्लभाचार्यवचनविमर्शः

एतेनैतदपि निरस्तम्, यद् वल्लभाचार्य आह– 'सर्वे शब्दास्तल्लिङ्गात्' इति, 'तद्धर्मोपदेशात्' इति वा सूत्रेणैकेन पर्याप्तम् । किं समस्तेनाध्यायेन' इति । त्वामपि पृच्छामः । यद् वक्तव्यं तत् समस्तं चतुःसूत्र्याऽभिहितम् । किमवशिष्टेनाध्यायजातेन? ननु यदुक्तं चतुःसूत्र्यां तदेव विशदं प्रकटीक्रियते चतुर्भिरध्यायैः शिष्यशिक्षाया इति । समः समाधिः । समन्वयसूत्रेण सूचितः समन्वयः प्रकटं दर्श्यते समस्तेनाध्यायेनेति । स्यादेतदेवम्, यदि प्रत्यधिकरणं विशेषलिङ्गाभिधानं स्यात् । नैतदेवम्, किन्तु तद्धर्मोपदेशात् तल्लिङ्गादिति सामान्यत एवोच्यते । अत एवोच्यतेऽस्माभिः, तल्लिङ्गादित्येकेनैव सूत्रेण पर्याप्तमिति । दुराग्रहकलिलेन चक्षुषा सर्वं विपरीतं पश्यसि, स्फुटं दृश्यमानं न पश्यसि । नहि सूत्राणि सर्वं मुखतो वदन्ति । सूचनादेव हि सूत्राणि । गुरुपरम्परया चोपदेशतोऽवगन्तव्या भवन्ति सूत्रार्थाः । परम्पराविच्छेदादेव बहवो बहूनि भाष्याणि बभाषिरे यथास्वमतिविभवम् । तेन शुद्धशेमुषीतितउना परम्पराऽपि पवितव्या भवति । भाष्याण्यपि पवितव्यानि भवन्ति । नहि चक्षुषी निमील्य वेदान्ताद्रिरुत्तुङ्गः शक्यमारोढुम् । ततो विच्छिन्ना तन्तुसन्ततिः सन्धातव्या भवति । सूत्राणामन्तरङ्गमनुसन्धातव्यं भवति ॥

अयमत्रानुसन्धानक्रमः– आनन्दमयाधिकरणे तावत् अभ्यासात्, प्राचुर्यादित्यादिभिरसाधारणधर्मैः तैत्तिरीयशाखार्थो निर्णीतः । अभेदेन सर्वं सर्वत्र युज्यत इति भ्रान्तिरपि 'भेदव्यपदेशात्' इति स्फुटं निराकृता । केवलतर्केण प्रत्यवतिष्ठमानाश्च 'कामाच्च–' इति निराकृताः । इदमुक्तं भवति– न क्वापि केवलतर्केण वेदार्थानिर्णयाय प्रयतितव्यम् । नाप्यभेदवार्ता क्वापि समानेया । केवलं पूर्वोत्तराविरोधेन श्रुत्युपदिष्टैरसाधारणधर्मैरेव वेदार्थो निर्णेतव्यः । लब्धं समग्रं मार्गदर्शनम् । तत उत्तरं सूत्रं प्रवर्तते– 'अन्तस्तद्धर्मोपदेशात्' इति । पूर्वोत्तरयोः तद्धर्माणामुपदेशाद् विष्णुरेवान्तस्थ इति । किमत्र सम्मुग्धमनवगतं वा । किं पूर्वोत्तरपर्यालोचनया? एकस्मिन्नपि वाक्ये लिङ्गदर्शनं पर्याप्तमिति आकाशाधिकरणे 'तल्लिङ्गात्' इत्याह । धर्मशब्दार्थं च स्फुटमाह तल्लिङ्गात् । धर्मशब्दः साधारणे चासाधारणे च साधारणः । यथा इन्द्रियत्वं चक्षुषो धर्म इति साधारणः । रूपग्राहकत्वमित्यसाधारणः । लिङ्गमित्यसाधारणधर्म एव । एतेनेदमाह– तद्धर्मोपदेशात् सोऽप्यन्तस्थ इति न मन्तव्यम् । सर्वं हि वाक्यं सावधारणं भवति । अत्रापि तथा– तस्यैव धर्मास्तद्धर्माः । एकेनापि लिङ्गेन पर्याप्यम्, किं बहुनेति लिङ्गादित्याह । उत्तराधिकरणे तदेवानुवर्तयति 'अत एव प्राणः' इति । ज्योतिरधिकरणे पुनश्चरणाभिधानादीनसाधारणधर्मानाह । तत्रतत्रोपासनाविशेषांश्चाऽह । नहीदं सर्वं 'सर्वे शब्दास्तल्लिङ्गात्' इत्येकेन सूत्रेण शक्यं वक्तुम् । यथा विचरणाभिधानात् ज्योतिर्विष्णुस्तथा इन्द्रियैः सहाभिधानात् प्राणो न विष्णुरिति प्राप्ते पुनराह– 'प्राणस्तथाऽनुगमात्' इति । विष्णावेव प्राणशब्दानुगमात् । कुतः? अत्रापि 'ब्रह्मशब्दानुगमात्' इति । एतेन प्रागुक्तानां शब्दानां भगवत्ययुक्तविशेषणानुगमात् यत्रक्वापि मुख्यतया विष्ण्वन्यपरताऽपि स्यादिति शङ्काऽपि परास्ता । तथाहि आनन्दमयोऽभ्यासादिति विष्णोरानन्दमयत्वं साधितम् । अङ्गीकुर्मस्तावदेतत् । अथापि न सर्वत्राऽनन्दमयो विष्णुः । 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इत्यत्र पञ्चकोशानां शुद्धिप्रार्थनात्, भगवतः शुद्धीकरणप्रार्थनासम्भवात् अत्राऽनन्दमयः कोश एव न विष्णुरिति । अस्यापीदमेवोत्तरम् । विष्णोः पञ्चरूपेषु प्रसिद्धानामन्नमयादीनामत्राप्यनुगमात् अत्रापि पञ्चरूपो विष्णुरेवोच्यते । नच शुद्धिप्रार्थनानुपपत्तिः । 'स्वातन्त्र्ये व्यत्ययः' इति नियमस्यात्राप्यनुगमात् । तथाच 'मे शुद्ध्यन्ताम्' इत्यस्य 'माम्, मम कोशांश्च शोधयन्तु' इत्यर्थः । जडस्य शुद्धिप्रार्थनानुपपत्तेः । तदेवं बह्वर्थानि विश्वतोमुखानि सूत्राणीति क्षन्तव्यं वल्लभाचार्यस्य बालिश्यम् । ग्रन्थगौरवभिया किञ्चिदेवाऽविष्कृतम् । एवमुत्तर-

ब्रह्मणि वृत्तिहेतूनां विद्यमानत्वाद् योगवृत्त्या, वैदिकप्रयोगबाहुल्याद् विद्वद्रूढ्या चैवं प्रथमपादे साधितेऽप्यन्यत्र प्रसिद्धलिङ्गेभ्यः सावकाशत्वं श्रुतीनां स्यादिति लिङ्गरूपाणां द्वितीये प्रदर्श्यते। ततश्चान्यत्र प्रसिद्धत्वेन प्रतीयमानानां लिङ्गानां ब्रह्मणि समन्वयप्रदर्शनेन पूर्वोक्तौ नाम्नां रूढियोगौ बलिष्ठौ भवतः। अथाप्युभयत्र प्रसिद्धत्वेन प्रतीयमानानां नामलिङ्गानामन्यत्र वृत्तिहेतोरल्पस्यापि निरासेन रूढेश्चाज्ञसम्बन्धिन्या आभासत्वेन

---

त्रापीत्यवगन्तव्यम्। तदेतत् सर्वम्– 'प्रदर्श्यते' इत्यत्र प्रेत्युपसर्गेण बोधयामास भगवत्पादः। आह च स्वयमेव 'बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः' इति। नारायणपण्डिताचार्येणोक्तम्– 'वाक्येनैकेनाक्षिपद्धर्षतीर्थः' (म.वि.१२.११) इति। इदमिह ततोऽपि विचित्रतमम्, यदक्षरेणैकेनाऽक्षिपद्धर्षतीर्थ इत्यलम्॥

विशेष्यतया धर्मिवचना नामात्मकाः। विशेषणतया धर्मिवचना लिङ्गात्मका इत्युक्तम्। नामात्मकाः पुनर्द्विविधाः। रूढा योगरूढाश्चेति। रूढो यथा डित्थो डवित्थ इति देवदत्तो यज्ञदत्त इति। योगरूढो यथा कौसल्या कैकेयीति, सौमित्रिः शत्रुघ्न इति, वासुदेव इति, पार्थ इति। वेदपदसमन्वयश्चायम्। न वेदेषु केवलरूढानि नामानि भवन्ति। तेन योगरूढानि नामात्मकानि केवलयौगिकानि लिङ्गात्मकानीति स्थितम्॥

## पादार्थव्यवस्था

तथाच योगरूढिभ्यां लोकतोऽन्यत्र प्रसिद्धानां शब्दानां महायोगविद्वद्रूढिभ्यां भगवति समन्वयः प्रथमपादार्थः। **वृत्तिहेतूनां विद्यमानत्वादिति**। साम्रग्येण मुख्यतो वा विद्यमानत्वादित्यर्थः। अन्यत्र केचिदेव वृत्तिहेतवो भवन्ति, अमुख्याश्च। यथाऽनन्दमय इति शतानन्दत्वाद् ब्रह्मा। अमितानन्दत्वान्नारायणः। यथा वा इन्द्र इत्यग्निरिति। त्रिभुवनेश्वर इति देवराडिन्द्रः। सर्वेश्वरः सर्वसमर्थ इति भगवानिन्द्रः। 'अनीशेन किमिन्द्रेण' इति भागवते। हुतमत्तीत्यत्ताऽग्निर्देवता। सर्वात्ता भगवान्॥

एवं साधिते श्रुतिसमन्वयेऽन्यत्र प्रसिद्धलिङ्गबलात् श्रुतेरन्यथात्वं स्यादिति शङ्कापनोदाय द्वितीयपादप्रसरः। स यथा– इन्द्रादिपदानि विष्णुनामानीति प्रथमपादेऽवगतम्। वज्रधरत्वादिलिङ्गैर्देवराडादिरेव

नान्यथा तदृष्टेः ॥

विष्णावेव समन्वयं वक्ति तृतीयपादे । एवं वाक्यसमन्वये सिद्धे सति अवरादिपदानां दोषादिवाचकत्वेन श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानां सर्वेषामपि विष्णावेव प्रवृत्तिं प्रतिपादयति चतुर्थे पाद इति पादसङ्गतिः ॥

**नान्यथा तदृष्टेः** । अयं भावः– न माय्युक्तप्रकारेण पादसङ्गतिर्युक्ता । द्वितीयतृतीयपादयोरुभयोरप्यस्पष्टब्रह्मलिङ्गत्वे पादभेदाभावप्रसङ्गात् । गत्यन्तराभावाच्च । तन्नियमादृष्टेश्च । पादाभिधानादिलिङ्गेभ्यः प्रसिद्धोपदेशोपपत्त्यम्बरान्तधृत्यादिलिङ्गानां स्पष्टत्वात् । 'ज्योतिश्चरणाभिधानात्' इत्यत्र 'पादाभिधानात्' इति हि पुनरुक्तिदोषनिर्भयेन मायिनाऽभिहितम् । चतुर्थपादस्य सङ्गत्यदर्शनाच्च तन्मते ॥

---

स्यादिति शङ्कापनोदाय लिङ्गसमन्वयात्मको द्वितीयः पाद इति । तदेतदाह– लोकतोऽन्यत्र **प्रसिद्धलिङ्गेभ्य** इत्यादिना । फलितमाह– **ततश्चेति** । **ब्रह्मणीति** । ब्रह्मण्येव परममुख्यवृत्त्या ॥

अथापि केचन शब्दा लोकवेदयोरुभयत्र प्रसिद्धा भवन्ति । यथा रुद्रः । 'रुद्रो बहुशिरा बभ्रुः' इति विष्णुरपि स्यात् । 'शङ्करो गिरिशो रुद्रो गिरीशः शशिभूषणः' इति कोशवचनात् लोके विशेषतः प्रसिद्धेश्च शिवोऽपि स्यात् । एवं प्राणेश्वर इति मुख्यवायुरपि स्यात्, लोकवेदयोः प्रसिद्धेः । 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इति श्रवणात् शिवोऽपि । हृषीकेशत्वात् विष्णुरपि स्यात् । तस्मादेतादृशानां नामलिङ्गात्मकानां शब्दानामुभयत्रापि समन्वयः साधीयान्, न विष्णावेवेति शङ्कानिरासाय तृतीयपादप्रसरः । तदेतदाह– **अथापीत्यादिना** । अभिधानादिषु **उभयत्र प्रसिद्धत्वेन प्रतीयमानानाम्** । तथा ह्यभिदधति– 'अजा विष्णुहरच्छागाः' इति, 'अजः पितामहेऽनादौ' इति च । 'विष्णुचन्द्रेन्द्रवातार्कयमाश्वांशुशुकाग्निषु । कपिभेकाहिसिंहेषु हरिः' इत्यादि च ॥

एवं सुबन्तानां समन्वये सति प्रायो वाक्यसमन्वयः सिद्धः । यथा– 'अग्निमीळे' इत्यग्निनारायणं स्तौमीत्यर्थः । अथापि दोषवाचिनां शब्दानां श्रुतिलिङ्गादिभिरुपक्रमोपसंहारादिभिश्चान्यत्रैव प्रसिद्धानां

परममुख्यवृत्त्या भगवत्येव समन्वयो वक्तव्यः । एवमाख्यातानां निपातानामुपसर्गाणाम्, स्वरवर्णात्मकस्य समस्तस्य वाङ्मयस्य समन्वयो वक्तव्यः । सोऽयं महाधिकारिको महासमन्वय इत्यन्ते तदवसर इत्याह– **एवं वाक्यसमन्वये सिद्ध** इत्यादिना ॥

एवं स्वरसां पादसङ्गतिं निरूप्य परोदितं सङ्गतिक्रमं निरसितुमारभते । **नान्यथा तद्दृष्टेरिति** भाष्यवचनमुल्लिख्य विवृणोति– **अयं भाव** इत्यादिना । नान्यथा शङ्करादिभिरुक्तरीत्या पादसङ्गतिर्वक्तव्या तादृशपादसङ्गत्यदृष्टेः । तत्रापि विशेषतो मायावादिसम्मता पादसङ्गतिर्निराक्रियत इत्याह– **न माय्युक्तप्रकारेणेति** । अन्ये प्रायः शङ्करच्छायानुसारिण इति तस्मिन्निरस्ते सर्वेऽपि निरस्ता भवन्तीति टीकाकृदभिप्रायः ॥

## परेषामव्यवस्था

तथाहि शाङ्करं भाष्यम्– 'कानिचिद् वाक्यानि स्पष्टब्रह्मलिङ्गानि सन्दिह्यमानानि (प्रथमपादे) ब्रह्मपरतया निर्णीतानि । पुनरप्यन्यानि वाक्यान्यस्पष्टब्रह्मलिङ्गानि सन्दिह्यन्ते किं परं ब्रह्म प्रतिपादयन्ति, आहोस्विदर्थान्तरं किञ्चिदिति । तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते' (१.२.१) इति ॥

'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामेषामन्योन्यबलाबलावधारणे सन्दिह्यमानवचनव्यक्तिषु वाक्येषु निर्णयार्थं द्वितीयतृतीयपादावारभ्येते' इति भास्करीयं भाष्यम् ॥

चतुर्थपादं तूभयेऽपि साङ्ख्योक्तप्रधाननिराकरणपरतया व्याचक्षते ॥

अस्मिन्नन्यथाव्याख्याने दोषमाह– **पादभेदाभावप्रसङ्गा**दिति । भेदकाभावादित्यर्थः । ननु चतुष्ट्वनिर्वाहार्थं किमप्यवान्तरं भेदकं कल्प्यत इत्यत आह– **गत्यन्तराभावा**च्चेति । यदि गत्यन्तरमभविष्यत् तदा मायावादभाष्ये तत् स्वयमवक्ष्यत् । नचोवाच । तेन ज्ञायते भेदकान्तरं तस्य नाभिमतमिति ॥

ननु व्याख्यानतो विशेषप्रतिपत्तिर्भवति । तथाहि गोविन्दानन्दः– 'अस्पष्टब्रह्मलिङ्गवाक्यसमन्वयः पादद्वये वक्ष्यते । प्रायेणोपास्यज्ञेयब्रह्मभेदात् पादयोरवान्तरभेद इति भावः' इति । अद्भुतं व्याख्यानम् । प्रायेणेति स्वयमेव स्ववचनेऽविश्रम्भं प्रकटयन् किमन्यान् बोधयति? अपिचाहो सर्वाभेदवादिनस्ततः कोऽयमपूर्वो ब्रह्मभेदो नाम!

नन्वनवगतभावो भवान् । अस्ति विवक्षाभेदेन ब्रह्मभेदः । तथाह्यानन्दगिरीयम्–'तत्र द्वितीयतृतीयपादयोरवान्तरभेदस्तु सविशेषनिर्विशेषार्थतया रूढियोगबहुलतया वेति भावः' इति । तेन सविशेषब्रह्मविचारो द्वितीयपादे, निर्विशेषब्रह्मविचारस्तृतीय इति ब्रह्मभेदेन पादभेद इति । तदेतन्निराह– **तन्नियमादृष्टेरिति** । स्यादिदं सङ्गतं यदि निर्विशेषब्रह्मप्रतिपादनं स्यात् । नचैतदस्ति । **तदृष्टेः** । द्युभ्वाद्यायतनत्वादिविशेषवत एव तृतीयेऽपि प्रतिपादनात् । नच निर्विशेषं प्रतिपादयद् वाक्यं सूत्रं वा क्वापि दृष्टम् । ननु तर्हि रूढियोगबहुलतया पादभेदः स्यात् । तदपि नेत्याह– **तदृष्टेः** । एकः पादो रूढिबहुलोऽपरो योगबहुल इति किल तवार्थः । तत्र द्वितीयो योगबहुल इति स्फुटम् । तर्हि तृतीयो रूढिबहुल इति वक्तव्यम् । नैतदस्ति । तत्रापि द्युभ्वाद्यायतनादीनि यौगिकान्येवेति सङ्कीर्णोऽयं पादः । किञ्च पदसमन्वय इत्यस्माकं समयः । वाक्यसमन्वय इति परेषाम् । तत् कथं वाक्ये रूढिबाहुल्यं योगबाहुल्यं वा युज्यते ॥

ननु यस्मिन् वाक्ये रूढं ब्रह्मलिङ्गं तत्र रूढ्या समन्वयः । यत्र यौगिकं ब्रह्मलिङ्गं तत्र योगेन समन्वय इति न कोऽपि दोषः । न भोः । अथापि तृतीयपादस्य योगरूढलिङ्गैः सङ्कीर्णतया नेदं निर्णायकमित्युक्त-दोषापरिहार एव ॥

अस्तु तावदेतत् । स्पष्टब्रह्मलिङ्गानि वाक्यानि प्रथमपादे, अस्पष्टब्रह्मलिङ्गानि उत्तरपादयोरिति विभजन-मप्यसङ्गतम् । तन्नियमादृष्टेः । प्रथमपादेऽप्यस्पष्टब्रह्मलिङ्गानि भवन्ति । उत्तरपादयोरपि स्पष्टब्रह्म-लिङ्गानीत्यभेदकमेतत् । तथाहि– 'ज्योतिश्चरणाभिधानात्' (१.१.२४) इति सूत्रम् । 'ज्योतिरिह ब्रह्म ग्राह्यम् । कुतः? चरणाभिधानात् पादाभिधानादित्यर्थः' इति परभाष्यम् । तदिदं पादाभिधानम्, उत्तरत्र वक्ष्यमाणं चेतोऽर्पणनिगदनम्, सर्वमिदं नातीव स्पष्टम् । अस्तु नाम, अङ्गीकुर्मस्तावत् प्रथमपादे स्पष्टलिङ्गानीति, इतोऽपि स्पष्टतराणि लिङ्गानि उत्तरपादयोर्दृश्यन्ते । 'प्रसिद्धोपदेशात्' (१.३.१) इति प्रसिद्धपदमेव लिङ्गस्य स्पष्टतामाचष्टे । सर्ववेदान्तप्रसिद्धं ब्रह्मशब्दोदितमेवात्रोपदिश्यत इति किल पराभिमतोऽर्थः । तत्र किमस्पष्टम्? 'विवक्षितगुणोपपत्तेः' (१.२.२) इत्यत्र विवक्षितेषु गुणेषु सत्य-सङ्कल्पत्वादिषु किमस्पष्टम्? 'अन्तर उपपत्तेः' (१.२.१३) इत्यत्र आत्मत्वामृतत्वाभयत्वाद्युपपत्तेरिति परैर्व्याख्यानात् किमत्रास्पष्टम् । स्पष्टत्वादेव लिङ्गानि मुखतोऽनुक्त्वा केवलमुपपत्तेरित्याह । एवं

तृतीयपादे– 'अक्षरमम्बरान्तधृतेः' (१.३.१०) इत्यत्राक्षरस्य ब्रह्मणः अम्बरान्तधारणं स्पष्टमेव हि लिङ्गम् ॥

एवं 'दहर उत्तरेभ्यः' (१.३.४) इत्यत्र उत्तरेभ्य आत्मत्वापहतपाप्मत्वादिभ्यो गुणेभ्यः इति किल पराभिमतोऽर्थः । तथाहि तद्भाष्यम्– 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति चाऽत्मापहतपाप्मत्वादयश्च गुणा न भूताकाशे सम्भवन्ति' इति । स्पष्टानि चैतानि भगवल्लिङ्गानीति किमत्रास्पष्टम्? एवमन्यत्राप्यूहनीयम् ॥

किञ्च सर्वाण्यपि ब्रह्मलिङ्गानि पूर्वपक्षदशायामस्पष्टानि सिद्धान्तेन स्पष्टीक्रियन्ते । यदि पूर्वपक्षदशायामपि स्पष्टानि तर्हि पूर्वपक्षोत्थानमेव गर्भस्रावेण गतम् । नहि स्पष्टस्यासन्दिग्धस्य निर्णयाय महान्तः सूत्राणि प्रणयन्ति । यदि सिद्धान्तदशायामप्यस्पष्टानि तर्हि व्यर्थं सूत्रप्रणयनम् । सन्दिग्धस्य निर्णयाय हि सूत्राणि प्रणीयन्ते । तस्मात् स्पष्टत्वमस्पष्टत्वमित्यभेदकमसङ्गतं वचनम् । एवमसङ्गतं वदन्त्यपि लोकान् मोहयन्ति मोहशास्त्राणि भवन्ति ॥

**पुनरुक्तिदोषनिर्भयेन** । 'चरणाभिधानात्' (२४) इति सूत्रखण्डस्य पादाभिधानादिति व्याख्यानं स्फुट-दोषं भाति । 'पादोऽस्य सर्वा भूतानि' इति श्रुत्यानुगुण्यं न भवति । व्यर्थमक्षराधिक्यं च भवति । तृतीयश्चायं पुनरुक्तिदोषः । यतो 'भूतादिपादव्यपदेशोपपत्तेः–' (२६) इत्युत्तरसूत्रेऽप्येतमेवार्थमाह । तथाहि तद्भाष्यम्– 'यतो भूतादीन् पादान् व्यपदिशति– पादोऽस्य सर्वा भूतानीति । नहि केवलस्य च्छन्दसो भूतादयः पादा उपपद्यन्ते' इति । ननु चरणाभिधानादिति त्रिपात्त्वमुक्तम्– त्रिपादस्यामृतं दिवीति । अत्र तु भूतपादत्वमिति का पुनरुक्तिः? ननु चरणाभिधानादित्युक्तम्, न त्रिचरणाभि-धानादिति । तेनैकेनैव सूत्रेणोभयचरणाभिधानमपि शक्यं वक्तुम्, किं पुनः सूत्रोक्त्या । नहि सूत्राणि क्वाप्युक्तमेवाम्रेडयन्तीत्यर्थः ॥

अथ चतुर्थपादस्य का सङ्गतिः? ननूक्ता सङ्गतिः । तथाहि तद्भाष्यम्– 'प्रधानस्याशब्दत्वमसिद्धम् । कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वात् । अतस्तेषामन्यपरत्वं दर्शयितुं परः सन्दर्भः' इति । सत्यमुक्ता सङ्गतिः । किन्त्वविरोधाध्यायेन । न समन्वयाध्यायेन । तेनास्य पादस्य

प्रथमाध्यायगतत्वे न किञ्चित् कारणं पश्यामः । तदेतदाह– **चतुर्थपादस्य प्रथमाध्यायेन सङ्गत्यदर्शनाच्च तन्मत इति** । समानयोगक्षेमं भास्करीयमपि भाष्यमिति ॥

## रामानुजीयपादविभागविमर्शः

एतान् दोषाननुशीलयन्तो रामानुजीयाः किञ्चिदिवान्यथा व्याचक्षते । अयोगव्यवच्छेदाय प्रथमः पादः । अन्ययोगव्यवच्छेदाय पादत्रयमित्याहुः । वस्तुतस्तु समन्वयसूत्रेणैवायोगव्यवच्छेदः कृतः । अन्ययोगव्यवच्छेदायैव पादचतुष्टयमिति युक्तम् । केचित् तथैवाऽऽहुः । तथाहि पठन्ति–

‘अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च ।
‘जीवप्रधानयोरादौ वाक्यजातं विचिन्तितम्’ इति ॥

व्याचक्षते च– आदौ प्रथमेऽध्याये जीवप्रधानयोः चिदचित्तत्वयोर्विषये अस्पष्टतरं वाक्यजातं प्रथमपादे विचिन्तितम् । तयोरेवास्पष्टतया प्रतिपादकं द्वितीये । स्पष्टं स्फुटतया प्रतिपादकं तृतीये । छायानुसारि स्फुटतरतया प्रतिपत्तिजनकं चतुर्थे’ इति ॥

तद्भाष्ये चैवमेव पादत्रयार्थ उक्तः– ‘तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीयपादे विचार्यन्ते । स्पष्टलिङ्गकानि तृतीये । तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे’ इति ॥

शाङ्करप्रक्रियानिरासेनैव इदमपि निरस्तमित्याह भाष्यकारः– **नान्यथा तदद्दष्टेः** ॥

नहीदं स्पष्टमिदमस्पष्टमिदमस्पष्टतरमिति विभागे किमपि गमकं पश्यामः । किञ्च यत् स्पष्टं निपुणधिषणानां तदेवास्पष्टमनिपुणानाम् । अस्पष्टतरं मन्दानाम् । अस्पष्टतमं च मन्दतमानां स्यात् । अथच को मानदण्डस्तरतमभावस्य स्वप्रज्ञावादमृते । स्पष्टत्वास्पष्टत्वयोः न कथमपि भेदकत्वं सम्भवतीति चोक्तम् । द्वितीयतृतीययोरपि स्पष्टलिङ्गदर्शनात् । तदेतदुक्तम्– **‘पादाभिधानादिलिङ्गेभ्यः प्रसिद्धोपदेशादिलिङ्गानां स्पष्टत्वात्’** इति । तदेतत् सूत्र एव प्रसिद्धपदेन सूचितम् । ब्रह्मपरतया निश्चितत्वमेव हि प्रसिद्धत्वं नाम । तदेव च स्पष्टत्वमपीति सङ्कीर्णमेव पादविभजनम् ॥

ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तम् । तच्च 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विनाऽवयवमात्रस्य ज्ञेयतेत्यत आह–

---

किञ्च तत्पक्षे नायं समन्वयाध्याय इति युक्तं वक्तुम् । वेदवाक्यानां यथाकथाच भगवत्यन्वयोऽत्र प्रदर्श्यत इति हि तन्मतम् । तथाच समित्युपसर्जनं सूत्रेऽपि व्यर्थमेव । तथाह्याकाशाधिकरणे शाङ्करं भाष्यम्– 'ब्रह्मणि गौण आकाशशब्दो भवितुमर्हति' इति । तथाच 'आकाश इति होवाच' इत्यादिश्रुतौ मुख्यार्थे भूताकाशेऽनुपपन्नस्य भगवल्लिङ्गस्य दर्शनात् गौणवृत्त्या भगवानाकाश उच्यते इति हि तन्मतम् । तथाहि भाष्यटीकायां गोविन्दानन्दः– 'आकाशपदाद् गौणार्थस्यापि ब्रह्मणः प्रथमप्रतीतिरस्ति' इति । 'नचाऽकाशशब्दो गौणोऽपि विलम्बितप्रतिपत्तिः, प्रयोगप्राचुर्यात्' इति भामत्यां वाचस्पतिमिश्रः । 'आकाशशब्दस्य ब्रह्मणि प्रयोगप्राचुर्यात् गौणादपि तस्मादाद्या धीः स्यात्' इत्यानन्दज्ञानः । तथाचान्यत्र मुख्यानां पदानां वेदेषु भगवति गौणवृत्त्या समन्वय इति शाङ्करं मतम् । अहो अद्भुतोऽयं भगवति समन्वयः । आकाशशब्दः भूताकाश एव रूढः, योगवृत्त्या सम्भवति भगवत्यपि प्रयोग इति रामानुजीयं मतम् । तथाहि तद्भाष्यम्– 'सम्भवति च परस्य ब्रह्मण आकाशशब्दाभिधेयत्वम्, आकाशते, आकाशयति चेति' इति । विद्वद्रूढ्या महायोगेन च भगवानेव सर्वशब्दार्थ इति भगवत्पादमतम् । अस्मिन्नेवार्थे समन्वयसूत्रं सार्थकमिति सुधीभिर्विभावनीयम् ॥

अथच सर्वेऽपि वाक्यसमन्वय एव परिनिष्ठिताः । नामानि सर्वाणि यमाविशन्तीत्युदितः भगवति सर्वशब्दसमन्वयः सूत्रार्थ इतीदमुपज्ञमाचार्यपादेनाऽविष्कृतम् । तस्मात् सुष्ठूक्तम्– **अन्यत्र प्रसिद्धानां** नामात्मकानां **शब्दानां** भगवति नारायणे **समन्वयः** प्रतिपाद्यत इत्यलं विस्तरेण ॥ * ॥

वस्तुतस्तु स्पष्टत्वमस्पष्टत्वं च न श्रुतिनिष्ठम् । किन्तु मतिनिष्ठम् । ननु वयं श्रुतिनिष्ठतया व्याख्यास्यामः । तथाहि लिङ्गानां स्पष्टत्वं नाम श्रुत्यन्तरे ब्रह्मपरतया निर्णीतत्वमिह विवक्षितम् । ब्रह्मणोऽन्यत्र स्वरसतयाऽनुपपद्यमानत्वं वा । सत्यं व्याख्यायाः । परन्तु नेदं चित्ते लगति । नतरां पूर्वोक्तदोषैः सुतरामतर इति ॥

* * *

**ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तमि**त्यादिनाऽधिकरणमवतारयति । यज्जिज्ञास्यत्वेन प्रतिज्ञातं **तद् ब्रह्म आनन्दमयावयवरूपं प्रतीयते** तैत्तिरीयश्रुतौ । तथाहि– 'विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' इत्यादिनाऽऽनन्दमयं प्रस्तुत्य श्रूयते, 'तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, **ब्रह्म पुच्छं प्रतिष्ठा**' इति । नहि

---

**अवतारयति** सङ्गतिकथनपूर्वकमधिकरणपीठिकां रचयति । **ब्रह्मजिज्ञासा कर्तव्येत्युक्तम्**– प्रथमसूत्रे, तैत्तिरीयश्रुतौ च 'तद् ब्रह्म तद् विजिज्ञासस्व'(९.१) इति । ब्रह्मशब्दश्च विष्णावेवेति चोक्तम्– 'विष्णुरेव हि तच्छुतेः, तं ब्रह्मेत्याचक्षते' इति । ततश्च सर्वं वाक्यं सावधारणमिति 'विष्णुरेव विजिज्ञास्यः' इत्यायातम् । तच्च विष्णवाख्यं ब्रह्म तस्यामेव श्रुतौ **आनन्दमयावयवरूपं** पठ्यते– **'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा'** (तै.आ.८.६) इति । **रूपं** स्वरूपमित्यर्थः ॥

## पुच्छशब्दनिर्वचनम्

पुच्छयतीति पुच्छम् । 'पुच्छ विभागे' इति काशकृत्स्नः । यत आरभ्य देहो द्विधा विभक्तो भवति तत् पुच्छम् । पादावित्येतत् । ननु हस्तावपि विभक्तौ भवतः । सत्यं हस्तौ भवतः । न देहः । योगमात्रं च । न रूढिः । अत एव स्फुटमाह– **प्रतिष्ठेति** । प्रतितिष्ठत्यनयेति प्रतिष्ठा स्थितिहेतुः । एतेन पुदं गुदं छादयतीति पुच्छमिति वदन्तो वैयाकरणाः परास्ताः । अन्ये त्वाचक्षते–'पुच्छमिव पुच्छम् । अधोलम्बनसाम्यात्' इति । उभाभ्यां कारणाभ्यां नेदं शक्यमङ्गीकर्तुम् । नच मुख्यार्थं विना केवललाक्षणिकोऽर्थो वेदेषु वक्तव्य इति प्रतनः सम्प्रदायः । तस्मान्निर्वचनलब्ध एवार्थो वक्तव्यः । अत एवाऽह यास्कः– 'अक्षरसाम्यान्निर्ब्रूयात्, नचैव न निर्ब्रूयात्' इति । अथच, अधोलम्बनसाम्यात् पादौ पुच्छमित्युच्येते, ननु हस्तावपि पुच्छमित्युच्येयाताम् । नच तथा भाषाविदः प्रयुञ्जते । वक्ष्यति च टीकाकृत्– 'पादः पुच्छम्, प्रतिष्ठा हि पुच्छम् । 'द्विप्रतिष्ठो वै पुरुषः' इत्यादिश्रुतेः' इति ॥

अथापि स्याद् गौणः प्रयोगः– यजमानः प्रस्तर इतिवदिति । न भोः । तत्र प्रयोजनवती गौणी वृत्तिः । यजमानप्रतिनिधित्वम्, यजमानस्यासन्निधाननिमित्तदोषनिवारकत्वं च प्रस्तरस्य बोधयितुं

## ॥ आनन्दमयोऽभ्यासात् ॥ १.१.१२. ॥

### आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा ।

---

अवयविनं विनाऽवयवमात्रज्ञानेन पुरुषार्थः । तस्माद् यस्यावयवो ब्रह्म स आनन्दमयो विचार्य्यः स्यादित्यत आनन्दमयस्य ब्रह्मत्वं प्रथमतः साधनीयम् ॥

तत्साधयति– **आनन्दमयोऽभ्यासात् ॥ आनन्दमयो** विषयः, स संशय्यते **ब्रह्मादिः प्रकृतिर्विष्णुर्वेति** । ब्रह्मा आदिर्य्यस्य देवतासङ्घस्य रुद्रशक्तिस्कन्दसूर्य्यविघ्नादेः स ब्रह्मादिः ॥

अतः संशयाद् विचार्य्यते । तत्र ब्रह्मादिः प्रकृतिर्वाऽऽनन्दमय इति पूर्वः पक्षः । विष्णुरेवेति सिद्धान्तः ॥

---

सामानाधिकरण्यम् । अयजमानं यजमानं वदन्ती श्रुतिरियमेतमर्थविशेषं गमयतीति स्फुटम् । अत्र तु किमित्यपुच्छं पुच्छमाचष्ट प्रयोजनादृते भगवती श्रुतिः?

ननु तर्हि पुच्छे प्रतिष्ठे इति वक्तव्यम् । न वक्तव्यम् । पादस्थानीयस्य भगवत एकत्वात् । तथाच आनन्दमयस्य पादस्थानीयो विष्णुरित्यायातम् । तेन पादरूपेणावयवेन योऽवयवी स पादवानानन्दमयोऽपि किल जिज्ञास्यः । तेन विष्णुरेव विजिज्ञास्य इति गतम् ॥

नचाऽनन्दमयोऽपि विष्णुरेव । तस्याऽनन्दमयपुच्छत्वात् । नहि स्वस्य स्वयमेव पुच्छं भवति । प्रतिष्ठा वा । तस्मादानन्दमयः कश्चिदन्य एव विष्णोर्वक्तव्यः । तेन सोऽपि जिज्ञास्यः । नह्यवयविनमन्तरेणा-वयवमात्रजिज्ञासा नाम युक्ता । अर्धजरतीयमेतत् स्यात् । तस्मादवयवित्वेनाऽनन्दमयोऽपि जिज्ञास्य एवेति प्रसक्तम् ॥

अधिकरणेऽस्मिन् विषयादीनाह– **आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा** । अत्र, **आनन्दमय** इति विषयमाह । **ब्रह्मादिः प्रकृतिर्विष्णुर्वेति** विशयम् । 'वा' इत्यस्यानुकर्षेण ब्रह्मादिः प्रकृतिर्वाऽऽनन्दमय

**ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः । शतानन्दनाम्ना च ॥**

---

**ब्रह्मशब्दादि**त्यादिना पूर्वपक्षयुक्तिमाह । **शतानन्दनाम्ना च** आनन्दमयपर्य्यायेण तस्यैव प्रसिद्धेन **हिरण्यगर्भस्य** आनन्दमयत्व**प्राप्तिः** । 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः' इति सूचितेन **शतानन्दनाम्ना च** तस्य प्राप्तिः ॥

---

इति पूर्वः पक्षः । विष्णोरन्यः यःकोऽपि स्यादिति पूर्वपक्षिण आशयः । अथ च वाशब्दोऽव-धारणार्थः । तेन **'विष्णुर्वा'** विष्णुरेवाऽनन्दमय इति सिद्धान्त इति सर्वसङ्ग्रहः ॥

## आदिपदार्थः

**ब्रह्मादिरि**त्यत्राऽदिपदग्राह्यतावच्छेदकमाह– **ब्रह्मा आदिर्यस्य देवतासङ्घस्ये**त्यादिना । विष्णोश्चित्-प्रकृतितश्चान्यः तत्तद्वेदवादिभिरानन्दमयत्वेनाभिधीयमानो देवतासङ्घ इह ब्रह्मणाऽऽदिमानुच्यते । विघ्न इति विघ्नराजः ॥

ननु ब्रह्मादिरिति जीवसङ्घ एवोच्यताम् । जीवानामपि पूर्वपक्षकक्षपतितत्वेन वक्ष्यमाणत्वात् । अन्यथा पूर्वपक्षवाक्ये समग्रानुक्तिदोषश्च स्यात् । अनवगतभावोऽसि । आदौ तावत् वैदिकम्मन्यानां मतं प्रतुष्टाव– 'ब्रह्मादिः प्रकृतिर्विष्णुर्वा' इति । न तत्र जीवानां प्रसक्तिः । परस्तादवैदिकं मतं पृथक् प्रस्तूयते । नात्र तद्ग्रहणं विवक्षितम् । कुत इदं विज्ञायते? उत्तरवाक्ये– 'एवमन्येषाम्' इति देवानामेव परामर्शात् । व्याचख्यौ च पण्डिताचार्यः– 'अत एवान्यदेवतानां च' इति । नन्वन्यपदेन जीवोऽपि परामृश्यताम् । न शक्यं परामृष्टुम् । तत्र प्रोक्तस्य सूर्ये पुरुषे च गतत्वस्य लिङ्गस्य जीवेष्व-सम्भवात् । तस्माद् देवतासङ्घ एवाऽदिपदेनाऽदीयत इति स्थितम् ॥

अयमर्थः– वैदिकम्मन्येषु केचिद्धैरण्यगर्भाः । केचिच्छैवाः । केचिच्छाक्ताः । केचित् स्कान्दाः । केचित् सौराः । केचिद् गाणपत्याः[1] । मुख्यत एतान्येव षड् दर्शनानि प्रतनानि प्रथितानि यान्य-वैष्णवानि ॥

---

१. अश्वपत्यादिगणपठितत्वाद् गणपतिशब्दस्य केचित् ण्यप्रत्ययं नेच्छन्ति– **'अश्वपत्यादिभ्यः'** (अ.सू.४.१.८४.) इति । तेषां पक्षे गाणपता इत्येव रूपम् । बहवस्तु विपश्चितः 'गणपतिः परदेवता येषां ते गाणपत्या इत्येव रूपमिच्छन्ति **'–पत्यन्ताण्ण्यः'** (८५) इति ।

अथाऽदिपदेनेदमाह– अग्निर्वायुरिन्द्र इति त्रिदेवत्यानि वेदवचनानीति निरुक्तवादिनो वदन्ति । तेनाग्न्यादिषु त्रिषु यः कोऽपि स्यादिति ॥

## वेदवादिनां पूर्वपक्षः

तत्र तावद् योगाचारा हैरण्यगर्भाः प्रत्यवतिष्ठन्ते– योगस्य प्रवर्तको हिरण्यगर्भ एव सर्वाधिक इति स एव वेदमुख्यार्थः । 'हिरण्यगर्भः समवर्तताग्रे' इत्यादेः । तस्मात् आनन्दमयो ब्रह्मा भवितुमर्हति । ब्रह्मशब्दादेव । यदप्युक्तम्– 'ब्रह्मशब्दश्च विष्णावेव' इति । तदपि नाङ्गीकारार्हम् । किन्तु विष्णावपीति वक्तव्यम् । 'ब्रह्म पुच्छम्' इत्यत्र विष्णुर्ब्रह्म । अत आनन्दमये पठितो ब्रह्मशब्दो हिरण्यगर्भवचनः । नहि पुच्छपुच्छवतोर्युक्तमैक्यम् । तथाह्यानन्दमयमुद्दिश्य पठ्यते–

'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् ।
'अस्ति ब्रह्मेति वेद चेत् सन्तमेनं ततो विदुरिति' इति ॥

आनन्दमयस्य ब्रह्मणः सदसत्त्वज्ञानात् संसारमोक्षौ भवत इत्यर्थः । सत्त्वमिति निर्दुःखानन्दरूपत्वम् । असन् दुःखी संसारी भवतीत्यर्थः । आनन्दमयस्य प्रियशिरस्त्वादिवेदनमेव च यथार्थं वेदनम् ।

कोऽयमथ प्रियादिपदार्थः? 'पुत्रादिदर्शनजं प्रियम् । मोद इति प्रियलाभनिमित्तो हर्षः । प्रकृष्टो हर्षः प्रमोदः । आनन्द इति सुखसामान्यम्' इति शाङ्करं व्याख्यानम् । 'इष्टवस्तुदर्शनजन्यं सुखं प्रियम् । तल्लाभजन्यं सुखं मोदः । लब्धस्योपभोगजन्यं सुखं प्रमोदः । सुखातिशय आनन्दः' इति रङ्गरामानुजीयम् ॥

'–परेयं प्रियनामकम् ।
'मुन्नाम विषयोत्थं यत् प्रकृष्टविषयात् प्रमुत् ।
'सुखं स्वरूपभूतं यदानन्द इति कथ्यते' इति तत्ववादाचार्यः ॥

परेण परदर्शनादिना ईयत इति परेयमेव वर्णलोपेन प्रियमुच्यत इत्यर्थः । वैयाकरणास्तु– 'इगुपधज्ञाप्रीकिरः कः' (अ.सू.३.१.१३५) इति प्रीणातेः कप्रत्ययेन शब्दं निष्पादयन्ति– प्रीणयति मनस्तर्पयति

हृदयमावर्जयतीति प्रियं हृद्यमिति । यथाकथाच निरुच्यताम् । सर्वमेतदविरुद्धं नः पूर्वपक्षिणाम् । प्रियादिप्रेरकमानन्दमयस्य शिरआदिकमित्युक्तं भवति । एवं विष्णवाख्यं ब्रह्मानन्दमयस्य हिरण्यगर्भस्य प्रतिष्ठा आधारभूतमिति ॥

ननु हिरण्यगर्भे ब्रह्मशब्दः पुँल्लिङ्गः पठ्यते? सत्यं प्रायेण । अथापि न नियत्या । यतः श्रुतिरेवाऽह– 'ब्रह्माणि जीवाः सर्वेऽपि' इति । यदि जीवसामान्यं नपुंसकब्रह्मपदवाच्यं किमुत जीवोत्तमो ब्रह्मा? सम्मतं चैतत् सिद्धान्तिनामपि । तथाहि– 'तस्मादेतत् ब्रह्म नामरूपमन्नं च जायते' इत्यत्र तत्ववादाचार्यभाष्यम्– 'एतद् ब्रह्म चतुर्मुखः' इति ॥

'एतत् कार्यं ब्रह्म हिरण्यगर्भाख्यम्' इति शाङ्करं भाष्यम् । तदेतत् परभाष्यगतं वचः स्मारयितुमेव भाष्ये 'हिरण्यगर्भस्य प्राप्तिः' इत्याह । अन्यथा चतुर्मुखस्य प्राप्तिरित्यप्यवक्ष्यत् ॥

ननु विष्णावपि साधारणेन ब्रह्मशब्देन कथं हिरण्यगर्भस्य प्राप्तिः? दत्तोत्तरमेतत्– विष्णोः पुच्छत्वेनाऽनन्दमयत्वासम्भवादिति । न केवलं तावदेव, हिरण्यगर्भत्वज्ञापकलिङ्गसद्भावाच्चेत्याह– **शतानन्दनाम्ना चेति** ॥

आनन्दमय इति सर्वाधिकानन्द उच्यते । शतानन्द इति च । तथाहि श्रुतिः– 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इत्युक्त्वा ततोऽधिकमानन्दमयं न कमप्याह । प्रसिद्धश्च शतानन्द इति चतुर्मुखः । तथाहि कोशकाराः पठन्ति– 'शतानन्दः शतधृतिः स्वयम्भूः सर्वतोमुखः' इति ॥

ननु शतानन्दशब्दोऽपि विष्णौ साधारणः । तथाहि विष्णुनामसु पठन्ति– 'शतानन्दः शतावर्तो युगावर्तः सुरोत्तमः' इति । तथाऽपि प्रयोगप्राचुर्यात् चतुर्मुखस्यैव प्रथमप्रतिपत्तिः । अत्र तु विष्णोः पुच्छत्वादनवसर एव । तदेतदाह– **शतानन्दनाम्ना चाऽनन्दमयपर्यायेण तस्यैव प्रसिद्धेनेति** । हिरण्यगर्भ आनन्दमयपदवाच्यः तत्पर्यायशतानन्दपदवाच्यत्वादिति ॥

ननु नास्त्यत्र शतानन्दशब्दस्योल्लेखः । मुखत उल्लेखाभावेऽपि निर्वचनपूर्वकं तन्नामवाच्यत्वस्य स्फुटं सूचनात् युक्तं शतानन्दनामत्वम्– **'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः'** इति ॥ ※ ॥

**अष्टमूर्त्तित्वात् सूर्य्ये प्रोक्तत्वाच्च रुद्रस्य । एवमन्येषाम् ॥**
**'मम योनिर्म्महद् ब्रह्म–' इति ब्रह्मशब्दाद् बहुभावाच्च प्रकृतेः ॥**

---

**'स यश्चायं पुरुषे यश्चासावादित्ये' इति सूर्य्ये पुरुषे चाऽनन्दमयस्य प्रोक्तत्वाद् रुद्रस्य प्राप्तिः । अत एवान्यदेवतानां च । 'मम योनिर्म्महद्ब्रह्म' इति प्रकृतेरपि ब्रह्मशब्दवाच्यत्वादत्रापि ब्रह्मशब्दात् प्रकृतेः प्राप्तिः ॥**

---

अथ पाशुपताः प्रत्यवतिष्ठन्ते– 'विश्वाधिको रुद्रो महर्षिः', 'एको रुद्रो न द्वितीयाय तस्थे' इत्यादिश्रुतेः सर्वोत्तमो रुद्र एव वेदमुख्यार्थ इति स आनन्दमयः । स एव च शतानन्दः । अत एव च तं शम्भुमाचक्षते । निर्ब्रुवते च– शं सुखरूपो भवतीति शम्भुरिति । विश्वाधिकत्वात् स एव ब्रह्मपदवाच्यश्च । अत एव हि तं महादेवमाचक्षते । देवेषु महान् हि महादेवो भवति । ईशेषु वरत्वाच्चेश्वरः । स एव हि सूर्ये स्थित्वा ब्रह्माण्डं नियमयति । पुरुषे सन्निधाय पिण्डाण्डं नियमयति । सर्वाभेदाद्वा । तस्मात् सर्वनियन्ता शिव एवाऽनन्दमय इति । सम्मतं चैतद् वैष्णवानामपि । अष्टमूर्तिं हि ते शिवमाचक्षते– 'रसाघनरसानलानिलवियद्विवस्वद्विधुप्रयष्टृषु निविष्टमित्यज भजामि मूर्त्यष्टकम्' इति सूर्यं पुरुषं च विशतीति स एव विष्णुरिति च ॥ * ॥

भाष्ये **'सूर्ये प्रोक्तत्वाच्च'** इति चकारस्य पूर्वत्रान्वयः– सूर्ये च प्रोक्तत्वादिति । तदेतदाह– **सूर्ये पुरुषे चानन्दमयस्य प्रोक्तत्वा**दिति । न केवलं ब्रह्मणः, रुद्रस्य च प्राप्तिरिति चान्वयः ॥

'एवमन्येषाम्' इति भाष्यवचनस्यार्थमाह– **अत एवान्यदेवतानां** चेति । **अत एव** सूर्ये पुरुषे च प्रोक्तत्वादेव । कास्ताः? उक्ताभ्यां ब्रह्मशिवाभ्यामन्या देवताः, शक्त्याख्या सदाशिवगृहिणी, स्कन्दः सूर्यो विघ्नेशश्च ॥ * ॥

तथाहि शाक्तेयाः प्रत्यवतिष्ठन्ते– शक्तिरेव सर्वज्ञा सर्वेश्वरी सर्वकर्त्री सर्ववेदगदिता । सैव च सर्वगता । अत एव यदि कश्चिदसमर्थो भवति तस्मिन् शक्तिर्नास्तीति ब्रुवते, नतु विष्णुर्नास्ति, ब्रह्मा

नास्ति, शिवो नास्तीति वा । 'या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता' इति च । सदाशिव-हिरण्यगर्भप्रमुखाः सर्वेऽपि तदधीनाः । तथाहि स्तुवन्ति– 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्' इति । सैवाऽदित्ये पुरुषे च स्थित्वा ब्रह्माण्डपिण्डाण्डयोरन्तर्बहिर्नियमनी । शिवस्य तु तदुपसर्जनतयैवाऽदित्ये पुरुषे च स्थितिरिति । अत एव 'पञ्चप्रेतासनासीना' इति तामाचक्षते । पञ्चभूतासनासीनेति किलार्थः । सर्वोत्तमत्वात् तस्यामपि सावकाशो ब्रह्मशब्द इति ॥ ❁ ॥

एवं स्कान्दा आचक्षते । चतुर्मुखपञ्चमुखाभ्यामपि षण्मुखो वरीयान् । शक्तिरपि तमनुगता तारकसेनां जिगाय । तस्मात् सूर्ये पुरुषे च स्थित्वा सर्वं नियमयन् स एवाऽनन्दमय इति । तदनुगुणतया सर्वमन्यद् योजनीयमिति ॥ ❁ ॥

एवं सौरास्तामेतां युक्तिं सूर्येऽन्वयन्ते । सूर्यो हि सर्वेश्वरः । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रवणात् । अतः स एव वेदमुख्यार्थः । एतत् स्मारयितुमेव भाष्ये– 'सूर्ये प्रोक्तत्वाच्च' इत्याह । अन्यथा 'आदित्ये प्रोक्तत्वाच्च' इत्येवावक्ष्यत् । तस्मात् स एव सूर्यमण्डले पुरुषे च स्थित्वा सर्वं प्रेरयति । अत एव तं सूर्यमाहुः सरति सर्वत्र गच्छति, सुवति सर्वं प्रेरयति चेति हि सूर्यः । तथाहि पाणिनिः– 'राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्याव्यथ्याः' (अ.सू.३.१.११४) इति । 'सूसर्तिभ्यां क्यप् सर्तेरुत्वं सुवतेर्वा रुडागमः । सरति सुवति वा सूर्यः' इति जयादित्यः । सूरिभिरीयते गम्यते चेति निर्वचनेनापीष्टं नः समीहितम् । मुक्तोपसृप्यत्वमेव हि तेनाभिहितं भवति । सुष्ठु रमणमर्हतीत्या-नन्दमयपर्यायश्चायं शब्दः । तस्मात् सूर्य एवाऽनन्दमय इति ॥ ❁ ॥

एवं 'गणानां त्वा गणपतिं हवामहे' इति सर्वजीवगणपतित्वात् गणपतिरेव सूर्ये च पुरुषे च प्रोक्त आनन्दमय इति गाणपत्याः ॥ ❁ ॥

अथ नैरुक्ताः प्रत्यवतिष्ठन्ते– तिस्र एव हि देवता वेदेषु मुख्यत उच्यन्ते त्रिलोकगताः–अग्निर्वायु-रिन्द्र इति । इन्द्रमेव क्वचिदादित्यमाचक्षते । अग्निर्वायुरादित्य इति । एवं त्रिदैवत्यः सर्वोऽपि वेदः । तेनैतेषु त्रिष्वन्यतम आनन्दमय इति युक्तम् । न सर्वथा पञ्चषसूक्तप्रतिपाद्यो विष्णुरिति ॥ ❁ ॥

अथ श्रीतत्वोपासका आचक्षते । नैव ब्रह्मशिवाद्या आनन्दमयपदवाच्याः । किन्तु ब्रह्मादीनामपि जननी, परमपुरुषस्य नारायणस्य महिषी प्रकृतिमानिनी अक्षरपदगदिता श्रीरेवाऽनन्दमयपदगदिता । विष्ण्वाख्यं

**'सोऽकामयत, बहु स्यां प्रजायेय' इत्यादेरानन्दमयस्य बहुभावात्, जडप्रकृतेश्च परिणममानाया बहुभावात् तस्याश्च प्राप्तिः ॥**

ब्रह्म जगत्कारणमुक्तम् । तस्य जगज्जनने द्वारभूता श्रीर्हि जगज्जननी । तथाहि स्मरन्ति–'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति ॥

ननु सा महद् ब्रह्म । अत्र तु केवलं ब्रह्मपदं पठ्यते । न दोषः । ब्रह्मपदोक्तमेव महत्त्वं स्फुटत्वाय पुनरुच्यते महदिति । यथा– आत्मा परमात्मेति । विष्णुर्महाविष्णुरिति । गणपतिर्महागणपतिरिति ॥

सा च हि ब्रह्मरुद्रादीनां सृष्टिस्थितिसंहारकारणं श्रूयते– 'अहं रुद्रेभिः–' इति, 'यं कामये तन्तमुग्रं कृणोमि' इति, 'अहं सुवे पितरमस्य मूर्धन्' इति, 'अहं रुद्राय धनुरातनोमि' इत्यादि च । तेन 'यतो वा इमानि भूतानि जायन्ते' इत्याद्या श्रुतिरपि ब्रह्मशब्दवाच्ययोः लक्ष्मीनारायणयोः सहैव सर्वकारणत्वमाहेति सुन्दरम् । ततश्च ब्रह्मजिज्ञासेति लक्ष्मीनारायणयोर्जिज्ञासा कर्तव्येत्यायातम् । सैव चाऽनन्दमयपुच्छयोर्जिज्ञासा । तस्मादानन्दमय इति चित्प्रकृतिरुच्यते । नच पुँल्लिङ्गत्वं बाधकम् । 'कूटस्थोऽक्षर उच्यते' इतिवदुपपत्तेः ॥

युक्तं चैतत् । तथाहि– पृथिवी चाऽपश्चान्नमयकोशः । अग्निर्वायुराकाशः प्राणमयकोशः । इन्द्रान्तास्तदुभयकोशमानिनः । ततः शिवो मनोमयकोशमानी । ततश्चित्तं विज्ञानमयकोशः । तन्मानी चतुर्मुखः । ततश्चेतनाऽऽनन्दमयकोशः । तन्मानिनी चतुर्मुखजननी चित्प्रकृतिरिति ॥

अथ कथं ब्रह्म पुच्छं प्रतिष्ठा? एतदपि युक्ततरम् । पुच्छयित्वा विभज्य तां प्रकृतिं त्रिधा त्रिगुणमानिनीं विधाय सृष्टिस्थितिसंहारेषु नियमयतीति विष्ण्वाख्यं ब्रह्म तस्याः पुच्छम् । स एव च तस्याः प्रतिष्ठाऽऽधारः, यथा पादः शरीरस्येति । गीता चात्र संवदते– 'ब्रह्मणो हि प्रतिष्ठाऽहम्' इति ॥

आनन्दमयस्य बहुभावश्रुतिरपि तस्याश्चित्प्रकृतितां गमयति– **'सोऽकामयत बहु स्यां प्रजायेय' इति** । सा हि स्वेनाभिमतां जडप्रकृतिं बहुधा चकार–

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
'अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' इति ॥

तस्मात् चित्प्रकृतिरेवाऽनन्दमयः । विष्णुरेव पुच्छं प्रतिष्ठेति । अथवा 'ब्रह्म पुच्छं प्रतिष्ठा' इति तदपत्यं कार्यं ब्रह्म वा स्यात् । नास्माकं तत्र भर इति ॥ ※ ॥

## साङ्ख्यानां पूर्वपक्षः

अवसितोऽत्रादृष्टवादिनां देवताविषयः प्रधानः प्रश्नः । अथ दृष्टवादिनः प्रतिष्ठन्ते । तत्र द्वयी गतिः– आनन्दमयो जडप्रकृतिर्वा स्यात्, जीवो वा स्यादिति ॥

तत्र प्रियसाङ्ख्याः प्रचक्षते– जडप्रकृतिरेवाऽनन्दमयः । अन्नमयादिभिः सहपाठात् पञ्चापि प्रकृतिविकारा एवात्र प्रस्तुता इति स्वरसम् । अन्यथा प्रायपाठविरोधश्च प्रसज्यते । 'बहु स्यां प्रजायेय' इति बहुभावश्रवणाच्च जडप्रकृतिरित्यवसीयते । बहुधाभवनं हि जडधर्मः । नहि चेतनः कचिद् विक्रियते । पक्षेऽस्मिन् 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्ताम्' इत्युपरितनवाक्यं च संवदते । अपि चैतेन नामात्मकानां शब्दानामिह समन्वय इति वदन् तत्ववादी चास्माकमनुकूल इव । पञ्चानामपि कोशनामत्वात् ॥

तथाच 'स वा एष पुरुषोऽन्नरसमयः' इत्यादेरयमर्थः– यः पुरुषः शिरःपाण्यादिमानाकृतिविशेषः स एवैष इदानीमस्मद्देहत्वेनानुभूयमानोऽन्नरसमयः । मधुराम्ललवणतिक्तकटुकषायात्मको यः षड्विधोऽन्नस्य रसः, तस्य विकारोऽन्नरसमयः । पित्रा भुक्तोऽन्नरसः क्रमशः शुक्ररूपेण परिणतः सन् गर्भाशयं प्रविष्टः मात्रा भुक्तेनान्नरसेन सह देहत्वेन विक्रियते । पञ्चवृत्तिर्वायुः प्राणः । तद्विकारः प्राणमय आत्मा देहः । उपासनार्थं च पुरुषाकारतोच्यते । एवमुत्तरत्रापि । त्रिगुणात्मकं हि प्रधानम् । तत्र तमोभागादन्नमयकोशः । अतस्तत्र जाड्यं सहजधर्मः । रजोभागात् प्राणमयकोश इति तत्र क्रियाशक्तिरुपलभ्यते । मनोमयादयस्त्रयः कोशाः सत्वभागाद् भवन्तीति तेषु त्रिषु ज्ञानशक्तिरुपलभ्यते । तथाहि तमोमिश्रात् सत्वगुणान्मनोमयकोशः । ततो रागद्वेषादयः । रजोमिश्राद् विज्ञानमयकोशः । ततो भूतार्थस्मरणं वैदिकलौकिकक्रिया च । केवलसत्वगुणादानन्दमयकोशः । ततः प्रियमोदादिसुखविशेषा इति ॥

उक्तं च गीतायामपि–

'सत्वं सुखे सञ्जयति रजः कर्मणि भारत ।
'ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत' इति ॥

ननु जडं न कामयते । किन्त्वानन्दमयः कामयते–'सोऽकामयत बहु स्यां प्रजायेय' इति । नैष दोषः । 'प्रकृतिः कर्त्री । पुरुषस्तु पुष्करपलाशवन्निर्लिप्तः' इति हि साङ्ख्यसमयः । अतस्ते मन्यन्ते– 'आत्मनोऽसङ्गत्वादिच्छाद्याः प्रकृतिगतगुणत्रयपरिणामाः' इति । तेनेच्छाद्या जडधर्मा एव, न चेतनधर्मा इति सर्वं सङ्गतम् ॥

नच ब्रह्मशब्दविरोधः । भवद्भिः प्रमाणत्वेनाङ्गीकृतं श्रीमद्भागवतमेव जडप्रकृतेः ब्रह्मत्वं बहुभावेन सहैव प्रस्तौति–

'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
'एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः' इति ॥

अयमर्थः– पञ्चभिः पृथिव्यप्तेजोवाय्वाकाशैः, पञ्चभिः गन्धरसरूपस्पर्शशब्दैः, चतुर्भिर्मनोबुद्ध्यहङ्कारचित्तैः, दशभिः ज्ञानकर्मेन्द्रियैः स्वविकारैः विशिष्टं ब्रह्म जडप्रधानमित्यर्थः । एवमेतच्चतुर्विंशतिकं गणं प्रधानकार्यमाहुरिति ॥

तथाच 'असन्नेव स भवति' इत्यादेरयमर्थः– ब्रह्म प्रकृतिः, तद्विकारभूतं जगच्च असत् मिथ्येति वेद चेत् स वेत्ता असन्नेव अनर्थभागेव भवति । सत्यत्वेन वेद चेत् तमेनं सन्तं ज्ञानसुखभागिनं विदुर्विद्वांस इति प्राकृतप्रपञ्चस्य त्रैकालिकनिषेधप्रतियोगित्वं वदतः प्रियमायावादान् निन्दतीयं श्रुतिरिति सर्वं सुन्दरम् ॥

एवं प्रियादयः पञ्चापि सुखप्रभेदा एव । प्रियादि त्रिकं बाह्यम् । आन्तरं सुखमानन्दः । आनन्दस्य परा काष्ठा ब्रह्मेति । अथच 'विष्ण्वाख्यं ब्रह्म पुच्छं प्रतिष्ठा' इति भवदुक्तार्थाङ्गीकारेऽपि न नः काचिद्धानिः । यत्किमपि स्यात् नास्माकं तत्र भरः ॥ ✻ ॥

'जातिजीवकमलासनशब्दराशिषु' इति ब्रह्मशब्दादेव सर्वजीवानाम् । अन्नमयत्वादेश्च । तथाऽपि न त आनन्दमयशब्देनोच्यन्ते । किन्तु विष्णुरेव ॥

---

बृह **जातिजीवकमलासनशब्दराशिष्विति** धातोः ब्रह्मशब्दवाच्यत्वाज्जीवमात्रस्य प्राप्तिः । एवं प्राप्ते सिद्धान्तमारभते– **तथाऽपीत्यादिना** ॥

---

### जीव एवाऽनन्दमयः

अथापरः प्रतिष्ठते– किमनेन द्राविडप्राणायामेन । आनन्दमयो जीव इति स्वारसिकोऽर्थः । जीवो हि शरीरेन्द्रियद्वारा आनन्दं भुङ्क्ते । तथाहि– अन्नमयः पुरुष इति शरीरमुच्यते । ततः प्राणमय इति चक्षुरादीनि बाह्येन्द्रियाणि । 'हृषीकमिन्द्रियं प्राणः' इति यादवप्रकाशः । ततः मनोबुद्धी मनोमयकोशः । अहङ्कारचित्ते विज्ञानमयकोशः । तदेवम्– 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा' इत्युक्तानि सुखसाधनानि विवृतानि । ततः सुखभोक्ता जीवात्मा आनन्दमय इति स्फुटम् । तत् किं वृथाऽर्थान्तरगवेषणप्रयासेन । नच ब्रह्मशब्दविरोधः । तस्य सर्वजीवसाधारण्यात् । तथाहि परमश्रुतिः– 'ब्रह्माणि जीवाः सर्वेऽपि' इति ॥

यथाऽऽत्मा देह इति स्थूलतमोऽर्थः । सन्देह इति स्थूलतरः । मन इति स्थूलः । जीव इति सूक्ष्मः । जीवमानीति सूक्ष्मतरः । नारायणः परमात्मेति सूक्ष्मतमः । एवं ब्रह्मेति जीव इति स्थूलतमोऽर्थः । ब्रह्म जातिरिति स्थूलतरः । मुक्त इति स्थूलः । चतुर्मुख इति सूक्ष्मः । चित्प्रकृतिरिति सूक्ष्मतरः । परं ब्रह्म नारायण इति सूक्ष्मतमः । मुख्यस्यानुपपत्तौ चामुख्यार्थग्रहणमिति शाब्दबोधक्रमः ॥

पठन्ति च धातुपारायणिकाः– **'बृह जातिजीवकमलासनशब्दराशिषु'** इति । तेन सर्वजीवानां प्राप्तिः । भाष्ये 'बृह' इति धातुर्न पठ्यते । केवलं धात्वर्थ एव पठ्यते । द्वाभ्यां कारणाभ्याम् । अपठितोऽपि धातुर्ज्ञायत एवेति, वस्तुतस्तु नायं साक्षाद् धात्वर्थः, किन्तु धातुजन्यब्रह्मशब्दार्थ इति च । क्रिया हि धात्वर्थः । नतु सिद्धम् । अथापि बृहधातुनिष्पन्नस्य पदस्यार्थेयत्ताप्रदर्शनायेदमुदितम् । भवति चैतादृशो धातुपाठः प्राचीनानाम् । स यथा गडि वदनैकदेशे ॥

तथाहि– बृंहति बृंहितो भवति चतुर्षु वर्णेष्विति ब्रह्म ब्राह्मणजातिरुच्यते । जातिरिति वर्ण-वचनम् । जडापेक्षया बृंहित इति ब्रह्म जीवः । सर्वजीवेभ्योऽपि बृंहित इति ब्रह्मा ब्रह्म वा कमलासन उच्यते । चतुर्मुखादपि बृंहितमिति ब्रह्म कमलासनं श्रीतत्वमुच्यते । ततोऽपि बृंहित इति कमलाया आसनं नारायणो ब्रह्म ब्रह्मा वा । सकलशब्देभ्यो बृंहित इति अनन्तशब्दराश्यात्मा वेदोऽपि ब्रह्म भवति ॥

नच आनन्दमयस्य जीवत्वे 'सोऽकामयत । बहु स्यां प्रजायेय । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत' इति सर्वस्रष्टृत्वविरोधः । प्रकरणान्तरारम्भोऽयम् । नात्र स इत्यानन्दमयः परा-मृश्यते । किन्तु 'आत्मन आकाशः सम्भूतः' इति पूर्वप्रस्तुत आत्मा परामृश्यते । स एव चाऽत्मा आनन्दमयपुच्छत्वेनात्र निर्दिष्टः– 'ब्रह्म पुच्छं प्रतिष्ठा' इति । अत्र तत्ववादिनां मतं स्यात् सम्मतं पूर्वपक्षिणामपि । अथवा, आनन्दमयपदगदितेन सकलजीवजातेनैकीभूतं ब्रह्म पुच्छं प्रतिष्ठेत्येतत् तदुक्तं भवति । तथाहि तैत्तिरीये शाङ्करं भाष्यम्– 'सर्वस्याविद्यापरिकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा पुच्छम्' इति । तदपि स्यात् । इदमपि स्यात् । नास्माकमेकत्र भर इति ॥ ※ ॥

भाष्ये– **अन्नमयत्वादेश्चेति** । अन्नमयो देहः । आदिपदेन प्राणवृत्तिमनश्चित्तजीवधर्माणां च पूर्व-पठितत्वात् तन्मानी जीव एवाऽनन्दमय इति युक्तम् । नत्वशरीरः परमात्मा । अपिच श्रूयते स्फुटं शारीरत्वम्– 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति । अशरीरो हि भगवान् । शरीरे बद्ध इति जीवः शारीर उच्यते । तदिदं चशब्देनाऽह– **अन्नमयत्वादेश्चेति** ॥

वेदानां मूलतः देवतामीमांसार्थत्वात् तद्विषयः प्रश्न एव प्रथमं कृतः– 'ब्रह्मादिः प्रकृतिर्विष्णुर्वा' इति । न केवलं जडस्य जीवस्य वा वेदप्रतिपाद्यत्वम् । अनुपास्यत्वात् । अपूर्वत्वाभावाच्च । अथापि वादिप्राप्तौ निराकर्तव्याविति तयोरमुख्यतयाऽन्ते निक्षेपः ॥ ※ ॥

## पूर्वपक्षे रीत्यन्तरम्

तदिदम्– **'रुद्रशक्तिस्कन्दसूर्यविघ्नादेः देवतासङ्घस्य'** इति टीकावाक्यसूचितं विवरणम् । अथ भाष्ये **'हिरण्यगर्भस्य प्राप्तिः'** इति प्राप्तिपदसूचितं विवरणान्तरमिष्यते ॥

प्राप्तिरिति सम्भावनैव नावधारणा । तेन स्याद्वादोऽयम् । आनन्दमयो न विष्णुरित्येव केवल-मागृह्यते । तस्याऽनन्दमयपुच्छत्वात् । नहि पुच्छवानेव पुच्छं भवितुमर्हति । तर्हि कः स्यात्? ब्रह्मशब्दात् शतानन्दनाम्ना च हिरण्यगर्भोऽपि स्यात् । पुरुषे सूर्ये च प्रोक्तत्वात् रुद्रोऽपि स्यात् । एवं तत्तन्मता-नुसारेणाऽन्येऽन्येऽपि देवाः स्युः । एवं ताभिस्ताभिः सम्भावकयुक्तिभिः चित्प्रकृतिः स्यात् । जडप्रकृतिर्वा स्यात् । जीवो वा स्यात् ॥

एवं विष्ण्वन्यत्वे सति हिरण्यगर्भाद्यन्यतमत्वमानन्दमयपदार्थ इति पूर्वपक्षमथितार्थः ॥ ❊ ॥

## पुच्छं ब्रह्म-आनन्दमयोऽपि ब्रह्म

सत्यमुक्तरीत्याऽस्ति हिरण्यगर्भादीनामपि प्राप्तिः । तथाऽपि न तेष्वेकोऽप्यस्यां श्रुतावानन्दमयशब्दे-नोच्यते । **किन्तु विष्णुरेवाऽनन्दमयः** । कुतः? **ब्रह्मशब्दाभ्यासात्** ॥

'ब्रह्म पुच्छम्' इति पुच्छे पठितस्य ब्रह्मशब्दस्य आनन्दमयेऽप्यभ्यासादनुवर्तनात् । अभितः उभयतः, पुच्छे चाऽनन्दमये च असनं न्यसनं पठनमित्यर्थः । पुनर्वचनमिति यावत् । न केवलमनुवर्तनात् । अभ्यासादावर्तनाच्च– 'असद् ब्रह्मेति वेद चेत्', 'अस्ति ब्रह्मेति चेद् वेद' इति ॥

नन्वयं पुच्छविषयः । नाऽनन्दमयविषयः । तथाहि शाङ्करं भाष्यम्– 'ब्रह्म पुच्छं प्रतिष्ठेत्युक्त्वेदमुच्यते– 'तदप्येष श्लोको भवति– असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इति । अस्मिंश्च श्लोकेऽननुकृष्याऽनन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद् गम्यते– 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति' इति । तदेतन्नाऽद्रत्यम् । तदङ्गीकारे अन्नमयादिप्रकरणपठितानामपि श्लोकानां पुच्छविषयत्वं स्यात् । स्यान्नाम । का नो हानिः? ननु भोः श्रुतहानिः । तथाहि– 'अन्नाद् वै प्रजाः प्रजायन्ते', 'प्राणं देवा अनुप्राणन्ति', 'यतो वाचो निवर्तन्ते', 'विज्ञानं यज्ञं तनुते' इति चतुर्ष्वपि पूर्वप्रकरणेषु अन्नमयादिविषयत्वमेव न पुच्छ-विषयत्वम् । तत्साहचर्यादत्रापि आनन्दमयविषयत्वमेव युक्तम् । तत् कुत इयमपूर्वाऽश्रुतकल्पना तस्य प्रत्यभादिति विस्मये निमज्जामः ॥

‘तदेव ब्रह्म परमं कवीनाम्’ । ‘एतमेव ब्रह्मेत्याचक्षते’ ।
‘ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
‘असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्’ ॥

---

रामानुजीयं चात्र संवदते भाष्यम्– ‘अन्नाद्वै प्रजाः प्रजायन्ते इत्यादिश्लोका यथा न पुच्छमात्रप्रतिपादनपराः, अपितु अन्नमयादिपुरुषप्रतिपादनपराः, एवमत्रापि ‘असन्नेव–’ इति श्लोकः नाऽनन्दमयव्यतिरिक्तस्य पुच्छस्य’ इति ॥ ❋ ॥

## विष्णुरेव ब्रह्म

ननु ब्रह्मशब्दो जिज्ञासासूत्रे विष्णुविषयः स्यात् । ‘विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते’ इति पूर्वसूत्राभ्याम् । अत्र त्वन्यविषयोऽपि स्यात् । नहि सर्वत्रापि विष्णुविषय एवायं प्रयोक्तव्य इत्यस्ति राज्ञामाज्ञा । नचानेकार्थेषु पदेषु एकोऽर्थः प्रधानः, अन्येऽप्रधाना इति वक्तुं युक्तम् । प्रसङ्गादेवार्थनिर्णयः । यथा भुञ्जानः सैन्धवमानयेत्याह । लवणमानयेत्येव तदाह । भोजनप्रसङ्गात् । न तु लवणस्य मुख्यार्थत्वात् । अथ प्रयियासुः सैन्धवमानयेत्याह । घोटकमानयेत्येव तदाह । प्रयाणप्रसङ्गात् । नतु घोटकस्य मुख्यार्थत्वात् । शङ्कैषा प्रथमसूत्रभाष्य एव परिहृता । ‘ब्रह्मशब्दश्च विष्णावेव’ इति । तदेव सूत्रारूढं कर्तुं पुनराह– **तदेव ब्रह्म परमं कवीनामित्यादिना**, **‘इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात्’** इत्यन्तेन ।

यदि ब्रह्मशब्दो न विष्णोरेव वाचकः, तर्हि शतकृत्वोऽभ्यासेऽपि न वस्तुसिद्धिः । अतः ‘अभ्यासात्’ इत्युद्घोषयमाणो भगवान् विस्पष्टमिदं समचष्ट यद् विष्णावेवायं प्रसिद्धो ब्रह्मशब्दो नान्यत्रेति ॥

यस्यां श्रुतावानन्दमयस्य ब्रह्मतोक्ता तस्यामेव तैत्तिरीयश्रुतावुपरि, **‘तदेव ब्रह्म परमं कवीनाम्’** इत्युक्तमित्यन्तरङ्गप्रमाणं प्रथममाह । तेन प्रथमसूत्रभाष्योक्तं सर्वमत्रानुसन्धेयमिति स्मारयति च । नारायणोपनिषदिति नामधेयमेव च मन्त्रस्यास्य विष्णुपरतां गमयति । याजुषस्यास्य मन्त्रस्य

बाह्वृच्यसमाख्यानमप्याह– 'एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं सर्वेषु भूतेष्वेतमेव **ब्रह्मेत्याचक्षते**' (महै.उ.२.८.३.) इति ॥

इतः पूर्वमिदं पठ्यते– 'स यश्चायमशरीरः प्रज्ञात्मा, यश्चासावादित्ये, एकमेतदिति विद्यात्, तस्मात् पुरुषम्पुरुषं प्रत्यादित्यो भवति' इति । परस्ताच्च– 'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतदित्यवोचाम' इति । एतदेव चात्रोक्तम्– 'स यश्चायं पुरुषे, यश्चासावादित्ये स एकः' इति । 'पुरुषे' इत्युक्तमेव चात्र विव्रियते– 'एतं सर्वेषु भूतेषु' इति ॥

'प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः ।
'आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रतिप्रति' इति,
'अन्तस्थः सर्वजीवानां पूर्णत्वात् पुरुषाभिधः ।
'समः स सर्वरूपेषु सर्वजीवनियामकः ।
'इति विद्यात् परं विष्णुं मुच्यते तेन संसृतेः' इति चैतदुपनिषद्व्याख्यानरूपायामृग्वेदसंहितायाम् । तेन 'एतमेव' आदित्यगतं नारायणमेव इत्युक्तं भवति ॥

एतमेवेत्येवकारेण इतरेषां ब्रह्मशब्दवाच्यत्वं निषिध्यते । अनुमन्यते चान्येषामपि तत्पदवाच्यत्वं जातिजीवेत्यादिधातुपाठेन । तेन ज्ञायते– **एतमेव** मुख्यतया **ब्रह्मेत्याचक्षते** । अन्यानमुख्यतयेति । तमेतं विभागं स्फुटमवगमयत् पुराणवचनमाह– **ब्रह्मशब्दः परे विष्णाविति** । अथवा, किं 'तदेव, एतमेव' इत्यादिसर्वनामवचनेन । स्फुटं पुराणवचनं श्रूयतामित्याह– **ब्रह्मशब्द** इति । एतेन च 'तदेव– एतमेव' इत्यादेर्विष्णुपरता स्फुटमुदिता भवति । इतिहासपुराणाभ्यां हि वेदं समुपबृंहयेत् ॥

**परे** सर्वतोऽप्युत्तमे । मुख्यवाचकतया **इष्यते** अङ्गीक्रियते विद्वद्भिः । **अन्यत्र** चतुर्मुखप्रकृत्यादिषु **न** क्वापि **इष्यते** । यतः **परे** अन्ये सर्वेऽपि असम्पूर्णगुणाः । सर्वैर्गुणैर्बृंहितो विष्णुरेव हि तच्छब्दार्थः । निरपेक्षा निरवधिका च पूर्णता सम्पूर्णता नाम । समग्रा हि पूर्णता सम्पूर्णता । बह्व्यो हि सापेक्षाः पूर्णता भवन्ति । यदि क्वचिदन्यत्रापि प्रयोगो भवेत् तत् केवलमुपचारत एव । वाशब्दोऽवधारणे । अथच अन्यत्र भवेद् वा प्रयोगः । **'वा'** इत्यभ्युपगमे । स न मुख्यतः । किन्तूपचारेणेत्यर्थः ॥

‘ब्रह्मेति परमात्मेति भगवानिति शब्द्यते’ ।

‘वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः’ इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्म-शब्दाभ्यासात् ॥ ❋ ॥

---

‘यदेतत् परमं ब्रह्म वेदे शास्त्रेषु पठ्यते ।
‘स देवः पुण्डरीकाक्षः स्वयं नारायणो हरिः’ (३९.१५) इति च वाराहे ॥

‘अनाद्यन्तमपर्यन्तं यद् ब्रह्म श्रुतिचोदितम् ।
‘तदेव त्वं महाविष्णो यस्त्वां वेद स वेदवित्’ (१४४.४१) इति च ॥

अर्थविशेषगर्भितं भागवतवचनसंवादं चाह–

‘वदन्ति तत् तत्वविदस्तत्वं यज्ज्ञानमद्वयम् ।
**‘ब्रह्मेति परमात्मेति भगवानिति शब्द्यते’** इति ॥

तत्वं नारायणाख्यं विदन्तीति **तत्वविदः** तदेव **तत्वं वदन्ति** । **यत्** ज्ञानरूपमद्वितीयम्, यदेव **परं** केवलं **ब्रह्मेति आत्मेति भगवानिति** च **शब्द्यते** शब्दैरुच्यते । अथच **ब्रह्मेति, परं ब्रह्मेति, आत्मेति, परमात्मेति, भगवानिति** च **शब्द्यते** । ‘शब्द उपसर्गादाविष्कारे’ इति धातुपारायणिकाः । आविष्कारे चेति पठितव्यम् । चकारादनुपसर्गादपि, भाषणे च । ‘शब्द शब्दक्रियायाम्’ इत्यन्ये । तथाहि भागवततात्पर्यनिर्णये–

‘अद्वयम् असमाधिकम् । तथाच भाल्लवेयश्रुतिः– ‘स पुरुषः सोऽद्वय इति । नह्येनमभि कश्चन । नह्येनमति कश्चन’ इति । ‘सोऽद्वयः पुरुषस्तस्मान्न समो नाधिको यतः’ इति महामीमांसायाम् । तत्वशब्दार्थस्तत्रैवोक्तः– ‘अतीतानागते काले यत् तादृशमुदीर्यते । कुतश्चिदन्यथा नेयात् तत् तत्वं तत्वतो विदुः इति’ इति ॥

## आत्मशब्दस्य चाभ्यासात्

एतेन ‘अन्योऽन्तर आत्माऽऽनन्दमयः, एतमानन्दमयमात्मानमुपसङ्क्रामति, एतमानन्दमयमात्मानमुपसङ्क्रम्य’ इत्याद्यन्तयोरात्मशब्दाभ्यासाच्चेत्यर्थान्तरं च सूचयाम्बभूव ॥

'बुद्ध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् ।
**'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः'** इति व्याससमृतिः ॥

तथाच 'ब्रह्मशब्दाभ्यासात्' इति भाष्यस्य ब्रह्मणो यः शब्दः आत्मशब्दः, तस्याभ्यासादिति चार्थः ॥

## व्यासस्मृतेरर्थविशेषः

श्रुतिस्मृतिपुराणानां गतिसामान्यं दर्शयन् व्यासस्मृतिं चोज्जहार– **बुद्ध्याऽविहिंसन्** । विद्वेषमूला हिंसा विहिंसा । न केवलं कायेन वाचा, मनसाऽपि भूतजातमद्विषन्नद्रुह्यंश्चेत्यर्थः । 'सर्वभूतेभ्योऽभयं दत्तं मया' इति प्रतिज्ञाय हि यतिर्भवति ॥

अथच 'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः' इत्यादिस्मरणात्, अहिंसादिपुष्पैः मानसपूजां कुर्वन् । भगवत्प्रज्ञया अहिंसादिपुष्पैर्मानसमेवार्चनं मुख्यपूजेत्यर्थः । यद्युपलभ्यन्ते तदा बाह्यपु**ष्पैर्वा**, वाशब्दो व्यवस्थितविकल्पार्थे । न केवलं बाह्यपुष्पैः, किन्तु मानसपूजापुरस्कृतैः बाह्यपुष्पैर्वा, **प्रणवेन** प्रणवगर्भेण **मूलमन्त्रेण** वा सम्यक् सभक्तिश्रद्धं **सं** विष्णुमर्चयेत् । 'अकयप्रविसम्भूम–' इत्यादि-स्मरणात् । तदेव स्फुटमाह– **वासुदेवात्मकं ब्रह्मे**ति । तेनेदमाह– यत्रक्वचन वेदेषु वैदिकेषु वा ब्रह्म-शब्दः श्रूयते तत्र नारायणाष्टाक्षरप्रतिपाद्यः, वेदमूलप्रतिपाद्यः वासुदेव एव तदर्थत्वेन ज्ञेय इति । मोक्षप्रदं रूपमिति वासुदेवात्मकमित्याह । वसुदेवतनयत्वेन जातमिति च । 'सत्वं विशुद्धं वसुदेवसञ्ज्ञितम्' इति स्मरणात् ध्यानप्रक्रियायां शुद्धे मनसि प्रतिभातमिति च । वासुदेवात्मानमेव कमानन्द-मयमिति च ॥

नचावयत्वविरोधः । अवयवावयविनोरभेदश्रवणात्– 'नेह नानाऽस्ति किञ्चन' इति । सूत्रसूचित एव चायमर्थः– पुच्छे पठितस्य ब्रह्मशब्दस्याऽनन्दमयेऽप्यभ्यासात् पुनर्वचनात् तयोरेकत्वमिति । तदेतदप्यनेन स्मृतिवचनेन सूचयाम्बभूव– वासुदेवात्मा मूलमन्त्रवाच्यो नारायण इति । वक्ष्यति च– 'नारायणोऽथ सन्देहो वासुदेवः शिरोऽपिवा' इति । तेन वासुदेवात्मा कं शिरो यस्येत्यपूर्वमर्थान्तरं च स्फोरया-मास ॥

---

**एवमादिवाक्येषु विष्णावेव प्रसिद्धस्य ब्रह्मशब्दस्याऽनन्दमयश्रुतावभ्यासाद् विष्णौ तात्पर्य्याव-गमात् आनन्दमयशब्देन विष्णुरेवोच्यते ॥ * ॥**

---

बुद्ध्या विहिंसन्निति वा प्रतृण्णम् । अहिंसन्नित्यर्थः । नञर्थे विः । 'नामरूपाद् विमुक्तः' इत्यत्र यथा विमुक्त इत्यमुक्त उच्यते । तदेभिः त्रिभिः स्मृतिवचनैः सूत्रार्थतया वक्तव्यं सर्वमप्यर्थजातं सञ्जग्राह, त्रिभिः पदैस्त्रिभुवनमिव त्रिविक्रमः ॥

भाष्ये **तस्मिन्नेव प्रसिद्धेति** मुख्यार्थत्वेन सकलश्रुतिस्मृतिसिद्ध इत्यर्थः । एवं पुच्छस्यैव ब्रह्मत्वं नाऽनन्दमयस्येति परोक्तं पूर्वपक्षमुत्थाप्य तन्निरासायैव आनन्दमयोऽभ्यासादिति सूत्रयामास । सुखस्य दुःखसामानाधिकरण्यनियमात् आनन्दरहितं ब्रह्मेति तार्किकमतप्रतिक्षेपार्थं च । अतः– 'आनन्द आत्मा', 'यदेष आकाश आनन्दो न स्यात्', 'आनन्दं ब्रह्मणो विद्वान्', 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्दाभ्यासादिति च सूत्रार्थः । 'यो वै भूमा तत् सुखम्' इत्यनन्तगुणत्वज्ञापनाय च । परम-माङ्गलिकत्वाय च । अन्यथा प्राथम्यादल्पाक्षरत्वाच्च 'अन्नमयोऽभ्यासात्' इत्येवासूत्रयिष्यत् ॥

ननु यद्यवयवावयविनोरभेदोऽत्राभिमतोऽर्थः, तर्हि स्फुटं मुक्तकण्ठं किं तथैव न सूत्रितम्– 'आनन्दमयोऽ-भेदात्' इति । किमनेन शिरःपृष्ठतो हस्तमाकृष्य नासापीडनेन? न भोः । अवश्यमेवं वक्तव्यम्– ब्रह्मशब्दानुवर्तनेनान्नमयादीनामपि ब्रह्मत्वं साधितं यथा स्यादिति । तेन 'आनन्दं ब्रह्मणो विद्वान्' इति प्राणमयेऽप्यानन्दशब्दाभ्यासादिति च सूत्रार्थः । तेन मनोमयानन्दमययोरभेदोऽपि बोधितो भवति । अभ्यासादित्यनुवर्तनमात्रमत्र विवक्षितोऽर्थः, नाऽवर्तनमिति चोक्तम् । आनन्दं ब्रह्मण इति षष्ठ्या गुणगुणिनोः सविशेषाभेद इति चोक्तम् । यथाऽऽनन्दमयेऽवयवावयविनोरिति ॥

एवं ब्रह्मात्मानन्दशब्दानामभ्यासादित्यभ्यासत्रैविध्यसूचनायैव केवलमभ्यासादित्याह । अन्यथा ब्रह्मशब्दादित्येवावक्ष्यत् । ब्रह्मशब्दाभ्यासादिति भाष्यं च अर्थान्तरेऽपि सावकाशमित्युक्तम् । तदिदमहो महदैकमत्यं सूत्रकारभाष्यकारयोरित्यशेषमतिमङ्गलम् ॥ * ॥

## ॥ विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ १.१.१३. ॥

विकारात्मकत्वात् तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्छब्दः । ननु

---

॥ विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ विकारात्मकत्वात् प्रकृतेः, कार्य्याभेदेन सत्त्वार्थत्वादानन्दमयशब्दस्याऽनन्दमयत्वं जडप्रकृतेर्य्युज्यते । विकारभूतशरीराद्यभिमानित्वादन्येषां च ।

---

### शाङ्करसिद्धान्त एवैतत्सूत्रपूर्वपक्षः

॥ विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ यद्यपि श्रूयते त्रिष्वर्थेषु मयट्– 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति । तथापीह विकारार्थ एव वक्तव्य इति पूर्वपक्षी मन्यते । कुतः? अन्नमयादिविकारार्थकमयट्प्रवाहपतितत्वात् । तथाहि शाङ्करं भाष्यम्– 'इदं त्विह वक्तव्यम्– 'स वा एष पुरुषोऽन्नरसमयः । तस्माद् वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः', तस्मात् 'अन्योऽन्तर आत्मा मनोमयः' तस्मात् 'अन्योऽन्तर आत्मा विज्ञानमयः' इति च विकारार्थे मयट्प्रवाहे सत्यानन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयटः प्राचुर्यार्थत्वं ब्रह्मविषयत्वं चाऽश्रीयत इति । मान्त्रवर्णिकब्रह्माधिकारादिति चेत्, अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्गः' इति । 'तस्मादन्नमयादिष्विवाऽनन्दमयेऽपि विकारार्थ एव मयड् विज्ञेयो न प्राचुर्यार्थः' इति च । अयमेव चोत्सूत्रः शाङ्करःसिद्धान्तः ॥

य एव च तस्य प्रज्ञावादोत्थः सिद्धान्तः स एव चास्माकं पूर्वपक्षः । यत् तेन महता संरम्भेणाऽपादितं तत्सर्वमिष्टापत्त्या परिजहसतुः भगवान् सूत्रकारः, भगवत्पादो भाष्यकारभट्टारकश्च ॥

### रामानुजीयव्याख्यानम्

अन्ये पुनर्मयटो विकारार्थत्वे पाणिनिसूत्रसंवादमुल्लिखन्ति– 'नित्यं वृद्धशरादिभ्यः' (अ.सू.४.३.१४४) इति । सूत्रेऽस्मिन् 'भाषायामभक्ष्याच्छादनयोः' इति पूर्वसूत्रादनुवर्तते । तथाचायं सूत्रार्थः– वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्च अभक्ष्याच्छादनयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवतीति । वृद्धश्चाय-

**परमात्मन इति मा भूत् । प्रचुरानन्दत्वाद्ध्यानन्दमयः । नतु तद्विकारत्वात् ॥**

---

**न तु परमात्मन इति** शङ्का **मा भूत्** ।आनन्दमयशब्देनाऽनन्दप्रचुरत्वं ह्युच्यते । आनन्दमहान् आनन्दप्रचुरः । विद्यामहान् धनमहानितिवत् । स्पष्टत्वाय **प्रचुरानन्दत्वाद्ध्यानन्दमय** इत्युक्तम् । प्रचुरानन्दत्वमेवाऽनन्दप्रचुरत्वम् । न ह्यल्पानन्द आनन्दमहान् भवति ॥

---

मानन्दशब्दः । तस्माद् युक्ततरं विकारार्थत्वमिति । यद्यप्यस्ति प्राचुर्येऽपि मयट्– 'तत्प्रकृतवचने मयट्' (५.४.२१) इति । प्राचुर्येण प्रस्तुतं हि प्रकृतमुच्यते । तद्यथा– अन्नमयो यज्ञः । तथाऽप्युपक्रमे अन्नमयादिषु विकारार्थत्वं प्रकृतम् । तत्साहचर्यादस्यापि विकारार्थत्वमेव युक्तम्– इति ॥

तथाच नाऽनन्दमयो विष्णुरिति युक्तम् । युज्यते च प्रकृत्यादीनां पूर्वपक्षिणा प्रस्तुतानां मयट् । ब्रह्मादिदेवसङ्घस्य चित्प्रकृतेर्जीवजातस्य च विकाराभिमानात् । जडप्रकृतेश्च **विकारात्मकत्वात्** । परमात्मा तु न विकारात्मकः । नाप्यभिमानी । परतन्त्रं हि नियमनमभिमानशब्दार्थः । तदेतदाह– **नतु परमात्मन** इति । जीवात्मा तु देहाभिमानी देहविकारेण विकारवान् । न तु परम आत्मा । तथाच निर्विकारत्वमनभिमानश्च परमशब्दार्थ इति ॥

चित्प्रकृतेः सर्वाधिकत्वात् **प्रकृत्यादीना**मिति परामर्शः । ब्रह्मादीनामित्युक्ते पूर्ववत् देवतासङ्घमात्रपरामर्श इत्यपि शङ्का स्यात् । **विकारात्मकत्वात् तदभिमानित्वाच्चे**ति उपक्रमानुगुण्यं च यथा स्यात् । तदुभयानुगुण्यं हि चिदचित्प्रकृतिगतमिति ॥

टीकायाम्– **विकारात्मकत्वात् प्रकृते**रित्यादेरयमर्थः । जडप्रकृतेरानन्दमयत्वं युज्यते । कुतः? मयटः विकारार्थकत्वात् । जडप्रकृतेश्च विकारात्मकत्वात् । विकारशब्दस्य च प्रकृतेः विकारभूत**कार्याभेदेन सत्वार्थत्वात्** । तद्यथा– मृण्मयो घटः । मृदत्र प्रकृतिः । तस्याः स्वकार्यभूतघटाभेदेन सत्त्वमेव मृण्मयत्वं नाम । एवमिह जडप्रकृतिरानन्दमयी । तस्याः स्वकार्यभूतानन्दमयकोशाभेदेन सत्त्वमेवाऽनन्दमयत्वं नाम ॥

**अन्येषां च**, चित्प्रकृतेः, ब्रह्मादिदेवसङ्घस्य जीवसामान्यस्य च । सर्वथा न विष्णुः । इति प्राप्त आह– **विकारशब्दान्नेति चेन्नेति** । कुतः? **प्राचुर्यात्** ॥

अन्नादीनां च प्राचुर्य्यमेव । 'अद्यतेऽत्ति च–' इति व्याख्यानात् ॥

---

**अन्नादीनां** चेत्यादेरयमर्त्थः– अत्र ह्यन्नमयः प्राणमयो मनोमयो विज्ञानमय आनन्दमयश्च श्रूयन्ते । तेषामन्नादीनां च प्राचुर्य्यमेव मयट्शब्दार्त्थः । 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते' इत्यन्नशब्दव्याख्यानात् । भूताद्यत्वात् भूतात्तृत्वाच्चान्नम् । न ह्यन्यान्नस्य भूतात्तृत्वम् । 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये' इति सर्वप्राणनहेतुत्वं च न ब्रह्मणोऽन्यस्य युज्यते । 'यतो वाचो निवर्त्तन्ते' इत्यादि मनोमयस्योच्यमानं वाङ्मनसागोचरत्वं च नान्यस्य युज्यते । 'विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च' इत्यादिना कर्म्मकरणहेतुत्वं सर्वदेवोपास्यत्वं च । अतः पञ्चस्वपि प्राचुर्य्यमेव मयट्शब्दार्त्थः ॥

---

तथाच सूत्रार्थः– आनन्दमये विकारवाचिनः मयट्शब्दस्य श्रवणात् नाऽनन्दमयो विष्णुरिति चेत्, नैतद्युक्तम् । मयटः प्राचुर्यार्थत्वात् । ब्रह्मणश्चाऽनन्दप्राचुर्यात् । अन्नमयादिष्वपि अस्मिन्नेवार्थे प्रयोगप्राचुर्यात् ॥

तथाचाऽनन्दप्रचुरत्वादेव विष्णुरानन्दमय उच्यते, नत्वानन्दविकारत्वात् । नन्वेवं सति आनन्दप्रचुरत्वादिति वक्तव्ये किमिति व्यत्यस्य पपाठ भाष्यकारः– प्रचुरानन्दत्वादिति । आह– स्पष्टत्वायेति । कथम्? प्राचुर्यं हि विशेषणमानन्दस्य । विशेषणस्य च समासे पूर्वनिपातः प्रायो लोके दृष्टः । एवं बहुलप्रयोगानुसरणे त्वरितमवबोधो भवतीति स्पष्टत्वाय व्यत्यस्य प्रयुयोज ॥

अपिचाऽनन्दप्रचुरत्वमिति द्वेधा विग्रहणं सम्भवति– आनन्दस्य प्रचुरत्वमिति, आनन्देन प्रचुरत्वमिति । उभयत्रापि नाधिष्ठानं मुखत उच्यते । उभयथा विग्रहणे चाऽनन्दावच्छेदेन प्रचुरत्वमप्रचुरं च दुःखमिति मन्दाशङ्काया अप्यस्त्यवकाशः । अतः स्पष्टत्वाय प्रचुरानन्दत्वादित्याह । अत्र प्रचुर आनन्दो यस्येति प्रचुरानन्दवान् मुखत उच्यते । नापि प्रतियोग्यल्पत्वशङ्का स्वरसतो भवति । स्फुटमेतदुपरिष्टात् ॥

## परोक्तदोषनिरासः

ननूक्तो दोषः । विकारार्थकमयट्प्रवाहपतितत्वादत्रापि विकारार्थतैव युक्ता, अन्यथा प्रायपाठविरोधः स्यादिति । अन्नमयादीनामपि ब्रह्मत्वापत्तिरपरथा महान् दोषः । तामेतां कुशङ्कामिष्टापत्त्या परिहरति–

तत्प्राचुर्य्यं च युज्यते । उपजीव्यत्वमेवाद्यत्वम् ।

**तत्प्राचुर्य्यं च युज्यते ।** अयमर्थः– प्रचुराद्यत्वं प्रचुरात्तृत्वं च विष्णोर्य्युज्यते सर्वभूतैकाद्यत्वात् सर्वभूतैकसंहर्त्तृत्वाच्च । 'प्राणस्य प्राणम्' इत्यादेः महाप्रणेत्तृत्वात् प्रचुरप्रणेत्तृत्वं च

**अन्नादीनां च प्राचुर्यमेवेति** । तेनान्नमयादीनां च ब्रह्मत्वमेव । तेन तत्ववादिनामिष्टमेवाहो आपादय इति परभाष्यं परिहसतीव ॥

**'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते'** इति श्रुत्या स्वयमेव व्याख्यानात् न पृथिवीमयमन्नमिहान्नमुच्यते । यतः प्रसिद्धान्नस्य भूतैरद्यत्वमेव, **न भूतात्तृत्वम्** । तदिति परोक्षनिर्देशाच्च नेदं दृश्यमानमन्नमिह विवक्षितम् । किं तु ओंतत्सदिति निर्दिष्टं ब्रह्मैव । तत् परोक्षमपि सर्वत्र ततमिति मुख्यतस्तदित्युच्यते । गुणैस्ततत्वात् सर्वकालगतत्वाच्च । भाष्योक्तं विवरणमन्यत्राप्यतिदिशति– **प्राणं देवा अनुप्राणन्तीत्यादिना** । 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' इति **सर्वदेवोपास्यत्वं च** ॥

## अदनशब्दार्थमीमांसा

एवं पञ्चस्वपि प्रचुरार्थत्वे युज्यते ब्रह्मणोऽन्नादिप्राचुर्यम् । तदुपपादयति– **अयमर्थ** इत्यादिना । ननु प्रचुरात्ता भगवानिति युक्तम् । सर्वात्तृत्वात् प्रळये । प्रचुराद्यत्वं तु न कथमपि भगवति सम्भवति । ततः प्रचुरात्तृत्वं प्रसिद्धान्ने नास्ति । प्रचुराद्यत्वं भगवति नास्तीति समानयोगक्षेमावुभावपीति । नेत्याह भाष्यकारः– **उपजीव्यत्वमेवाद्यत्वम्** । ननु 'अद भक्षणे' इति धातुपाठं पठन्ति । को नेत्याह । केवलं पपाठ भवान् । नार्थं जग्राह । तं भवन्तमिदानीं धात्वर्थं पाठयामः । कश्चिदाह– माणवकोऽन्नमत्तीति । अन्नं भक्षयतीत्येव तदाह । प्रळये भगवान् जगदत्तीत्याचक्षते । जगत् संहरतीत्येव तदाह । गतं तर्हि भक्षणम् । प्रयोगतो हि धात्वर्था अनुगन्तव्या भवन्ति । तथाहि कर्मेन्द्रियविषयानधिकृत्य भागवते पठ्यते– 'विसर्गगत्यत्त्यभिजल्पशिल्पाः' इति । पायुना विसृजति । पद्भ्यां गच्छति । उपस्थेनात्ति । आनन्दमनुभवतीत्यर्थः । वाचाऽभिजल्पति । हस्ताभ्यां शिल्पकौशलमादधाति । नात्र भक्षणमत्तिः । नापि संहरणम् । किन्त्वास्वादनम् । एवमत्तेः कर्त्रर्थे यथासन्दर्भमर्थविशेषा भवन्ति । आस्वाद एव वा सर्वत्र । अन्नमत्तीति अन्नभक्षणजनितमानन्दमनुभवतीत्यर्थः । अन्नमास्वदत इत्येव तदाह । जगत् संहरतीति संहारलक्षणमानन्दमनुभवतीत्यर्थः । जगत्संहारमास्वदत इत्येव तदाह । तस्य

**'स वा एषः–' इत्यन्यप्रारम्भात् ।**

---

तस्यैव । मनोविज्ञानशब्दशब्दिते सामान्यविशेषज्ञाने चातिस्पष्टत्वात् विशेषतस्तस्यैव । भूताद्यत्वं लोकान्नस्यैव युक्तमित्याशङ्क्याऽऽह– **उपजीव्यत्वमेवाद्यत्वम् । स वा एष इत्यन्यप्रारम्भादिति** । न हि भक्ष्यत्वमेवाद्यत्वम् । 'विसर्गगत्यत्त्यभिजल्पशिल्पाः' इति हि भागवते । न चान्यान्नं सर्वभूताद्यम् । न च कस्यापि मुख्याद्यं तत् । अतो विष्णुरेवादनफलभूततृप्तिपुष्टिदातृत्वान्मुख्याद्यः । तस्माद् **उपजीव्यत्वमेवाद्यत्वम्** ॥

'अत्तृत्त्वात् सर्वलोकानामन्नमित्युच्यते हरिः ।
'उपजीव्यश्च भूतानामिति चान्नं जनार्दनः' इति यजुस्संहितायाम् ॥

---

सृष्टिरिव संहारक्रियाऽप्यानन्दरूपा । नास्माकमिव दुःखरूपेत्यर्थः । अत एव लोके न संहारार्थेऽत्तिपदं प्रयुञ्जते । अत्तेरन्तत आनन्दगर्भत्वात् । यत्र पुनः कर्मार्थेऽत्तिः प्रयुज्यते तत्र **उपजीव्यत्वमेवाद्यत्वम्** । तद् यथा– माणवकेनान्नमद्यते । क्षुदुपशमार्थमन्नमुपजीवतीत्येव तदाह । एवं भूतैरन्नाख्यं ब्रह्माद्यते । जीवनार्थं भूतानि ब्रह्मोपजीवन्तीत्येव तदाह । कथं तर्हि ब्रह्मणा जगदद्यत इति । नहि ब्रह्मणो जगदुपजीवनं नाम सम्भवति । आस्वाद्यत्वं तत्र पदार्थ इत्युक्तम् । तथाच द्वयमेवात्तिशब्दार्थः आस्वाद्यत्वमुपजीव्यत्वं च । इयमत्र व्यवस्था– यत्र भगवतोऽदनकर्तृत्वमुच्यते तदाऽऽस्वाद्यत्वमद्यत्वम् । यत्रादनकर्मत्वमुच्यते तदोपजीव्यत्वमद्यत्वम् । अत्र च भूतैरद्यत इति भूतकर्तृकमदनकर्मत्वं विष्णोरुच्यते । **तस्मादुपजीव्यत्वमेवाद्यत्वम्** ॥

ओषधीभ्योऽन्नमित्यत्रापि न सर्वभूतैरश्यमानत्वमन्नपदार्थः । 'अन्नात् पुरुषः' इत्युत्तरवाक्यात् । तेन मनुष्यजीवैरश्यमानमिहान्नमुच्यते । पुरुष इति हि मनुष्यशरीरं तदभिमानी जीवो वा । तथाहि परभाष्यम्– 'पुरुषः शिरःपाण्याद्याकृतिमान् । कस्मात् पुरुष एव गृह्यते? प्राधान्यात् । किं पुनः प्राधान्यम्? कर्मज्ञानाधिकारः' इति । तस्मात् पूर्ववाक्येऽन्नमिति पक्वास्तण्डुला वा ओषधिसम्भवं धान्यादिकं वोच्यते । तथाहि स्मरन्ति– 'सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । निस्तुषस्तण्डुलः प्रोक्तः

तस्मान्नेदं प्रसिद्धान्नम्, कुतः? **'स वा एष पुरुषोऽन्नरसमयः'** इत्यन्यस्यैव **प्रारम्भात्** । 'पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः, स वा एष पुरुषोऽन्नरसमयः' इत्यत्र नह्योषधिप्रसूतान्नकार्य्यशरीरं तदभिमानी जीवो वोच्यते । किं तर्हि? 'तस्माद्वा एतस्मादात्मनः' इति पूर्वप्रस्तुतस्य भूतजीवादिव्यतिरिक्तस्य तन्नियन्तृत्वेन तदनुगतस्य परस्य 'स वा एषः' इति प्रारम्भः । एतदुक्तं भवति । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यारभ्याऽकाशादिशब्दैराकाशादिभूतभौतिकानां पुरुषपर्य्यन्तानां परमात्मन उत्पत्तिम्, तदभिमानिजीवानां देहोत्पत्तिम्, तेषां तदभिमानोत्पत्तिम्, परमात्मनस्तत्प्रवर्त्तकत्वेन तत्राभिव्यक्तिविशेषं

---

स्विन्नमन्नमुदाहृतम्' इति । 'त्रेधा वा इदमन्नं विहितम् । अशनं पानं खादः' इति श्रुतिः । 'पचाम्यन्नं चतुर्विधम्' इति च गीतायाम् । नचेदमन्नं **सर्वभूताद्यम्** । किन्तु मनुष्याद्यम् । मन्त्रवर्णे च– 'अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते' इति सर्वभूतोपजीव्यत्वमुक्तम् । नतु मनुष्यमात्रस्य । मनुष्यस्यापि नान्नं मुख्यमुपजीव्यम् । तस्मात् सर्वोपजीव्यो भगवानेव सर्वभूतानां मुख्यमुपजीव्यम् । मन्त्रवर्णे च स्फुटं मुख्यमुपजीव्यत्वमुक्तम्– 'अथो अन्नेनैव जीवन्ति' इति । तदेतदुक्तम्– **'उपजीव्यश्च भूतानामिति चान्नं जनार्दनः'** इति ॥

## त्रिविधः सर्गः

तस्मात् 'अन्नात् पुरुषः' इत्युक्तमन्नमन्यत् । मन्त्रवर्णोक्तं चान्यत् । कथमेकस्मिन् प्रकरणे भिन्नार्थत्वम्? नेदमेकं प्रकरणम् । किन्तु प्रकरणान्तरमिति न दोष इत्याह– **स वा एष इत्यन्यप्रारम्भात्** । अस्य वाक्यस्याऽशयं स्फुटमाह– **किं तर्हीत्यादिना** । परमात्मनः सकाशात् भूताकाशः सम्भूतः । तन्मानी गणपतिश्च सदेहः सम्भूतः । तदन्तर्नियामकः आकाशनामा नारायणश्च सम्भूतः । एवं वायुनामा वायोरन्तर्नियामकः । अग्निनामा अग्नेरन्तर्नियामकः । अम्नामा अपामन्तर्नियामकः । तथा पृथिवीनामा पृथिव्या अन्तर्नियामकः । तत ओषधिनामा ओषधीनामन्तर्नियामकः । ततोऽन्ननामाऽन्नस्यान्तर्नियामकः । ततः पुरुषनामा पुरुषस्यान्तर्नियामकः सम्भूत इति भूतान्नादिभिः सह भगवानपि पूर्वं प्रस्तुतः । 'यत्र त्रिसर्गो मृषा' इत्युक्तः त्रिविधोऽपि हि सर्गोऽत्र विवक्षितः । न क्वापि केवलजडसृष्टिः, केवलचेतनसृष्टिरित्यस्ति । सर्वत्रापि त्रिसर्ग एव । ततश्च 'स वा एषः' इति भूतान्नादिस्रष्टा तदन्त-

चोक्त्वा, 'स वा एष पुरुषोऽन्नरसमयः' इति तत्तत्सारभूतत्वेन तत्तच्छब्दपरमवाच्यस्य जीवपर्य्यन्तमनुगतस्य परमस्योपासनार्त्थं पञ्चरूपप्रतिपादनं प्रारभ्यते । नत्वन्यदुच्यते । अतो विष्णुरेवान्नमयादिशब्दोक्तः ॥

---

र्नियामकः परमात्मा परामृश्यते । तेन भूतान्नादन्यस्य परमान्नस्यैव प्रारम्भादिति भाष्यार्थः । यस्स पूर्वमन्तर्यामित्वेन प्रस्तुतः स वै, एषः 'अन्नात् पुरुषः' इति पदगदितश्च परमात्माऽन्नरसमय इति ॥

ननु मयटा विकारित्वं स्यात्? न स्यात् । 'येऽन्नं ब्रह्मोपासते' इत्यन्नमये ब्रह्मशब्दप्रयोगात् । 'अन्नाद्वै प्रजाः प्रजायन्ते । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः' इति जगत्सृष्टिस्थितिसंहार-लिङ्गाच्च । तस्यैव पुनरभ्यासाच्च– 'अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि' इति । तेन सर्वोपजीव्यः सर्वात्ता चानिरुद्धो भगवानन्नमयः ॥

एवं प्राणमयस्यापि न विकारित्वम् । 'ये प्राणं ब्रह्मोपासते' इति तत्रापि ब्रह्मशब्दश्रवणात् । 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये' इति सर्वजीवोपजीव्यत्वलिङ्गाच्च । तेन सर्वचेष्टकः सर्वजीवनप्रदश्च प्रद्युम्नो भगवान् प्राणमयः ॥

'आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचन' इति मनोमये ब्रह्मशब्दप्रयोगात् न मनोमयस्यापि विकारित्वम् । ''यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इत्यवाङ्मनसगोचरत्वलिङ्गाच्च । 'न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः' इति चान्यत्र । तस्मात् सर्वमन्ता सर्वबोद्धा सङ्कर्षणो भगवान् मनोमयः ॥

'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' इति, 'विज्ञानं ब्रह्म चेद् वेद' इति च ब्रह्मशब्दश्रवणात् न विज्ञानमयस्यापि विकारित्वम् । देवज्येष्ठत्वलिङ्गात्, सर्वदेवोपास्यत्वलिङ्गाच्च । 'ब्रह्मणः पितरं वन्दे शङ्करस्य पितामहम्' इति विष्णुरेव हि देवज्येष्ठः । 'त्रय एवाऽदिदेवाः स्युर्ब्रह्मविष्णुमहेश्वराः' इति वैजयन्त्यां यादवप्रकाशः । 'आदिदेवो महादेवः' इति, 'ज्येष्ठः श्रेष्ठः प्रजापतिः' इति च विष्णुसहस्रनामसु । 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति सर्वकर्मकरणलिङ्गाच्च । 'न ऋते त्वत् क्रियते किञ्चनारे' इति श्रुतेः । 'सर्वान् कामान्त्समश्नुते' इति मोक्षप्रदत्वलिङ्गाच्च । तेन पूर्णविज्ञानः देवादीनां विज्ञानप्रदो भगवान् वासुदेवो विज्ञानमयः ॥

‘येऽन्नं ब्रह्मोपासते’ इत्यादि ब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वमविरोधश्च ॥

---

**‘येऽन्नं ब्रह्मोपासते’ इत्यादि ब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वमविरोधश्चेति** । ‘येऽन्नं ब्रह्मोपासते’, ‘ये प्राणं ब्रह्मोपासते,’ ‘आनन्दं ब्रह्मणो विद्वान् न बिभेति’ ‘विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते,’ ‘असन्नेव स भवति असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः’ इति तत्रतत्र ब्रह्मशब्दप्रयोगान्नान्नमयादीनां विकारत्वम् । न चाब्रह्मणि ब्रह्मत्वोपासनं युक्तमित्यभिधास्यते । न च बहुत्वेऽप्यन्नमयादीनां ब्रह्मत्व-

---

‘असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः’ इति ब्रह्मशब्दाभ्यासात् निर्दोषत्वलिङ्गाच्चाऽनन्दमयो नारायण इति सूत्र एव स्थितम् ॥ ✻ ॥

नन्वथाप्यन्नमयादीनां पञ्चत्वं ब्रह्मतां विरुणद्धि । एकमेवाद्वितीयं किल ब्रह्माऽचक्षते । तस्मादब्रह्मैव शाखाचन्द्रन्यायेन ब्रह्मत्वेनोपास्यत इति युक्तम् । तथाहि परभाष्यम्– ‘यत् प्रकृतं सत्यज्ञानानन्तलक्षणम्, यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोशा उपन्यस्ताः, यच्च तेभ्य आभ्यन्तरम्, येन च ते सर्वे आत्मवन्तः तद् ब्रह्म पुच्छं प्रतिष्ठा’ इति । तदेतन्निरास– **नचाब्रह्मणीत्यादिना** । **अभिधास्यते**–‘नेतरोऽनुपपत्तेः’ इत्यादिनोत्तरसूत्रेण सूत्रकारेणैव ॥

कथमथ पञ्चत्वं ब्रह्मणः? आह भाष्यकारः– **बहुरूपत्वाच्च न विरोध** इति । न वयं पञ्चत्वं ब्रूमो ब्रह्मणः । किन्तु पञ्चरूपत्वम् । एक एव भगवान् लीलया स्वाभिन्नबहुरूप इति न विरोधः । तदुक्तम्–

‘परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।
‘अविकारिणे स्फुटमनन्तरूपिणे सुखचित्समस्ततनवे नमोनमः’ इति ॥

‘पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत् पञ्चद्वयी शतसहस्रपरोऽमितश्च ।
‘एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत्’

इति च पञ्चरात्रवचनम् ॥

नच पृथक् कल्पना युक्ता ॥

विरोधः । एकस्यैव ब्रह्मणो बहुरूपत्वसम्भवात् । चशब्दादेकस्यैव चेदं बहुरूपत्ववचनम्– 'एतमन्नमयमात्मानमुपसङ्क्रामति, एतं प्राणमयमात्मानम्' इत्येकस्यैवाऽदानादिकर्त्तुः सविशेषमनुकर्षणात् । **नच पृथक् कल्पना युक्ता** । अयमर्थः– अन्नमयादिषु विकारार्थो मयट्शब्दः; आनन्दमये प्राचुर्यार्त्थे इति या भास्करीयकल्पना सा न युक्ता । सम्भवत्येक-

---

तथाच 'बहुरूपत्वात्' इत्यस्य 'एकस्यैव बहुरूपत्वसम्भवात्' इति, 'स्वतो बहुरूपत्वाच्च भगवतः' इति चार्थः । तत् कथम्? उत्तरत्र स्फुटं बहुरूपत्ववचनादिति च । उत्तरत्रेति कुत्र? आह टीकाकारः– **एतमन्नमयमित्यादिना** । तथाहि ब्रह्मानन्दवल्ल्यामष्टमेऽनुवाके पठ्यते– 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः । सय एवंविदस्माल्लोकात् प्रेत्य । **एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुप**-सङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्द-मयमात्मानमुपसङ्क्रामति' इति ॥

भृगुवल्ल्यां च दशमेऽनुवाके– 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः । सय एवंविदस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुप-सङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतथ् साम गायन्नास्ते हा३वु हा३वु हा३वु' इति ॥

भगवत्प्राप्तिजनितस्याऽनन्दोद्रेकस्योद्गारोऽयम्– हा+उ=हो इति । अत्र पञ्चानामपि रूपाणाम् 'एतमात्मानम्' इत्येकत्वमेव गमयति । आत्मशब्दाभ्यासाच्च ब्रह्मत्वमवगम्यते ॥

नन्वेकस्यैवानुकर्षे कथं नामभेदः, अयमन्नमयोऽयं प्राणमय इत्यादि? कथं चैकस्यानुक्रमशः पञ्चधा प्राप्तिः? सर्वमेतदभेदेऽपि भेदकार्यकारिणा विशेषेण युज्यत इत्याह– **सविशेषमिति** ॥

## भास्करीयसूत्रार्थविमर्शः

**भास्करीयकल्पनेति** । तथाहि तद्भाष्यमानन्दमयसूत्रे– 'यथाऽन्नमयादीनामवयवयोगादमुख्य-मात्मत्वमेवमत्रापि स्याद् विकारापन्न एव कश्चिदात्मा' इति । तथा विकारशब्दादिति सूत्रे–

कल्पने न पृथक्कल्पना युक्ता । 'येऽन्नं ब्रह्मोपासते' इत्यादिषु मयट्शब्दाभावान्नान्नमयादिरुच्यत इति वाक्यभेदप्रसङ्गात् । प्रचुरान्नस्यैवान्नशब्दमुख्यार्थत्वाच्च । 'अद्यतेऽत्ति च' इत्युक्तत्वाच्च ॥

**न मायिनामन्या पृथक्कल्पना युक्ता** । 'सत्यं ज्ञानमनन्तं ब्रह्म, तस्माद्वा एतस्मादात्मनः' इत्यत्र ब्रह्मोच्यते, अन्नमयादयः पञ्च कोशा मिथो भिन्नाः, तेषां ब्रह्मशब्दोक्तत्वेऽप्य-

---

'विकारार्थवादिनो मयट्प्रत्ययस्य दर्शनादन्नमयादिवदमुख्य आत्माऽऽनन्दमय इति चेन्न । प्राचुर्यार्थेऽपि मयटो विधानात् । 'प्रकृतवचने मयट्' इति हि प्रभूतार्थे विधीयते । यथाऽन्नमयो यज्ञः' इति । पृथक्कल्पना एकस्मिन्नेव प्रकरणे एकस्यैव शब्दस्य द्वेधाऽर्थकल्पना । अस्मदुक्तार्थादन्यार्थकल्पना च ॥

## रामानुजीयसूत्रार्थविमर्शः

रामानुजीयपृथक्कल्पनाया अप्युपलक्षणमेतत् । अथापि वरं भास्करीयव्याख्यानादिति न मुखत उल्लिलेख । तथाहि रामानुजीयं मतम्— अन्नमयप्राणमयमनोमयाः कोशाः । विज्ञानमयो जीवः । आनन्दमयः परमात्मेति । 'विज्ञानमयाज्जीवादन्य एवाऽनन्दमयः परमात्मा' इति हि तद्भाष्यम् । अन्नमय इति विकारार्थे मयट् । अन्नविकारः शरीरमित्यर्थः । प्राणमय इति प्राणप्रचुरत्वं प्राणसम्बन्धित्वमात्रं वा । मनोमय इति च मनःसम्बन्धित्वमात्रम् । विज्ञानमय इति विज्ञातृत्वम् । आनन्दमय इत्यानन्दप्राचुर्यमर्थ इत्यादि तन्मतम् । इयमपि पृथक् कल्पना मयटः अर्थवैविध्यकल्पना नतरां युक्तेति भाष्यार्थः ॥

## शाङ्करसूत्रार्थविमर्शः

अथ शाङ्करं व्याख्यानं निराह— **सत्यं ज्ञानमित्यादिना** । तथाहि परभाष्येषु तत्रतत्र पठितानि वचनानि— 'सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मणो लक्षणार्थं वाक्यम्, सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेति । तस्माद् वा एतस्मादात्मन इति ब्रह्मण्येवाऽत्मशब्दप्रयोगात् वेदितुरात्मैव ब्रह्म । अन्नमयादय आनन्दमयपर्यन्ताः

स्वरूपे च युज्यते, प्रचुरप्रकाशो रविरिरितिवत् ॥ * ॥

ब्रह्मत्वमन्त्यपुच्छस्य ब्रह्मत्वम्, श्रुतिप्रसिद्धादन्नमयाद्युपसङ्क्रमणादन्यस्तदतिक्रमो मोक्षः, 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इति वरुणोक्तानां चक्षुःश्रोत्रवाचां नान्नमयादिष्वनुवृत्तिः, 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ पञ्चमस्याऽनन्दस्य ब्रह्मत्वम्, 'एतमानन्द-मयमात्मानमुपसङ्क्रम्य' इत्येतस्माद् ब्रह्मानन्दातिक्रमनिर्गुणवाक्यात् पृथगेव, 'इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिको वाक्यशेषः श्रुत्यन्तरगतसगुणब्रह्मोपासन-वाक्येनैकवाक्यतया तत्फलप्रतिपादक इत्यादिका । उक्तहेतुभिरत्यन्तासङ्गतत्वात्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च । 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा वाङ्मयः, तस्माद्वा एतस्माद्वाङ्मयादन्योऽन्तर आत्मा चक्षुर्म्मयः, तस्माद्वा एतस्माच्चक्षुर्म्मयादन्योऽन्तर आत्मा श्रोत्रमयः, तस्मात्प्राणमयः, तस्मान्मनोमयः, तस्माद्विज्ञानमयः, तस्मादानन्दमयः' इति हि वाधूलकश्रुतिः वाक्चक्षुश्श्रोत्राणि चान्नमयादिष्वनुवर्त्तयति ॥

ननु प्रतियोग्यल्पत्वापेक्षया प्रचुरशब्दः प्रयुज्यते, यथा दुःखप्रचुरः संसार इति, अत आनन्दप्रचुर इत्युक्ते दुःखलवकलिलत्वं च प्रतीयत इत्यत आह– **स्वरूपे चेति** । **स्वरूपे च युज्यते प्रचुरशब्दः** । न हि प्रचुरप्रकाशो रविरित्युक्तेऽल्पान्धकारसाहित्यमादित्ये प्रतीयते,

---

पञ्च कोशाः' इति, 'तत्र यद् ब्रह्म मन्त्रवर्णे प्रकृतम्– सत्यं ज्ञानमनन्तं ब्रह्मेति तदिह ब्रह्म पुच्छं प्रतिष्ठेत्युच्यते' इति, 'न प्राप्तिः सङ्क्रमणम् । अविद्याविभ्रमनाशे सङ्क्रमशब्द उपचर्यते । नह्यन्यथा सर्वगतस्याऽत्मनः सङ्क्रमणमुपपद्यते' इति, 'उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच ब्रह्मणो लक्षणम्' इति, 'एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्यन् शनैःशनैरन्त-रनुप्रविश्याऽन्तरतममानन्दं ब्रह्म विज्ञातवांस्तपसैव साधनेन भृगुः' इति च ॥

**पृथगेवेति** । अन्नमयाद्यानन्दमयान्तानां कोशानामतिक्रमेण निर्गुणमुक्तिं प्राप्तस्य कामान्नत्वाद्य-सम्भवादिति । श्रुतिसूत्रयोः श्रुतस्य हानिरश्रुतस्य च कल्पनापरम्परेयम् ॥

---

किं तर्हि महाप्रकाशस्वरूपत्वमेव । 'आनन्दमयोऽभ्यासात्' इत्यत्राऽनन्दमय-शब्दोऽन्नमयाद्युपलक्षणार्थः । पूर्णानन्दवाचिनः आनन्दमयशब्दस्य 'भूमैव सुखम्' इति श्रुतेरत्यन्तभूमार्थत्वाद् भूम्नश्च समस्तगुणोत्कर्षात्मकत्वादानन्दमयपदेनान्नमयादयः सूत्रिता भवन्ति ॥ ❋ ॥

---

## प्राचुर्यं न प्रतियोग्यल्पत्वसापेक्षम्

**प्रतियोग्यल्पत्वापेक्षयेति** । आनन्दप्राचुर्यप्रतियोगि दुःखाल्पत्वं समानाधिकरणमेवाङ्गीकर्तव्यम् । नहि व्यधिकरणमानन्दाल्पत्वमन्यगतप्राचुर्यप्रतियोगि भवितुमर्हतीति ॥

तथाहि शाङ्करं भाष्यम्– 'अपिचानन्दप्रचुर इत्युक्ते दुःखास्तित्वमपि गम्यते । प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात् । तस्मादानन्दमयः कोश एव । न ब्रह्म' इति ॥

प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वादिति परभाष्यस्य वचनं लोकदृष्टान्तेनैव निरास भाष्यकारः– **प्रचुरप्रकाशो रविरितिवदिति** ॥

रामानुजीयं भाष्यमप्येतदाह– 'यदुक्तम्– आनन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति । तदसत् । तत्प्रचुरत्वं हि तत्प्रभूतत्वम् । तच्च इतरस्य सत्तां नावगमयति । अपि तु तस्याल्पत्वं निवारयति । इतरसद्भावासद्भावौ प्रमाणान्तरावसेयौ' इति ॥

इदमुक्तं भवति । व्यधिकरणे चन्द्रादौ प्रकाशाल्पत्वमेव शब्दार्थः । न सूर्येऽन्धकाराल्पत्वम् । ननु ब्राह्मणप्रचुरो ग्रामः, पुरुषप्रचुरा सभा इत्यादिषु समानाधिकरण एव प्रतियोग्यल्पत्वं दृष्टम् । सत्यम् । क्वचित् तदपि स्यात् । प्रतियोग्यल्पत्वनैयत्यमेव निषिध्यते । का तर्हि व्यवस्था? आह– **स्वरूपे च युज्यत** इति । यत्र विशेषणं विशेष्यस्वरूपं तत्र नियत्याऽन्यनिष्ठं विशेषणाल्पत्वम् । न स्वनिष्ठं प्रतियोग्यल्पत्वम् । न हि प्रकाशस्वरूपे रवावन्धकाराल्पत्वं सम्भवति । नह्यानन्दरूपे ब्रह्मणि दुःखाल्पत्वं शक्यं शङ्कितुम् । किन्त्वन्यत्रानन्दाल्पत्वमेव मयडर्थ इति ॥

ननु ज्ञानप्रचुरो जीवलोक इत्युच्यते । ज्ञानं च जीवस्वरूपम् । ननु भोः, अज्ञानप्रचुरो जीवलोक इति च वदन्ति । ज्ञानमिवाज्ञानमपि स्वरूपमेवेति नेदमुदाहरणम् । अथवा वृत्तिज्ञानविषयमेतदिति तत्र स्वप्रतियोग्यल्पत्वं युज्यत एवेत्यास्तां विस्तरः ॥ ❋ ॥

## ॥ तद्धेतुव्यपदेशाच्च ॥ १.१.१४. ॥

## ‘को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्’ इति ॥ * ॥

---

**॥ तद्धेतुव्यपदेशाच्च ॥** इतश्चाऽनन्दमयो विष्णुः, यतस्तस्याऽनन्दप्रचुरत्वे हेतुर्व्यपदिश्यते को ह्येवान्यादित्यादिना । क एव हि सामान्यतो विशेषतश्च लौकिकं वैदिकं वा प्रवर्त्तेत ।

---

### सूत्रादनन्तरं भाष्यपठने कारणम्

**॥ तद्धेतुव्यपदेशाच्च ॥** सूत्रान्वयि चेदमत्र भाष्यम्— ‘को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति तद्धेतुव्यपदेशाच्च’ इति । तर्हि सूत्रात् पूर्वमेव भाष्यं पठनीयम् । तद् यथा— ‘अनुमानतोऽन्ये न कल्पनीयाः शास्त्रयोनित्वात्’ इति, ‘साक्षी चेता केवलो निर्गुणश्चेति श्रुतत्वात्’ इति च । तत् कुतोऽत्र क्रमव्यत्यासः? अस्ति कारणं व्यत्यस्य पठने । पूर्वत्र पठने त्वेतत्सूत्रमात्रान्वयीदं भाष्यमिति प्रतीतिः स्यात् । न केवलं तावत् । उत्तराधिकरणान्वयि चेदम्— ‘यदेष आकाश आनन्दो न स्यादिति तल्लिङ्गात् आकाश इत्यानन्दमयो विष्णुरेव’ इति । एतेन आकाशस्याऽनन्दमयत्वोक्तौ विष्णोः किमायातमिति मन्दाशङ्काऽपि परास्ता । आकाशो विष्णुरेवेत्युत्तराधिकरणे वक्ष्यमाणत्वात्, जडाकाशस्याऽनन्दमयत्वायोगाच्चेति ॥

तद्धेतुव्यपदशाच्चेति को विग्रहः? षष्ठीतत्पुरुषः, सप्तमीतत्पुरुषश्च । तस्यैव हेतुव्यपदेशात्, तस्मिन् हेतुव्यपदेशात् इति । किमुक्तं भवति? तस्य ब्रह्मण एव तस्मिन्नानन्दमयत्वे हेतुव्यपदेशाच्च तदेव विष्ण्वाख्यं ब्रह्माऽनन्दमय इति । न केवलं ब्रह्मशब्दाभ्यासात्, हेतुव्यपदेशाच्चेति युक्त्यन्तरसमुच्चये चशब्दः ॥

### ‘कोहि’मन्त्रार्थः

मन्त्रार्थमाह— क एव हीति । अन चेष्टायाम् । प्राणने वा । प्राणनमिति प्रवर्तकत्वमुच्यते । अत आह— अन्यात् **सामान्यतः प्रवर्तेत** । प्राण्यात् **विशेषतश्च प्रवर्तेत** । प्राणिमात्रसाधारण आहार-

## ॥ मान्त्रवर्ण्णिकमेव च गीयते ॥ १.१.१९. ॥

'ब्रह्मविदाप्नोति परम्' इति सूत्रयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्ण्णलक्षितमेव ब्रह्म शब्दानुसन्धानाद् गीयते ॥

---

यद्येष आ समन्तात् काशमान 'आकाशः' पूर्ण्णज्योतिः पूर्ण्णानन्दो न स्यात् । तत् कुत उच्यते? न तावत् परतन्त्राणां जीवानां प्रवर्त्तकमीश्वरमन्तरेण प्रवृत्तिः सम्भवति । न चाप्रवृत्तस्य प्रवर्त्तकत्वम् । प्रवृत्तिश्चतुर्विधा । सुखार्त्था दुःखपरिहारार्त्था सुखोद्रेकनिमित्ता दुःखोद्रेकनिमित्ता चेति । तत्रेश्वरस्य सुखार्त्था दुःखनिवृत्त्यर्था दुःखोद्रेकनिमित्ता च न युक्ता । आप्तव्याप्तेर्न्निर्द्दोषत्वाच्च । तस्मात् प्रचुरानन्दत्वेनैव प्रवर्त्तकत्वम् । अतश्च मयट् प्रत्ययोऽपि प्राचुर्य्यार्त्थं एव ॥ ✻ ॥

॥ **मान्त्रवर्ण्णिकमेव च गीयते** ॥ इतश्चान्नमयादिशब्दवाच्यो विष्णुरेव । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्ण्णे यल्लक्षणं ब्रह्मोक्तं तदेवान्नमयादिशब्दैर्ग्गीयत इति गम्यते ।

---

निद्रादावननम् । विशेषतः ज्ञानिपुरुषगते दिग्विजयादौ श्रवणमननादौ वा प्राणनम् । रीत्यन्तरेण पदार्थमाह– **लौकिकं वैदिकं वा कर्मेति** । वैदिकं यज्ञादि । 'प्राण्यादपान्यात्' इति शाङ्करं व्याख्यानमशब्दार्थत्वान्न ग्राह्यमित्यनेनाऽह । आ सम्यक् काशते प्रकाशत इति **आकाशः पूर्णज्योतिः** । पूर्णत्वमाङोऽर्थः । आनन्दपदेन पुनरुक्तं स्यादिति आ समन्तात् कमश्नातीति न निरवोचत् । एष आकाश इति पक्षनिर्देशः । आनन्दमय इति साध्यस्य । सर्वप्रवर्तकत्वादिति हेतुः । एवं स्थिते 'आकाशे हृदयगुहायां निहितः' इति शाङ्करं व्याख्यानं स्फुटमस्वरसमिति न पृथङ् निराचकार । आकाशादयः शब्दा अन्तरिक्षादिष्वेव मुख्याः, भगवति त्वौपचारिका इति तु तन्मतमुत्सूत्रितम् । अपि चाऽकाशः इति प्रथमैव प्रथमप्रतिपत्तिगोचरः । तत्परित्यागेन सप्तम्यन्तपरिधावने न किमपि कारणं पश्यामः । 'एष ह्येवानन्दयाति' । आधिक्यार्थेऽधिकम् । अन्ये तत्वाभिमानिनोऽप्यानन्दयेयुः । तदपि

कुतः? **शब्दानुसन्धानात्** अन्नमयादिशब्देषु सत्यादिशब्दार्थानुसन्धानात् । तथाहि– सत्त्वं यापयतीति सत्यम् । तच्च सत्त्वं त्रिविधमुद्भवजीवनविनाशभेदेन । षद्लृ विशरण-गत्यवसादनेष्विति धातोर्विशीर्ण्णताया अपि सत्त्वशब्दवाच्यत्वात् सृष्टिपालनसंहाराः सत्, तद्यापनात् सत्यत्वम् । तत् त्रिविधमप्यन्नप्राणयोः श्रूयते– 'अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्द्धन्ते, अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति', 'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये, प्राणो हि भूतानामायुः, तस्मात् सर्वायुषमुच्यते', 'यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेत्' इत्यादौ । तस्मादन्नप्राणयोः सत्यत्वम् । सामान्यविशेषमात्रभेदान्मनोविज्ञानयोर्ज्ञानत्वमेव । आनन्दस्तु भूमत्वादनन्तपदार्थो वेदितव्यः । लक्ष्यत्वेन निर्दिष्टस्य ब्रह्मशब्दस्य प्रतिश्लोकमनुसन्धानाच्चैवमवसीयते ॥

---

परतन्त्रतया । अयं तु सर्वाधिक आनन्दयिता । तस्मात् 'आनन्दयाति' । अतितरामानन्दयतीत्येतत् । हेतुहेतुमद्भावं विवृणोति– **न तावदित्यादिना** ॥ ❊ ॥

## भाष्ये द्विविधं प्रतृण्णम्

॥ **मान्त्रवर्ण्णिकमेव च गीयते** ॥ 'ब्रह्मविदाप्नोति परमिति वाक्यं सूत्रभूतम्' इति परभाष्यम् । समग्रवल्लीपीठिकेत्यर्थः । तदनुमन्यत इत्याह भाष्यकारः– **ब्रह्मविदिति** । **सूत्रयित्वा** सङ्क्षेपेण सूचयित्वा । मन्त्रवर्णोदितलक्षणमेव ब्रह्म अन्नमयादिपदैर्विव्रियते । कथम्? **शब्दानुसन्धानात्** । तदेव विवृणोति– **तथाहीत्यादिना** । शब्दस्यार्थानुगुणतया सन्धानं हि शब्दानुसन्धानम् । तथाचान्नमयप्राणमययोः सत्यशब्दार्थानुसन्धानात् । मनोमयप्राणमययोर्ज्ञानशब्दार्थानुसन्धानात् । आनन्दमयशब्दे चानन्तशब्दार्थानुसन्धानादित्यर्थः । ब्रह्मशब्दानुसन्धानादित्यैकपद्यमाश्रित्यार्थान्तरमाह– **'लक्ष्यत्वेन निर्दिष्टस्य** वाचको यस्तस्य **ब्रह्मशब्दस्य** । **प्रतिश्लोकमिति** । 'येऽन्नं ब्रह्मोपासते', 'ये प्राणं ब्रह्मोपासते', 'आनन्दं ब्रह्मणो विद्वान्', 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते', 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः' इति च अन्नमयादिपञ्चरूपस्तुतिपरतया पठितेषु पञ्चस्वपि श्लोकेषु । अथवा **लक्ष्यत्वेन निर्दिष्टस्य** ब्रह्मेति शब्द्यत इति **ब्रह्मशब्दस्य**

## न चावयवत्वविरोधः–

'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवेत्वोक्तेश्चतुर्वेदशिखायाम् ॥

---

नन्वानन्दमयस्य ब्रह्मत्वे 'ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुतेः सिद्धस्य ब्रह्मण आनन्दमयावयवत्वस्य विरोधः। अवयवत्वे चावयवीत्यस्य विरोधः स्यादित्यत आह– **न चावयवत्वविरोध** इति ॥

---

ब्रह्मशब्दगदितस्य विष्णोरेव **प्रतिश्लोकमनुसन्धानादित्यर्थः** । एवं भाष्यवाक्यस्य त्रयोऽर्थाः कथिता भवन्ति । ब्रह्मेति भिन्नं पदं प्रथमविवरणे । ब्रह्मशब्दानुसन्धानादित्यैकपद्यं द्वितीयतृतीययोः । तत्रापि प्रथमव्याख्यायां ब्रह्मशब्दस्यानुसन्धानादावर्तनादित्यर्थः। द्वितीयव्याख्यायां ब्रह्मशब्दवाच्यस्यानुसन्धानादनुचिन्तनादित्यर्थः ॥

### भाष्यस्यार्थद्वयम्

**नचावयवत्वविरोध इति** । तथाहि परभाष्यम्– 'तदेव ब्रह्माऽनन्दमय आत्माऽवयवी, तदेव च ब्रह्म पुच्छं प्रतिष्ठाऽवयव इत्यसामञ्जस्यं स्यात्' इति । तेनानन्दमयोऽपि कोश एवेति तन्मतम् । भाष्यं द्वेधा व्याचष्टे टीकाकारः–ब्रह्मणोऽवयवित्वेऽङ्गीक्रियमाणे **अवयवत्वस्य विरोधः 'अवयवत्वविरोधः'** । अवयवत्वे पुनरङ्गीक्रियमाणे अवयवीत्यस्य विरोध इति, अवयवित्वस्य अवयवत्वेन विरोध इति वा **अवयवत्वविरोधः** । अपि च ब्रह्मणः अवयवत्वे न प्रमाणेन विरोधः । यतोऽवयविन एवावयत्वमुक्तं चतुर्वेदशिखायाम् । **सः** अवयवी भगवानेव शिरआद्यवयवरूपश्च । **सः** शिरोरूपावयवात्मा दक्षिणपक्षाद्यवयवात्मा चेत्यादि। एतेनावयविनाऽवयवानाम्, परस्परं चावयवानामभेद उक्तः। तथाच– **नचावयवत्वविरोधः** । यतः **मान्त्रवर्णिकमेव च गीयते** । यतः **'स आत्मा स पुच्छम्'** इति मन्त्रवर्णोदितमेव ब्रह्मणः पुच्छत्वमत्र च 'ब्रह्म पुच्छं प्रतिष्ठा' इति गीयत इत्यर्थः । तेनेदमपि प्रमेयं सूत्रारूढमेव । अत्र स इति कः? विष्णुरेव **सः** । तथाहि स इति सशब्दो वा स्यात् । तच्छब्दो

‘शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।
‘प्रद्युम्नश्चानिरुद्धश्च सन्देहो वासुदेवकः ।
‘नारायणोऽथ सन्देहो वासुदेवः शिरोऽपि वा ॥

‘पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ।
‘अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ॥

‘ऐश्वर्य्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्द्दने ।
‘अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा’ इति बृहत्संहितायाम् ॥

---

पादः पुच्छम्, प्रतिष्ठा हि पुच्छम्, ‘द्विप्रतिष्ठो वै पुरुषः’ इत्यादिश्रुतेः । **ऐश्वर्य्यान्न विरोधश्च**, विरुद्धमप्यविरोधं नेतुमीशत्वात् । न चैतावता तस्मिन्नीश्वरे निष्प्रमाणकधर्म्मकल्पनाः

---

वा स्यात् । आद्यपक्षे विष्णुरिति स्फुटम् । ‘अकयप्रविसम्भूमसखहा विष्णुवाचकाः’ इत्यभिधानात् । तच्छब्दत्वेऽपि विष्णुरेव स इति बृहत्संहितावचनेनाऽह– **शिरो नारायण** इत्यादिना । नवनारीकुञ्जरवदिदमुपासनम् । अवयवविशेषोपासनं चानेनाऽह । ‘प्रियमेव शिरः’ इत्युक्तं प्रियनामकं **शिरो नारायणः** । **सव्य** इति वामः । यद्यपि **दक्षिणः पक्षः सव्य एव** । **अनिरुद्धश्च प्रद्युम्न एव** । अथापि भिन्नाविव **‘प्रद्युम्नश्चानिरुद्धश्च’** इति समुच्चीयेते । एवमभेदेऽप्युपासनाविशेषे **प्रद्युम्नो दक्षिणः पक्ष एव** । **अनिरुद्धश्च सव्य एव** । तथाच मोदः प्रद्युम्नः । प्रमोदोऽनिरुद्धः । आनन्दः **वासुदेवः** आत्मा **सन्देहः** । मध्यदेह इत्यर्थः । वासुदेवस्याऽनन्दत्वं स्फुटमाह– **वासुदेवक** इति । कः आनन्दरूपः वासुदेव इति । वासुः, देवानामिन्द्रियाणां कं सुखं यस्मादिति देवकश्चेति वा **वासुदेवकः** । ‘वासुर्नरायणपुनर्वसुर्विश्वरूपाः’ इत्यभिधानम् । देवानां मुक्तानां कं सुखं यस्मादिति च । उपासनान्तरमाह– **नारायणोऽथ** । अथेति उपासनान्तरारम्भवचनः । अथवेत्यर्थे च । आनन्दाख्यः मध्यदेहः **नारायणो** वा । प्रियाख्यः **वासुदेवः शिरो वा** । एवं स मध्यदेहः सन्नपि उपासनान्तरे

रसशब्देन विशेषणात् तत्तत्सारभूतं चिन्मात्रमेवोच्यते ॥

सम्भावयितुं शक्येरन् । अप्रामाणिकत्वादेव तेषाम् । अन्यथाऽतिप्रसङ्गात् । अतो यावत्प्रमाणप्राप्तं तावल्लोकविरुद्धमपि न विरुद्धतया चिन्तनीयमित्यर्थः । एकैकस्य चावयवस्य सर्वेश्वरत्वान्न विरोधः । अप्रमेये कुतः प्रमा, एतावदेव सामर्थ्यं नातोऽधिकमिति परिच्छेदः कथमपरिच्छेद्ये?

रसशब्देन विशेषणात् तत्तत्सारभूतं चिन्मात्रमेवोच्यते । अयं भावः– 'अन्नरसमयः',

**शिरो**ऽपि बभूव । उभयविधोपासनेऽपि **सङ्कर्षणः** ब्रह्मनामा **पुच्छमि**ति । पुच्छशब्दार्थमाह– **पादः पुच्छम्** । **एवमेक एव पञ्चधा** । कथमेक एव पञ्चधा? आह– **तु** । तुशब्दो विशेषार्थः । विशेषबलात् पञ्चधा । भेदप्रतिनिधिर्हि विशेषः । कुत इदं भगवतोऽङ्गाङ्गित्वम्? आह– **क्रीडते** । अचिन्त्येच्छस्य भगवतो लीलेयमित्यर्थः । तदेवाह– **पुरुषोत्तमः** । अन्यत्रादृष्टमपीदं क्षराक्षरपुरुषोत्तमे युक्ततममित्यर्थः । **ऐश्वर्यात्** सर्वसमर्थत्वात् **विरोधो न चिन्त्य** इत्येतद् भगवन्नाम्नैव द्रढयति– **जनार्दन** इति । स्वयं न जायते, अथापि स्वेच्छयाऽऽत्मानं जनयतीति जनः । अर्दयति संसारे, अथापि जनं जननमर्दयति मोक्षदानेनेति च जनार्दनः । अवयविनः जनार्दनस्य परस्परं तदवयवानां च ऐश्वर्यात् सर्वेश्वरत्वात् तस्मिन् जनार्दने ततोऽत्यन्ताभिन्ने तदवयवे वा न विरोधश्चिन्त्य इत्याह टीकाकारः– **एकैकस्य चेति** । अतर्क्ये केवलतर्कागोचरे **तर्कस्तु** प्रमाणान्तरासहकृतस्तर्कः कुतः प्रवर्तेत? हिकारेण 'नैषा तर्केण मतिरापनेया' इति श्रुतिं स्मारयति । 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति' इति च । वक्ष्यति च स्वयं भगवान् सूत्रकारः– 'तर्काप्रतिष्ठानात्' इति । ननु तर्हि वेदैः प्रमेयो भगवान् । 'कर्तृत्वात् सगुणं ब्रह्म' इत्यादिवेदानुकूलतर्कैश्च । ज्ञानिप्रत्यक्षेण च । तत् कथमप्रमेय इत्यतः पदार्थमाह– **एतावानेवेति** । **अपरिच्छेद्ये** अमितसामर्थ्ये । **प्रमा** इयत्तामितिः ॥

ननु 'अन्नात् पुरुषः' इति सन्निहितपुरुषपदगदितं शरीरम् । तदेवात्र पराम्रष्टव्यम्– 'स वा एष पुरुषः' इति, सान्निध्यात् । नतु परमात्मा । तस्य 'आत्मन आकाशः' इति दूरस्थत्वादिति । दत्तोत्तरमेतत् । आकाशादिपदेन 'भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः' इति चतुर्णां सम्भवकथनात् 'अन्नात्

इदमिति च दृश्यमानसन्निहितत्वात् ॥

**'रसो वै सः' इत्यादावन्ते च विशेषणान्मध्येऽपि 'प्राणरसमयः' इत्याद्युपपत्तेः, रसशब्दस्य सारवाचित्वात् प्रचुरान्नादिसारं चैतन्यमात्रदेहं ब्रह्मान्नरसमयादिशब्दार्थः, न भौतिकान्नादिः ॥**

**'तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः' इत्यादि प्रत्यक्षसिद्धभौतिकावयवाभिधानान्न तत् साराभिधानमित्याशङ्क्याऽह– इदमिति च दृश्यमानसन्निहितत्वादिति ।**

पुरुषः' इत्यत्रापि पुरुषपदेन शरीरान्तर्नियामकोऽप्युच्यत इति सोऽपि सन्निहित एवेति । सत्यमुभावपि सन्निहितौ । कथमेकस्यैवोत्तरवाक्ये परामर्शः? आह भाष्यकारः– **रसशब्देन विशेषणात्** इति ॥

अयमर्थः– आनन्दवल्ल्या उपक्रमे 'ब्रह्मविदाप्नोति परम्' इति, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रस्तुतं ब्रह्मैवाऽत्मशब्देन परामृश्य 'तस्माद् वा एतस्मादात्मनः' इत्याकाशादिः पुरुषान्ता सृष्टिरभिहिता । ततः 'स वा एषः' इति स्रष्टा परामृश्यते । न सृष्टम् । आदौ 'अन्नरसमयः' इत्यन्नमयस्य **रसशब्देन विशेषणात्**, तत आनन्दमयान्तानि पञ्चरूपाण्यभिधाय, पुनरन्ते च सप्तमेऽनुवाके च प्रस्तुतं ब्रह्म 'असद्वा इदमग्र आसीत्' इत्यसच्छब्देन परामृश्य, ततो वै सत् सत्यं जगदजायत । तदात्मानमेव च अन्नमयाद्यात्मना स्वयमकुरुत । तस्मात् तद् ब्रह्म सुष्ठु अनायासेन सर्वं कृतमनेनेति सुकृतमुच्यत इत्यभिधाय, ततः 'रसो वै सः' इति रसशब्देन ब्रह्मणो विशेषणात् 'अन्नरसमयः' इति चिन्मात्रं ब्रह्मैवोच्यते । नतु चिदचिद्विशिष्टः शरीरी, नाप्यचिन्मात्रं शरीरं वा । रस इति हि सारभूतमुच्यते । रसो वै सः, चिदचिदात्मके प्रपञ्चे स एव सारभूत इत्यर्थः । एवमाद्यन्तयो रसशब्देन सम्पुटीकरणात् मध्यपतिता अपि रसशब्देन विशेषणीया इति विज्ञायते– प्राणरसमयो मनोरसमयो विज्ञानरसमय आनन्दरसमय इति ॥

अचितोऽन्नस्य ग्रहणं तु– 'अद्यतेऽत्ति च' इति श्रुत्या 'प्राचुर्यात्' इति सूत्रेण च मुखतो निरस्तम् । अचिद्विशिष्टो ब्रह्मादिः कथञ्चित् प्रचुरात्रादिः स्यात् । प्रकृतिरप्यभिमानित्वेनाचिद्विशिष्टैव । अत 'अन्नरसमयः' इत्याह । प्रचुरात्रादिष्वपि रसः सारभूतः । तत्तु चिन्मात्रं ब्रह्मैव । एवं प्राणमयादिष्वप्यनुसन्धेयम् ॥

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
'प्रोच्यते भगवान् विष्णुरैश्वर्य्यात् पुरुषोत्तमः' इति ब्रह्माण्डे ॥ ✻ ॥

---

दृश्यमानशिरआद्यवयवान्तर्व्यापित्वेन तत्सन्निहितत्वादन्नमयावयवानां युक्त इदमादिव्यपदेशः । वर्म्मान्तर्वर्त्तिवीरावयवव्यपदेशवत् ॥

'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः, तस्माद् वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः' इत्याद्यन्यत्वश्रुतेर्नैकस्यैवेदं बहुरूपत्वमित्यत आह– **अनन्योऽप्यन्यशब्देनेत्यादि** । **अनन्योऽप्यन्यशब्देन** तथा अन्यवदुच्यते ॥ ✻ ॥

---

ननु नेदं सारभूतचिन्मात्रवचनम् । अन्नमये 'तस्येदमेव शिरः' इत्यचितामेव शिरआदीनामुल्लेखादिति । तामेतां शङ्कामपाकरोति– **इदमिति च दृश्यमानसन्निहितत्वात्** । तत्र दृष्टान्तमाह टीकाकारः– **वर्मान्तरर्वर्तिवीरावयवव्यपदेशवत्** । यथा वा प्रतिमां दृष्ट्वा भगवान् दृष्ट इति व्यपदिशन्ति । तथा चायं श्रुत्यर्थः– 'इदं दृश्यमानशिरःसन्निहितम्, इष्टदानादिदम्पदवाच्यं नारायणाख्यं वासुदेवाख्यं वा शिरः । अयनादयं, दृश्यमानदक्षिणबाहुसन्निहितः प्रद्युम्नः । सकलकार्यकरणदक्षिणः दक्षभागस्य चेनः पाति क्षपयतीति पक्षश्च । सज्जनपक्षत्वाच्च पक्षयतीति पक्षः । पक्ष परिग्रहे । अयमुत्तरबाहुस्थितः, उत्तमत्वादुत्तरः अनिरुद्धः । अयमात्मा वासुदेवो नारायणो वा सन्देहः मध्यदेहगतः । 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतिः । सम्यक् शरीरं देहयति उपचितं करोति हृदयगत इति सन्देहो भगवान् । तथाच भाष्ये– **'इदमिति च'** इति चशब्देन अयमिति च पदं समुच्चीयते । इदमस्मिन् पादे स्थितः सङ्कर्षणः पादयोः द्विधा विभजनात्, स्वात्मानं च द्विधा विभज्य द्विरूपेण तत्रावस्थानात् पुच्छनामकः । 'पुच्छ विभागे' इत्युक्तम् । एवं प्राणमयादिष्वपि पञ्चरूपत्वमनुसन्धेयम् ॥

ननु 'स शिरः स दक्षिणः पक्षः' इत्यवयवविनोऽवयवानां चाभेदः स्फुटमुदितः । अत्र तु 'अन्योऽन्तर आत्मा, अन्योऽन्तर आत्मा' इति क्रियासमभिहारेण भेद उच्यते । अतो विरोध इति शङ्कमानं प्रमाणवचनेन समाधत्ते– **अनन्योऽपि** । यतः **स्वयमेको बहुरूपवान्** अतः **अनन्योऽपि तथा** अन्यवत् भिन्नइव **अन्यशब्देन** भेदवाचकशब्देन प्राज्ञैरुच्यते । **ऐश्वर्यात्** अघटनीयमपि घटयितुं समर्थत्वाद्

## न चोक्तप्राप्त्या विरिञ्चादिरुच्यते–

## ॥ नेतरोऽनुपपत्तेः ॥ १.१.१६. ॥

---

भगवतः । तदेव सामर्थ्यं स्फुटयति नामभिः– **'विष्णुर्भगवान् पुरुषोत्तमः'** इति । विष्णुरित्यनेन– 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इति श्रुतिं स्मारयति । विशेष्यनिर्देशश्चायम्– सर्वसमर्थोऽयं विष्णुरेव नान्य इति । समग्रमैश्वर्यं हि भगशब्दार्थः । तस्मात् सर्वसमर्थत्वादेव भगवानुच्यते । यतः क्षराक्षरपुरुषोत्तमस्ततश्च सर्वसमर्थ इति । अनेन गीतावचनं च स्मारयति–

'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति ॥
'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च ।
'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति च भागवते ॥

यतः विष्णुर्भगवान् अतः ऐश्वर्यादनन्योऽप्यन्य इव प्रोच्यते । यतः स पुरुषोत्तमः सर्वोत्तमः, तस्माद् भगवान् सर्वसमर्थ इति च ॥ ✻ ॥

## विरिञ्चपदप्रयोगौचित्यम्

**॥ नेतरोऽनुपपत्तेः ॥** इतरः ब्रह्मादिः प्रकृतिर्जीवो वा । तदेतदाह– **विरिञ्चादिरुच्यते** । पूर्वं ब्रह्मादि-रित्युक्तम् । तद्वदिहापि ब्रह्मादिरिति वक्तव्यम् । कोऽयमपूर्वनिर्देशः– **विरिञ्चादिरिति**? शृणु । ब्रह्मा यद्यपि जगद्विरेचनाद् विरिञ्च उच्यते । एवं सर्वभूतजनकत्वेऽपि 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिभिर्न स उच्यते । का कथाऽन्येषामिति कैमुत्यन्यायमनेन सूचयाम्बभूव । ब्रह्मा हि सर्वकर्तृत्वाद् विरिञ्च उच्यते । 'कर्तृत्वात् सगुणं ब्रह्म' इति तस्यैवाऽनन्दमयत्वं युक्तम् । अथापि न स आनन्दमय इति का कथाऽन्येषामिति ॥

बह्व्यो भवन्त्यनुपपत्तयः । ब्रह्मशब्दाभ्यासः, रसशब्देन विशेषणमित्यादिकाः । काश्चित् पूर्वमुक्ताः सूचिता वा । तत्र मुख्यतमामनुपपत्तिं सम्प्रत्याह– **नेतरोऽनुपपत्तेरिति** । विष्णोरन्यस्य ज्ञानान्मोक्षानुपपत्ते-रिति । सूत्राक्षराणि चैतमेवार्थं कटाक्षयन्ति । उपरि पत्तिः पदनं मोक्षः । उपपत्तेरसम्भवोऽनुपपत्तिः ॥

न ह्यन्यज्ञानान्मोक्ष उपपद्यते–

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते'

इति ह्युक्तम् ॥ ✻ ॥

---

॥ **नेतरोऽनुपपत्तेः ॥** 'ब्रह्मविदाप्नोति परम्', 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति' इत्यानन्दमयज्ञानान्मोक्ष उच्यते । न च विष्णोरन्यज्ञानान्मोक्ष उपपद्यते । **'तमेवं विद्वान्'** इत्यादिविष्णुप्रतिपादकपुरुषसूक्तवाक्येऽन्यनिषेधात् ॥ ✻ ॥

---

क्वात्र मोक्षनिर्देशः? आह– **ब्रह्मविदाप्नोति परमित्यादि** ।

'यो वेद निहितं गुहायां परमे व्योमन् ।

'सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चिता' इति च मोक्षवचनमुपलक्षणीयम् ॥

**'अदृश्ये–'** इत्यादिश्रुतिवचनं स्वयमेव व्याख्याति टीकाकृदुत्तरसूत्रटीकायाम् । **विष्णुप्रतिपादकपुरुषसूक्तवाक्य** इति । तथाहि वक्ष्यति स्कान्दवचनं ज्योतिरधिकरणभाष्ये–

'तस्मिन् काले महाराज राम एवाभिधीयते ।

'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति ॥

## अन्येतरशब्दयोरर्थभेदः

**नह्यन्यज्ञानान्मोक्ष उपपद्यत** इति भाष्यम् । ननु तर्हि इतोऽप्यल्पाक्षरं सूत्रमभविष्यत् यदि 'नान्योऽनुपपत्तेः' इत्यसूत्रयिष्यत् । 'यावद्भिरक्षरैर्विना विवक्षितार्थासिद्धिस्तावन्मात्राक्षरमल्पाक्षरम्' इति हि पूर्वमगादि । सत्यमुक्तम् । किं तेन? अत्राधिकाक्षरोपादाने भग्नमल्पाक्षरत्वमिति । न भग्नम् । शृणु कारणम् । अर्थविशेषद्योतनायेतरशब्दः । तथाहि– अन्यशब्दो भेदमुत्कर्षं चाऽह । 'अन्योऽसदृशभिन्नयोः' इति ह्यभिदधति । इतरशब्दो भेदमपकर्षं चाऽह । 'इतरः पामरान्ययोः' इति । तेन इतरः भगवतोऽपकृष्टः

## ॥ भेदव्यपदेशाच्च ॥ १.१.१७. ॥

‘ते ये शतं प्रजापतेरानन्दाः–’, ‘अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते’, ‘स यश्चायं पुरुषे–’ इत्यादिभेदव्यपदेशात् ॥

---

**॥ भेदव्यपदेशाच्च ॥** इतश्च न प्रकृतिविरिञ्चादीनामानन्दमयत्वम् । **‘ते ये शतं प्रजापतेरानन्दाः** स एको ब्रह्मण आनन्दः’ इति पशुपतिविरिञ्चयोः ‘यतो वाचो निवर्त्तन्ते’ इत्यानन्दमयत्वसाधकश्लोकनिर्दिष्टादमितानन्दाद् ब्रह्मणो **भेदव्यपदेशात्** ॥

---

प्रकृत्यादिर्नाऽनन्दमयो भवितुमर्हति । आनन्दादिगुणैरपकृष्टत्वादित्यर्थविशेषलाभः । अपिच इतं ज्ञातं ज्ञानं वा । इतेन भगवज्ज्ञानेन रमत इतीतरः प्रकृतिर्ब्रह्मादिः सर्वोऽपि चेतनगणः । तेन भगवदधीनानन्दाः कथं पूर्णानन्दाः स्युरिति परिहसतीव । नहि शक्यमन्यशब्देनैतावानर्थविशेषः प्रत्येतुम् ॥

कथमथ भाष्ये ‘अन्यज्ञानात्’ इति? भिन्नार्थत्वमात्रग्रहणेन पर्यायप्रदर्शनमेतत् । नहि सामस्त्येन समानार्थकं पदद्वयं क्वापि गैर्वाण्यां दृश्यते । बहुलमर्थसामान्यादेव पर्यायत्वं पदानाम् । अथापि कमप्यर्थविशेषं द्योतयतीव भाष्यकारोऽपि । तथाहि– भगवतो भिन्नोऽपि यदि कश्चित् तत्सदृशः तदा तज्ज्ञानात् सम्भवेदपि मोक्षः । नहि कश्चित् तत्सदृशः । तस्मादन्यः भगवतो भिन्नः, असमानश्च जीवः । तस्मात् तज्ज्ञानान्न मोक्ष उपपद्यत इति सर्वं चतुरश्रम् ॥

**तमेवं विद्वान्** । सावधारणं वाक्यम् । **नान्यः पन्था** इति स्फुटवचनात् । एवमुक्तप्रकारेण सहस्रशीर्षत्वादिना तमेव विद्वान्, तथा तं पुरुषं एवमेव विद्वान्, तं विद्वानेव इह अस्मिन्नेव जन्मनि यत्रापरोक्षज्ञानं जातम् । अमृतो भवतीति अमृतत्वनैयत्यमाह । प्रारब्धकर्मविरहे इह भुवि अमृतः पुनरुद्भवरहितो भवति । ‘तमेव विदित्वाऽतिमृत्युमेति’ इति चोत्तरनारायणे ॥ ❊ ॥

### व्यपदेशपदस्वारस्यम्

**॥ भेदव्यपदेशाच्च ॥** प्रकृतिविरिञ्चादिभ्यो **भेदव्यपदेशाच्च** नेतरेषामानन्दमयत्वम् । इदमप्यनुपपत्त्यन्तरम् । भेदे तात्पर्यविशेषबोधनाय पृथगुक्तिः । ननु ब्रह्मभाव एव मुक्तिः । सर्वात्मत्ववेदनमेव

तत्कारणम्। तत् काऽनुपपत्तिरित्यतोऽप्याह– मोक्षेऽपि भेदव्यपदेशान्न ब्रह्मभाव एव मुक्तिः। सर्ववस्तूनां परस्परं भेदव्यपदेशाच्च न सर्वात्मत्ववेदनं मुक्तिकारणमिति। विशयमपगमय्य उपदेशनं व्यपदेशः। विवादादपगतो वोपदेशः। असंशयं निरवकाशं भेदवचनमित्यर्थः ॥

त्रीणि भेदव्यपदेशसूत्राणि भवन्ति– 'भेदव्यपदेशात्' (१.३.५) इति प्रथमे तृतीयपादे, 'भेदव्यपदेशाच्च' (१.१.१७) इति चात्र। 'भेदव्यपदेशाच्चान्यः' (१.१.२१) इति चोपर्यन्तराधिकरणे। असन्दिग्धोऽयं भेदोपदेशः, न व्यावहारिकभेदविषय इति ज्ञापनायैव व्यपदेशपदं त्रिरप्युपादत्त। तस्मात् पराभिमतमभेदवचनं सावकाशमित्युक्तं भवति। अत एव भाष्यकारोऽभेदवचनानि सावकाशतया भेदवचनान्येवेति व्याचख्यौ। सूत्राक्षरव्याख्यानमेवैतत्। अभेदपरतया प्रतीयमानैर्वचनैरपि भेदव्यपदेशाच्च नाभेदवादो युज्यत इति ॥

अपिच वासुदेवादिचतुर्मूर्तिपरत्वं चाध्यायानामस्ति। वासुदेवाध्यायश्चायम्। तेन वासुदेवस्तुतिश्चात्र भवति। आचक्षते हि– 'वासुदेवो व्यपः स्मृतः। यस्माद् व्यपगते स्थाता जगति प्रळये विभुः' इति। प्रळयकाले विश्वस्मिन् जगति अपगतेऽप्ययमस्तीति व्यपः। अस भुवि धातोः सकारमात्रमवशिष्यते व्यपस् इति। तच्च पुनर्विसर्गतामापद्य 'व्यपः' इति रूपं निष्पद्यते। तेनायं सूत्रार्थः– भेदेनैव व्यपस्य मोक्षप्रदस्य वासुदेवस्य सर्वत्रोपदेशाच्च न मोक्षेऽपि जीवब्रह्मणोरैक्यमिति। एवं महार्थानि विश्वतोमुखानि सूत्राणि भवन्ति। तत्र स्वविदितेऽर्थलेशेऽक्षराधिक्यमिति कुशङ्का न कर्तव्या। तथाच नेदमक्षराधिक्यम्, किन्तु स्वमतिनैयून्यमेवेति सर्वत्रावधेयम् ॥

**'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः'** इति पशुपतिविरिञ्चयोः स्फुटमानन्दमयाद् भेदव्यपदेशः। आनन्दमयो ह्यमितानन्दः। **'यतो वाचो निवर्तन्ते'** इति तदानन्दस्य हि वाङ्मनसाभ्याममितत्वमुच्यते। **आनन्दमयत्वसाधकेति**। मनोमयस्याऽऽनन्दमयत्वसाधकः श्लोक इत्यर्थः। तेनाऽऽनन्दमयस्य मनोमयेनाभेदोऽप्युदितः। अवयवावयविनोश्च– 'आनन्दं ब्रह्मणः स्वरूपं विद्वान्' इति। 'आनन्दो ब्रह्मेति व्यजानात्' इति च ॥

'प्रजापतिः शिवः शेफो लिङ्गमित्यभिधीयते ।
'लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि' इति शैवपुराणे ॥

## प्रजापत्यादिशब्दार्थः

प्रजापतिरिति देवेषु विष्णुर्ब्रह्मा शिवो दक्षादयश्चोच्यन्ते । न तावदत्र विष्णुः । तस्य तारतम्यान्तगत्वात् । नापि ब्रह्मा । तस्य 'स एको ब्रह्मण आनन्दः' इति पृथगुल्लेखात् । दक्षादयस्तु इन्द्रादप्यवरा इति दूरतो निरस्ताः । तस्मादत्र प्रजापतिरिति शिव उच्यते । अस्मिन्नर्थे पुराणसम्मतिं चाऽह– **प्रजापतिः शिव** इति । शेप इति शेफ इति पुल्लिङ्गपदाभ्याम् शेफ इति लिङ्गमिति क्लीबपदाभ्यां लोकतः शिश्नवाचिभ्यां मुख्यतः शिव एवोच्यते । कुतः? आह– **लिङ्गाभिमानी** । हेतुगर्भं विशेषणम् । शिश्नाभिमानित्वात् । अभिमन्यमानवचनानि सर्वाण्यपि पदानि मुख्यतोऽभिमानिवचनानीति निरूपितं सूत्रकारेण– 'अभिमानिव्यपदेशस्तु–' (२.१.६) इति । अत एव प्रजापतिरपि । जनिष्यमाणायाः प्रजायाः स्त्रीगर्भे पतनहेतुत्वात् । लोकस्य पञ्चभूतात्मकस्य प्रपञ्चस्य स्रष्टा । पञ्चमुखादेव पञ्चभूतानां स्थूलसृष्टिः । तस्माद् गिरिश एवात्र विवक्षितः स्रष्टा हि । गिरि वेदवाचि भगवत्परतामनुसन्दधानः शेते । गिरि वाग्देवतायां पार्वत्यां रममाणः शेते । गिरौ च कैलासे शेत इति शिव एव हि गिरिश इति पुराणेषु पठ्यते ॥

शतमानन्दा इति शतगुणितं शतमित्यर्थः । दशसहस्राणीत्येतत् । 'शिवादाशा शतगुणा, अस्या मुख्यवायुः शतगुणः' इति च्छान्दोगभाष्ये स्फुटवचनात् । तथाच शिवः विरिञ्चाद् दशसहस्रगुणावर इति गतं तस्याऽनन्दमयत्वम् । एवं विरिञ्चः शिवाद् दशसहस्रगुणाधिकः केवलम्, नानन्तगुणाधिक इति गतं तस्यापि पूर्णानन्दत्वम् । इदमुपलक्षणम्– शक्तिस्कन्दसूर्यविघ्नादीनामप्यनयैव मितानन्दत्वाद् गतमानन्दमयत्वम् । तेषां शिवादप्यवरानन्दत्वात् । शक्तिपदगदिता पार्वती शिवाद्दशगुणावरा । शक्तिरिति पार्वती किल तैरुच्यते । 'शिवः शक्त्या युक्तः' इति हि वदन्ति । स्कन्द इन्द्रसमस्तस्या अपि दशगुणावरः । ततः सूर्यो द्वादशकक्ष्यापठितः सहस्रगुणावरः । तत ऊनशतगुणावरो विघ्नराडिति ॥

'यदा ह्येवैषः–' इत्यादेरयमर्थः– आत्मीया जीवधर्म्माः तद्रहिते 'अनात्म्ये', अस्वामिसम्बन्धिनि वा, अन्यनिलयनहीने ब्रह्मणि यदा ह्येष जीवो निर्भयं निष्ठां विन्दतेऽथ स निर्भयं ब्रह्म प्राप्नोति । अयमेव प्रकृतेरपि भेदव्यपदेशः । दृश्यत्वान्निर्वक्तुं शक्यत्वादन्य-

## 'अदृश्ये'इतिश्रुत्यर्थः

**'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये–'** इत्यादेर्भाष्योदाहृतश्रुतिवचनस्यायमर्थः– अदृश्ये सामस्त्येन ज्ञातुमशक्ये, बाह्यचक्षुषा द्रष्टुमशक्ये, भगवत्प्रसादमन्तरा द्रष्टुमशक्ये वा । आत्मन इमे आत्म्या आत्मीया जीवधर्मा दुःखाज्ञानादयः । ते न सन्ति यस्मिन् तदनात्म्यम्, तस्मिन् । अथवा आत्मा स्वामी । तेन सङ्गतमात्म्यम् । स्वाम्यन्तरायत्तम् । तन्न भवतीत्यनात्म्यम् । स्वाम्यन्तररहितं स्वतन्त्रम् । 'यतो वाचो निवर्तन्ते' इत्यवाङ्मनसगोचरत्वादनिरुक्तम् । **अन्यनिलयनहीन** इति । 'स्वे महिम्नि प्रतिष्ठितः' इति श्रुतिः । अभयं यथा तथा प्रतिष्ठां मुक्तिम् । अत्र, **'स यश्चायं पुरुषे'** इत्यत्र च सर्वजीवेभ्यो भेद उच्यते । **'यश्चासावादित्ये'** इति च सूर्याद् भेदः । 'अदृश्ये' **इत्ययमेव प्रकृतेरपि भेदव्यपदेशः** । जडप्रकृतेर्विकारात्मना दृश्यत्वात् तन्मानित्वाच्च चित्प्रकृतेरिति ॥

'तस्माददृश्ये जीवानां गुणानामप्यसङ्गतेः ।
'अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निजाश्रयात् ।
अनिलायने–' इति भाष्ये प्रमाणवचनम् ।

अनेन दीर्घलोपेन अनिलस्यायनमनिलयनमिति निर्वचनान्तरं चासूचि । एतदपि प्रमाणवचनसूचितमेव– निजाश्रयात् । निजः स्वीयो नित्यमहिमैव आश्रयो यस्मात् । स्वयमेव स्वस्य निलयनमिति यावत् । अतः अन्यनिलयनरहितः 'अनिलयनः' । एवं निजस्य स्वीयस्य वायोराश्रयत्वात् अनिलायनः । अनिलायन एवाकारलोपेन 'अनिलयनः' ।

**'यश्चासावादित्ये'** इति रश्मिषु सन्निधाय ब्रह्माण्डनियमनमुच्यते । **'स यश्चायं पुरुषे'** इति पिण्डाण्डे स्थित्वा सर्वजीवनियमनमुच्यते । तेनायं **सर्वजीवेभ्यो भेदव्यपदेशः** । अतस्तावन्तमेव श्रुतिभागं

नच [1]'तत् त्वमसि','अहं ब्रह्मास्मि' इत्यादिविरोधः ।

निलयनवत्त्वाच्च, तस्याः । **'स यश्चायं पुरुषे** यश्चासावादित्ये' इति च सर्वजीवेभ्यो भेदव्यपदेशः ।

अत्राऽह– नायं जीवेशभेदव्यपदेशः साधीयान् । **'तत् त्वमसि', 'अहं ब्रह्मास्मि',** 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्', 'योसावसौ पुरुषः सोऽहमस्मि' इत्यादिश्रुतिभि-

भाष्यकार उज्जहार । अथच **'यश्चासावादित्ये'** इति स्फुटं सूर्याद् भेदः । तेन सौरा मुखतो निराकृता भवन्तीति टीकाकारस्तमप्युज्जहार ॥

अथच भाष्यकार आदिपदेनेदमप्युपसञ्जग्राह– 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति । रसशब्दाभिधेयं सर्वतः सारभूतमन्नरसमय इत्यत्र प्रकृतमानन्दमयं लब्ध्वा मुक्तावयं जीव आनन्दवान् भवति । अनानन्दं हित्वा स्वयमेवानन्दरूपो भवतीति च । रामानुजभाष्येऽप्युक्तमिति भाष्यकार आदिपदेन सञ्जग्राह । अधिगतशङ्कररामानुजभाष्यो हि भगवद्भाष्येऽधिकृतो भवति । अधिगतपूर्वपक्षो हि सिद्धान्तमधिगच्छति । तथाहि रामानुजभाष्यम्– 'यल्लाभाद् य आनन्दी भवति स स एवेत्यनुन्मत्तः को ब्रवीति' इति ॥

## अभेदव्यपदेशोऽप्यस्ति

ननु व्यपदेश इति निर्विवादोऽयं भेदोपदेश इत्यगादि । न युक्तमेतत् । यतो वयमभेदवादिनो विवदामहे । कामं विवदध्वम् । तत्वविदुषां निर्विवादो भेदवाद इत्यवादिष्म । न त्वतत्वविदुषामपि । ततो व्यपदेशपदसूचितमभेदवादिनामतत्ववादित्वं स्फुटयन्नाह–**'नच तत् त्वमसीत्यादि** ।

१. अत्र मूलकोशे 'तत्वमसि' इत्येकतकारः पाठो दृश्यते । तत्र संशय्यते– किमिदं लिपिस्खलनमुत साकूतमिति । स्यादपि साकूतम् । तदा तु कश्चिदपूर्वः श्रुत्यर्थ आविष्कृतो भवति । तथा हि– यथा गीतायाम्– 'सर्वगतः 'स्थाणुः' इति, 'सर्वगतस्थाणुः' इति च द्विविधं प्रतृण्णमाचार्याभिमतम्, यथा वा बृहदारण्यके– 'यद् द्वैतं न पश्यति' 'यद् वै तन्न पश्यति' इति च द्विविधं प्रतृण्णम्, तथाऽत्रापि 'तत् त्वमसि' इति 'तत्वम्+असि' इत्यपि प्रतृण्णं स्यात् । 'स आत्मा' इत्युक्तं परं ब्रह्म असुत्वादसि सर्वप्रेरकम्, अत एव सर्वाभिन्नं सर्वोत्तमं च विद्धि श्वेतकेतविति । उच्चारसाम्यादुभयविधमपि प्रतृण्णं सम्भवति । अत एव पूर्वैः श्रुतिः केवलं श्रूयते । नतु लिख्यते ॥

रभेदावधारणात् । न ह्येता भेदमणुमात्रमपि सहेरन् । पूर्वापरपर्य्यालोचनया तत्रैव तात्पर्य्यपर्य्यवसानात् । अतः सौत्रमपि भेदव्यपदेशं न पारमार्थिकगोचरमनुजानीमहे । काल्पनिकभेदानुवादित्वात् सूत्राणाम् । अपरथा कथमिवारचितानां श्रुतीनामविरोधः सुसाध्यः स्यादित्यत आह– **नचेति** ।

**नच 'तत्त्वमसि', 'अहं ब्रह्मास्मि'** 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्', 'योऽसावसौ पुरुषः सोऽहमस्मि' **इत्यादिश्रुतिविरोधः** ।

---

अभेदवचनैर्विरोधाभावो न केवलम् । अस्ति च परिस्फुटो भेदव्यपदेश इति चकारेणाऽऽह । **विरोधः नच** नैव शङ्क्यः, विरोध इति नच नैव भ्रमितव्यमित्यवधारणार्थे वा । नीचेयमतत्ववादिनां कल्पनेति चानेनाऽऽह । 'नीचत्वे चः प्रयुज्यते' इति ह्यभिदधति । **'तत् त्वमसि'** इति च्छन्दोगोपनिषदि (५.६,७,९,११,१२,१३,१४,१५,१६) नवकृत्व उपदेशात् प्रथमनिर्देशः । पुत्राय श्वेतकेतवे पित्रोपदिष्टमिति च प्राथम्यम् । नहि क्वापि पिता प्रेमपात्राय पुत्रायातत्वमुपदिशति । **'अहं ब्रह्मास्मि'** (३.४) इति बृहदारण्यकोपनिषत् । उदाहृते सामयजुषी । आदिपदेन ऋक्शाखीयानामैतरेयीमुपनिषदमाह– **'योऽहं सोऽसौ योऽसौ सोऽहम्'** (२.१.२) इत्यादि । **'योऽसावसौ पुरुषः सोऽहमस्मि'** इति बृहदारण्यके च याज्ञीयमन्त्रे च । तेनैतद्द्वयेनेदृशान्यन्यानि अभेदपरतया प्रतीयमानानि 'ब्रह्मैव सन् ब्रह्माप्नोति' इत्यादिवाक्यानि चाऽऽदिमन्ति । परेषां महावाक्यचतुष्टये 'प्रज्ञानं ब्रह्म' (ऐत.२.५.३) इत्यृग्वेदगते वाक्ये, 'अयमात्मा ब्रह्म' (माण्डूक.१.१.२) इत्यथर्वगते वाक्ये चाभेदवार्ताऽपि नास्तीति द्वयमेवोज्जहार । **इत्यादिविरोध** इति वचनं स्फुटत्वाय व्याचख्यौ **इत्यादिश्रुतिविरोध** इति । पुराणवचनानां हि ते नातीव महत्त्वं ददति ॥

**पूर्वापरपर्यालोचनयेति** । तथाहि– 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत् त्वमसि श्वेतकेतो' इति नवकृत्वः साभ्यासोऽभेदोपदेशोऽयमिति पूर्वपक्षी मन्यते । तथाहि परभाष्यम्– 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति पूर्वमन्त्रे प्रस्तुतः सयः सदाख्यः, एष उक्तोऽणिमा अणुभावः जगतो मूलम् । ऐतदात्म्यम्, एतत् सत् आत्मा यस्य सर्वस्य तदेतदात्म । तस्य भाव

ऐतदात्म्यम् । एतेन सदाख्येनाऽत्मना आत्मवत् सर्वमिदं जगत् । नान्योऽस्त्यस्याऽत्मा संसारी । येन चाऽत्मना आत्मवत् सर्वमिदं जगत् तदेव सदाख्यं कारणं सत्यं परमार्थसत् । अतः स एवाऽत्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यम् । अतस्तत् सत् त्वमसि हे श्वेतकेतो' इति । 'सर्वप्रत्यक्स्वरूपत्वात् सतः श्वेतकेतोरप्यात्मा स एवेति सामान्येन विशेषं साधयति– अतस्तत् सत् त्वमसीति' इति अभिनवनारायणानन्देन्द्रसरस्वती तट्टीकायाम् ॥

**'अहं ब्रह्मास्मि'** इति च ब्रह्मणः सर्वात्मत्वमुच्यते । तथाहि समग्रा श्रुतिः– 'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात् तत् सर्वमभवत् । तस्माद् योयो देवानां प्रत्यबुद्ध्यत स एव तदभवत् । तथर्षीणाम् । तथा मनुष्याणाम् । तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे– अहं मनुरभवं सूर्यश्चेति । तस्मादिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इति । तदिदं स्फुटमभेदवचनम् ॥

**'तद्योऽहं सोऽसौ–'** इत्याद्यैतरेयोपनिषदि । तथाहि समग्रं वाक्यम्– 'तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति । य एवं वेद योऽहं सोऽसौ योऽसौ सोऽहम् । तदुक्तमृषिणा– सूर्य आत्मा जगतस्तस्थुषश्चेति । एतदु हैवोपेक्षेतोपेक्षेत' इति । अत्र परकीयं व्याख्यानम्– 'बृहतीसहस्रस्य षट्त्रिंशत् सहस्राणि स्वराः पुरुषायुषस्य तावन्त्यहानि व्याप्नुवन्ति । षट्त्रिंशत् सहस्राणि व्यञ्जनानि पुरुषायुषस्य रात्रीराप्नुवन्ति । तदेवं बृहतीसहस्रं पुरुषेणाऽदित्येन च सम्बद्धम् । तदेव चात्रोक्तम्– 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति । तस्यैवं सम्पन्नस्य बृहतीसहस्रस्याऽत्मभूतः प्रज्ञामयः प्रज्ञात्मा, सर्वदेवतामयः, ब्रह्ममयो वेदमयः, अमृतमयः अमरणप्रायश्चतुरात्मा प्राणः । 'प्राणो वा अहमस्यृषे' इत्युपक्रमात् । यस्त्वेवं बृहतीसहस्रं सम्पन्नं वेद स इहैव प्रज्ञादिमयः सम्भूय प्रज्ञादिमयानात्मत्वेनोपगम्य शरीरपतनस्य पश्चादपि सर्वा देवताः स्वात्मत्वेनाप्येति । योऽहं शरीरे प्रज्ञात्मा प्राणः सोऽसावादित्यो मण्डलाभिमानी । यश्चासावादित्ये स एवाहम् । तदेतत् सर्वमृषिणा मन्त्रेणापि कथितम् । सूर्यः आत्मा सर्वप्राणिनां प्राणो जीवः जगतः जङ्गमस्य तस्थुषः स्थावरस्य चेति । एतन्मन्त्रप्रकाशितप्राणादित्यात्मैकत्वं यथासम्पादितमात्मभावेन उपेत्य उपेक्षेतोपेक्षेत प्राकृतदर्शनानन्तरितं तैलधारावच्चाविच्छिन्नं कुर्यात्' इति ॥

'नामानि सर्वाणि यमाविशन्ति' इति तत्तच्छब्दवाच्यत्वोक्तेः ॥

**'नामानि सर्वाणि यमाविशन्ति'** इति विष्णोरेव **तत्तच्छब्दवाच्यत्वोक्तेः** । ततत्वात् तत्, तवस्तेजः, तद्रूपत्वात् त्वम्, असनादसि । अहेयत्वादहम्, न हन्यत इति वा । अस्तीति

**'तत् त्वमसि'** इति सामवेदगतम् । **'अहं ब्रह्मास्मि'** इति याजुषम् । 'तद्योऽहम्–' इति बाह्वृच्ये । अन्ते च मन्त्रोपनिषदमाह– **'योऽसावसौ–'** इति । बृहदारण्यके (७.२) चैतत् पठ्यते । इयं समग्रा मन्त्रोपनिषदानुपूर्वी– 'पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि' इति ।

अत्र परेषां भाष्यम्– 'हे पूषन्, जगतां पोषणात् पूषा रविः । एक एव ऋषति गच्छतीति एकर्षिः । हे एकर्षे । तथा सर्वस्य संयमनाद् यमः । हे यम । तथा रश्मीनां प्राणानां रसानां च स्वीकरणात् सूर्यः । हे सूर्य । प्रजापतेरपत्यं प्राजापत्यः । हे प्राजापत्य, व्यूह विगमय रश्मीन् स्वान् । समूह एकीकुरु उपसंहर ते तेजः, तावकं ज्योतिः । यत् ते रूपं कल्याणतमम्, अत्यन्तशोभनम्, तत् ते तवाऽत्मनः प्रसादात् पश्यामि । किञ्चाहं नतु त्वां भृत्यवद् याचे । योऽसावादित्यमण्डलस्थः पुरुषः पुरुषाकारत्वात्, पूर्णं वाऽनेन जगत् समस्तमिति पुरुषः, पुरि शयनाद्वा पुरुषः, सोऽहमस्मि भवामि' इति ॥

**भेदव्यपदेशं न पारमार्थिकगोचरमनुजानीमह** इति । यतः सर्वत्र श्रुतिषु पारमार्थिको भेदो निषिध्यते अतः सौत्रमपि भेदव्यपदेशं व्यावहारिकं मन्यामह इत्यर्थः । तथाहि परभाष्यम्– 'यथा मायाविनः खड्गचर्मधरात् सूत्रेणाऽकाशमधिरोहतः स एव मायावी परमार्थरूपो भूमिष्ठोऽन्यः, यथा वा घटाकाशादुपाधिपरिच्छिन्नादनुपाधिरपरिच्छिन्न आकाशोऽन्यः । ईदृशं च विज्ञानात्मपरमात्मभेदमाश्रित्य– 'नेतरोऽनुपपत्तेः', 'भेदव्यपदेशाच्च' इत्युक्तम्' इति ॥

**'नामानि सर्वाणि यमाविशन्ति** तं वै विष्णुं परममुदाहरन्ति' । विशन्ति सर्वाणि नामानि यं स विष्णुरिति निर्वचनं चात्र सूचितम् । यस्मिन्नेव मा वाचः परा अर्थपूर्णाः स परमः ॥

मेयत्वादस्मि, ज्ञानरूपो नियन्तृरूपश्च । परोक्षत्वादसौ, असुष्वोतत्वादमुष्मिन् स्थितत्वाच्चासावसावित्युच्यते । 'सप्तसु प्रथमा' इति सूत्रात्, असाविति सप्तमी वा । आ समन्तादीष्ट इत्येषः । अयनादयम् । सरणात् सारत्वाच्च स इति ॥

रहस्योपासनायां पदसमन्वयविवक्षायां सर्वाण्येतानि भगवन्नामानि । तदुक्तम्–

'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
'तावन्ति हरिनामानि पठितानि न संशयः' इति ॥

तेनाक्षराण्यपि हरिनामानि । किमुत पदानि?

## सर्वाणि पदानि भगवन्नामानि

तथाच 'तत् त्वं असि' इति त्रीण्युपासनार्थानि रहस्यनामानि । गुणतः कालतो देशतश्च **ततत्वात् तत्** । गुणपूर्णं नित्यं सर्वगतमित्येतत् । 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतासु । 'तत् सवितुर्वरेण्यम्' इति च गायत्री । 'तद्ध तद्वनं नाम' इत्युपनिषत् । तवतिः सौत्रो धातुः । तथाहि देवराजः– 'तविः सौत्रो धातुर्वृद्ध्यर्थः' इति । तवति वर्धतेऽनेनेति **तवस्तेजः** । आद्यस्वरलोपः । विसर्गस्य चानुस्वारः । तेन **त्वं** तेजोरूपः । एतेन त्वशब्दो व्याख्यातः । युष्मदो रूपान्तराणि च– त्वेति त्वामिति त्वयेति त्वदिति तवेति त इति त्वयीति । ततं वं ज्ञानं बलं वा त्वमिति चार्थान्तरम् । सर्वाधिकं तत्वमेव वा तकारलोपेन त्वम् ॥

'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
'यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्' इति गीतासु ॥

'तेजस्तेजस्विनामहम्' इति च । 'तत् सवितुर्वरेण्यं भर्गः' इति श्रुतिः । 'अहं तत् तेजो रश्मीन्नारायणम्' इति च । 'सुवर्णज्योतीः' इति च । 'स वै बलं बलिनां चापरेषाम्' इति भागवते । **असनाद् असि** । दुष्टान् निरस्यतीति असि । दोषान् निरस्यतीति सर्वदोषविहीनत्वं चार्थः । भक्तानामपि दुःखाज्ञानादिकं निरस्यतीति, अन्ते च संसारमेव निरस्यतीति मोक्षदातृत्वं चार्थः । 'असु क्षेपणे'

इति धातुपाठः । क्षेपणमिति प्रेरणम् । तेन अस्यति सर्वानन्तः स्थित्वा प्रेरयति संसारे मोक्षे चेति सर्वनियामकत्वं सर्वान्तर्यामित्वं चार्थः । एतत्सर्वसङ्ग्रहाय टीकाकारः– **'असनादसि'** इत्याह ॥

'अहं ब्रह्म अस्मि' इति च त्रीण्युपासनार्थानि रहस्यनामानि । यत् हातुं शक्यम्, अवश्यं हातव्यं च तद् हेयम् । न शक्यं ब्रह्मतत्वं विहाय जीवितुमिति तदहेयम् । ओहाक् त्यागे । 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' इति गीतासु । 'अः इति ब्रह्म । तत्राऽगतमहमिति' इत्यैतरेयोपनिषत् । तत्र अकारवाच्ये ब्रह्मणि वाचकत्वेनाऽगतमहमितिपदं चेत्यर्थः । न विद्यन्ते हेया दोषा यस्मिन्निति अहं निर्दोषं ब्रह्मेति चार्थः । केनापि गुणैर्न हीयते, सर्वात्मना हेयदोषरहितश्चेति चाहम् । 'हेयोपादेयरहितः स आत्मेत्यभिधीयते' इति चोक्तम् । नित्यत्वाच्चाहमित्याह– **न हन्यत इति वा** । न विद्यतेऽस्मादन्यो जगतो हन्तेति च । 'तस्योपनिषदहमिति । हन्ति पाप्मानं जहाति च य एवं वेद' (७.७) इति बृहदारण्यके । एतदानुगुण्यायैव निर्वचनान्तरमुदाहारि । हन हिंसायाम् । न कदाऽपि केनापि क्वापि हिंसाविषयो भवति, अवताररूपेष्वपि । सर्वदाऽस्तीति मीयते इत्यस्मि । मीयते ज्ञानिभिः प्रमीयते वेदैर्गीयते चेत्यर्थः । माङ् माने शब्दे च । निर्दुष्टतया सत्त्वं वाऽस्तित्वम् । अथच असनात् सर्वनियमनादस् । ज्ञानरूपत्वान्मि । तदेतदाह– **ज्ञानरूपो नियन्तृरूपश्च** । ननु तर्हि 'नियन्तृरूपो ज्ञानरूपश्च' इति वक्तव्यम् । किमिदमधरोत्तरं पठनम्? निर्वचनान्तरस्मारणायेति गृहाण । तथाहि– 'अस गतिदीप्त्यादानेषु' इति धातुपाठः । गतिरित्यवगतिश्च । तेनासतीति अस् ज्ञानरूपः । 'मानमन्तर्गतिः स्मृता' इति वचनात् मि अन्तर्लीनो **नियन्तृरूपश्च** ॥

**परोक्षत्वादसाविति** । ननु विप्रकृष्टत्वादिति वक्तव्यम् । 'अदसस्तु विप्रकृष्टं तदिति परोक्षे' इति ह्याचक्षते । न भोः । वेदेषु विप्रकृष्टमिव परोक्षमपि अदःपदेनोच्यते । यथा– असौ लोक इति । 'ननु असावादित्यः' इति विप्रकृष्टमेव न परोक्षम् । मैवम् । तत्रापि परोक्षत्वमेव पदार्थः । मण्डलमानी आदित्यदेवो हि तत्रोच्यते । न मण्डलम् । 'योऽसावसौ–' इति श्रुतौ द्विर्वचनस्यार्थमाह– **असुष्वोतत्वादित्यादि** । असुषु इन्द्रियेषु प्राणरूपेषु वा ओतत्वादसौ । निरुक्तत्वादसुशब्दे उकारस्याकारः । ओत इत्यत्रान्त्यलोपश्च । तथाच अस+ओ=असौ । **अमुष्मिन् स्थितत्वाच्चासाविति** द्वितीयस्यासौशब्दस्यार्थः । मण्डले स्थितः सूर्यो ह्यसौ । एवं सूर्ये स्थितो भगवानसौ । तात्स्थ्यात्

ताच्छब्द्यम् । लोके तूपचारोऽयम्– मञ्चाः क्रोशन्तीति । उभयोरप्यपपरोक्षत्वात् । अन्यत्र तु परोक्षं मुख्यम् । यथा आत्मेत्यस्य शरीरममुख्यार्थः । शरीरस्थो जीवो मुख्यः । जीवमानी वायुर्मुख्यतरः । तद्गतो नारायणो मुख्यतमः ॥

अथच असावित्यस्य अस्मिन्नित्येव वाऽर्थः । सप्तम्यर्थे प्रथमा । **'सप्तसु प्रथमा' इति सूत्रात्** । 'सुपां सु–' इति पाणिनिवचनाच्च । 'सुपां सुपो भवन्तीति वक्तव्यम्' इति च वार्त्तिकम् (अ.सू.७.१.३९) । 'नाम ब्रह्मेत्युपासीत' इति यथा । इदमुपलक्षणम् । असौ इति सप्तम्येव वा । तथाह्यर्थद्वयमपि सूचयद् भाष्यम्– 'एकोऽसौशब्दः प्राणे स्थित इति' इति ॥

अन्यसर्वनामपदानामपि एवमेव भगवति निर्वचनमिति प्रसङ्गादाह– **आ समन्तादिष्ट इत्येषः** । आ समन्तादिष्यते सर्वैरित्येषः । इष इच्छायाम् । तथाहि श्रुतिः– 'देवस्यैषः स्वभावोऽयम्' इति । 'विष्णोरेषस्य प्रभृथे हविर्भिः' इति च । अयमेषशब्दः । एतच्छब्देऽपि भगवति समानं निर्वचनमित्यनेनाऽह । आ समन्तादीष्ट इति वा एषः । तद्यथा मनसामीशनान्मनीषा । क्वचित् 'ईष्टे' इत्येव टीकापाठः । समीपतरत्वाच्च एषः । 'दूराद् दूरतरं यत्तु तदेवान्तिकमन्तिकात्' इति हि स्मरन्ति । 'समीपतरवर्ति चैतदो रूपम्' इति वैयाकरणाः ॥

**अयनात् सर्वगतत्वात् सर्वज्ञत्वाद्वा** । अयते इत्ययम् । अय गतौ । अयन्ते शास्त्रैरेनमिति वा । इच्छया यातीतीयम् । इष्टं ददातीतीदम् । सर्वत्र सरणात् सारत्वाच्च सः । ससर्ति सरतीति वा सः । 'सृ गतौ' । सरणादेव सा । ततत्वात् तत् । यातीति यः, या यद् वा ॥

## द्वासप्ततिसहस्रनाडीरहस्यम्

तथाचायमैतरेयश्रुत्यर्थः– बृहतीसहस्रस्य द्वासप्ततिरक्षराणां सहस्राणि भवन्ति । तद्गतानि तावन्ति भगवद्रूपाणि पुरुषायुषस्य शतस्य वर्षाणां तावदहोरात्रगतानि च । पुरुषदेहे नाड्यश्च द्वासप्ततिसहस्राणि भवन्ति । तत्रगतानि तावन्ति भगवद्रूपाणि । तत्र षट्त्रिंशत्सहस्राणि पुंरूपाणि तावदहर्गतानि बृहतीसहस्रस्वरगतानि दक्षिणनाडीगतानि च । षट्त्रिंशत्सहस्राणि स्त्रीरूपाणि तावद्रात्रिगतानि बृहतीसहस्रव्यञ्जनगतानि वामनाडीगतानि च । एवमनुसन्धानेन बृहतीसहस्रमर्थसम्पन्नं भवति । एव-

मुपासनस्य परस्तादनन्तरमेव, चतूरूपस्य भगवतः प्राधान्यमनुसन्धाय क्रमेण सर्वा नारायणान्ता देवता अप्येति । प्रज्ञा देवता अमृतं ब्रह्मेति अनिरुद्धाद्याश्चतुर्मूर्तय उच्यन्ते । प्रज्ञाख्यमनिरुद्धरूपं मयं प्रधानं यस्य स प्रज्ञामयः । एवं देवताख्यं प्रद्युम्नरूपं मयं यस्य । एवं ब्रह्ममयोऽमृतमयः ॥

ततत्वात् तत् सर्वगतं ब्रह्म । याति भक्तानिति यः । प्रायः पुरुषरूपेण यातीति पुल्लिङ्गता । स एवाहेयत्वान्मयि स्थितत्वाच्च अहमित्युक्तः । सर्वसारत्वात् सः । स एव चासौ सूर्यगतः । तदेवावधारणाय व्यत्यस्य चाऽह– योऽसौ सोऽहमिति । तदुक्तमृषिणा वेदेन, हयग्रीवेण, कुत्सेन वा । तथाह्यृग्वेदे– कुत्स आङ्गिरसः । सूर्यः । त्रिष्टुप्–

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च (ऋ.१.११५.१) इति ॥

## चित्रं देवानामिति श्रुत्यर्थः

देवानां द्योतमानानां रश्मीनां विचित्रमनीकं मण्डलमुदगात् । वस्तुतस्तु चित्रं ज्ञानानन्दमयं प्रद्युम्नाख्यं तेजोमण्डलमुदगात् । मित्रस्यानिरुद्धस्य वरुणस्य वासुदेवस्य अग्नेः सङ्कर्षणस्य चक्षुरिदम् । अत्र चक्षते एतानिति । मित्वा त्रायत इति स्थितिकर्ताऽनिरुद्धो मित्रः । आवृणोति वस्ते आत्मानमिति वरुणो वासुदेवः । संसारं दहन् सङ्कर्षणोऽग्निः । एवं चतूरूपो भगवान्, द्यावापृथिवी अन्तरिक्षं च ज्योतिषा पूरयामास । प्रा पूरणे । एवं सूरिगम्यः सूर्यगतो भगवानन्तर्यामी स्थावरस्य जङ्गमस्य चेति । तस्मात् तं उप जीवस्यान्तिके, तथाऽपि सर्वस्मादुपरि ईक्षेतेति ॥

## ऐतरेयभाष्यसंवादः

तथाहि भाष्ये–

‘अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।
‘प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ॥

‘अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनःपुनः ।
‘सङ्कर्षणोऽमृतं तस्माद् वासुदेवस्तु बृंहणात् ॥

'जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।
'एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः' इति चातुरात्म्यवचनम् ॥

स्ववचनेन च व्याचख्यौ भाष्यकारः– 'बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादहंनामकानि यानि तान्येव सूर्ये स्थितानि । यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि । तदेव उक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीपे ईक्षेत । नात्र जीवेश्वराभेदो विवक्षितः । उप ईक्षेतेति समीपे दर्शनवचनात् । नच निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं शक्यम् । नह्यार्षेषु वेदेषु व्याकरणनिरुक्तादिषूपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित्' इति ॥

## 'चित्रं देवानाम्' इति मन्त्रस्यार्थान्तरम्

अन्योऽपि मन्त्रवर्णार्थ ऐतरेयभाष्ये–

'स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ।
'मुख्यत्वात् सर्वदेवानामननादीशितृत्वतः ॥

'कर्तृत्वादप्यनीकं स उदैत् सूर्यस्थितो हरिः ।
'ज्ञानदत्वाच्च देवानां चक्षुरेनेन दर्शनात् ॥

'आपूरयन् सर्वलोकान् प्रकाशेन जनार्दनः ।
'आदानात् सर्वजीवानामत्तृत्वात् प्रळयेऽपिच ।
'आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च' इति ॥

ननु न वैयर्थ्यमुच्यते परैरपि । तथाहि– 'उपेक्षेत साक्षात्कुर्यात्' इति सायणः । तथाऽप्यशब्दार्थोऽयम् । साक्षात्कार एव हीक्षणं नाम । किमधिकमुपसर्गेणोच्यते? न किमपि । तेनान्ततो वैयर्थ्यमेवाङ्गीकृतम् । 'उप उपरतः शान्तः सन् ईक्षेत अनुतिष्ठेत्' इति षड्गुरुशिष्यः । नेदमपि पेशलम् । प्रायः साक्षाद् उपसर्गाणां धात्वर्थान्वयस्यैवौचित्यात् ॥

एवम्– 'अयमात्मा ब्रह्म' इत्यपि । अयं सर्वगतः आत्मा सर्वान्तर्यामी सर्वस्वामी नारायणाख्यं ब्रह्मेति ॥

'सर्वं खल्विदं ब्रह्म' । सर्वगतं सर्वसमर्थं खल्विदं ब्रह्म–

'सर्वेशत्वात् सर्वगत्वात् सर्वस्य प्रभवाप्ययात् ।
'सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते' इति च ॥

श्रुतिश्चैवं सर्वशब्दार्थं सञ्जग्राह–

'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी ।
'एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' इति ॥

तथा– योऽसौ प्राणगतः, असौ सूर्यगतः पुरुषो हवै नारायणः स सर्वसारः सर्वाधिकः अहेयतया मयि स्थितोऽहंनामा, अस्तीति मेयत्वादस्मिनामा चेति याज्ञीयमन्त्रार्थः ॥

## शाङ्करभाष्योक्तार्थविमर्शः

नचात्राभेदोऽर्थः सम्भवति । यत् ते रूपं कल्याणतमं तत् ते प्रसादात् पश्यामीति स्फुटं भेदव्यपदेशात् । नहि प्रसादकर्तैव प्रसादकर्म चेत्यनुन्मत्तो वक्तुमर्हति । कथमथ च निर्गुणं निराकारं च ब्रह्म कल्याणतमं रूपमाश्रित्य दर्शनपथं गच्छेत् । इदं शबलब्रह्मेति च पुनः स्वगोष्ठीनिष्ठं प्रलापमात्रम् । 'न त्वां भृत्यवद् याचे । यस्मादहं त्वमेवास्मि' इति परभाष्यं तु पूर्ववाक्यविरोधात् परिहासास्पदमेव । न हि कश्चित् स्वयमेव स्वात्मानं प्रत्येवं ब्रूते, यदि स विपश्चित्, यद्यनुन्मत्तः ॥

## तत्पक्षे पुराणवचनविरोधः

तथाहि ब्रह्माण्डवचनं भाष्ये–

'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।
'विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ॥

'तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् ।
'सत्यधर्माय भक्ताय प्रधानज्ञानरूपतः ॥

'विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः ।
'सूर्यः स सूरिगम्यत्वात् प्राजापत्यः प्रजापतेः ॥
'विशेषेणैव गम्यत्वादहं चासावहेयतः ।
'अस्मि नित्यास्तितामानात् सर्वजीवेषु संस्थितः ॥
'स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः ।
'स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः' इति ॥

गायत्रीसंहितावचनं बृहद्भाष्ये–

'सूर्यमण्डलनाम्ना तु पात्रेण स्वमुखं हरिः ।
'पिधायैव जगत् सर्वं पश्यत्यमितविक्रमः ॥
'उदकं पीयतेऽनेन तमसस्त्रायते जगत् ।
'यतोऽतः पात्रमुद्दिष्टं विद्वद्भिः सूर्यमण्डलम् ॥
'पूषा पूर्णत्वतो विष्णुर्दृष्टये विष्णुधर्मिणः ।
'स्वमुखं प्रकाशयेदेकं नान्यथा तु कथञ्चन ॥
'नान्यो यत् तादृशो ज्ञाता तस्मादेकर्षिर्हरिः ।
'यमो नियमनात् प्रोक्तः सूर्य ऊरीकृतेरयम् ॥
'ज्ञेयः प्रजापतेरेव प्राजापत्यस्ततः स्मृतः ।
'प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः ॥
'अहेयत्वादसुत्वाच्च मेयत्वाच्चास्मिनामकः ।
'अदोषत्वाद इत्युक्तो वायुस्तन्निलयो यतः ॥
'अनिलं तत एवासावमृतं चेति कथ्यते ।
'तदाश्रयोऽपि ह्यमृतः किमु साक्षात् स्वयं हरिः ॥

**‘इदं हि विश्वं भगवानिवेतरः’ ।**

---

**‘इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः’ इति हि भागवते । इदं विश्वं भगवानिव, तदधीनत्वात्, स त्वितरः, यस्माद्भगवतो जगत्सृष्ट्यादिकम् ।**

---

‘क्रतुश्च ज्ञानरूपत्वात् स एव हि जनार्दनः ।
‘सोऽग्निरङ्गप्रणेतृत्वाद् विश्वज्ञानविदां वरः’ इति ॥

परव्याख्याने बहवो दोषाः प्रतिभान्ति । तथाऽपि प्रमाणवचनेनैव सर्वमपहस्तितमिति न पृथङ्निरासाय प्रयतितव्यम् ॥

* * *

अस्तु तावत् पदसमन्वयवार्ता । असर्वाधिकारिकः सः । स्थूलदृशां वाक्यसमन्वयपक्षेऽपि सावकाशमभेदवचनम् । ‘सप्तसु प्रथमा’ इति सूत्रात् । तात्स्थ्यात् ताच्छब्द्येन च । तेन त्वमसि, तस्मात् त्वमसि, तस्मिन् त्वमसि, अहं ब्रह्मणोऽस्मि ब्रह्मण्येवास्मीत्यादि । एवमनेकार्थोपसङ्ग्रहायैव प्रथमया निर्देशः । ननु प्रज्ञावादोऽयं तत्ववादिनाम् । एवं तर्हि ‘सप्तसु प्रथमा’ इत्यादिसूत्रजातस्य कृत्यं वक्तव्यम् । तदधीनत्वाद् वा तद्व्यपदेशः । ‘राजा राष्ट्रम्’ इतिवत् । सादृश्याद् वा । अग्निर्माणवक इतिवत् ॥

## भागवतपद्यार्थः

तदेतद् भागवतवचनेन प्रत्याययति– **इदं हि विश्वमित्यादि** । कृष्णद्वैपायनं प्रति नारदवचनमिदम्–

**इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः ।**
तद्धि स्वयं वेद भवांस्तथाऽपि प्रादेशमात्रं भवतः प्रदर्शितम्’ इति (१.५.२०) ॥

**इदं विश्वं भगवानिव** भगवदभिन्नमिव शास्त्रेषु प्रतीयते ‘सर्वं खल्विदं ब्रह्म’ इत्यादौ । नेदमभेदवचनम् । यतः स इतरः । तस्मात् तदधीनत्वाद् तद्वचनम् । ‘यदधीना यस्य सत्ता तत् तदित्येव

'असर्वः सर्व इत्यपि' ।
'विद्याऽऽत्मनि भिदाबोधः' ।
'भेददृष्ट्याऽभिमानेन–' ।

---

**'असर्वः सर्व इत्यपि'** इति **तुरश्रुतिः** ।

**'भेददृष्ट्याऽभिमानेन** निस्सङ्गेनापि कर्म्मणा ।
'कर्त्तृत्वात् सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ॥

---

भण्यते' इति हि स्मरन्ति । राजा राष्ट्रमितिवदित्युक्तम् । तदेवाऽह– **यत** इति । **यतः** यस्मात् कारणात् यतः भगवतः सकाशात् जगतः स्थानं स्थितिः, निरोधो नाशः, संसारनिरोधरूपो मोक्षश्च चेतनानाम्, सम्भवः सृष्टिश्च भवन्ति तस्मादितरः । तस्मात् सामानाधिकरण्यं नाभेदनिमित्तम् । किन्त्वधीनत्वात् । एवं भगवान् विश्वमिव विश्वाभिन्न इवोच्यते । तदपि भगवतः स्वातन्त्र्यादेव । तथाहि तात्पर्यम्–'इतरोऽपि भगवान् विश्वमिव । स्वातन्त्र्यात्' इति । राजा राष्ट्रमितीदमेवोदाहरणमुभयत्रापि । तद्धि स्वयं वेद भवान् भगवत्त्वात् । तथाऽपि भवदिच्छया सेवात्वेन किञ्चिन्मात्रं प्रदर्शितं मया ॥

'असर्वः सर्वः' इतीयदेव प्रमाणवचनमिति भ्रमं वारयन् अप्रसिद्धेः श्रुतेर्नाम चाऽह– **'असर्वः सर्व इत्यपि' इति तुरश्रुतिरिति** । **असर्वोऽपि** सर्वभिन्नोऽपि भगवान् **सर्व इत्यपि** उच्यते– 'पुरुष एवेदं सर्वम्' इत्यादौ । चतुरश्रुतिरिति भ्रान्तानाममोहाय स्फुटं नाम जग्राह **तुरश्रुतिरिति** ॥

ननूक्तं भेदवचनानामाविद्यकत्वम् । दुरुक्तं तदित्याह भागवतवचनेनैव– **'विद्याऽऽत्मनि भिदाबोधः'** (११.१९.३९) इति । उद्धवगीतावाक्यमिदम् । 'का विद्या?' इत्युद्धवेन पृष्टो भगवानेतदाह । **आत्मनि** परमात्मन्यनुयोगिनि जगत्प्रतियोगिकाया भिदाया बोधो विद्येत्यर्थः । **आत्मनि** स्वस्मिन् भगवतो भेदबोधो वा ॥

'स सङ्गत्य पुनः काले कालेनेश्वरमूर्त्तिना ।
'जाते गुणव्यतिकरे यथापूर्वं प्रजायते' ॥

अभितो मानेन विशेषज्ञानेन । जगत्कर्तृत्वात् ज्ञानैश्वर्य्याद्यनन्तगुणं ब्रह्म । 'सः' ब्रह्मादिजीवसङ्घः प्रळये सङ्गत्य, पुनः सृष्टिकाले कालात्मना ज्ञानात्मना ईश्वरमूर्त्तिना गुणव्यतिकरे जाते यथापूर्वं ज्ञानादिगुणतारतम्येन विशिष्टोऽत्यन्तान्योन्यभेदेन 'प्रजायते' प्रकृष्टो मुक्तोऽभिव्यज्यते, न तु तदभिन्नो भवतीत्यर्थः ॥

### भागवतश्लोकद्वयार्थः

ननु भेदज्ञानेन कः पुरुषार्थः? कः स्यादृते मोक्षात्? एतदपि भागवतवचनेनैवाऽह– **भेददृष्ट्याऽभिमानेन** । समग्रान्वयाय श्लोकद्वयं पपाठ टीकाकारः (३.३३.१२-१३) । स्वमातरं देवहूतिं प्रति भगवतः कपिलस्येदं वचनम् । जीवेश्वरजडानां **भेददृष्ट्या** । **अभितो मानेन विशेषज्ञानेन** । 'अभिमानेन पूर्णज्ञानेन' इति तात्पर्यम् । स्वस्वयोग्यतानुगुणं पूर्णज्ञानेन । पूर्णस्य भगवतः पूर्णत्वज्ञानेनेति वा । विशेषज्ञानेनेति च स एवार्थः । 'सम्पूर्णभगवदपरोक्षज्ञानेन' इत्येके । फलाभिसन्धिकर्तृत्वाभिमानाभ्यां रहितेन **कर्मणा च** । 'ज्ञानोत्तरकालीननिःसङ्गकर्मणा च' इत्येके । पुरुषसूक्तप्रतिपाद्यम्, नारायणाख्यं **ब्रह्म**, क्षराक्षरपुरु**षर्षभम्** । **स ब्रह्मादिजीवसङ्घः प्रळये सङ्गत्य** । 'सङ्गत्य लये परमेश्वरं प्राप्य' इति तात्पर्यम् । **पुनः सृष्टिकाले गुणव्यतिकरे जाते** जगत्सृष्टौ सत्याम् । '**अगुणव्यतिकरे**' इति च प्रतृण्णम् । 'अगुणव्यतिकरे बहिः श्वेतद्वीपे' इति हि तात्पर्यम् । त्रिगुणातीते श्वेतद्वीपे इत्यर्थः । तथाच कालेन, 'कल ज्ञाने' इति धातोः **ज्ञानात्मना,** ईश्वरी सर्वसमर्था मूर्तिर्देहोऽप्यस्येति **ईश्वरमूर्तिना** प्रद्युम्नेन गुणव्यतिकरात्मके सृष्टिकर्मणि क्रियमाणे सति मुक्तोऽयं ब्रह्मादिजीवसङ्घः स्वयमगुणव्यतिकरे श्वेतद्वीपे यथा पूर्वं संसारदशायां तथा तारतम्योपेतः सन्नेव स्वरूपाभिव्यक्त्या प्रकृष्टो जायते । 'यथापूर्वं उच्चनीचादिभावेन जायते' इति तात्पर्यम् ॥

स इति कथं ब्रह्मादिजीवसङ्घः? तस्यैव पूर्वप्रस्तुतत्वेन परामर्शसम्भवात् । तथाहि– 'निवृत्तिकर्मनिरता निर्ममा निरहङ्कृताः' (३.३३.६) इति सात्विकजीवसङ्घः, 'आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः' (११) इति सर्षिसङ्घः ब्रह्मा च पूर्वप्रस्तुतः ॥

'अन्यमीशमस्य महिमानमिति वीतशोकः' ।

---

जुष्टं यदा पश्यत्यन्यमीशमित्यादेरयमर्थः– यदा जीवसेव्यमीश्वरमन्यं पश्यति, अस्य महिमानं च, 'इति' उक्तप्रकारेण, 'द्वा सुपर्णा' इत्यादिपूर्ववाक्ये समानशरीरस्थत्वेऽप्यकर्म्मफलभुक् सर्वसाक्षीत्यादिरुक्तप्रकारः, तदा विशोको भवति ।

---

भेदज्ञानस्य मोक्षहेतुत्वं पुराणैः संसाध्य तदुपबृंहितं श्रुतिवचनं सम्प्रत्याह–**अन्यमीशमिति** ॥

**द्वासुपर्णेत्यस्य मन्त्रस्यार्थः**

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (३.१.२.)

इत्याथर्वण्युपनिषत् । श्वेताश्वतरे च (४.७.) ।

अनेन मध्यमन्त्रेण पूर्वोत्तरावपि मन्त्रौ सञ्जिघृक्षत्याचार्यः । तथाहि पूर्वमन्त्रः–

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥

उत्तरमन्त्रः–

यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति ॥

द्वौ सुपर्णाविति स्फुटं भेदवचनम् । 'अन्यः अत्ति, अनश्नन्नन्यः' इति च । सुपरः ण आनन्दोऽस्येति सुपर्णो भगवानेकोऽनश्नन् । सुपरादानन्दो यस्येत्यपरः सुपर्णो जीवः । योऽस्वादु कर्मफलं स्वाद्विवात्ति । द्वित्वसङ्ख्याया द्विवचनेनैव लाभात् पुनर्द्वाविति भिन्नावित्यर्थः । 'द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यते' इत्यभिदधति । अनश्नन्निति कर्मायत्तभोगाभाव एव । अतः सर्वात्ताऽप्यनश्नन्–

**'असर्वः सर्व इवाऽत्मैव सन्ननात्मेव प्रत्यङ् परागिवैक ईयते बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म' ।**

---

**प्रत्यङ् परागिव अभिमुखोऽप्यनभिमुख इव एक एव बहुधा ज्ञायते प्राप्यते च ॥**

---

'स्वातन्त्र्येणैव भोक्तृत्वाद् दुःखाभोगाच्च सर्वदा ।
'अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः' इति तत्वसारवचनं भाष्ये ॥

'नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्मतिः ।
'तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते ।
'जीवादन्यः स्वतन्त्रो यो यतोऽतः पुरुषोत्तमः' इति च ब्रह्मसारवचनम् ॥

समाने वृक्षे देहाख्ये निमग्नः पुरुषो जीवः । 'अनीशया हरीच्छया मुह्यमानः स्वेश्वरं स्वस्माद् भिन्नमजानन् जीवः संसारे शोचति । अथ जीवेशयोर्भेदो मिथ्येति मुह्यमानः नित्यनरक एवात्यन्तं शोचति' इति त्रैविक्रमार्यदासवचनम् । पण्डिताचार्यस्त्वर्थान्तरं स्वयमाचार्यमुखाच्छ्रुतमाचष्टोपरिष्टात्– 'समाने वृक्षे निकृष्टत्वेन स्थितो जीवः अनीशतया भेदे मुह्यमानः शोचति' इति । उत्तरार्धं चैवं तत्र व्याचख्यौ– 'जुष्टं देवैः अस्य जीवस्येशमन्यं यदा पश्यति महिमानं महिमगुणात्मकं तदा तथैव वीतशोको भवति । न दुःखलेशमपि स्पृशति । न तु महिमगुणविहीनमनन्यमनीशमसेवितं पश्यन् वीतशोको भवति' (१.३.५) इति । भगवत्पादेन प्रवचनान्तरेषु विवृतं द्विविधमर्थं द्वयोर्भेदसूत्रयोर्निबबन्ध पण्डिताचार्यः करुणयाऽस्मासु ॥

उत्तरमन्त्रे च 'पश्यते रुग्मवर्णम्' इति पश्यतिकर्मणः कर्तुश्च भेदः । पश्यस्येशमिति च । अनिष्टं पुण्यं सर्वात्मना पापं च विधूय परमं साम्यमुपैतीति च स्फुटं भेदवचनम् ॥

अथ श्रुत्यन्तरं चाऽह– **असर्व** इति । सर्वभिन्नोऽपि सर्वस्वामित्वेन सर्वगतत्वेन सर्वस्रष्टृत्वेन च **सर्वइव** ज्ञानिभिरभ्युपेयते । अत्तीत्यात्मा, सर्वात्ता सन् **अनात्मेव** अनश्नन्निव, अथवा 'द्वे वाव

'सर्वान्तर्य्यामको विष्णुः सर्वनाम्नाऽभिधीयते ।
'एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ॥'

---

तत्तदन्तर्य्यामित्वेनापि तत्तच्छब्दवाच्यत्वं विष्णोरस्तीत्याह– **सर्वान्तर्य्यामको विष्णुरि-त्यादिना** ॥

---

ब्रह्मणो रूपे आत्मा चैवानात्मा च' इत्युक्तरीत्या **अनात्मेव** । **प्रत्यङ्** सर्वेषाम**भिमुखः** सन्नपि **परागिव** असतामनभिमुखइव, **एक एव** च **बहुधा** ज्ञायते । तत्तद्योग्यतानुगुणं **बहुधा** **प्राप्यते च** । **स पुरुषो** नारायणः । **स** एव शिवान्तर्गत **ईश्वरः** । **स** एव चतुर्मुखान्तर्गतो **ब्रह्म**पद-वाच्यः । एवं विवक्षाभेदेन ज्ञानिनां व्याहारा बहुधा भवन्ति । अथच तामसानां **असर्व** एव सर्वाभिन्नः प्रतीयते । केवलचैतन्यस्वरूपोऽपि **अनात्मेव** जडाभिन्नइव, 'सर्वं खल्विदं ब्रह्म' इति, **प्रत्यङ्** अन्तरात्मत्वेनातिनिकटोऽपि **परागिव** दूराद्दूरतरइव, एकः सर्वोत्तमोऽपि **बहुधा** बहुदेवताभिरभिन्नइव, अत एव **स पुरुषः** विष्णुः **ईश्वरः** शिवः **ब्रह्म** चतुर्मुखश्च एक ईयते इत्याद्यवधेयम् ॥

## अन्तर्यामिपरतया सर्वसमन्वयः

अन्तर्यामिपरतयाऽपि ऐक्यवाक् सावकाशेति प्रमाणान्तरेणाऽह– **सर्वान्तर्यामकः** । सर्वस्यान्तर्नियामक इत्यर्थः । अत एव हि विष्णुः नियन्तुमन्तर्विशतीति अभिधीयते । अतश्च विष्णुः, विशन्ति सर्वाणि नामानि वाचकतया तमिति । सर्वेषां नाम्ना, सर्वेण नामजातेन, सर्वनामसञ्ज्ञकेन पदकदम्बेन च । तदेवाऽऽह– **एषोऽहं त्वमसौ** चेति । एतदन्तर्यामी एषः । मदन्तर्यामी अहम् । त्वदन्तर्यामी त्वम् । अमुष्यान्तर्यामी असौ । तदन्तर्यामी सः । सर्वान्तर्यामी सर्व इत्यादि ॥

## व्याकरणविरोधपरिहारः

ननु तर्हि सङ्कटे पतितोऽसि । तत् त्वमस्ति, अहं ब्रह्मास्तीति वक्तव्यमापतितम् । कथमस्यस्मीति? न भोः । अनधीतव्याकरणइव माऽपलापीः । युष्मच्छब्दयोगे मध्यमपुरुषः, अस्मच्छब्दयोगे उत्तमपुरुष

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यादेश्च ॥
उक्ता च प्राप्तिः ॥

---

'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
'को ह्यत्र पुरुषश्रेष्ठस्तद्भवान् वक्तुमर्हति ॥

**'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
'बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
'तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्' इति मोक्षधर्म्मे ॥

---

इतीयानेव तेषां नियमः । न त्वर्थविशेषविवक्षा । तथा हि पाणिनिः– 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' (१.४.१०५.) इति, 'अस्मद्युत्तमः' (१०७) इति च । अस्मीत्यादीनां भगवन्नामत्वेनार्थान्तरे गतत्वाच्च । 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वम्', 'सर्वमोङ्कार एव', 'सर्वं ह्येतद् ब्रह्म' इत्यादिषु तु स्वरसोऽर्थानुगमः ॥

## भारते भेदव्यपदेशः

अन्ते 'भारतं सर्वशास्त्रेषु' इति प्रथितेन भारतवचनेनोपबृंहयति– **बहवः पुरुषा** इत्यादिना । यतः सर्वशास्त्रतात्पर्यस्य भारतेनैव विनिर्णयः । शान्तिपर्वणि मोक्षधर्मगतोऽयं प्रसङ्गः । समग्रं भीष्मसन्देशं श्रुत्वा पर्वान्ते वैशम्पायनं पृच्छति जनमेजयः–

**'बहवः पुरुषा ब्रह्मन्नुताहो एक एवतु ।**
**'को ह्यत्र पुरुषश्रेष्ठस्तद् भवान् वक्तुमर्हति'** (शां.प.३६०.१.) इति ॥

पुरमिति साधनशरीरमुच्यते । पुरुषा इति साधकजीवाः । बहवः साधकजीवा एकं परमपुरुषं साधयन्ति, उताहो एक एव जीवः, तदज्ञानकल्पितं सर्वमिति । तु इति एकत्वपक्षे स्वस्यारुचिरूपं विशेष-

'ब्रह्मैव सन्–' इत्यपि जीव एव ब्रह्मशब्दः ॥

---

एवं तर्हि विष्णोः सर्वनामवाच्यत्वश्रुतेः सर्वान्तर्य्यामित्वाच्च सर्वनामत्वोपपत्तेः सर्वश्रुतिस्मृति-प्रसिद्धत्वाच्च भेदस्य नाभेदनिरासप्राप्तिरित्याशङ्क्याऽऽह– **उक्ता च प्राप्तिरिति** । एतदुक्तं भवति– कानिचिद् वाक्यानि कैश्चिन्मन्दमतिभिरतिदीर्घभ्रान्तिभिरभेदे वाचकान्य-भिधीयमानानि साक्षाद् भेदसाधकान्यपि मृदुहृदयानां सन्देहमावहेयुरिति ॥

'ब्रह्मैव सन् ब्रह्माप्येति' इति जीव एव सन् ब्रह्माप्नोतीत्यर्थः । न तु ब्रह्मैव सन्निति । ब्रह्मत्वे तत्प्राप्त्ययोगात् । न हि स्वयमेव स्वात्मानं प्राप्नोतीति समञ्जसम् ॥

'ब्रह्माणि जीवाः सर्वेऽपि परब्रह्मणि मुक्तिगाः ।
'प्रकृतिः परमं ब्रह्म परमं महदच्युतः' इति परमश्रुतिः ॥

---

माह । अतः स्वाभिमतं बहुपुरुषपक्षमेवाभ्युपेत्य पृच्छति– तेषु कःसर्वाधिकःपुरुषश्रेष्ठ इति । एवं पृष्टो व्यासशिष्यो वैशम्पायन आह– **नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहेति** । एकमेव पुरुषं ब्रह्माख्यं सत्यमित्येतत् एकजीववादिमतं नेच्छन्ति वेदविद इत्याह यजुषां प्रवर्तको वैशम्पायनः । अथवा **एतत्** विद्वांसः **नेच्छन्ति** । किमेतत्? स्फुटमाह– **एकं पुरुषं नेच्छन्ति** । किन्तु बहून् पुरुषानिच्छन्ति । अतस्तेषां **बहूनां पुरुषाणां एका योनिः** सर्वस्रष्टा **यथा** शास्त्रेषूच्यते–'एको देवः सर्वभूतेषु गूढः' इत्यादिषु, **तथा तं विश्वं** सर्वान्तःप्रविष्टं **पुरुषं** पुरुषसूक्तप्रतिपाद्यं पूर्णषड्गुणं गुणभूतेभ्यः सर्वजीवेभ्योऽ-धिकमाख्यास्यामीति । मोक्षसाधनानि धर्मा यत्र प्रतिपाद्यन्ते तन्मोक्षधर्मपर्व ।

अप्राप्तस्याभेदस्य कुतो निरासः? आह– **उक्ता च प्राप्तिः** । कुत्र? 'एष मोहं सृजाम्याशु' इति मोह-मूला प्राप्तिरुक्ता । अथच, **उक्ता च प्राप्तिः**– 'ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः' इत्यादिका । अन्यथा ब्रह्मसूत्राणामनुदय एव स्यात् । **उक्ता च प्राप्तिः** भगवत्या श्रुत्यैव– 'तद्धैक आहुरसदेवेदमग्र आसीदिति' इत्यादिकया । तदेव स्फुटं विववार– **एतदुक्तं भवतीत्यादिना** ॥

## उपपद्यते च विरोधे ॥

**उपपद्यते च अमुख्यार्थत्वं मुख्यविरोधे ।**

### मोक्षेऽप्यभेदव्यपदेशः

**'ब्रह्मैव सन् ब्रह्माप्येति'** (६.४.६) इति बृहदारण्यके । तथाहि समग्रं वाक्यम्–'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति **ब्रह्मैव सन् ब्रह्माप्येति'** इति । अस्तु तावत् संसारे किमपि । मोक्षे तु ब्रह्मैव भवतीति स्फुटवचनमेतदिति पुनरुत्थानम् । तस्माद् यथाश्रुत एव श्रुत्यर्थो युक्तः । नान्तर्यामिपरतया यथाकथञ्चिल्लगनमिति ॥

### परकीयार्थनिरासः

तथाचात्र परकीयं भाष्यम्– 'पूर्वमपि ब्रह्मत्वात् मुक्त्यनन्तरमपि ब्रह्मत्वात् देहान्तरप्रतिसन्धानाभावमात्रेण ब्रह्माप्येतीत्युच्यते' इति । तदेतदसङ्गतमित्याह– **ब्रह्मत्वे तत्प्राप्त्ययोगादिति** । प्रतिसन्धानाभावस्तु न शब्दार्थः । अतः ब्रह्मैव सन् **जीव एव सन्** परं ब्रह्माप्नोतीत्येव युक्तः श्रुत्यर्थः । अयं भाष्यवचनार्थः– **'ब्रह्मैव सन्'** इत्यपि नाभेदवचनम् । यतस्तत्र पठ्यमानः **ब्रह्मशब्दः जीव एव** जीवविषय एव । ब्रह्मेति शब्द्यते इति **ब्रह्मशब्दः** ब्रह्मशब्दोक्तः **जीव एव** । न परं ब्रह्मेति वा । ननु तर्हि ब्रह्मशब्दमुख्यार्थत्यागः स्यात्? स्यान्नाम । किं तेन? कुत इत्यत आह– **उपपद्यते च** । हेत्वर्थे चः । यस्मादुपपद्यते मुख्यार्थविरोधेऽमुख्यार्थपरिग्रहः । न केवलममुख्यार्थस्वीकारेऽनुपपत्त्यभावः । यौक्तत्वादुपपद्यते च इति चार्थः । 'मुख्यार्थविरोधे च' इति चान्वयः । मुख्यार्थविरोधे तावदुपपद्यत एव । न केवलं तावदेव । मुख्यार्थविरोधाभावेऽपि, यत्रामुख्यार्थे विवक्षा तत्राप्युपपद्यतेऽमुख्यार्थपरिग्रहः । यथा– रुद्रगायत्र्यादिः । 'नमस्ते वायो', 'नमस्ते रुद्र मन्यवे' इत्यादि च । इयांस्तु विशेषः– वेदेषु केवलममुख्यार्थेऽपि विवक्षा । लौकिके त्वमुख्यार्थ एव विवक्षा च स्यात् । यत्र मुख्यार्थविरोधस्तत्र वेदेऽप्यमुख्यार्थ एव । तदेतदाह– मुख्यार्थविरोधे, तदभावेऽपि विवक्षायां च अमुख्यार्थग्रह **उपपद्यत** इति । तत्रापि मुख्यार्थविरोध एव अमुख्यार्थस्यैव ग्रहणम् । अविरोधेऽपि विवक्षायाममुख्यार्थस्यापि ग्रहणमिति बह्वर्थोऽयं चकारः ॥

## बृहद्भाष्यसंवादः

तथाच मन्त्रार्थो बृहद्भाष्ये–

'अयोग्यकामराहित्यान्मुक्तो निष्काम उच्यते ।
'अ इत्युक्तः परो विष्णुस्तत्कामोऽकाम ईरितः ॥

'तथाऽकामयमानः स योग्यकामस्य चापि तु ।
'कादाचित्कसमुद्भूतेर्भगवत्कामनां विना ॥

'कामितस्याखिलस्याऽऽप्तेराप्तकामश्च मुक्तिगः ।
'चिदानन्दात्मकं रूपं कामत्वेन भविष्यति ॥

'यतस्तेनैवाऽत्मकाम इति मुक्तोऽभिधीयते ।
'मुक्तस्य न पुनः प्राणा उत्क्रामन्ति कदाचन ॥

'जीवोऽपि ब्रह्मशब्दोक्तो जडाद् गुणबृहत्त्वतः ।
'प्राप्नोति परमं ब्रह्म प्रळयेप्रळये सदा ॥

'अन्यदा स्वेच्छया विष्णौ स्वरूपाद् बहिरेष्यति ।
'स्वेच्छयाऽन्तर्बहिश्चैव रमते मुक्त आत्मवान्' इति महामीमांसावचनेन विवृतः ॥

## परभाष्यार्थनिरासः

निरस्तं च परेषां व्याख्यानम्–

'ब्रह्माप्येतीति वचनात् पूर्वब्रह्मशब्दो जीववाच्येव । यद्यज्ञाननाशात् परिज्ञानमात्रं तदा स्वस्य ब्रह्मतां विजानातीत्येव स्यात् । नतु ब्रह्माप्येतीति । नहि राजपुत्रः पूर्वमात्मानमजानन् पश्चाद् राजपुत्र इति विज्ञाय राजपुत्रमप्येतीत्युच्यते । विस्मृतकण्ठमणिरपि विज्ञात इत्येवोच्यते । नतु प्राप्त इति । अतः पूर्वब्रह्मशब्दो जीववाच्येव' इति ॥

अथ च ब्रह्मैव सन् स्वयोग्यतानुगुणं पूर्ण एव सन् परिपूर्णं ब्रह्माप्येतीत्युक्तं भवति । स्फुटश्चायमर्थः श्रुत्यन्तरे– 'स यो हवै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' (३.२.३) इति । परब्रह्मवेदनेनापि जीव एव भवति । न परमं ब्रह्म भवति । परमत्वविशेषणस्य भावाभावाभ्यामेतदवसीयते । परिपूर्णं विदित्वा

[1]प्रमादात्मकत्वाच्च बन्धस्य विमुक्तत्वं च युज्यते ।

---

‘विमुक्तश्च विमुच्यते’ इति श्रुतिः कथमवितथार्था स्यादित्यत आह– **प्रमादात्मकत्वात् (च) बन्धस्येति** । प्रमादस्वरूपत्वात् प्रमादनिमित्तत्वाद् वा बन्धस्य **विमुक्तत्वं च युज्यते** । प्रमादोऽज्ञानम् ॥

---

स्वयमपि यथायोग्यं गुणबृंहित एव भवति, नतु सर्वात्मना परिपूर्ण इति । अन्यथा ‘परमं ब्रह्मैव भवति’ इति ‘तदेव भवति’ इति वाऽवक्ष्यत् ॥

**‘ब्रह्माणि जीवाः सर्वेऽपि’** इत्यत्र ब्रह्माणि जीवा इत्यमुख्यतमोऽर्थः । मुक्तिगा इत्यमुख्योऽर्थः । प्रकृतिरिति मुख्योऽर्थः । अच्युत इति मुख्यतमोऽर्थ इत्यर्थः । तथाच श्रुतेरर्थान्तरं चानेन सूचितम्– अपरोक्षज्ञानानन्तरमपि प्रारब्धक्षये सति ब्रह्मैव सन् मुक्त एव सन् भगवन्तमाप्नोतीति ॥

## विमुक्तस्यापि पुनर्विमुक्तिः

‘पुरमेकादशद्वारमजस्यावक्रचेतसः ।
‘अनुष्ठाय न शोचति **विमुक्तश्च विमुच्यते**’ (२.२.१) इति कठश्रुतिः ॥

इयं **श्रुतिः कथमवितथार्था स्यात्?** तत्र संसारदशायामेव विमुक्तत्वकथनात् बन्धमिथ्यात्वमवगम्यते । अथापि तदवगमेन पुनर्विमुच्यत इत्युच्यते । एवं पूर्वमपि ब्रह्मभूत एव । अथापि तदवगमेन तदाप्नोतीत्युच्यत इति त्वयाऽप्यङ्गीकर्तव्यम् । नान्या गतिरित्याह मायावादी ॥

अथच ब्रह्मचैतन्याभेदेन जीवचैतन्यस्य विमुक्तत्वं वक्तव्यम् । अत ऐक्यमेव श्रुत्यर्थः । न जीवब्रह्मभेद इति । अत आह– **प्रमादात्मकत्वाच्च बन्धस्येति** । प्रमाद आत्मा स्वरूपमस्य बन्धस्येति विग्रहं विवक्षित्वाऽऽह– **प्रमादस्वरूपत्वादिति** । चशब्दोपात्तमर्थान्तरमाह– **प्रमादनिमित्तत्वाद् वेति** । **प्रमादोऽज्ञानम्** । अयथार्थज्ञानं यथार्थज्ञानविरहश्चाज्ञानपदेनोच्यते ॥

---

१. **‘प्रमादात्मकत्वाच्च’** इति ह.ती.पाठः । तथाऽपि **‘प्रमादात्मकत्वाद् बन्धस्य’** इति प्रतीकग्रहणात् चकाररहितः पाठः टीकाकारसम्मतः स्यात् । अथवा अयमपि लिपिकृत्प्रमादः स्यात् ।

'सनत्सुजात यदिदं शृणोमि मृत्युर्न्नचास्तीति तवोपदेशम् ।
'देवासुरा ह्यचरन् ब्रह्मचर्य्यममृत्यवे तत् कतरन्नु सत्यम् ॥

'उभे सत्ये क्षत्रियाद्य प्रवृत्ते मोहान्मृत्युः संमतोऽयं कवीनाम् ।
'प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममृतत्वं ब्रवीमि' इति हि भारते[1] ॥ * ॥

अयमर्थः– प्रमाद इत्ययथार्थज्ञानमुच्यते प्रमाद्यत्यनेनेति । कचिदयथार्थज्ञानरूपो बन्धः– ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखीति । तन्निमित्तश्च देहादिबन्धः । अत उभयसङ्ग्रहाय **प्रमादस्वरूपत्वात् प्रमादनिमित्तत्वाद्** वेत्याह । अथच यथार्थज्ञानविरहः प्रमादः । तन्निमित्तो बन्धः । अथ तद्विरहेण अयथार्थे निष्ठा, अनवधानं च यथार्थे प्रमादः । स एव बन्धः । अतश्चाऽह– **प्रमादस्वरूपत्वात् प्रमादनिमित्तत्वाद्** वेति ॥

## सनत्सुजीतायसंवादः

अत्र सनत्सुजातीयसंवादमाह– **सनत्सुजातेति** । धृतराष्ट्रः सन्दिहानः सनत्सुजातं पप्रच्छ– मृत्युर्नास्तीति त्वमात्थ । मृत्युमत्येतुं देवासुराः प्रायतन्तेति च ज्ञानिभिरुच्यमानं श्रुतं मया । नह्यविद्यमानस्यात्ययाय कोऽपि प्रयतते । तस्मान्मृत्युरस्तीति देवासुराणां मतमित्यायातम् । नह्यरुग्णो रोगपरिहाराय भिषजं भजते । नहि विरुद्धयोर्मतयोरुभयोरपि सत्यत्वं शक्यं वक्तुम् । तस्मादेकतरेण सत्येन भाव्यम् । तत् कतरदिति । एवं पृष्टः सनत्कुमार आह– **उभे सत्ये** इति । सम्प्रति वर्तमानानां कुरुवंशीयानां क्षत्रियाणामाद्य उपजीव्येति धृतराष्ट्रमुल्लाघयन्नाह । मृत्युरिति संसारबन्धः । **मोहादिति** प्रमादनिमित्तत्वमाह । **प्रमादं** **वायिति** तत्स्वरूपत्वमाह । **तथाऽप्रमादममृतत्वम्** । अप्रमादाच्चामृतत्वम् । जीवस्य स्वरूपतो मृत्युर्नास्तीति च सत्यम् । शरीरापायरूपो मृत्युरस्तीति च सत्यम् । अतोऽज्ञानेन मृत्युर्ज्ञानेनामृतत्वमिति तथ्यम् ॥

---

१. उद्योगपर्वणि ४२तमेऽध्याये द्वितीयचतुर्थे एते पद्ये ।

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवते ॥ * ॥

---

## भागवतश्लोकार्थः

**भागवते च स्फुटमेतत्– 'मृत्युर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः'** (२.१०.६.)इति । अन्यथारूपमस्वाभाविकमज्ञानेनाऽहितम् । तथाच नानेन बन्धस्य मिथ्यात्वमुच्यते । किन्त्वस्वाभाविकत्वम् । नहि गर्गस्य कृष्णद्वेषो मिथ्या । किन्त्वस्वाभाविक आपतितः । अस्वाभाविकत्वादेव निवर्तते च । नहि विश्वामित्रस्य मेनकामोहो मिथ्या । किन्त्वस्वाभाविकः । तदपगमे स्वभावोऽवतिष्ठते चेति । ज्ञानानन्दरूपो ह्यात्मा । अज्ञानसम्बन्धेन बन्धः । अज्ञाननिवृत्तौ स्वरूपेणावस्थितिरिति । विशिष्टाऽनन्तकालीना अवस्थितिः व्यवस्थितिः । तथाचायं श्रुत्यर्थः– अपरोक्षज्ञानेन बन्धस्यास्वाभाविकत्वमवधार्य विगताभिमानो मुक्तः जीवन्मुक्तः । पूर्वं विमुक्तः सन्नेव प्रारब्धकर्मनाशे सर्वात्मना मुच्यत इति विमुच्यत इत्युच्यते । तथाच प्रथममभिमानविहानरूपा मुक्तिः । ततः सर्वात्मना संसारविहानरूपा मुक्तिः । प्रथमं बन्धलेपाभावः । ततो बन्धाभाव एवेति । ननु मिथ्यात्वमेव किं नार्थः स्यात्? पूर्वार्धविरोधादेव । तथाहि– इदमेकादशद्वारं पुरमजस्य भगवतोऽधीनमित्यनुष्ठाय विमुक्तः । नच मिथ्येत्यनुष्ठाय । नच मिथ्याभूतं कस्यचिदधीनमित्युपासितुं शक्यम् । एतद् एकादशद्वारस्य पुरस्य नियामकमेव तत् त्वया पृष्टं मुक्तनियामकं वायिति ॥

## काठकभाष्यादिसंवादः

तथाहि काठकभाष्यम्– 'इदं पुरं भगवदधीनमित्यनुष्ठाय । अजस्येदं पुरं स्थितमिति स्थितिं कृत्वा' इति । भाष्योदाहृतं भविष्यत्पर्ववचनं चैतदेवाऽह–

> 'विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।
> 'मुख्यतो मुच्यते पश्चाद् दुःखाद्याभासहानतः' इति ॥

व्याचख्यौ च त्रैविक्रमार्यदासः– 'अपरोक्षविवक्षया मुक्तः पूर्वमेव भगवदधीनत्वेन निर्णीते देहादौ निरभिमानत्वादनिष्टकर्मापक्षयाच्च जीवन्मुक्त्यपेक्षया विमुक्तो भवति । पश्चात् लिङ्गशरीरभङ्गे दुःखाद्याभासहानेन मुख्यत एव मुच्यते' इति ॥

न च तत्तदनुमानविरोधः–

॥ कामाच्च नानुमानापेक्षा ॥ १.१.१८. ॥

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्वे पृथगनुमानमपेक्ष्यते ॥

---

अथापि स्यात्, अनुमानाज्जीवेश्वराभेदः सेत्स्यति । तथाहि– जीवो ब्रह्म, चेतनत्वाद्, ब्रह्मवत् । अपि च, आत्माऽद्वितीयः, बोद्धृत्वात्, यन्नैवं तन्नैवम्, यथा घटः । यद्वा, विमतो भेदो मिथ्या, भेदत्वात्, बिम्बप्रतिबिम्बभेदवदिति प्रमाणान्तरविरोधादागमो भेदं नोपदेष्टुमर्हति । अत्रोच्यते– **न च तत्तदनुमानविरोध** इति । आभासत्वादीदृशानाम् ॥

---

**निरभीमानात्** । 'आढ्योऽभिजनवानस्मि' इत्यादिरूपो दर्पोऽभिमानः । ममेदमिति प्रणयश्च । स एवादम्योऽभीमानः । 'आधिक्येऽधिकम्' इति सूत्रात् । एतेनेदमुक्तं भवति– अपरोक्षज्ञानिनामपि क्वचिदभिमानो भवति क्षणिकः । यथा रामेण युयुत्सतः शिवस्य । यथा सप्तरात्रं वर्षत इन्द्रस्य । किन्तु सपद्येव तमोऽपगमेन स दम्यत इति ॥

## एकादशद्वारनिर्णयः

ननु नवद्वारं पुरमिति गीतायाम् । कथमथ एकादशद्वारम्? उभे अपि युक्ते विवक्षाभेदेन । तथाहि– श्रोत्रे चक्षुषी नासापुटे वदनं चेति सप्तोपरि द्वाराणि । पायुरुपस्थं चेति द्वे अधस्तने द्वारे । सर्वोपरि शिरसि सीमन्ते सुषुम्नाद्वारम्, चरमजन्मनि ऊर्ध्वगमनाय विवरिष्यमाणम् । भूमौ जननपर्यन्तं विवृतं नाभिद्वारं चेति द्वाराण्येकादश । आजननादामरणं नवानामेव प्रवृत्तिरिति 'नवद्वारे पुरे देही' इत्याह भगवान् ॥

इदमिह विस्मयावहं यदेतद्वाक्यं स्वयमाचार्यशङ्करोऽपि नाभेदपरतया व्याचख्यौ । स्वयमङ्गीकृततत्ववादइव स्फुटमाह– 'इहैवाविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन् विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः' इति ॥ ❋ ॥

---

**॥ कामाच्च नानुमानापेक्षा ॥** श्रुत्यननुसारे **यथाकाममनुमातुं शक्यते । अतोऽत्र न** श्रौते **तत्वे** श्रुतिनिरपेक्ष**मनुमानमपेक्ष्यते । निर्विशेषचेतनत्वादिहेत्वसिद्धेश्च । अनुमेयत्वे** चाज्ञेयत्वप्रतिज्ञाहानिः । शब्देनैव लक्षणया तत्सिद्ध्यङ्गीकारात् ॥

---

## युक्तेर्वैतथ्यम्

भाष्ये **तत्तदनुमानविरोध** इति । तैस्तैर्दुराग्रहग्रस्तैः स्वमनीषाकल्पितानि तानितानि निर्मूलान्यनुमानानि । तच्छब्दोऽनादरे । तेषान्तेषामवान्तरभेदभिन्नानामभेदवादिनां वाऽनुमानैः भेदश्रुतीनां भेदसूत्राणां वा विरोधः न शक्यशङ्कः । तत् तत्र भेदोक्तौ अद्वैतानुमानविरोध इति पूर्वे व्याख्यातारः । कानिकानि? आह– **अथापि स्यादित्यादिना** । अथापि भेदव्यपदेशोऽपि श्रुतिविरोधाभावेऽपि, स्यादेवानुमानविरोधः । **अनुमानात् सेत्स्यति,** अतः परं सिद्धो भविष्यतीति परिहसतीव । 'षिधु संसिद्धौ' । 'संसिद्धिर्निष्पत्तिः' इति क्षीरस्वामी ॥

प्रथमानुमानेन साक्षाज्जीवेश्वराभेदः । द्वितीये चेतनस्यैकत्वेन ब्रह्मव्यतिरिक्तस्य जीवस्याभावः । तृतीये भेदसामान्यस्य निषेधेन जीवेश्वराभेदः निष्पद्यत इति । अनुमानानीव आपाततो भासन्ते, न वस्तुतोऽनुमानानीत्याभासत्वमेषाम् । न केवलमेतान्येव, ईदृशानि एतत्समानयोगक्षेमाणि सर्वाण्यप्यनुमानाभासानीति अनुमानविदो वदन्ति ॥

**॥ कामाच्च नानुमानापेक्षा ॥** तथाहि– ब्रह्म दुःखोपेतं चेतनत्वात् जीववत् । वह्निरनुष्णः वस्तुत्वात् सलिलवत् । तुरगः शृङ्गी चतुष्पात्त्वात् वृषभवत् । जीवो मिथ्या जीवत्वात्, यन्नैवं तन्नैवम् यथा घटः । देवदत्तजाया यज्ञदत्तभोगायतनम् स्त्रीत्वात् यज्ञदत्तजायावत् ॥

यदि भवदुदितान्यनुमानानि प्रमाणानि, एतान्यपि तर्हि प्रमाणानि, समानयोगक्षेमत्वात् । यदि नैतानि प्रमाणान्याभासत्वात्, तर्हि भवदुदितान्यपि न प्रमाणान्याभासत्वादेव । साध्यविकलश्च दृष्टान्तः बिम्ब**प्रतिबिम्बभेदवदिति** । तेन विपर्ययेणापि शक्यमनुमातुम्– भेदः सत्यः भेदत्वात् बिम्बप्रतिबिम्बभेदवदिति । एवं सप्रतिपक्षतासूचनायैव चन्द्रभेदवदित्यनुक्त्वा बिम्बप्रतिबिम्बभेदवदित्याह । बिम्बप्रतिबिम्बयोरैक्यमिति तन्मतं प्रमाणविरोधाद् यथा दुर्मतं तथा बिम्बप्रतिबिम्बभूतयोरीश्वरजीवयोरैक्यमपि दुराशामात्रमित्यनेनाऽह ॥

## युक्तेः श्रद्धामूलत्वेनाश्रद्धेत्वम्

सूत्रे **कामादिति** । कामानुसारित्वादनुमानानामित्यर्थः । तदेवाऽह– **यथाकामं ह्यनुमातुं शक्यते** । हीति सर्वानुभवसिद्धमेतदित्याह । दर्शितानि च तानि कामानुमानानि । इदमुक्तं भवति– इच्छामूलानि ह्यनुमानानि भवन्ति । स यथाकामो भवति तथाऽनुमानं भवति । आस्तिकस्य मनसीश्वर-सत्तासाधकान्यनुमानानि स्फुरन्ति । नास्तिकस्य तदभावसाधकानि । मायावादिनश्चेतसि विश्व-मिथ्यात्वसाधकानि जीवब्रह्मैक्यसाधकानि चानुमानानि । तत्ववादिनः विश्वसत्यत्वसाधकानि जीव-परयोर्भेदसाधकानि । तेन ज्ञायते श्रद्धामूला युक्तयः, न युक्तिमूला श्रद्धेति । यो यच्छ्रद्धः स एव सः । तेन श्रद्धा निर्णयनी । न कदाऽपि युक्तयः । तत् कथमन्धया श्रद्धयाऽनन्धस्य तर्कस्योदयः । तदेतदाह– **श्रौते तत्व** इति । श्रुतिमात्रगोचरे । प्रत्यक्षागोचर इति यावत् । प्रत्यक्षगोचरे तु स्यादेव । यथा– पर्वतो वह्निमान् धूमादिति । ऊर्ध्वदेशो वृष्टिमान् अधोदेशे नदीपूरादिति । इयं कुमारी पुंयोगिनी यत आपन्नसत्त्वेति । नायमन्धस्तर्कः । नाप्यन्धा श्रद्धा । प्रत्यक्षमूलत्वात् । प्रत्यक्षागोचरे त्वागमा-नुसारित्वमवर्जनीयम् । प्रत्यक्षमागमं वाऽनुसृत्य हि मानमनुमानं नाम ॥

तदेतदप्युक्तं भाष्ये– **न तत्वे पृथगनुमानमपेक्ष्यते** । तत्वे निर्णेतव्ये **पृथक्** श्रुतिप्रत्यक्षनिरपेक्ष**मनुमानं** प्रमाणत्वेन नेष्यत इति । कुतः? व्याहतं हीदं वचनम् । अनुसृत्य मानम्, अथापि निरपेक्षम् । ननु श्रुतिप्रत्यक्षनिरपेक्षमपि अनुमानान्तरमनुसृत्य मानं स्यादेव । न स्यादनवस्थानात् ॥

एवं सामान्यत उक्तं प्रकृतेऽर्थविशेषे निगमयति टीकाकारः– **अतोऽत्र न श्रौते तत्वे श्रुतिनिरपेक्ष-मनुमानमपेक्ष्यत** इति । श्रौतत्वान्न प्रत्यक्षसापेक्षम् । तस्माच्छुतिसापेक्षत्वमवश्यमभ्युपेयमिति । अतः श्रुतिनिरपेक्षमनुमानमिति विकत्थमानोऽनुमानस्य मा नाम मानं भाङ्क्षीः । तदेतदीदृश-**मनुमानमनुमानाभिज्ञैर्नापेक्ष्यते** । किन्त्वभासत्वेनोपेक्ष्यते ॥

आस्तामियं सापेक्षत्वचिन्ता । तुष्यतु दुर्जनः । अथापि दोषाकरं तेऽनुमानमित्याह– **निर्विशेषेत्या-**दिना । यदुक्तं जीवो ब्रह्म चेतनत्वादिति । तत्र पृच्छामः– किं निर्विशेषं चेतनत्वं हेतूक्रियते, उत सविशेषमिति । सविशेषस्य तन्मतेऽपि नैक्यम् । निर्विशेषचेतनत्वं तुरगशृङ्गमिवास्माकमसिद्धमिति हेत्वसिद्धिर्दोषः ॥

उक्तं च स्कान्दे–

'यथाकामाऽनुमा यस्मात् तस्मात् साऽनपगा श्रुतेः ।
'पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति ॥

---

अपिच किमनेन साध्यते? ननु जीवस्य ब्रह्मत्वम् । किमिदं ब्रह्मत्वं नाम? यदि 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्या गुणपूर्णत्वं ब्रह्मत्वम्, तदा त्वप्रसिद्धविशेषणता स्वसमयविरोधश्च । यदा निर्गुणं चिन्मात्रमुच्यते तदाऽपि साध्याप्रसिद्धिरेव । एवं न जीवत्वं दुःखाज्ञानविशिष्टचेतनत्वं पक्षतावच्छेदकम् । किन्तु निर्विशेषणं चिन्मात्रमिति वक्तव्यम् । तथाचाहो इदमद्भुतमनुमानं तेषाम्– चिन्मात्रं चिन्मात्रं चिन्मात्रत्वात् चिन्मात्रवदिति ॥

एवं बोद्धृत्वमिति न बोधविशिष्टचेतनत्वम् । विशिष्टयोरैक्यासम्भवात् । चैतन्यमात्रविवक्षायां पुनरुक्तो दोषः । अपिचाज्ञेयं सर्वशब्दावाच्यं ब्रह्म परेषाम् । तत् कथमनुमीयते? ज्ञेयत्वप्रसङ्गात् । चैतन्यमात्रे लक्षणा चेदुक्तो दोषः ॥

### स्कान्दसंवादः

अस्मिन्नर्थे पुराणसंवादमाह– **उक्तं च स्कान्दे** । यदस्माभिरुक्तं तत् स्कान्दे चोक्तम् । यदिह सूत्र उक्तं तत् स्कान्दे चोक्तं भगवता बादरायणेन । अथच शास्त्रयोनिसूत्रभाष्ये चैतदुक्तम्, स्कान्दे चोक्तमितीदमिदानीमाह । न केवलमिदं तर्कमात्रम् । **'यथाकामं ह्यनुमातुं शक्यते । अतो न तत्वे पृथगनुमानमपेक्ष्यते'** इति । **उक्तं च** वचनं च तत्संवादि **स्कान्दे** पठ्यत इति ॥

अपिच निरपेक्षमनुमानं न मानमिति लोके तावदनुभवसिद्धम् । न केवलं लोकसिद्धम् । **उक्तं च स्कान्दे– यथाकामेति** । कामानुगाऽनुमा । न श्रुत्यनुगा । श्रुतेरिति । **श्रुतेः** पन्थानमपहाय न गच्छतीत्य**नपगा** । श्रुतिसापेक्षा श्रुतिमूला । तस्मात् सा श्रुतेः पूर्वोत्तराविरोधेन श्रुत्यर्थनिर्णयायेष्यते । चकारेण क्वचित् श्रुतिसिद्धस्य साधनाय च । अन्यथा कामानुगत्वे श्रुत्यननुगत्वे च क्वचिदपि किमपि न साधयेदनुमेति ॥

'नैषा तर्केण मतिराऽऽपनेया–' इति च ॥ ❋ ॥

---

**'नैषा तर्केण मतिराऽपनेया** प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति । एषा ब्रह्ममतिः, तर्केण नापनेतुं शक्या, न च तर्केण प्रापणीया । 'अन्येन' अन्यत्वज्ञानिनैव प्रोक्ता सुज्ञानाय स्यात् ॥ ❋ ॥

**॥ इत्यानन्दमयाधिकरणम् ॥ ❋ ॥**

---

अत्र प्रमाणवचने 'यथाकामाऽनुमा' इति न केवलमनुमानमुच्यते । कामानुगा मा सर्वाऽपि वाक् । 'वाचो मा मातरः' इति स्मरणात् । स्वमनीषोत्थवचनमित्येतत् । ननु सूत्रेऽपि तर्हि 'नानुमापेक्षा' इति वक्तव्यम् । तेनार्थविशेषश्च स्यात् । अल्पाक्षरत्वं च स्यात् । तुष्यतु भवान् । अर्थान्तरमप्युच्येत । **'कामाच्च नानुमा नापेक्षा'** इति च प्रतृण्णम् । कामाच्च नानुमा प्रमाणम् । ननु प्रामाणिकं वचनमपि काममूलमेव । नह्यनिच्छन् वचनस्येष्टे । अत आह– **नापेक्षा** । नसमासोऽयम् । न विद्यते श्रुतिप्रत्यक्षापेक्षा यस्याः । तथाच काम इति निर्मूलस्वमतसमर्थनकामनोच्यत इति । उभयविधार्थसूचनायैव भाष्ये 'अनुमानम्' इत्युक्त्वा 'अनुमा'पदघटितं पुराणवचनमुदाजहार ॥

## आपनेयपदस्यार्थद्वयम्

स्मृतेः श्रुतिसंवादमाह– **नैषेति । इति च** काठकोपनिषदि । चकारेण पूर्वोक्तपुराणवचनसमुच्चयः । एषेति 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति पूर्वोक्तपरामर्श इत्याह– **एषा ब्रह्ममतिरिति** । त्रैविक्रमार्यदासोऽप्याह– 'एषा भगवद्विषया मतिः' इति । आ+अपनेया इति विच्छिद्यार्थमाह– **तर्केण नापनेतुं शक्या** । आ सामस्त्येनापनेतुं न शक्या । अथ आपनेया इति प्रतृण्णं विवक्षित्वा अतिशयार्थ ईकारस्यैकार इत्याशयेनाऽह– **नच तर्केण प्रापणीया** । एकारार्थः प्रेति । अत्र सर्वेषामैककण्ठ्यम् । तथाहि शाङ्करं भाष्यम्– 'नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेणाऽपनेया न प्रापणीयेत्यर्थः । नापनेतव्या वा न हातव्या' इति । रङ्गरामानुजीयेऽपि– 'नाऽपनेया न प्रापणीया' इति । 'आपनेया प्रापणीया' इति तत्वमञ्जरी । 'तर्केण न प्रापणीया नाप्यपनेतुं शक्या' इति वामनपण्डितः ॥

## जयतीर्थीयमाविष्करणम्

ननु किमनेन छान्दसव्याख्यानेन? उपसर्गयोर्विभागेन स्वरसत एव व्याख्यायताम्– 'एषा मतिः तर्केण आनेया न भवति, अपनेया च न भवति' इति । तथ्यमाह भवान् । शक्यमेवं व्याख्यातुम् । तदपि न स्वरसम् । किन्तु छान्दसमेव । नहि विरुद्धार्थयोरुपसर्गयोर्गोव्याघ्रयोरिव एकत्र प्रयोगो लोके क्वापि दृष्टः । अथापि ऋष्याश्रमेषु गोव्याघ्रयोरेकत्र समायोगो दृष्टः । तथा आर्षेषु छन्दस्सु विरुद्धार्थयोरपि समावेशः स्यादिति भावनया जयतीर्थमुनिना तथा व्याख्यातम् । इदमिदमस्मिन् कालविशेषेऽनेन पुरुषविशेषेणाऽविष्करणीयमिति नियतिः । यत् परस्तादाविष्करणीयं तत् पूर्वाचार्या जानन्तोऽपि नाऽविष्कुर्वन्ति । यत इदं परस्तादाविष्करणीयमिति नियतिमपि ते जानन्ति । इदं चार्थान्तरं जयतीर्थोपज्ञमाविष्करणीयमिति न मध्व आविश्चकार । न पण्डिताचार्यः । तदेतदुक्तं पूर्वाचार्यैः– 'अनुक्तकथनात् क्वापि सफलोऽयं श्रमो मम' इति ॥

## मूलपाठाविष्कारः

तद् यथा– भगवत्पादकृतानां सर्वमूलग्रन्थानां शुद्धप्रायः पाठ आचार्यगोविन्दोपज्ञमाविष्करणीय इति नियतिः । अत एव मूलपाठं स्वयं जानन्तोऽपि जयतीर्थव्यासतीर्थादयः, तौळवमण्डले च वादिराजतीर्थादयः नाऽविश्चक्रुः । प्रत्युत प्रचलितमेव पाठमाश्रित्य व्याचक्रुः । तदिदं दैवगुह्यं यल्लिकुचवंशोपक्रममेव मूलपाठोपलब्धिरिति सम्प्रति मूलपाठोपलब्धिश्च लिकुचकुलसम्भवात् तदात्वे पलिमारुमठाधीशाच्छ्रीरघुवल्लभतीर्थादेव उपाक्रम्यतेति विचित्रं विस्मयावहं च विधिनियतिरहस्यमिदम् ॥

## श्रुतावन्यशब्दार्थः

**अन्येन अन्यत्वज्ञानिनैव** । नह्यन्यत्वमस्तित्वमात्रेण किन्तु ज्ञायमानम् । 'अनन्यप्रोक्ते गतिरत्र नास्ति' इति पूर्ववचनेनेदमवसीयते । अनन्यमात्मानं जानन्ननन्यः । अन्यमात्मानं जानन्नन्य इत्यर्थः । ब्रह्मवैवर्तवचनं चात्र संवदते–

> 'जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् ।
> 'तदनुव्रताश्च ये केचित् तेषां ज्ञानं न जायते' इति ॥

## ॥ अस्मिन्नस्य च तद्योगं शास्ति ॥ १.१.१९. ॥

## अस्य जीवस्य । युक्तिसमुच्चये चशब्दः ॥

---

जीवानां च विष्णोश्च, जीवानामेव च परस्परं भिदामिति पुराणवचनार्थः । तथाचेदं श्रुतिवचनमुभय-सूत्रस्यापि विवरणरूपम् । 'प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति भेदव्यपदेशाच्च, 'नैषा तर्केण मतिरापनेया' इति निषेधाच्च नानुमानापेक्षेति । 'अनन्येन ब्रह्मात्मभूतेनऽचार्येण प्रोक्त आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति' इत्यादिपरभाष्यवचनं तु स्वतः प्रतीतार्थस्यापलाप एवेति ब्रह्मवैवर्तवचनेन स्फुटं निरस्तम् ॥ ✻ ॥

### परव्याख्यानस्यास्वरसता

'सोऽकामयत' इति कामयितृत्वनिर्देशात् आनुमानिकमचेतनं प्रधानमानन्दमयत्वेन नापेक्षितमिति व्याख्यानं पुनरुक्तत्वादुपेक्ष्यम् । 'ईक्षतेर्नाशब्दम्' इति पीठिकायामेव सकृन्निराकृतम् । 'आनन्दमयोऽभ्यासात्' इत्यत्रापि प्रकृतिः पुनः पूर्वपक्षीकृत्य निराकृता । तत् किमत्रापि पुनराम्रेड्यते? चिकित्साविधुरोऽयं प्रकृतिरोगः । अपिच तत्पक्षे 'कामाच्च नाऽनुमानम्' इत्येव पर्याप्तम् । किमपेक्ष्य सूत्रकारोऽधिकाक्षरमुपादत्त? ॥ ✻ ॥

**॥ अस्मिन्नस्य च तद्योगं शास्ति ॥** एतत्सूत्रभाष्यस्य टीका कोशेषु नोपलभ्यते । लिपिकृत्प्रमादेन प्रायो लुप्तं स्यात् । अत्र तावन्मायावादभाष्यम्– 'यस्मात् अस्मिन् आनन्दमये प्रकृत आत्मनि, प्रतिबुद्धस्य अस्य जीवस्य तद्योगं शास्ति । तदात्मना योगस्तद्योगः, तद्भावापत्तिः, मुक्तिरित्यर्थः' इति । 'अस्मिन् आनन्दमये, अस्य जीवस्य, तद्योगमानन्दयोगं शास्ति शास्त्रम्– 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति । रसशब्दाभिधेयानन्दमयलाभात् अयं जीवशब्दाभिलपनीयः आनन्दी भवति इत्युच्यमाने, यल्लाभात् य आनन्दी भवति स स एवेत्यनुन्मुत्तः को ब्रवीति' इति रामानुजभाष्यम् । अत्र स्वाभिमतमुद्धृत्य दर्शयति– **अस्य जीवस्येति** । यत् परभाष्ययोरुक्तं 'अस्य जीवस्य' इति तदस्माभिरप्यनुमन्यत इत्यर्थः । एतेनैतदाह– 'अस्मिन्' इति, 'तद्योगम्' इति च पदद्वयस्य योऽर्थः परैरुपवर्णितः स नास्मत्सम्मत इति ॥

## अवचनेनैव प्रोवाच

तथाहि यत्राभिप्रायभेदस्तन्मात्रकथने, अन्यत् सर्वं परभाष्योक्तमभिमतमित्युक्तं भवति। एवं यत्राभिप्रायैक्यं तन्मात्रकथने ततोऽन्यत् परभाष्योक्तमनभिमतमित्युक्तं भवति । इयं भाष्यपरिपाटी भवति । इदमुक्तं भवति–'अस्य परिदृश्यमानस्य जीवस्य प्रतियोगि तत्पदवाच्यं परोक्षं ब्रह्मैव भवितुमर्हति । 'तद् वनमित्युपासितव्यम्', 'ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति श्रुतिस्मृतिभ्यां नामधेयं च हि तद् ब्रह्मणः । तेन अस्य संसारिजीवस्य तेन प्रकृतेन आनन्दमयेन योगः मुक्तौ सहयोग एव तद्योगः । नाऽनन्देन योगः । परोक्षस्याऽनन्दमयस्य 'अस्मिन्' इतीदंशब्देनैव जीववत् परामर्शश्च न स्वरसः । नतरां तदात्मना योगस्तद्योगः । अशब्दार्थत्वात् । योग इति संयोगं सहयोगं वा वक्ति। तच्च भेदसापेक्षमिति विरुद्धमभेदपरतया व्याख्यानम्। तत्पक्षे 'तस्मिन्नस्य च तद्भावं शास्ति' इत्येव सूत्रं स्यात् ॥

नन्वास्तामिदम्पदवेदनीयो जीवः । तत्पदवेदनीयं ब्रह्मेति । अथापि द्विरिदम्पदं पठ्यते । अस्मिन्निति अस्येति । तत्र कतरज्जीववचनमिति शङ्कमानमप्यनेनैव भाष्यवचनेन समाधत्ते– **अस्य जीवस्य** । नहि जीवे भगवतः समागमो युक्तः । किन्तु भगवति जीवस्य । तेन तद्योगमित्येतत् त्रेधा व्याख्यातं भवति । तेन योगः समागमः, तस्मिन्नेव नित्ययोगः, तेन सह भोगयोगश्चेति । स्फुटमेतदुत्तरत्र प्रमाणवचनोदाहरणेन ॥

ननु 'अः इति ब्रह्म' इति श्रवणात्, मुख्यार्थत्वाच्च अस्य ब्रह्मण इत्येव युक्तम् । नेत्याह– **अस्य जीवस्य** । परोक्षस्य ब्रह्मणः तत्पदेन ग्रहणात् तत्प्रतियोगितया **अस्य जीवस्ये**त्येव युक्तम्। अन्यथाऽर्थासङ्गतेः । तदेतदुक्तम्– 'भाष्यं चात्यर्थविस्तरम्' इति ॥

ननु तर्हि अस्मिन्निति दृश्यमानमेव किमपि वक्तव्यम् । नात्र किमपि तत् पश्यामः । तस्मात् 'अस्य च तद्योगं शास्ति' इत्येव पर्याप्तम् । न भोः । तावन्मात्रवचने शास्ति श्रुत्यन्तरमितीयदेव प्रतीयते । अस्मिन्नेव प्रकरणे, यत्राऽनन्दमयः प्रस्तुतः, तद्योगं शास्तीत्यर्थविशेषलाभाय अस्मिन् शास्तीत्युक्तम् । नह्येतदर्थं श्रुत्यन्तरसंवादोऽन्वेष्टव्यः । अत्रैव मुक्तावपि भेदस्य स्फुटवचनादिति । ननु भाष्येऽनुक्तमेतत् । अल्पाक्षरं भाष्यं न मुखतः सर्वं वदद् वाचाटति । किन्तु सूचयति । किमत्र

**‘सह ब्रह्मणा विपश्चिता’, ‘अनिलयनेऽभयं प्रतिष्ठां विन्दते’, ‘एतमानन्दमयमात्मानमुपसङ्क्रामति’ इत्यादि ॥ ६ ॥**

**॥ इति षष्ठमधिकरणम् ॥ ✻ ॥**

---

सूचकम्? एतत्प्रकरणगतानामेव श्रुतीनामुदाहरणम् । न केवलं सावकाशं किमपि वक्ति । किन्त्वेवमेवेति नः **शास्ति** ॥

नन्वथापि चकारं किमिति सूत्रे चकार सूत्रकारः? नायं केनापि सूत्रपदेनान्वेति । न तावदस्मिंश्चेति । अस्मिन्नेवेति विवक्षणात् । नाप्यस्य चेति । नहि जीवादन्यः कश्चनात्र समुच्चेतव्यः । नापि तद्योगं चेति शास्ति चेति वा । असङ्गतेः । अत आह– **युक्तिसमुच्चये चशब्द** इति । तदर्थं हेत्वर्थश्च । तथाचायं सूत्रार्थः– च यस्मात् अस्मिन्नेवाऽनन्दमयप्रकरणे अस्य जीवस्य तेन ब्रह्मणा सह योगं श्रुतिः शास्ति ततश्च नाऽनन्दमयो जीवः । चकारेण भेदव्यपदेशाच्च, अनुमानानां कामचारित्वाच्च इति पूर्वोक्ते युक्ती समुच्चीयेते । एतेन पूर्वसूत्रद्वयगतचकारस्याप्यर्थो विवृतः । परस्परं युक्तीनां समुच्चये त्रिष्वपि सूत्रेषु चशब्दः । अन्ते च प्रधानां युक्तिं समुच्चिकाय । तेन चः प्राधान्ये च । सर्वसूत्रान्वयाय प्राधान्यसूचनाय चान्त इदमाह ॥

## पादभेदनिर्णयः

किं तदनुशासनम्? आह– **सह ब्रह्मणा विपश्चिता** । ‘सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह **ब्रह्मणा विपश्चिता**’ इति समग्रा ऋक् । अत्र केचिद् वेदपाठकाः– ‘सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चिता’ इति पादं भिन्दन्ति । वर्णयन्ति चार्थम्– ‘विपश्चिता सर्वज्ञेन ब्रह्मणा तद्रूपेण सर्वान् कामान् सह युगपदश्नाति व्याप्नोति’ इति । तदिदं पादभेदनमर्थवर्णनं चेति द्वयमप्यसङ्गतमिति सूचनाय– ‘सह ब्रह्मणा विपश्चिता’ इत्याह । तथाच ‘सोऽश्नुते सर्वान् कामान् । **सह ब्रह्मणा विपश्चिता**’ इत्युत्तरार्धे पादविभागः । ब्रह्मणा सह भुङ्क्ते इत्येव च मन्त्रवर्णार्थः । तेन सह योगस्तद्योग इति च सूत्रार्थ इत्युक्तं भवति । एतावतां

प्रमेयविशेषाणां द्योतनायैव केवलं चतुर्थचरणमुज्जहार– **'सह ब्रह्मणा विपश्चिता'** इति । ननु साम्प्रदायिकपदपाठत्यागे का गमनिका? सम्प्रदायपरम्परैव हि वेदाध्ययने निर्णयनी । अन्यथा सर्वत्र सम्प्रदायविच्छेदेनानवस्था स्यात् । अयि सम्प्रदायशरण, साधु प्रशिशंसिषामस्ते सम्प्रदायशारण्यम् । किन्त्वसम्प्रदायं सम्प्रदायं मन्यमानो भ्रान्तोऽसि । ननु प्रियतत्ववाद, कथमथायमेव सम्प्रदायः, नायमिति निरचैषीः? प्रतनानां सम्प्रदायप्रदानां वचनादित्यवैहि । तथाहि यजुर्विवेकवचनम्–

'स्वयोग्यं ब्रह्मविद् भुङ्क्ते विरिश्चेन परेण च ।
'ब्रह्मणा सह तद्वश्यः सुखमेनन्न दुष्कृतम्' इति ॥

नहि वेदार्थवर्णने यस्यकस्यचित् स्वाच्छन्द्यम् । व्याख्यानतो हि विशेषप्रतिपत्तिः । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति चोक्तम् । एवं 'सह'शब्दस्य चरमपादभागत्वोक्त्या अर्थाधीनपादव्यवस्थावत्त्वमेव ऋक्त्वमिति जैमिनिनोक्तत्वात् पादान्तरस्थस्य सहशब्दस्य ब्रह्मणेत्यनेनान्वयोऽनुपपन्न इति कुशङ्काऽपि गर्भस्रावेण गता । वस्तुतस्तु नायमन्ततो दोषः । 'अर्थवशेन वृत्तवशेन वा पादव्यवस्था' इति मीमांसकैरेवाभ्युपगतत्वात् ॥

## स्कान्दवचनस्य गतिः

अत्र केचिदाचक्षते– 'वयमपि सम्प्रदायानुगुणमेव पादं भिन्द्मः । अर्थं च वर्णयामः । तथाहि स्कान्दे– 'योऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः' इति । तस्मात् पुराणोपबृंहितमेवास्मद्वर्णनम्' इति । समग्रे स्कान्दे सम्प्रत्ययं श्लोको न पठ्यते । उक्तं च रङ्गरामानुजभिक्षुणाऽपि– 'ब्रह्मणेत्यस्येत्थम्भूतलक्षणत्वाश्रयणे ब्रह्मभूत इत्यर्थोऽपि न सम्भवति । 'श्वेतच्छत्रेण राजा' इत्यादौ ततोऽभेदादर्शनात् । त्वदुक्तस्कान्दवचनस्य पूर्वैः सम्प्रतिपन्नैरनुदाहृतत्वाच्च' इति । स्यादपि सम्प्रत्यनुपलब्धं पुराणवचनम् । अथापि न नो हानिः । अर्थान्तरपरतया सावकाशत्वात् । तथाहि विदितेन स्वेनापरोक्षीकृतेन ब्रह्मणा रूपेण सह जीवन् नित्यं वर्तमानो मुक्त उच्यते । स मुक्तः सकलान् कामानश्नुते । कथम्? अक्रमेण । अकारवाच्यस्य विष्णोः क्रमेण । यस्य येन क्रमेण भोगो भगवद्विहितस्तेन क्रमेण । युगपदित्येव वा । उभयथाऽपि पादव्यवस्था न दुष्यतीत्युक्तम् ॥

## सहयोगेऽपि नाप्राधान्यम्

नन्वथापि न निस्तारः । ब्रह्मणा सहेत्यन्वये ब्रह्मणोऽप्राधान्यं स्यात् । यथाऽऽह पाणिनिः– 'सहयुक्तेऽप्रधाने' (२.३.१९) इति । नेदमन्ततः प्राधान्यनिर्णायकम् । वैयाकरणानां प्रक्रियामात्रमिदम् । यस्य मुखतः क्रियासम्बन्धः स प्रधानः । यस्य प्रतीयमानः सम्बन्धः सोऽप्रधान इति । यदाह जयादित्यः– 'पुत्रेण सहाऽगतः पिता । पितुरत्र क्रियादिसम्बन्धः शब्देनोच्यते । पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्' इति । वस्तुतस्तु सहयुक्ते प्रधानेऽपि तृतीया भवति । ननु शक्यं वक्तुं पित्रा सहाऽगतः पुत्र इत्यपि । पुत्रस्याऽगमनं पित्रधीनमित्यर्थः । 'मात्रा सहाऽगतः शिशुः' इत्यादिषु स्फुटमेतत् । एवमत्रापि ब्रह्मणा सहकृत एव न स्वातन्त्र्येणेति मन्त्रवर्णार्थः । तदेतत् प्रमाणवचने स्फुटम्– 'ब्रह्मणा सह तद्वश्यः' इति ॥

## ऋचां गाथानां च लक्षणनिर्णयः

नन्वथापि किञ्छन्दा अयं मन्त्रवर्ण इति वक्तव्यम् । सत्यं वक्तव्यम् । न केवलं मया । 'कामान्थ्सह' इति सहशब्दमुपान्त्यपादे निधाय पठता त्वयाऽपि । ननु च्छन्दोविदो गाथामेतामाहुः । न श्रद्धेयमेतत् । यत एतामृचमाचक्षते सर्वेऽपि व्याख्यातारः– 'तत् तस्मिन् ब्राह्मणोक्तेऽर्थे एषा ऋगभ्युक्ता' इति । गाथा च ऋचो भिन्ना । 'ऋग् गाथा कुम्ब्या तन्मितम्' इत्यैतरेये पृथग् ग्रहणात् । उक्तं च लक्षणं भाष्ये–

> 'स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः ।
> 'अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः ।
> 'खण्डवाक्यानि कुम्ब्याः स्युरसमानि परस्परम्' इति ॥

स्वराणामित्यचाम् । नतूदात्तादीनाम् । अलक्षणत्वात् । तथाह्यष्टाक्षरपादा गायत्री, अष्टस्वराक्षरेत्येवार्थः । स यथा– 'तत् सवितुर्वरेण्यम्' । अत्र नव व्यञ्जनानि । स्वराणामष्टत्वाय क्षैप्राक्षरस्य व्यूहः क्रियते वरेणियमिति । तेनाष्टौ स्वराः । यथा वा– 'अग्निनाऽग्निः समिध्यते' । अत्र पादेऽष्टौ स्वराः । दश व्यञ्जनानि । एवं नवस्वरपादा बृहती । दशस्वरा पङ्क्तिरित्यगादि । इयमृचां स्वर-

नियतिः । उदात्तादिनियतिर्निगदेष्वपि भवति । विषमच्छन्दांस्यपि अत्रैवान्तर्भवन्ति । यथेयं प्रकृता ऋक् । यथावा विष्टारपङ्क्त्यादयः । अन्या मिताक्षरा यत्र न स्वरनियमः, किन्तु मात्राभिश्छन्दांसि नियम्यन्ते ता गाथाः । यथा–

अवन श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥

अत्र प्रतिपादं द्वादशमात्रा इति मात्रानियतिः । न स्वरनियतिः । यतः प्रथमपादे नव स्वराः । द्वितीयेऽष्टौ । तृतीये नव । तुरीये चाष्टौ । ननु तर्हि विषमच्छन्दसामत्रैवान्तर्भावः स्यात् । पादेषु स्वराणामनियतत्वात् । न भोः । अविदितविवक्षोऽसि । विषमच्छन्दस्वपि अस्मिन् पादे इयन्तः स्वरा इत्यस्ति नियतिः । यथोष्णिहि– एकस्मिन् पादे द्वादश स्वराः, इतरयोरष्टाविति नियतिः । नैवं गाथासु । तत्र मात्राणामेवेयत्तानियतिरिति विवक्षाभेदेनोभयविधानि च्छन्दांसि । विरळानि च मात्राच्छन्दांसि वेदेषु । तथाऽप्येतद् भवत्युपनिषद्वचनम्–

'घृतमिव पयसि निषक्तं भूतेभूते च वसति विज्ञानम् ।
'सततं मन्थयितव्यं मनसा मन्थानभूतेन' इति ॥

अत्र विषमपादयोर्द्वादश मात्राः । समयोर्द्वितीयेऽष्टादश, तुरीये पञ्चदश मात्रा इति मात्रानियतेयं गाथा । यामार्यामाहुर्लोके । एवं मिताच्कपादत्वमृक्त्वम् । तदन्यत्वे सति मिताक्षरत्वं गाथात्वम् । एवं वर्णच्छन्दांसि मात्राच्छन्दांसि च सर्वाणि सङ्गृहीतानि । अथ मिताक्षराणि निराकाङ्क्षपदकदम्बानि पद्यगन्धीनि यजूंषि कुम्ब्या उच्यन्ते । तानि च परस्परमसमानि भवन्ति । समाच्कत्वनियमरहितानी-त्यर्थः । यथा– नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्यादि ॥

कथमृचः? ऋचन्तीति । ऋच स्तुतौ । कथं गाथाः? गीयन्ते इति । गाङ् गतौ । गाने चेति वक्तव्यम् । प्रयोगात् । तालबद्धतया गातुं योग्या गाथा । ननु ऋचोऽपि सामगैर्गीयन्ते? तथाऽपि नियताच्का इति ऋच एव ताः । तदन्यत्वेन गाथाया विशेषणात् । कथं कुम्ब्याः? कुम्ब्यन्त आच्छाद्यन्त इति । कुबि आच्छादने । प्रच्छन्नपद्यानि गद्यानीत्यर्थः ॥

## भट्टभास्करमतनिरासः

ततश्चेयमृक् । न गाथा । नतरां कुम्ब्या । तत इदं वक्तव्यं किञ्छन्दा इयमृगिति । अत्राऽह भट्टभास्करः– विष्टारपङ्क्तिविशेषोऽयमिति । अष्टाक्षरौ द्वौ पादौ द्वादशाक्षरौ च द्वाविति विष्टारपङ्क्तिलक्षण-माचक्षते । तथाच पूर्वार्धे– 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद । निहितं गुहायां परमे वि+ओमन्' इति पादविच्छेदेन द्वादशाक्षरं पादद्वयं भवतीति स मन्यते । सर्ववैदिकसम्प्रदायविप्लवोऽयम् । उत्तरार्द्धे चाष्टाक्षरं पादद्वयं न भवति । प्रथमः सप्ताक्षरः, द्वितीयो नवाक्षरः । वेदाभ्यासजडानां मते प्रथमो नवाक्षरः, द्वितीयः सप्ताक्षरः । संहत्य षोळशाक्षरं भवतीति कथञ्चित् सन्तोष्टव्यम् । अत एव विष्टारपङ्क्तिविशेषोऽयमित्याह ॥

अपरे त्वेवं कल्पयन्ति– 'सत्यं ज्ञानमनन्तं ब्रह्म' इति नवाक्षर एकः पादः । 'यो वेद निहितं गुहायां परमे' इति द्वादशाक्षरो द्वितीयः । 'व्योमन् सोऽश्नुते सर्वान् कामान्' इति नवाक्षरस्तृतीयः । 'सह ब्रह्मणा विपश्चिता' इति नवाक्षरस्तुरीय इति । नवाक्षरस्तुरीयपाद इति तत्थ्यम् । अन्यत् सर्वं स्वकपोलकल्पितम् ॥

## छन्दोनिर्णयः

तर्हि का गतिः? वेदवाङ्मयस्य शरणागतिः । तत इयं किञ्छन्दा इति प्रतिभाति । शृणु–'सह ब्रह्मणा विपश्चिता' इति भाष्यवचनादेव चरमः पादो नवाक्षर इति स्फुटम् । तेनास्यामृचि पादानां यथासम्भवं बृहतीत्वं सम्पादनीयमिति च बोधयाम्बभूव । तत्र प्रथमः पादः प्रकटं नवाक्षरः–'सत्यं ज्ञानमनन्तं ब्रह्म' इति । तेनाऽद्यन्तयोर्बृहतीत्वं सम्पन्नम् । अथ पञ्चपदा चेयमृक् । 'यो वेद निहितं गुहायाम्' इति द्वितीयोऽपि नवाक्षरः । 'परमे वि+ओमन्' इति तृतीयः षडक्षरो गायत्रः पादः । एवं पूर्वार्धे त्रयः पादाः । तथाच द्वाभ्यां बृहतीभ्यामेकया च गायत्र्या चतुर्विंशत्यक्षरा त्रिपदा गायत्री सम्पन्ना । 'सोऽश्नुते सर्वान् कामान्' इति चतुर्थः पाद औष्णिहः सप्ताक्षरः । अथापि व्यूहेन बृहतीं सम्पादयामः– 'सो+अश्नुते सर्वान् कामान्' इति । तथाच चत्वारः बृहतीपादाः, एको गायत्रपादश्च सम्पन्नाः । एवं (९+९+ ६+९+९=४२) समग्रा स्वराट् पङ्क्तिश्छन्दः ॥

तथाचायं मन्त्रार्थः– ब्रह्मविदाप्नोति यत् परं ब्रह्म तल्लक्षणमाह– सत्यं ज्ञानमनन्तं ब्रह्म । एतेनान्नमयादि-पञ्चरूपं ब्रह्मोच्यत इति मान्त्रवर्णिकसूत्रे विवृतम् । तदेवं पञ्चविधं ब्रह्म यो वेद निहितं हृदयगुहायाम् स मुक्तः सन् परमे व्योम्नि परमपदे ब्रह्मणा चतुर्मुखेन परब्रह्मणा च सह विपश्चिता सर्वज्ञेन परिपूर्णान् सुखभोगान् अश्नुते व्याप्नोति । अशू व्याप्तौ । भुङ्क्ते इत्येतत् । विविधं विशिष्टम् इतरविलक्षणं च पश्यन्ती चिदस्येति विपश्चित् । रामानुजीया अप्याहुः– 'निरुपाधिकानन्याधीनासङ्कुचितसर्वविषयक-ज्ञानवत्त्वं विपश्चित्त्वम्' इति ॥

सा च ब्रह्मप्राप्तिरुपरिष्टात् स्फुटमगादि– 'एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽ**निलयनेऽभयं प्रतिष्ठां विन्दते** । अथ सोऽभयं गतो भवति' (२.७.१) इति । भेदव्यपदेशो समुद्धृतमेतदिति ज्ञापयन्नपेक्षितं केवलमंश-मुद्धरति– **अनिलयनेऽभयं प्रतिष्ठां विन्दत** इति । एतेन तस्मिन् योगस्तद्योग इत्यपि सूत्रार्थो वर्णितो भवति ॥

## सूत्रस्यार्थान्तरम्

अथेदानीं सूत्रस्यार्थान्तरं सूचयन् तन्मूलां श्रुतिमुदाहरति– **एतमानन्दमयमात्मानमुपसङ्क्रामतीत्या-दीति** । तथाह्यष्टमेऽनुवाके– 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । **एतमानन्दमयमात्मानमुपसङ्क्रामति**' इति । तृतीयायां वल्ल्यां चरमेऽनुवाके च– 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्मात् लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुप-सङ्क्रम्य । एतं मनोयमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमय-मात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतथ् साम गायन्नास्ते हा३वु हा३वु हा३वु' इत्यादि । मध्यगतेन आनन्दमयवाक्येन पूर्वाणि चोत्तराणि चैतानि वाक्यानि उपसङ्क्राह्याणीत्याह– **इत्यादीति** । आनन्दमयवाक्येनाऽदिमत्त्वं तु प्राधान्यात् । प्राधान्यं चाऽनन्द-मयस्य साक्षादधिकरणसम्बन्धित्वम्, मोक्षे चरमप्राप्यत्वं च ॥

इत्यादीत्यविभक्तिको निर्देशः सार्वविभक्तिक इति शास्त्रविदां सम्प्रदायः । इत्यादि श्रुतिवचनं शास्तीति यथाश्रुतवादिनः । इत्यादिः श्रुतिः शास्तीति । इत्यादिना वचनेनेति वा । इत्यादिभिर्वचनैरिति वा । इत्यादिषु वचनेषु शास्तीति वा । इत्यादौ स्थानद्वय इति वा ॥

एतेन तैः अन्नमयादिभिः पञ्चरूपैर्योगं शास्तीति सूत्रार्थ उक्तो भवति । तेन न केवलं जीवाद् भिन्न आनन्दमयः । अन्नमयादयः पञ्च कोशा इति च बालिशं वचनमित्युक्तं भवति । नहि कोशानां मुक्तावुपसङ्क्रमणं नाम युज्यते । तदेतत् स्फुटमुदितमनुव्याख्याने–

'योगमन्नमयाद्यैर्यत् फलत्वेनास्य शंसति ।
'स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम्' इति ॥

## सूत्राणामपौनरुक्त्यम्

ननु 'नेतरोऽनुपपत्तेः' इत्यनेन 'भेदव्यपदेशाच्च' इति गतार्थम् । उभाभ्याम्– 'अस्मिन्नस्य–' इति गतार्थम् । ननु सन्ति केचिदा प्रपदमाशिखं सर्वतोदिशमारोपिताभेदभ्रमाः । तेषां क्रियासमभिहारेण बोधनेऽपि न भेदो बुद्धिमधिरोहति । अप्रबुद्धानां बालानां कृते शास्त्रेषु भेदवाद इत्येव जल्पन्ति । तेषां दुराग्रहग्राहेण सात्विका अपि मा हन्त ग्राहिषतेति भेदसूत्राण्याम्रेडयति सूत्रकारः । अपि च 'नेतरः–' इत्यत्र न स्फुटो भेदव्यपदेशः । तदर्थं द्वितीयं सूत्रम् । एवं न केवलमानन्दमयस्य, किन्तु पञ्चानामपि ब्रह्मत्वप्रतिपादनाय च तृतीयं सूत्रम् । भेदे महातात्पर्यद्योतनाय च पृथक्पृथक् सूत्रप्रणयनम् । तेन न व्यर्थता सूत्राणाम् । अनेकार्थत्वाच्च । उक्तं चानुव्याख्याने–

'येऽन्नं ब्रह्मेत्याद्युपासां सामानाधिकरण्यतः ।
'उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी ॥

'स्थानद्वयगता वेदवाणी तदपलापिनाम् ।
'तमसोऽन्यत्र संस्थानं कथमेव सहेत सा' इति ॥ * ॥

॥ इति षष्ठमानन्दमयाधिकरणम् ॥ * ॥

—०—

## सप्तममधिकरणम्
### (अन्तरधिकरणम्)
### (१.१.२०-२१.)

## तत्वप्रदीपः

एवं तावदानन्दमयादिशब्दसमन्वयप्रतिपादनमुखेन तैत्तिरीयशाखागतानां तद्रूपशाखान्तरगतानां च नामशब्दानां विष्णौ समन्वयो दर्शितः ॥

---

## तत्वचन्द्रिका

**आनन्दमयादिशब्दसमन्वयप्रतिपादनमुखेनेति** । आनन्दमयशब्देनाऽदिमन्तः अन्नमयप्राणमयमनोमयविज्ञानमयाः वाङ्मयचक्षुर्मयश्रोत्रमयाश्च लिङ्गात्मकशब्दाः, अन्नप्राणचक्षुःश्रोत्रमनोवाग्विज्ञानानन्दा नामात्मकशब्दाश्च मुख्यतो गृह्यन्ते ॥

**तैत्तिरीयशाखागतानामिति** । उपनिषद्धि सर्वशाखासारसङ्ग्रहः । सङ्ग्रहार्थे निर्णीते तद्विस्तरस्य शाखाया अप्यर्थो निर्णीयत एव । सङ्क्षेपविस्तराभ्यां हि वक्तव्यं प्रवदन्ति । नच तयोर्विरोधो नाम सम्भवति । तेन वस्तुतोऽनेनैकेनाधिकरणेन समस्ततैत्तिरीयशाखागतानां तद्भेदभूतसंहिताब्राह्मणारण्यकोपनिषद्गतानां नामशब्दानां विष्णौ समन्वयः सामान्यतो दर्शितो भवति ॥

**तद्रूपशाखान्तरगतानां चेति** । तत्समानरूपाणां वाधूलश्रुत्यादिशाखान्तरगतानाम्, काण्वमाध्यन्दिनकठकपिष्ठलकठादीनां याजुषशाखान्तरगतानां च नामशब्दानाम् । सूचनाद्धि सूत्रमुच्यते । विश्वतोमुखानि चैतानि सूत्राणि ॥

तेषां तद्गतलिङ्गानां वा पुनः श्रुतिष्वितरशब्दादियोगेन वृत्तेः संशयप्राप्तौ विशेषन्यायविवक्षयाऽधिकरणान्तराण्यारभ्यन्त इत्यत्र च सम्बन्धः प्रायः समन्वयाधिकरणानां विद्यते ।

## अधिकरणान्तरारम्भनिदानम्

अथापि केषाञ्चित् चपलचेतसां बाधत एव भगवान् भ्रमः । कुतः? तेषां पूर्वाधिकरणे विष्णुपरतया निर्णीतानां नामशब्दानाम्, तत्रोक्तानां विष्णुलिङ्गानां च, अस्यामेव शाखायामन्यत्र पुनरन्यान्यदेवतावाचकानां शब्दानां लिङ्गानाम्, तत्समर्थकतया प्रतीयमानानां श्रुतियुक्तीनां च वा योगेन संशयप्राप्तौ कः परिहारः? अतस्तन्निराकरणेन तत्रापि विष्णावसाधारणा युक्तयः प्रदर्शनीयाः । यतस्ते गतिसामान्यमेवाभेदादिविवक्षयाऽन्यथाऽन्यथा मन्यन्ते । अतः तत्वमार्गे पततां सतां निःशङ्कतायै विशेषन्यायाविष्करणमपेक्ष्यते । अतस्तत्तत्प्रकरणगतविशेषन्यायविवक्षयोत्तराण्यधिकरणान्यारभ्यन्ते भगवता बादरायणेन मन्दमनीषाणामप्यनुजिघृक्षया । तदेतदाह– **पुनरि**ति । महता श्रुतियुक्तिकदम्बेन श्रुतीनां विष्णुपरत्वसमर्थनानन्तरमपीत्यर्थः ॥

इत्यत्रेति । अयमितिशब्दः पूर्ववाक्यसङ्गतः सन् पूर्वप्रस्तुतप्रमेयोपसंहारमाह– **आरभ्यन्त इती**ति । अथ चोत्तरवाक्यसङ्गतः सन् वक्ष्यमाणप्रमेयस्य हेतुसमर्पकः– इति हेतोरस्ति सम्बन्ध इति । अयमर्थः– **अत्र च** अस्मिन्नधिकरणे च, उत्तरेषां समन्वयाधिकरणानां प्रायः परस्परं सम्बन्धो विद्यते । तैत्तिरीयशाखासङ्गतत्वात् । प्रथमपादविवक्षया चेदम् । तत्राप्युत्तरप्राणाधिकरणमैतरेयश्रुतिमूलमिति **प्राय** इत्युक्तम् ॥

## पादसङ्गतिरध्यायसङ्गतिश्च

**अत्र च** अस्मिन् पादे च, न केवलं समन्वयाधिकरणेन, पूर्वाधिकरणेनोत्तराधिकरणानां च सम्बन्धः **प्रायो विद्यते** । उत्तरप्राणाधिकरणे न साक्षात् सम्बन्ध इति प्राय इति ॥

**अत्र च** अस्मिन्नध्याये च, समन्वयसूत्रेणोत्तरेषामधिकरणानां **सम्बन्धः प्रायो विद्यते** । 'तदुपर्यपि–' इत्यादीनामधिकारनिर्णायकानां सूत्राणां साक्षात् सम्बन्धाभावात् **प्राय** इति ॥

'अदृश्येऽनात्म्ये-' इत्युक्तम् । तच्चादृश्यत्वम्-

'अन्तः प्रविष्टं कर्त्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् ।
सहैव सन्तं न विजानन्ति देवाः' इत्यन्तस्थस्य कस्यचिदुच्यते ।

---

तं च कश्चित्कचिदाचार्य्यः स्पष्टं दर्शयति । यथेह- **अदृश्य** इत्यादिना । अयमर्थः, **'अदृश्येऽनात्म्ये-'** इति आनन्दमयस्यादृश्यत्व**मुक्तम्** । तच्च अन्तः प्रविष्टस्य चन्द्रादिषु स्वेच्छया चरतः प्रतीयते **'न विजानन्ति'** इति ।

---

इयमिह पूर्वाधिकरणसङ्गतिः- अवगतं तैत्तिरीयोपनिषद्भागस्य विष्णुपरत्वम् । तेन तैत्तिरीयारण्यक आ सप्तमादा दशमं चत्वारः प्रपाठका विष्णुपरा इत्यधिगतम् । प्रथमे त्रयः प्रपाठका हि तैत्तिरीयोपनिषत् । चरमो महानारायणोपनिषत् । प्रथमषट्के तावदिदानीं सन्दिह्यते । तत्रापि तृतीये प्रपाठके पुरुषसूक्तात्मकमनुवाकद्वयम्, नारायणानुवाक इत्युत्तरनारायणानुवाक इति च प्रथितं द्वादशं त्रयोदशं च नारायणपरमनुमन्यामहे । बहुदेवतावचन एकादशोऽनुवाकः किम्पर इति तु सन्दिह्यते ॥

तथाहि- **'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' इति** तैत्तिरीयश्रुता**वानन्दमयस्यादृश्यत्वमुक्तम्** । तच्चादृश्यत्वं विष्णोरेवेति चोक्तम्- भेदव्यपदेशादिति सूत्रे । तच्चादृश्यत्वं न दृष्ट्यगोचरत्वमात्रम् । वाय्वाकाशयोरपि तथात्वात् । किन्तु साकल्येन ज्ञानाविषयत्वमेव तत्त्वम् । तच्च तैत्तिरीयश्रुतावेवाऽरण्यकस्य तृतीये प्रपाठके एकादशे होतृहृदयमन्त्रानुवाकेऽन्येषां प्रतीयते । तथाहि श्रुतिः- **'अन्तःप्रविष्टं कर्त्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः'** इति षड्ढोतृहृदयमन्त्रेषु तृतीयर्क् (प्रपा.३.अनु.११.मं.१०.) । अत्र न केवलमदृश्यत्वम् । मनसा स्वेच्छया चरन्तमिति चरणस्वातन्त्र्यं चावगम्यते । अन्तः प्रविष्टमित्यन्तर्यामित्वम् । निरुपपदं कर्तारमिति सर्वकर्तृत्वं च प्रतीयते ॥

## पादसंहितासम्प्रदायः

यद्यप्यद्यत्वे तैत्तिरीयाः- 'अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम्' इत्यसंहिततया पादं पठन्ति । भगवत्पादस्तु संहिततयैव पपाठ । तेन ज्ञायते तदात्वे संहिततयाऽपि पाठक्रम आसीदिति । अथच शाखान्तरीयो वा पाठः स्यात् ॥

स च– 'इन्द्रो राजा–', 'सप्त युञ्जन्ति–' इत्यादिभिरन्यः प्रतीयते ।।

**स च 'इन्द्रो राजा** जगतो य ईशे सप्तहोता सप्तधा विक्लृप्तः', **'सप्त युञ्जन्ति–'**, 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम्' इत्यादिष्वन्योऽन्यः **प्रतीयते** । सप्त बुद्धीन्द्रियाणि विषयेषु जीवेन जुहोतीति 'सप्तहोता' । विषयानिन्द्रियेषु जीवे वा । सप्त गणा रथं प्रत्यात्मानं **युञ्जन्ति**, रथे युक्ता इत्यर्थः । एकोऽश्वो वेदः सप्तच्छन्दोनामा । छन्दोभिमानिनां पृथक्त्वेऽपि वेदाभिमानी सप्तस्वेकोऽस्ति ।

## अधिकरणसङ्गतिः

तेन स्फुटाऽऽनन्दमयाधिकरणेन सङ्गतिः । जन्माधिकरणेन च । अनेनैव विषयवाक्यं संशयबीजं चागादि । ननु कः संशयः? तानीमानि नारायणस्यैव लक्षणानीत्युक्तम् । सत्यमुक्तम् । अत्र पुनरन्यस्य प्रतीयन्ते । तथाहि तदुपरितनो मन्त्रः– **'इन्द्रो राजा जगतो य ईशे सप्त होता सप्तधा विक्लृप्तः'** इति सप्तहोतृहृदयमन्त्रेषु प्रथमः । मन्त्रार्थं स्फुटमाह– **सप्त बुद्धीन्द्रियाणीति** । इन्द्रो देवानां राजा जगतो य ईष्टे स मनोबुद्धिभ्यां सह **सप्त** ज्ञानेन्द्रियाणि **विषयेषु जुहोति जीवेन** द्वारभूतेनेति **सप्त-होता** । सप्त **विषयान्** जीवे जुहोतीन्द्रियद्वारेति वा । तदर्थं सप्तस्विन्द्रियेषु स्वेच्छया सप्तधा स्थित इति । अत्रायमन्तस्थ इन्द्र इति प्रतीयते ।।

मन्त्रान्तरे च सूर्यः प्रतीयते– **'सप्त युञ्जन्ति** रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभि चक्रमजरमनर्वं येनेमा विश्वा भुवनानि तस्थुः' इति चैकादशो मन्त्रः ।।

## सप्तच्छन्दोगणदेवताः

अस्फुटार्थं मन्त्रं शिष्यानुजिघृक्षया सिद्धान्तपरतया व्याचष्टे– सप्त गणा इति । सप्त अश्वत्वेन छन्दस्त्वेन च विभक्ता देवतागणा इत्यर्थः । तदुक्तमृग्भाष्ये–

'गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।
'ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्, स्वाहेति चोच्यते ।।

'गायत्री जगती, चैव वारुणी रोहिणी, तथा ।
'अनुष्टुब्, बृहती चैव तारा, पङ्क्तिः शची तथा ॥

'उष्णिक् सौरी, जगत्यश्च सर्वदेवस्त्रियो मताः ।
'विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते' इति ॥

अयमर्थः– गायत्री ताः सर्वाः लक्ष्मीसरस्वतीभारत्यः तथा गरुडः, स्वाहा च गायत्रीत्युच्यते । उष्णिक् सौरी । अनुष्टुप् ब्रह्माणी, तथा रोहिणी च । बृहती चैव ताः सर्वाः लक्ष्मीसरस्वतीभारत्यः, तथा गरुडः, तारा च बृहत्येव । पङ्क्तिः शची, तथा मित्रावरुणयोर्भार्ये च पङ्क्तिर्विराडिति च कीर्तिते । त्रिष्टुप् इन्द्राणी । जगत्यश्च सर्वदेवस्त्रियो मताः, वारुणी च जगत्येवेति ॥

तथा चैते सप्त गणाः–

१. गायत्र्याः– श्रीः, सरस्वती, भारती, गरुडः, अग्निभार्या स्वाहा चेति पञ्च ।

२. उष्णिहः– सूर्यभार्या सञ्ज्ञा ।

३. अनुष्टुभः– सरस्वती, चन्द्रभार्या रोहिणी चेति द्वे ।

४. बृहत्याः– श्रीः, सरस्वती, भारती, गरुडः, बृहस्पतिभार्या तारा चेति पञ्च ।

५. पङ्क्तेः– शची, मित्रावरुणयोर्भार्ये रेवतीचर्षण्यौ चेति तिस्रः ।

६. त्रिष्टुभः– शची ।

७. जगत्याः– वारुणी, दशममण्डलीयमन्त्रोक्ताः सर्वदेवस्त्रियश्च (स्वाहा, सञ्ज्ञा, रोहिणी, तारा, मित्रावरुणयोर्भार्ये शची चेति सप्त) ॥

तथाहि दशममण्डले मन्त्रौ–

अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सम्बभूव ।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ॥

विराण् मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।
विश्वान् देवान् जगत्याविवेश तेन चाक्ऌप्र ऋषयो मनुष्याः ॥
(ऋ.सं.१०.१३०.४-५.) इति ॥

## पिङ्गलनागादीनां मतमस्वरसम्

नन्वत्राग्न्यादयश्छन्दोमानिनः प्रतीयन्ते, नतु तद्भार्याः स्वाहादयः । तथाहि परे– 'यतोऽग्न्यादिदेवताभिः सह गायत्र्यादीनि सप्त च्छन्दांसि जातानि अतो हेतोस्तेषां छन्दसामग्न्यादयो देवताः' इति । पिङ्गलनागोऽप्याह च्छन्दोविचितौ (३.६३)– 'अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वे देवा देवताः' इति । तत् किमिदं सर्वप्राचीनाचार्यवचोविप्रतीपं नवीनमुच्यते स्वाहादयो देवता इति? शृणु । पुराणमित्येव न साधु सर्वम् । प्रतना अपि बभ्रमुः । अग्नेर्गायत्री सयुग्वा सहयोगिनी बभूवेति श्रुतिराह । अभिमानिव्यपदेशन्यायेन गायत्रीमानिनी अग्नेः सयुग्वा सहयोगिनी स्वाहेति स्फुटम् । एवं सविता उष्णिक्छन्दसा सह सम्बभूव । उष्णिङ्मानिन्या सञ्ज्ञया सविता सङ्गतो बभूवेति फलितम् । एवं महस्वान् कान्तियुक्तः उक्थैः शस्त्रमन्त्रैः संयुक्तः सोमः अनुष्टुप्छन्दोमानिन्या रोहिण्या सह प्रजापतेः सम्बभूव । बृहस्पतेर्भार्या बृहतीमानिनी तारा बृहतीमयीं वाचमावत् अरक्षत् । एवं मित्रा-वरुणयोर्भार्ये विराण्मानिन्यौ रेवतीचर्षण्यौ तावेवाभिश्रितौ । इन्द्रस्यार्धभागः शची त्रिष्टुप्छन्दोमानिनी सती इह अस्मिन् यज्ञे अह्नः सवनत्रयस्य शस्त्रशंसने भागो बभूव । पूर्वोक्तान् सर्वानग्न्यादीनिन्द्रान्तान् देवान् जगतीमानिन्यः पतित्वेनाऽविविशुरिति । तेन यज्ञेन ऋषयो मनुष्याश्च क्ऌप्ता आसन्निति ॥

## श्रुतेरपूर्वमर्थान्तरम्

अथच अग्निनारायणस्य सयुग्वा श्रीः गायत्रीमानिन्यभूत् । वाहनत्वेन सयुग्वा गरुडश्च । एवं प्राणाग्नेः सयुग्वा भारती, भविष्यन्ती सरस्वती च । तेन सोमः पवमानः अनुष्टुभा सरस्वत्या सम्बभूव । बृहतो वेदस्य पतेर्नारायणस्य दयिता नारीषु बृहती श्रीश्च बृहतीमानिनी । बृहन्तं नारायणं तनोति वेदमानित्वेन विस्तारयतीति गरुडश्च बृहतीमानी । एवं बृहस्पतेर्ब्रह्मणो वायोश्च पत्न्यौ सरस्वती भारती च ॥

---

मासचतुष्कैस्त्रिभिः 'त्रिनाभि'। 'अनर्वम्, अर्वभ्यो दूरस्थचक्रम्, मानसोत्तरगिरिशिखर-वलयपरिवर्त्ति, अर्वन्तो मेरुमानसोत्तरमद्ध्याकाशगाः ॥

---

## स्त्रीदेवत्यानि च्छन्दांसि

ननु कथं निर्णीयते? गायत्र्या अग्निरभिमानीत्यादि च शक्यं व्याख्यातुम्। न स्वरसमेतत्। तथात्वे 'अग्निर्गायत्री' इत्यवक्ष्यत्। 'नाग्नेः सयुग्वा गायत्री' इति। अपिच च्छन्दांसि नियत्या स्त्रीलिङ्ग-पदैरेवोच्यन्ते– गायत्री उष्णिगनुष्टुबित्यादि। तेन ज्ञायते स्त्रीदेवत्यानि छन्दांसीति। अन्यथा छन्दो-विशेषणतया नपुंसकत्वं स्यात्। अथापि पत्नीभिः सह देवानामप्यभिमानित्वमनुमन्यते। देवतासु दम्पती सहैवाधिक्रियेते। पतिपत्नीभावस्य नियतत्वात्। अथापि च्छन्दस्सु देवीनामभिमानो मुख्यः। देवानां सहयोगमात्रम् ॥

## तेन सम्पन्नो मन्त्रार्थः

एते **सप्त** गणा एकचक्रं सूर्यमण्डलाख्यं नारायणस्य **रथं युञ्जन्ति** युक्ता वहन्तीत्यर्थः। एकं कालात्मकं चक्रमस्य। कालमानिना चतुर्मुखेनाभिमन्यमानम्। अथच सप्तछन्दोनामा एक एवायमश्वः वेदमानी गरुडो नाम। 'गरुडः सर्ववेदानाम्' इति ह्युक्तम्। 'छन्दोमयेन गरुडेन समुह्यमानः' इति च भागवते। तमेतं नारायणं सप्ताश्वमाचक्षते– 'सप्तैधाः सप्तवाहनः' इति। एवं वेदमानी गरुडः सप्तसु एकस्या गायत्र्या बृहत्याश्चाभिमानी च। अथवा सप्तस्वपि एको वेदमानी अनुस्यूतोऽस्ति ॥

**मासचतुष्कैस्त्रिभिरृतुद्वयात्मकैस्त्रिनाभि**। नाभिरिति चक्रमध्यम्। यत्र रथस्य निधानम्। ऋतुमानिभिरभिमन्यमानम्। अजरम्– नहि कालः क्वापि जीर्यति। अनर्वमित्यस्यापूर्वमर्थविशेषमाह– **अर्वभ्यो**ऽश्वेभ्यो **दूरस्थचक्रमिति**। मानससरस उत्तरस्मिन् दिग्भागे यो गिरिस्त**च्छिखरवलय-परिवर्ति** चक्रम्। अश्वाः पुनः मानसोत्तरगिरिशिखरेभ्यः परस्तात्, मेरुशिखरेभ्योऽर्वाक्, उभयगिरिमध्ये चरन्तीति ॥

## मन्त्रस्याध्यात्मपरता

अथच मानसोत्तरगिरिशिखरं सहस्रारचक्रम्। द्वादशान्ते व्यवस्थितम्। मेरुरिति ब्रह्मगिरिरिति शिर उच्यते। तन्मध्यगतानीन्द्रियाण्यश्वाः। तथाह्यग्निरिति वाग् गायत्री। चक्षुरिति सूर्य उष्णिक्।

श्रोत्रमिति चन्द्रमा अनुष्टुब् । बुद्धिरिति बृहस्पतिर्बृहती । ध्यानसङ्कल्पाविति मित्रावरुणौ पङ्क्तिः । मन इतीन्द्रस्त्रिष्टुप् । एतेषामेव समष्टिर्जगती । येन कालचक्रेण, वेदाश्वेन वा, मुख्यतो रथगतेन भगवता विश्वा भुवनानि सुखं तस्थुरिति ॥

## पूर्वपक्षे मन्त्रार्थः

नन्वेवमर्थाङ्गीकारे न पूर्वपक्षः पादमपि प्रसारयेत् । सत्यम् । अत एव पण्डिताचार्यः स्वसमयसिद्धमर्थं सूचयन्नपि सम्मुग्धमिवाऽह । तथाच पूर्वपक्षिणो मते एवं मन्त्रार्थः– छन्दोमानिभिरश्वैरुह्यमाने रथे गतः सूर्योऽत्र स्तुत इति । सौरा एवं प्रत्यवतिष्ठन्ते । अन्यथा च व्याचष्टे सायणः–'सप्तसङ्ख्याका मुख्यरश्मिविशेषा अश्वसदृशा एकचक्रमेकप्रकारपरिवर्ति कालचक्रं युञ्जन्ति प्रवर्तयन्ति । तदेव स्पष्टीक्रियते– 'सप्तनामा सप्तसङ्ख्याकानि नामानि नमनयोग्यानि वश्यानि रश्मिरूपाणि यस्यासौ सप्तनामा अश्वो व्यापकः सूर्यः तत् कालचक्रं वहति । कीदृशं चक्रम्? त्रिनाभि । तिस्रः नाभयः सत्वरजस्तमोरूपा भूतभविष्यद्वर्तमानरूपा वा यस्य तत् त्रिनाभि । अजरं विनाशरहितम् । नहि कालः संसारमध्ये कदाचिद् विनश्यति । अनर्वम्, अर्वा विरोधी विनाशकः, तद्रहितम् । नहि कालचक्रस्य कश्चिद् विनाशकोऽस्ति । येन कालचक्रेण विश्वा भुवनानि दृश्यमानानि सर्वाणि भूतजातानि तस्थुस्तिष्ठन्ति, सुखेन वर्तन्ते । तेन कालचक्रस्य निर्वाहकोऽयं सप्तहोतृदेव आदित्यः' इति । अद्भुतं व्याख्यानम् । प्रायोऽशब्दार्थमेव शब्दार्थमाह । अथापि पुनरुक्तमाह । यथाकथाच भवतु । सर्वथाऽप्यादित्यपरोऽयं मन्त्रः, न विष्णुपर इति स्थितम् ॥

एवम्– **'इन्द्रो राजा–'** इत्यनेनान्य इन्द्रः प्रतीयते । **'सप्त युञ्जन्ति–'** इत्यनेनान्य आदित्यः प्रतीयत इति भाष्यार्थः । तदेतदाह–**अन्योऽन्यः प्रतीयत** इति ॥

'इत्यादिभिः' इत्यादिपदगृहीतां श्रुतिं स्वयमेव न्यायविवरणे सञ्जग्राह भाष्यकारः । तामेवोज्जहार टीकाकारः–

**'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् ।**

'चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्' इति प्रथमो दशहोतृहृदयमन्त्रः ॥

उत्तरार्धे न विशिष्य देवतान्तरश्रुतिरिति पूर्वार्धमात्रं जग्राह टीकाकारः । **इत्यादिष्विति** बहुवचनेन 'त्वष्टारं रूपाणि विकुर्वन्तम्', 'अपां नेतारम्', 'प्रजापतिः प्रजया संविदानः', 'अग्निस्त्वां प्रमुमोक्तु', 'वायुस्त्वां प्रमुमोक्तु' इत्यादिकं सर्वमन्यदेवताश्रुतिवचनमत्र सङ्गृह्यते ॥

भाष्ये– '**इत्यादिभिः**' इत्युक्तम् । टीकाकृत् '**इत्यादिषु**' इत्याह । तेन तृतीया सप्तम्यर्थे चेति सूचयामास । अत्र प्रकरणे पठितत्वं हि विवक्षितोऽर्थः । स तु सप्तम्यैव स्फुटमवगम्यते । तृतीयया मन्त्रप्रकारोऽवधार्यते । सप्तम्या स्थानमिति । तेन कथं पठितम्, कुत्र पठितमित्युभयमपि दत्तोत्तरम् ॥

अयं पूर्वपक्षिविवक्षितो मन्त्रार्थः– ब्रह्मा चतुर्मुखः, इन्द्रं तपसाऽन्वविन्दत्, अन्विष्य लब्धवान् । कीदृशमिन्द्रम्? जगतः प्रतिष्ठाम् । अग्निं च । दिव आत्मानं सवितारम् । तथा बृहस्पतिम्, योऽयं देवगुरुः । प्रदिशोऽनुक्लृप्तम्, सर्वेषु प्रदेशेष्ववस्थितम् । चतुर्होतारम्– 'पृथिवी होता, द्यौरध्वर्युः, रुद्रोऽग्नीत्, बृहस्पतिरुपवक्ता' इति मन्त्रस्वरूपम्, वाचो वीर्यम्, वेदरूपाया वाचः सारभूतमिति । अत्रैकस्यामेवर्चि पूर्वप्रस्तुताभ्यामिन्द्रादित्याभ्यां सह पुनर्द्वावग्निबृहस्पती प्रतीयेते । तेन सर्वेऽप्येतेऽन्तःप्रविष्टा देवैरविज्ञेया इत्येकः पूर्वपक्षः ॥

इन्द्राद्यभेदेनैक एव परमात्मा प्रतिपाद्यत इत्यपरः । यदाह सायणः– 'इन्द्रं परमैश्वर्ययुक्तं परमात्मानम्' इति, 'अग्निम्, सर्वस्य जगत आधारभूतो योऽयं चतुर्होत्रियचितिरूपोऽग्निस्तत्स्वरूपम्' इति, 'दिव आत्मानं सवितारम्, द्युलोकस्य प्रकाशकत्वेनाऽत्मवदवस्थितो यः सविता तद्रूपम्' इति, 'बृहस्पतिं तद्रूपेणावस्थितम्' इति च । तदिदमाह– **अन्योऽन्यः प्रतीयत** इति । वस्तुतः **अन्यः** भगवतोऽन्यः, वास्तवादन्यः अन्यादृशः । **अन्यः** अनन्यः प्रतीयत इति ॥

अथ च विशिष्य सौराः प्रत्यवतिष्ठन्ते– 'सप्त युञ्जन्ति रथमेकचक्रम्' इति सूर्यस्यैवासाधारणं लिङ्गम् । तेन स एवात्र प्रतिपाद्यते । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति वचनात् स एव सर्वान्तर्यामी सर्वदेवानामात्मा परदेवता । तस्मात् स एवात्र प्रतिपाद्यते । इन्द्राद्यभेदेन वा स एव स्तूयत इति ॥

तस्मात् स एवाऽनन्दमय इति न मन्तव्यम्–

**॥ अन्तस्तद्धर्म्मोपदेशात् ॥ १.१.२०. ॥**

अन्तः श्रूयमाणो विष्णुरेव–

'समुद्रे मनसा चरन्तम्–', 'समुद्रे अन्तः कवयः–', 'यस्याण्डकोशं शुष्ममाहुः–' इत्यादितद्धर्म्मोपदेशात् ॥

---

**॥ अन्तस्तद्धर्म्मोपदेशात् ॥** '**अन्तः समुद्रे मनसा चरन्तं** ब्रह्माऽन्वविन्दद् दशहोतारमर्ण्णे', '**समुद्रे अन्तः कवयो** विचक्षते मरीचीनां पदमिच्छन्ति वेधसः' । कवयः सन्तो वेधसः, मरीचीनामाश्रयभूतं विचक्षणायेच्छन्ति । '**मरीचिर्म्मितरुक्त्वतः**' इति वचनान्मरीचिर्ज्जीवः । '**यस्याऽण्डकोशं शुष्ममाहुः** प्राणमुल्बं तेन क्लृप्तोऽमृतेनाहमस्मि' इति विरिश्चवाक्यम् । शुष्मं वीर्य्यम्, उल्बं जरायोरन्तःप्रावरणम्, येन सहैव जायते ॥

---

**तस्मादिति** भाष्येण पूर्वपक्षफलितमनूद्य सूत्रमवतारयति । यस्माद् विष्णोरन्य एवेन्द्रादिरन्तस्थः प्रतीयतेऽस्मिन्ननुवाके **तस्मात् स एव** विष्णोरन्य इन्द्रादित्यादिदेवतागण एव **आनन्दमय** इति युक्तम्, न विष्णुरिति **न मन्तव्यम्** । कुतः? **अन्तस्तद्धर्मोपदेशात्** ॥

अन्तः श्रूयमाणं विष्ण्वाख्यं ब्रह्मैव । अस्मिन्ननुवाके विष्णुधर्माणामेवोपदेशात् । उत्कृष्टतया देशनमुपदेशः । उपास्यतया देशनमुपदेशः । पदकृत्यं तूपरिष्टात् स्फुटं भविष्यति ॥

के ते उपदेशाः? आह– **समुद्रे मनसा चरन्तमित्यादि** । तथाहि दशहोतृहृदयमन्त्रोऽनुवाकादौ पठ्यते– '**अन्तः समुद्रे मनसा चरन्तं ब्रह्माऽन्वविन्दद् दशहोतारमर्णे**' (३.११.१.)इति । '**समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः**' (३.११.२६.)इति चोपसंहारे सप्तहोतृहृदयमन्त्रेषु सप्तदशः । मध्ये च– '**यस्याण्डकोशं शुष्ममाहुः प्राणमुल्बं तेन क्लृप्तोऽमृतेनाहमस्मि**' (३.११.७.) इति पञ्चहोतृहृदयमन्त्रेषु तृतीयः । उपक्रमोपसंहारयोस्तात्पर्यनिर्णयलिङ्गत्वात् प्रथमं निर्देशः । तदुपोद्बलकतया पश्चान्मध्यस्य ॥

स हि क्षीरसमुद्रशायी । तस्य च वीर्य्यमण्डकोशः—

'सोऽभिद्ध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
'अप एव ससर्ज्जाऽदौ तासु वीर्य्यमवासृजत् ॥

---

## मन्त्रगता विष्णुधर्माः

अयं मन्त्रार्थः— अन्तरिति पृथग् विशेषणम् । नतु समुद्रेऽन्तरित्यन्वेतव्यम् । वैयर्थ्यात् । एतत्सूचनायैव **'समुद्रे मनसा चरन्तम्'** इतीयदेव प्रतीकं जग्राह । पूर्वमन्त्रसंवादात् **अन्तरित्यन्तः** प्रविष्टम् । हृदयगुहायां निहितमित्यर्थः । तमेव प्रळय**समुद्रे, अर्णे** जलमध्ये स्वेच्छया विहरन्तम् । रुद्रोऽपि लवणार्णवे तपश्चचार । अतस्तद्व्युदासाय **मनसा** स्वेच्छयेत्याह । नहि कमप्यन्यं तपसाऽऽराधयितुम् । दशेन्द्रियेषु दशभिर्वा रूपैरिन्द्रियाधिष्ठितैर्विषय**होतारम्** । अन्तरित्यस्यैव विवरणमिदम् । तादृशं नारायणं **ब्रह्मा** नाभिपद्मगतः **अन्वविन्दत्** अनुचिन्तया लब्धवान्, अधिगतवानित्येतत् । कारणजलधिगतत्वं ब्रह्मोपास्यत्वं च द्वे विष्णुलिङ्गे अत्र ॥

**कवयः** सर्वज्ञाः **वेधसः** मुक्तब्रह्माणः । बहुवचनादेतदवगम्यते । अतीतादीनां ग्रहणे 'इच्छन्ति' इति वर्तमानव्यपदेशास्वारस्यात् । अन्ततः मुक्तानामेव ग्रहणाच्च । **समुद्रे अन्तः** क्षीरसमुद्रमध्ये श्वेतद्वीपे शयानम्, स्वापेक्षया मितरुचीनामत एव मरीचिपदगदितानां मुक्तजीवानां **पदमा**श्रयम् । 'मुक्तानां परमा गतिः' इति हि तमाचक्षते । तेन मुक्तभेदव्यपदेशश्चायम् । तादृशं नारायणं **विचक्षते विचक्षणाय** विविधतया स्तोतु**मिच्छन्ति** । तदेतदुक्तं भाष्ये— **स हि क्षीरसमुद्रशायी**ति । हीत्यनेन नात्र प्रमाणान्तरापेक्षेत्याह । **'मरीचिर्मितरुक्त्वतः'**, मितरुचित्वत इत्यर्थः । मितरुचय एव वर्णव्यत्ययेन मरीचय उच्यन्ते ॥

तृतीयमन्त्रे **'अहमस्मि'** इति क आह? वेधाः कविरेवेत्याह— **'तेन क्लृप्तोऽमृतेनाहमस्मि'** इति **विरिञ्चवाक्यम्** । 'ब्रह्माऽन्वविन्दत्' इति पूर्वप्रस्तावात् । 'विचक्षते मरीचीनां पदमिच्छन्ति वेधसः' इत्युपसंहाराच्च । एतत्सूचनाय च **'समुद्रे अन्तः—'** इति पाश्चात्यं मन्त्रं पूर्वमुज्जहार ॥

**'प्राणमुल्बम्'** इत्यन्तः प्रथमः पादस्त्रयोदशाक्षरः । **'क्लृप्तो अमृतेन'** इति विश्लेषेणैकादशाक्षरो द्वितीयस्त्रैष्टुभः । प्रथमे त्रिष्टुब् वा स्वराट्, जगती वा भुरिक् ॥

**इममण्डकोशं यस्य शुष्मं वीर्यम्**, वीर्यात्मकमाहुः । तस्य च जायमानस्याण्डकोशस्य **उल्बम्** । गर्भवेष्टनस्थानीयं प्राणतत्वमाहुः । **तेनामृतेन** विष्णुनाऽहं **क्लृप्तः** सृष्टोऽस्मीति । 'अमृतः शाश्वतः स्थाणुः' इति हि विष्णुनामसु । अत्र ब्रह्माण्डस्रष्टृत्वं ब्रह्मस्रष्टृत्वं च विष्णुलिङ्गे ॥

उद्धृतमन्त्रभागगतं विष्णुलिङ्गं दर्शयति भाष्यकारः– **तस्य च वीर्यमण्डकोश** इति । **तस्य** च विष्णोरेव हि **वीर्यमण्डकोशः** । क्षीरसमुद्रशायित्वलिङ्गसमुच्चयार्थश्चायं चकारः । स्वयं मुखतोऽनुक्तस्य, 'अन्तः समुद्रे-' इति श्रुत्युदितस्य प्रळयार्णवचरत्वस्य च ॥

भाष्ये **इत्यादी**त्यादिपदेन ब्रह्मोपास्यत्वं ब्रह्मजनकत्वं च । 'सर्वे वेदा यत्रैकं भवन्ति' इति, 'वाचो वीर्यम्', इति च दशहोतृहृदयमन्त्रगतं सर्ववेदवेद्यत्वं नाम लिङ्गम्, सप्तहोतृहृदयमन्त्रगता– 'स हरि-र्वसुवित्तमः' इति श्रुत्यादिश्च । तत्र क्षीरसमुद्रशायित्वं निर्विवादमिति न प्रमाणान्तरमपेक्षते । तदेत-द्धिकारेणैव सूचयित्वा प्रळयार्णवशायित्वे ब्रह्मजनकत्वे च स्मृतिसंवादं तावदाह– **सोऽभिध्याय** ॥

**स्वात्** स्वरूपभूतात् **शरीरात्** । स्वानन्दतुष्टाद् वपुष इत्येतत् । शरं विशरणशीलं जगदीरयतीति शरीरम् । तस्मादुदरस्थजगतः । **विविधाः** ब्रह्मादिकाः स्थावरतिर्यङ्मनुजमध्याः कलिपराः । **प्रजाः** याः प्रजनिष्यन्ते । **सिसृक्षुः** बहिर्निश्चिकासयिषुः । नित्यज्ञानरूपमालोचनं ध्यानम् । तस्याभिव्यक्तिरभि-ध्यानम् । ईक्षणं चाभिध्यानम् । 'दृष्ट्वा स चेतनगणान् जठरे शयानान्' इति, 'ब्रह्मादिकान् कलिपरान् मनुजांस्तथैक्षत्' इति च भगवत्पादवचनम् । **स** इति विष्णुः । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' इति स्मरणात् । **किमित्यभिध्याय** विचिन्त्य? तदप्युक्तम्–

'स्रक्ष्ये हि चेतनगणान् सुखदुःखमध्यसम्प्राप्तये तनुभृतां विहृतिं ममेच्छन् ।
'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्याः ।
'इत्थं विचिन्त्य–' इति ॥ (म.भा.ता.नि.१.५-६.)

**अप एव ससर्जाऽदौ तासु** विष्णुनामा श्रीद्वारा **वीर्यमवासृजत्** । एतदप्युक्तम्–

'स विष्णुनामा श्रियमाप सृष्टये ।
'सुषाव सैवाण्डमधोक्षजस्य शुष्मं हिरण्यात्मकमम्बुमध्ये' (३.२२.) इति ॥

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
'यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
'अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति व्यासस्मृतेः ॥
'अहं तत् तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषात् प्रकृतिर्ज्जगदण्डम्–' इति च चतुर्वेदशिखायाम् ॥ * ॥

---

'**अहं तत् तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः । पुरुषात् प्रकृतिर्ज्जगदण्डं** त्रिपुरुषं मायाबीजं जायते' इति । रश्मीनिन्धयतीति **रश्मीत्**, इन्ध प्रेरण इति धातोः । रतिः शं च मितमस्येति रश्मिर्ज्जीवः । **अग्रतः पुरुषाज्जातं** प्रकृतिर्ज्जगच्च । जगदिति जीवसमुदाय

---

'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति च गीतासु । **हैमं** हेममयमिव भासमानम् । तदेव **सहस्रांशुसमप्रभं** सत् भगवन्नाभेः लोकात्मकं पद्मं बभूव । **यस्मिन्** पुनर्**ब्रह्मा स्वयं जज्ञे** । एतेन स्वयम्भुशब्दं निर्वक्ति । सुखमेवायत इति **स्वयम्** । नतु दुःखानुभवाय भवति तज्जननमिति । **स्वयं** स्वतन्त्राद् भगवतो भवतीति वा । यः **स्वयं ब्रह्मा** भविष्यति सोऽपि जज्ञे वायुः । लोकपितरो मरीच्यादयः प्रजापतयः । तेषामप्ययं पिता । पञ्चभूतात्मकस्य प्रपञ्चस्य तामसाहङ्कारमयेन शिवेन सृष्टत्वात् रजसेन्द्रियाणां सत्त्वेन च देवानाम्, सर्वलोकपिता शिवस्तस्याप्ययं पिता । एतेन– 'तेन क्लृप्तोऽमृतेनाहमस्मि' इति श्रुतेरर्थान्तरं च ध्वनितम्– तेनाहमुत्तरोत्तरलोकसृष्ट्यर्थं क्लृप्तो नियमित इति ॥

## नारायणपदनिर्वचनम्

कारणोदकशायित्वं नारायणशब्दादेव प्रमितमित्याह– **आपो नारा इति प्रोक्ताः** । नराद् विष्णोरादौ जाता नारा आपः । सृष्टेः **पूर्वं** प्रळयकाले **तस्य ता अयन**मासुरिति नर एव **नारायणः स्मृतः**– 'जह्नुर्नारायणो नरः' इत्यादिषु । एतेनैतदपि सूचितम्– नरेण सूतत्वान्नारं नाभिपद्मं तस्यायमयनः, नरेण प्रथमं प्रसूतत्वान्नारो ब्रह्मा, तस्यायमयन इति च नारायण इति । निर्वचनसाम्यात् ॥

उच्यते । ततः प्राप्तविशेषमित्यर्थः । पश्चात् **अण्डं** त्रिपुरुषयुक्तं प्रकृत्युपादानं **जायते** । ब्रह्मवायुरुद्रास्त्रयः पुरुषाः ॥

## 'अहं तत् तेजः' इति श्रुत्यर्थः

स्मृत्या समुपबृंह्याथ श्रुतिसंवादमाह– **अहमिति** । एतेनेदमाह– अहमितिवत् सर्वेऽपि जीववाचिनः शब्दा अन्ततो भगवद्वाचिन इति । कथमहम्? हेयं दोषजातं नास्येति **अहम्** अहेयम् । न जहाति कदाऽपि गुणजातमिति चाहम् । हेयोपादेयरहितमित्येतत् । गुणैः सर्वैरुदीर्णं दोषवर्जितमित्युक्तं भवति । किं तदहम्? **तत्** । 'तत् सवितुर्वरेण्यम्–' इति गायत्रीप्रतिपाद्यं परं ब्रह्मेत्यर्थः । 'ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात् । कालतो देशतो गुणतश्च ततत्वात् **तत्** । सूर्यादिभासकत्वात् **तेजः** । 'यदादित्यगतं तेजः–' इत्यादेः । रं शं च मितमेषामिति मितरमणा मितानन्दा रश्मयो जीवाः । तानिन्धयति प्रेरयतीति **रश्मीत्** । 'इन्ध प्रेरणे' इति प्रतनो धातुपाठः । सृष्ट्यादिना इन्धयति प्रकाशयति वा । 'ञि इन्धी दीप्तौ' इति हि पाणिनीयाः । अग्नीत् समिदितिवत् क्विबन्तं पदम् । एतेन 'मरीचीनां पदम्' इति श्रुतिपदमपि गदितार्थम् । अतश्च **नारायणम्** । नराणां समुदायो नारम्, तस्यायमयन इति । अत एव च पुरि शेत इति पुरुषाख्यं पुरुषसूक्तप्रतिपाद्यं परं ब्रह्म । **अग्रतः** पुरुषरूपेण **जातमभिव्यक्तमिति** च । 'जगृहे पौरुषं रूपमादौ लोकसिसृक्षया' इति भगवद्वचनात् । ततश्च **अग्रतः** प्रथमम्, **अग्रतः** सर्वोत्कृष्टात् पुरुषात् **प्रकृतिः जगत्** ब्रह्मादिजीवजातं चेति द्वयं **जातम्** । कथं प्रकृतेर्जीवानां च जननम्? आह– **ततः प्राप्तविशेषमित्यर्थ** इति । पराधीनविशेषावाप्तिरेव हि सर्वानुगतो जननशब्दार्थः । ततः पश्चात् **मायाबीजं प्रकृत्युपादानं** कारणत्वेन त्रिपुरुषयुक्तं ब्रह्माण्डं **जायते** । के ते त्रिपुरुषाः? आह– **ब्रह्मवायुरुद्राः** । नारायणस्य च पुरुषोत्तमस्य तन्नियामकतया पृथगुक्तेः । एतेन **'तेन क्लृप्तः–'** इति विवृतम् ॥

अपूर्वा चेयं छन्दोगतिः । नारायणमित्यन्त एकादशाक्षरः प्रथमः पादः । ततोऽष्टाक्षरो द्वितीयः । रश्मीदित्यन्तः सप्ताक्षरो वा प्रथमः पादः । द्वादशाक्षरो द्वितीयः । उत्तरार्धे तु सन्दिह्यते । कथं पादविभागः? किमष्टाक्षरस्तृतीयः पाद उत दशाक्षर इति । एतामाशङ्कामपनेतुं केवलं तृतीयपादं पपाठाऽऽचार्यः– **पुरुषात् प्रकृतिर्जगदण्डमिति** । तेन दशाक्षरस्तृतीयपाद इत्यायातम् । अवशिष्टश्चतुर्थः पाद इति स्फुटम् । तं तुरीयपादमेकादशाक्षरं टीकाकारः पठति– **त्रिपुरुषं मायाबीजं जायत** इति ।

## ॥ भेदव्यपदेशाच्चान्यः ॥ १.१.२१. ॥

'इन्द्रस्याऽत्मा निहितः पञ्च होता–', 'वायोरात्मानं कवयो निचिक्युः', 'अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्माऽन्वविन्दत्' इत्यादि भेदव्यपदेशात् ॥ ७ ॥

**॥ इति सप्तममधिकरणम् ॥ * ॥**

---

**॥ भेदव्यपदेशाच्चान्यः ॥** 'इन्द्रस्याऽत्मा निहितः पञ्चहोता अमृतं देवानामायुः प्रजानाम्', 'इन्द्रं राजानं सवितारमेतं **वायोरात्मानं कवयो निचिक्युः**' । आदानादिकर्त्तृत्वाद् विष्णुरात्मा । नाऽत्मशब्दो जीवस्वरूपवाची । 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यादेः । हृद्ययनात् 'हृदयः' । एवं **भेदव्यपदेशाच्च** जीवेभ्यो विष्णुरेवायमन्तःप्रविष्टः पुरुषः । यद्यपि विष्णुधर्म्मोपदेशादन्तस्थो विष्णुः । तथाऽपि स इन्द्रादिजीवाभिन्नोऽपि स्यात् । जीव-

---

सेयं भगवत्पादचातुरी– न केवलमुक्तिभङ्ग्या, किन्त्वनुक्तिभङ्ग्याऽपि बहूनर्थविशेषान् द्योतयति । एतेन, अर्थभेदेन पादव्यवस्थाऽपि नैकान्तत इत्युक्तं भवति । तथाचात्र द्वे त्रिष्टुभावेका विराळेका चानुष्टुबिति वा, उष्णिगेका, जगत्येका, विराळेका, त्रिष्टुबेकेति वा । संहत्य चत्वारिंशदक्षरेति पङ्क्तिश्छन्दः ॥

इति चेति चकारः स्मृतिसमुच्चये । चतुर्वेदशिखायां चोक्तमिति ॥ * ॥

ननु सत्यं विष्णुरेवात्रोच्यते । किन्तु इन्द्रादित्याद्यभेदेनोच्यत इति न कोऽपि विरोध इति द्वितीयं पक्षं निराह– **भेदव्यपदेशाच्चान्यः** ॥

**'इन्द्रस्याऽत्मा निहितः पञ्चहोता अमृतं देवानामायुः प्रजानाम्'** (३.११.५.) इति पञ्चहोतृहृदयमन्त्रे प्रथमर्क् । **'इन्द्रं राजानं सवितारमेतं वायोरात्मानं कवयो निचिक्युः'** (३.११.६.) इति द्वितीया ॥ **'अन्तरादित्ये मनसा चरन्तं देवानां हृदयं ब्रह्माऽन्वविन्दत्'** (३.११.१२)इति सप्तहोतृहृदयमन्त्रे द्वितीया ॥

परयोर्भेदस्य काल्पनिकत्वादित्याशङ्कानिरासातितात्पर्य्यप्रकटनाय **'अन्यः'** इत्युक्तम् । एतन्न्यायेन सर्वदेवनाम्नां समन्वय उक्तः स्यात् ॥ * ॥

**॥ इत्यन्तरधिकरणम् ॥ * ॥**

## होतृहृदयमन्त्रार्थः

इन्द्रस्य पुरन्दरस्य प्राणस्य वा **आत्मा** आदानादनकर्ता । तमादाय प्रवर्तयतीति । तस्मिन् गतो विषयानत्तीति । अन्तर्यामीत्येतत् । 'एष त आत्माऽन्तर्याम्यमृतः' इत्यन्तर्यामिब्राह्मणम् । अमृत इति नारायण इत्यर्थः । 'अमृतः शाश्वतः स्थाणुः' इति सहस्रनामसु । स्मरन्ति च–

'यच्चाऽप्नोति यदादत्ते यच्चात्ति विषयानिह ।
'यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते' इति ॥

आप्नोतीति देशतो व्याप्तिवचनम् । सन्ततो भाव इति कालतः । अतस्तद् विहायाऽदानादनकर्तृत्वमात्रमिह विवक्षितम् । 'श्रीब्रह्मेन्द्रादिसकलदेहेषु स्थित्वाऽऽदानादिकर्ता योऽयं कश्चित् प्रतीयते, जीवानामस्वातन्त्र्यदर्शनात्, सोऽपि स एवेति दर्शयति– अयमात्मा ब्रह्मेति' इति श्रीमाण्डूकभाष्यम् । 'आदानाददनकर्तृत्वादात्मा तेषामगोचरः' इति च हरिवंशवचनम् । **निहितः** हृदयगुहायाम् । पञ्चभिर्ज्ञानेन्द्रियैर्विषयहोता । **देवानां** न मृतं यतः तत् परं ब्रह्म । अमरत्वप्रदः, अमृतत्वप्रदश्च । **सर्वासां प्रजानामायुः** । जीवनप्रदश्चेष्टाप्रदो ज्ञानप्रदश्च ॥

## नाऽत्मशब्दः स्वरूपवचनः

ननु इन्द्रस्याऽत्मा इन्द्रस्वरूप इत्यभेदव्यपदेशोऽपि स्यात् । न स्यात् । यत औपचारिकी षष्ठी स्यात् । नहि वेदेषु मुख्यार्थं विना औपचारिकोऽर्थो युक्तः । 'इन्द्रं राजानं सवितारमेतं **वायोरात्मानम्'** इत्युत्तरमन्त्राननुगुणश्चायमर्थः । द्विविधप्रयोगानुपपत्तेरेकस्मिन्नेव प्रकरणे । 'एष त आत्माऽन्तर्यामी' इति श्रुतिविरुद्धश्चायमर्थः । न केवलम्, सूत्रविरुद्धश्च । आत्मशब्दो हि विष्णोः स्वशब्द इति भगवान्

बादरायणो मन्यते । तथाहि वक्ष्यति–'**द्युभ्वाद्यायतनं स्वशब्दात्**' (१.३.१) इति । 'तमेवैकं जानथ आत्मानम्' इत्यात्मशब्दादिति किलार्थः सर्वाभिमतः । तथाहि मायावादभाष्यम्–'स्वशब्दादात्मशब्दादित्यर्थः । आत्मशब्दो हीह भवति– 'तमेवैकं जानथ आत्मानम्' इति । आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे' इति । 'आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः।आप्नोतीति ह्यात्मा । स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति । अतः सोऽपि तस्यैव शब्दः' इति रामानुजभाष्यम् । आदिशब्देन 'गौणश्चेन्नाऽत्मशब्दात्' (१.१.६), 'आत्मा प्रकरणात्' (४.४.३) इत्यादेर्ग्रहणम् ॥

इन्द्रं परमेश्वरम्, तच्छब्दमुख्यवाच्यमित्यर्थः, सूर्यादिषु स्थित्वा विराजमानम् । अत एव सवितृशब्दमुख्यवाच्यम्, जगत्प्रसवितारम्, गायत्रीप्रतिपाद्यम्, एतं नारायणं वायोरन्तर्यामिणं निरणैषुः कवयः ॥

एवमादित्यान्तः स्थित्वा स्वेच्छया प्रेरयन्तम्, न केवलमादित्यस्य, प्रेरणार्थं सर्वेषां देवानां ह्वयमानं **ब्रह्माऽन्वविन्दत्** । आदिपदेन 'मरीचीनां पदमिच्छन्ति वेधसः' इति संसाराद् व्यपगतानां मुक्तानां भेददेशनं गृह्यते ॥

न केवलं तद्धर्मोपदेशात्, भेदव्यपदेशाच्च इन्द्रादिजीवेभ्योऽन्यो विष्णुरेवान्तःस्थ इति स्थितम् । न केवलमानन्दमयप्रकरणे, अस्मिन्ननुवाके च विवादादपगततया निर्विवादं भेददेशनाच्च अन्य एव भगवान् जीवेभ्यः । नहि क्रियासमभिहारेणाभ्यस्यमानो भेदः काल्पनिक इति वक्तुं युक्तम् । किं पुनर्मोक्षेऽप्यभ्यस्यमानः । अनिच्छता मायावादिनाऽप्येवमेव व्याख्यातम्–'अस्ति चाऽदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद–' इति श्रुत्यन्तरे भेदव्यपदेशात् । तस्मात् परमेश्वर एवेहोपदिश्यत इति सिद्धम्' इति ॥

## चतुर्मूर्तेर्नामान्तरम्

परे तु– 'य एषोऽन्तरादित्ये.........य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति छन्दोगोपनिषद्गतं विषयवाक्यं मन्यन्ते । अस्मत्पक्षे तु बहून्यन्तस्थवाक्यानि जिज्ञास्यन्ते बहूनि च नामानि समन्वीयन्त

इति महान् लाभः । तथाहि श्रूयते– 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम्' (३.११.२) इति चतुर्होतॄहृदयस्य प्रथमो मन्त्रः । चतूरूपस्य भगवतश्चत्वारि नामान्यत्र प्रस्तुतानि इन्द्रोऽग्निः सविता बृहस्पतिरिति । इन्द्र इति प्रद्युम्नः । 'प्रद्युम्नश्चेन्द्रनामकः' इति स्मरणात् । जगत्स-र्जनाख्यपरमैश्वर्ययोगाच्च । अत्तीत्यग्निः सङ्कर्षणः । स हि संहर्ता । जगतः प्रतिष्ठामिति प्रसिद्धाग्निं वारयति । 'प्रतिष्ठा सर्वलोकस्य स विष्णुः सर्वहृद्गतः' इति च गतिसारवचनम् । सुवति स्थितिं प्रेरयतीति सविताऽनिरुद्धः । षू प्रेरणे । बृहतां बृंहितानां मुक्तानां गतिर्वासुदेवो बृहस्पतिः ॥

## आदिपदोक्तमन्त्राणामर्थः

'अन्तः प्रविष्टं कर्तारमेतं त्वष्टारं रूपाणि विकुर्वन्तं विपश्चिम् ।
'अमृतस्य प्राणं यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युः' इति ॥ (३.११.३.)

सर्वान्तर्यामिणं सर्वकर्तारम् । **एतम्**, ज्ञानिभिरा सम्यग् यथावदितमवगतम् । त्वक्षणात् **त्वष्टारम्** । त्वक्ष तनूकरणे । 'त्वष्टा रूपाणि पिंशतु' इति चान्यत्र । विविधानि **रूपाणि कुर्वन्तम्** । **विपश्चिं** विपश्चितम् । अक्षरलोपेन तादृशस्यान्यस्याभावमाह । तेन भगवतो निरवधिकं ज्ञानमाह । न कस्यापि पश्चिमो भवतीत्यपश्चिमं वा **विपश्चिम्** । बह्वर्थलाभायैव चाक्षरलोपः । **अमृतस्य** वायोरपि मुक्तगणस्यापि प्रणेतारम् । इज्यत्वाद् यज्ञनामानम्, एतं विष्णुं चतुर्विधान्नस्य होतॄणां पञ्चप्राणानां विशेषतः आत्मानमन्तर्यामिणं कवयो निश्चितवन्तः । 'यज्ञो वै विष्णुः' इति च श्रुतिः ॥

**'अन्तश्चन्द्रमसि मनसा चरन्तम्', 'इन्द्रस्याऽत्मानं शतधा चरन्तम्', 'अन्तरादित्ये मनसा चरन्तम्'** इति सर्वाणि चन्द्रेन्द्रादित्यनामानि विष्णौ गतानि । अन्तर्यामित्वात् । 'सर्वान्तर्यामको विष्णुः सर्वनाम्नाऽभिधीयते' इति चोक्तम् । **हृद्ययनात् हृदय** इति । एतेन होतृहृदयमन्त्र इति मन्त्रनामापि गदितार्थम् ॥

'ब्रह्मैतद् ब्रह्मण उज्जभार ।
'अर्कं श्चोतन्तं सरिरस्य मध्ये' इति ॥ (३.११.१३.)

ब्रह्मा चतुर्मुखः ब्रह्मणः मूलरूपादुज्जहार । किम्? समुद्रसलिलस्य मध्ये अर्च्यत इत्यर्कमर्चनीयम् । अरं कमस्येति च । तथा शरीरस्य मध्ये हृद्यन्तश्चार्चनीयम् । सरणात् सरिरं शरीरम् । वर्णव्यत्ययेन वा । भक्तानामभीष्टं श्चोतन्तम् । श्चुतिर् क्षरणे । मेघसलिलमध्ये सन्निधाय वृष्टिं श्चोतन्तं वा ॥

'अच्युतां बहुलां श्रियं स हरिर्वसुवित्तमः ।
'पेरुरिन्द्रस्य स हरिः पिन्वते' इति ॥ (३.११.१५.)

संसारहरणात्, इन्द्रशत्रूणां हरणाच्च स हरिः दैत्यान् विजित्य इन्द्राय अच्युतां बहुलां श्रियम्, अन्ते च मोक्षरूपाम्, पिन्वते प्रयच्छति । कीदृशो हरिः? असुराणां सर्वं वसु अतितमां विन्दतीति वसुवित्तमः । ज्ञानाख्यं वा वसु । सर्वज्ञ इत्यर्थः । पालनात् पूरणाच्च पेरुः ॥

'हरिः पतङ्गः पटरी सुपर्णो दिविक्षयो नभसा य एति ।
'स न इन्द्रः कामवरं ददातु' इति ॥ (३.११.१८.)

हरिः पापं हरति, सूर्यगतस्तमो हरति । पतति सर्वत्रेति पतङ्गः सर्वगतः । पतेरङ्गच् । पतत्सु चरेषु गच्छति हृद्यन्तरिति पतद्गत एव पतङ्गः । पटरी ज्योतिःपटलवान् । सुपर्णगतः सुपर्णः । सुपूर्णत्वात् सुपरानन्दत्वाच्च । दिविक्षयः मोक्षनिलयः । 'त्रिपादस्यामृतं दिवि' इति श्रुतिः । आदित्यगतः सन्नन्तरिक्षक्षयश्च । क्षि निवासगत्योः । तदेव स्फुटमुच्यते नभसा य एतीति । योयो नभसैति पक्ष्यादिस्तत्र गत इति वा । स्फुटमन्यत् ॥

'श्वेतं रश्मिं बोभुज्यमानम् ।
'अपां नेतारं भुवनस्य गोपाम् ।
'इन्द्रं निचिक्युः परमे व्योमन्' इति ॥ (३.११.२२.)

श्वेतं परशुक्लान्तर्गतत्वात् शुद्धं रश्मिं जीवजातं भोजयन्तम् । लक्ष्मीं नित्यसुखं भोजयन्तम्, ब्रह्मवायू सरस्वतीभारत्यौ च मोक्षसुखं भोजयन्तमित्यर्थः । अपां देवानां प्रणेतारम्, कर्मणां च । सूर्यगतश्चापां नेता । आदित्याद्धि जायते वृष्टिः । परमे व्योमन् मुक्तिस्थाने । अन्यत् स्फुटम् ॥

'पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद् गर्भे अन्तः ।
'तां द्योतमाना९ स्वर्यं मनीषामृतस्य पदे कवयो निपान्ति' इति ॥ (३.११.२७.)

सूर्यान्तर्गतो वाजिरूपो भगवान् वाजसनेयसंहितारूपां वाचं मनसा बिभर्ति याज्ञवल्क्यायोपदेष्टुम् । प्राणिनां वाचं च बिभर्ति । 'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयति' इति वचनात् । अत एव गां वाचं धारयन् गन्धर्वनामा वाय्वन्तर्गतो भगवान् गर्भे अन्तः सञ्चरन् नादं व्यञ्जयन् अवदत् वाचयति । तां वाचं द्योतमानाम् । स्वर्यं स्वर्गसाधनभूताम् । 'एकः शब्दः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति श्रुतेः । मनीषां श्रोतुर्मनस इष्टाम् । ऋतस्य भगवतः पदे नितरां पालयन्ति । सर्वमपि वाङ्मयं भगवत्परतयाऽनुसन्दधत इत्यर्थः ॥

'ये ग्राम्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
'अग्निस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः' इति, (३.११.२८.)

'ये आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
'वायुस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः' इति च ॥ (३.११.३१.)

ये ग्रामेग्रामे वर्णिभिर्गृहिभिश्चानुष्ठीयमानाः मन्त्रब्राह्मणात्मका वेदभागा ग्राम्याः पशव उच्यन्ते । 'पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः' इति स्मरणात् । विशति सर्वत्रेति विश्वं परमात्मानं निरूपयन्तीति विश्वरूपाः । 'विश्वं विष्णुः' इति स्मरणात् । विविधच्छन्दोरूपाः । एवं बहुधा सन्तोऽपि एकमेवान्ततो रूपयन्ति गतिसामान्यादित्येकरूपाः । अग्रे सर्वोपरि स्थितोऽङ्गनेतृत्वादग्निनामा नारायणोऽग्निमुखेनाऽराधितोऽस्माकं तान् प्रमोचयतु मुख्यार्थप्रकाशनेन । कीदृशोऽग्निः? प्रजया स्वरूपभूतया प्रज्ञया सर्वं संविदानः । 'समो गमि–' (अ.सू.१.३.२९.)इत्यादिनाऽऽत्मनेपदम् । प्रजानां सर्वासां प्रज्ञानां पतिः । प्रजानां ब्रह्मादीनां पतिश्च । 'प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः' इति हि स्मरन्ति ॥

एवं वानप्रस्थैर्यतिभिश्च विशिष्योपास्यमानः आरण्यकोपनिषद्रूपो वेदभाग आरण्याः पशव उच्यन्ते । वातीति सर्वगते लोकगुरौ प्राणे गतो भगवांस्तान् नारायणपरताप्रकाशनेन प्रमोचयतु । अत्रानुवाके एभिः सर्वैर्नामभिर्मुख्यतो विष्णुरुच्यते । तदनन्तरं वायुश्च । अत एव हृदयमन्त्रा एते । हृदयनाद्धृदयं नारायणः प्राणश्च ॥

न केवलमस्मिन्ननुवाके, संहितायां रुद्रप्रपाठकः पठ्यते। नारायणोपनिषदि च दुर्गाशिवस्कन्दसूर्यादि-गायत्र्यः । एतच्छङ्कापरिहाराय चेदमधिकरणम्– **अन्तस्तद्धर्मोपदेशात्, भेदव्यपदेशाच्चान्य** इति । तत्तद्देवतावाचिभिः पदैस्तत्तदन्तस्थो विष्णुरेवोच्यते। तत्तद्धर्माणां मुख्यतया सर्वोत्कृष्टे विष्णावुपास्यतया देशनादिति । 'रुजं द्रावयते यस्माद् रुद्रस्तस्माज्जनार्दनः' इत्यादि च हि स्मरन्ति । 'रुद्रो बहुशिरा बभ्रुः' इत्यादि च । तदनन्तरं वायुश्च । 'रुजां द्रवणतो रुद्रो वायुः' इत्यादिस्मरणात् । दुर्गाशिवस्कन्दसूर्यादिभ्यो भेदव्यपदेशाच्चेति । अधिकमस्मत्कृतशतरुद्रियभाष्ये द्रष्टव्यम् ॥

एवमेतेनैव न्यायेन, अन्तस्थत्वेन हेतुना, न केवलं तैत्तिरीयशाखागतानाम्, किन्तु समस्तवेदगतानां सर्वदेवनाम्नां समन्वयः सङ्ख्यावतां साधितः स्यादित्याह– **एतन्न्यायेन सर्वदेवनाम्नामि**ति। अथाप्यति-शङ्कमानानां निरासेन बुभुत्सूनां तत्वदार्ढ्याय पुनरुत्तराधिकरणानामारम्भ इति ॥ ✻ ॥

॥ इति **सप्तममन्तरधिकरणम्** ॥ ✻ ॥

—०—

## अष्टममधिकरणम्
## (आकाशाधिकरणम्)
## (१.१.२२.)

'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इत्याकाशस्याऽनन्दत्वे हेतुरुक्तः, नतु विष्णोरिति न मन्तव्यम् । यतः–

॥ आकाशस्तल्लिङ्गात् ॥ १.१.२२. ॥

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते । किन्तु विष्णुरेव–

---

### तत्वप्रदीपः

**॥ आकाशस्तल्लिङ्गात् ॥ 'अस्य लोकस्य का गतिः'** इति शिलकप्रश्ने **'आकाश इति होवाच'** प्रवाहणः । गतिराश्रयः । **'अस्य लोकस्य का गतिरित्याकाश इति होवाच'**

---

### तत्वचन्द्रिका

**॥ आकाशस्तल्लिङ्गात् ॥** अन्तस्थत्वेनैकेनैव लिङ्गेन सर्वदेवनामत्वं स्फुटमुदितम् । अचेतनवादिनां पदानां कथं विष्णुपरतेति मन्दाशङ्कानिरासायेदमधिकरणम् । नहि अन्तस्थत्वेन जडे किञ्चित् प्रयोजनमिति । अत्रेयं प्रक्रिया । **'अस्य लोकस्य का गतिरित्याकाश इति होवाच'** इति च्छन्दोगोपनिषद्गतं वाक्यं विषयः । तत्र चायं विशयः– आकाश इति लोके प्रचुरं प्रसिद्धो भूताकाशः । वेदे च 'आत्मन आकाशः सम्भूतः' इत्यादौ । लोकप्रस्तावाचान्तरिक्षलोक एव प्रकरणप्राप्तोऽर्थः । तस्मादस्मिन् वाक्ये भूताकाशस्यैव प्रथमप्रतिपत्तिः । अथापि न निश्चेतुं शक्यते ।

इत्युदाहरणवाक्यम् । तत्र संशयः, किमयमाकाशशब्दो भूताकाशविषयः, किं वा विष्णुविषयइति । **'यदेष आकाश आनन्दो न स्यात्'** इत्याकाशशब्दस्य परविषयत्वोपलब्धिः, लोकतो भूतविषयत्वोपलब्धिश्च संशयबीजम् । तदभिप्रायेण प्रावोचत्– **को ह्येवान्यादिति** ।

---

यतः– 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इति तैत्तिरीयश्रुतावाकाशशब्दवाच्यस्य ब्रह्मण आनन्दत्वे हेतुरुक्तः । तदिदं संशयबीजम् । किं तच्छ्रुत्यनुसारेणात्राप्याकाशो ब्रह्म? उत नेति? अथ चैतदनुसारेण तत्राप्याकाशो नाम भूताकाश एव वा? उत ब्रह्म वेति? किं प्राप्तम्? भूताकाश एवेति प्राप्तम् । कुतः? लोकप्रकरणत्वादित्युक्तम् । अत्रेव तत्रापि स्यात् । तस्मात् तैत्तिरीयश्रुतावपि भूताकाशस्यैवाऽनन्दत्वे हेतुरुक्तः । नतु विष्णोरिति पूर्ववादी मन्यते । तथा न मन्तव्यमिति सूत्रकार आह– **आकाशस्तल्लिङ्गात्** इति ॥

## शालावत्यादिनामनिर्वचनम्

छन्दोगवाक्यं व्याख्याति टीकाकारः– **अस्येत्यादि** । 'अस्य लोकस्य का गतिः' इति शिलकः शालावत्यः पप्रच्छ । तस्योत्तरमुवाच– 'आकाशः' इति ह प्रवाहणो जैवलिः । यज्ञशालावान् शालावानित्युच्यते । यस्य विशाला शाला । यस्यां भगवानिज्यते । यत्रातिथिभिर्भुज्यते । मुख्यतः शालावान् भगवान् । तत ऋषिरपि । शालावत ऋषेः पुत्रः शालावत्यः । शालावतोऽपत्यमित्यणि कृते तदन्तात् स्वार्थे 'अभिजिद्-विदभृत्-शालावत्–' (अ.सू.५.३.११८) इति यञ् । शालावत्यः शालावत्यौ शालावताः । शिलोञ्छवृत्त्या जीवन् शिलकः । शिलेन कं सुखमस्येति । जीवान् लातीति जीवलो भगवान् । तत ऋषिरपि जीवलो नाम । तस्यापत्यं जैवलिः प्रवाहणः । 'अत इञ् (अ.सू.४.१.९५) इत्यकारान्ताज्जीवलशब्दादपत्यार्थ इञ्प्रत्ययः । यद्यपि इञोऽपवादसूत्रम्– 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (अ.सू.४.१.११४) इति । तेनेञमपोद्याणि कृते 'जैवलः' इत्येव साधुरूपमिति भाति । किन्तु श्रुतिरिदन्तमेव रूपं पठति । 'जैवलिः' इति । यद्यपि 'बाह्वादिभ्यश्च'(४.१.९६) इति बाह्वादिगणपठितानामदन्तानामप्यृषिनाम्नामिञमनुमन्यते पाणिनिः । किन्तु तस्मिन् गणे जीवलो न पठितः । तदर्थं वैयाकरणा बाह्वादीनामाकृतिगणत्वमभ्युपयन्ति । ये तदाकृतयः अनुक्तास्तेऽपि

गणनीया इति । तेन बाह्वादिषु जीवलोऽपि प्रवेशितः । अत इञ एव प्रतिप्रसवात् 'जैवलिः' इत्येव रूपसिद्धिरिति । प्रकृष्टे भगवति मनो वाहयतीति प्रवाहणो नाम । उदाहरणवाक्यमिति । अनेनोदाहरणेन 'आकाश आनन्दो न स्यात्' इत्यपि भूताकाशपरं स्यादिति । विषयवाक्यमित्येतत् ॥

## उपनिषत्प्रकरणार्थः

एवं प्रकरणार्थमाचक्षते– पुरा किल त्रयो होद्गीथविद्यायां कुशला मिलिता बभूवुः । के ते? शिलकः शालावत्य एकः । द्वितीयो चिकितायानस्यापत्यं चैकितायानो नाम दल्भगोत्रो दाल्भ्यः । चिकितं भगवता निर्मितमवगतं च जगत् । कित निर्माणे । कित ज्ञाने । तस्यायनो भगवानेव चिकितायनः । ऋषिरपि तन्नामा । तत्पुत्रश्चैकितायनः । अपत्यार्थेऽण् । हृत्कमलदलेषु भातीति दल्भो भगवान् । तन्नामा च ऋषिरपि । तद्गोत्रसम्भवो दाल्भ्यः । दल्भशब्दस्य गर्गादिगणपठितत्वात् 'गर्गादिभ्यो यञ्' (अ.सू.४.१.१०५.) इति गोत्रापत्यार्थे यञ् । अथ तृतीयः प्रवाहणो जैवलिश्च । तत्राऽद्यौ द्वौ ब्राह्मणौ । तृतीयः क्षत्रियः । ते कदाचिदेकत्र सङ्गता उद्गीथविषये वादकथां चक्रुः । तत्र जैवलिः प्रवाहण उवाच– 'प्रथमं ब्राह्मणौ वादं कुरुतम् । अहं शृणवानि' इति ॥

ततः शिलको दाल्भ्यं पप्रच्छ– 'का साम्नो गतिः?' इति । 'स्वरः' इति दाल्भ्य उवाच । स्वरात्मकत्वात् साम्नः । पुनः शिलक उवाच– 'स्वरस्य का गतिः?' इति । 'प्राणः' इति होवाच दाल्भ्यः । प्राणशक्तिनिष्पाद्यो हि स्वरः । 'प्राणस्य का गतिः?' इति शिलकः । 'अन्नम्' इति होवाच दाल्भ्यः । अन्नावलम्बो हि प्राणः । 'अन्नस्य का गतिः' इति शिलकः । 'आपः' इति होवाच दाल्भ्यः । अप्सम्भवं ह्यन्नम् । 'अपां का गतिः?' इति शिलकः । 'असौ लोकः' इति होवाच दाल्भ्यः । अमुष्माद्धि लोकाद् वृष्टिर्भवति । 'अमुष्य लोकस्य का गतिः?' इति शिलकः । 'न स्वर्गं लोकमतीत्य साम नयेत्' इति होवाच दाल्भ्यः, 'स्वर्गलोकप्रतिष्ठं स्वर्गस्तुतिरूपं हि साम' इति ॥

तदा शिलको दाल्भ्यमुवाच– 'अन्तवत् किल ते साम । यदि कश्चिदुद्गीथविदेतर्हि ब्रूयात्, मूर्धा ते विपतेदिति, नूनं मूर्धा ते विपतिष्यति । अहं तु सौहार्दान्न शपामि' इति । तदा दाल्भ्य उवाच– 'हन्त तर्हि अमुष्य लोकस्य का गतिरिति भवान् ब्रवीतु' इति । 'अयं लोकः' इति होवाच शिलकः । यागादिना ह्ययं लोकः स्वर्गस्याप्युपजीव्यः । 'अस्य लोकस्य का गतिः?' इति दाल्भ्यः पप्रच्छ । 'नहीमं लोकमतीत्य साम नयेत्' इति होवाच शिलकः । 'पृथिवीप्रतिष्ठं पृथिवीस्तुतिरूपं हि साम' इति ॥

तदा प्रवाहणो जैवलिरुवाच–'अन्तवत् किल ते साम । यदि कश्चिदुद्गीथविदेतर्हि ब्रूयात्, मूर्धा ते विपतेदिति, नूनं मूर्धा ते विपतिष्यति । अहं तु सौहार्दान्न शपामि' इति । अथ शिलकः पप्रच्छ– 'अस्य लोकस्य का गतिरिति भवान् ब्रवीतु' इति । 'आकाशः' इति होवाच प्रवाहणो जैवलिः । 'आकाशप्रतिष्ठो ह्ययं लोकश्चासौ लोकश्च' इति ॥

लोकत्रयविवक्षा ह्यत्र स्फुटं प्रतीयते– भूर्भुवःसुवरिति । तस्माद् भूताकाश एवात्राऽकाश इति । तस्मादेतत्सामान्यात् 'को ह्येवान्यात्' इत्यत्रापि भूतकाश एवोच्यते । नचाचेतनस्य भूताकाशस्याऽनन्दरूपत्वानुपपत्तिः । अननार्थं प्राणनार्थं चावकाशदानेन सर्वमपि जीवजातमानन्दयतीति निर्वचनोपपत्तेः । तस्मात् तैत्तिरीयोदितश्छन्दोगश्रुत्युदितश्चाऽकाशो **न विष्णुरिति न मन्तव्यम्** ॥

## गणपतिरेवाऽकाशः

अथवाऽभिमानिनयन्यायेन भूताकाशमानी गणपतिरत्रोच्यते । तस्याऽनन्दरूपत्वं चाविरुद्धम् । न सर्वथा विष्णुः । तस्याप्रस्तुतत्वादिति न मन्तव्यम् ॥

प्रसिद्धश्चाऽकाशमानिन्याकाशशब्दः । शब्दानां चेतनपर्यन्ततया केवलजडपरत्वानङ्गीकारात् । नह्यग्निरिति केवलं जडाग्निरुच्यते । किन्तु देवता । 'यमन्तरिक्षं न वेद', 'यं पृथिवी न वेद', 'आपोऽब्रुवन्' इत्यादेश्च ॥

एवमर्थद्वयसूचनायैव भाष्ये **'आकशस्याऽनन्दत्वे'** इत्युक्तम् । नतु 'भूताकाशस्याऽनन्दत्वे' इति । य एवाऽनन्दः स एवाऽनन्दमयः । तादात्म्यार्थे मयट् ॥

तस्मादानन्दमयत्वमपि तस्यैव स्यात् । **नतु विष्णोरिति न मन्तव्यम्** । तुशब्देनाऽकाशशब्दस्य विष्णौ प्रसिद्ध्यभावमाह । अप्राकरणिकत्वं च । न क्वापि कोशेष्वाकाशशब्दो विष्णुवाचकः पठ्यते । आकाशं हि विष्णोः पदमाचक्षते पदविदः । नत्वाकाशमेव विष्णुम् । नहि गृहस्थ एव गृहं भवति ॥

अथच आनन्दमयाधिकरणे पञ्चापि पञ्चायतना दत्तोत्तराः । अथाप्यन्तरधिकरणे पुनः सौराः प्रत्यवातिष्ठन्त । सम्प्रति गाणपत्याः प्रत्यवतिष्ठन्ते । गणपत्याख्यं परं ब्रह्मैवाऽकाशशब्दमत्र स्तूयते । भवन्मतेऽपि युक्तमेतत् । तस्याऽकाशमानित्वाभ्युपगमात् । गणपतेरेवास्मन्मते परब्रह्मत्वेन तस्यैव

**अनेन सङ्गतिभाष्येण संशयबीजसूचनपरोऽपि गुरुतमः पूर्ववादिनमन्यत्रप्रसिद्धिकोटिबलदर्प्पादानन्दमयश्रुतौ प्रकरणबलात् प्रसाधितार्थमप्याकाशशब्दमनादरादसाधितमिव मन्वानमतिशङ्कमानमनुवदति, अनिष्णातमतयोऽनवसरेऽपि भ्रमन्तीति द्योतयन् । प्रतिवदति च परमदार्ढ्याय ॥**

---

सर्वनामत्वोपपत्तेः । आकाशते आकाशयति चेति निर्वचनेन गणपतौ सावकाशं चेदं पदम् । विघ्ननिवारणेनावकाशप्रदत्वाच्च स आकाशः । अत एव सर्वजगच्चेष्टकत्वात् 'को ह्येवान्यात्–' इति स एवोच्यते । अतस्तस्यैवाऽनन्दत्वमानन्दमयत्वं च । 'ज्येष्ठराजम्–' इति श्रवणात् स एव परोवरीयान् । 'विप्रतमम्' इति च । विशेषेण प्रकृष्टतममिति हि तदर्थः । स एव चैवमुच्चत्वेन गीयते सृष्ट्यादिकर्ता चेति सर्वमुपपन्नम् ॥

तदिदमाह– **अतिशङ्कमानं पूर्ववादिनम्** । शास्त्रमतिक्रम्य बहुधा शङ्कमानमित्यर्थः । **प्रकरणबलात् प्रसाधितार्थमप्य**त्र पुनरप्राकरणिकत्वा**दसाधितमिव मन्वानम्** । **अनादरा**दिति । तस्मात् तत्र प्रकरणबलात् प्राप्तोऽप्यर्थो नाऽद्रियत इत्यपलपन्तमित्यर्थः । लोकतोऽन्यत्र प्रसिद्धिरेका कोटिः । विद्वत्प्रसिद्धिरपरा । तत्रान्यत्र प्रसिद्धिः कोटिरेव तस्य बलम् । अहो मूढोऽयं तामेव कोटिं कोटिबलं मन्यमानः । तेनैव दर्पादाचिक्षेप ॥

ननु विष्णुरेव ब्रह्मेत्युक्तम्– 'विष्णुरेव हि तच्छ्रुतेः' इति देवमीमांसायामेव । समन्वयात् स सर्वनामेति च साधितम् । तत् कथमन्यत्रप्रसिद्धिकोटिमाश्रित्य प्रश्नावकाशः? सत्यमाह भवान् । नास्ति निष्णातानां प्रश्नावकाशः । नहि वेदेषु वैदिकेषु च निष्णातमतयो बहवो भवन्ति । अनिष्णातानामेव च प्राचुर्यम् । दुराग्रहगृहीतं तेषां मनोऽनवसरेऽपि भ्रमत्येवेत्याह– **अनिष्णातमतय** इति । तदुक्तम्– 'दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम्' इति । स्वस्यैव पूर्वजीवनं स्मरन्निवेदमाह पण्डिताचार्यः ॥

नन्वनिष्णातमतयः किमिति समाधीयन्ते? अवज्ञैव तेषामुचितमुत्तरमित्यत आह– **प्रतिवदति च परमदार्ढ्याये**ति । पुनः शङ्कोदयानवकाशः परमत्वं दार्ढ्ये । निष्णातमतीनां समन्वयसूत्रेणैव पर्याप्तम् ।

प्राचुर्य्येणान्यत्र प्रसिद्धिः पूर्वपक्षयुक्तिरनयोः पादयोः । विशेषयुक्तयश्च भगवताऽनुभाषिता एव सर्वत्र सम्यगनुव्याख्यानन्यायविवरणयोर्बुद्धिमार्ग्गमारोहन्ति ।

अनिष्णातमतयोऽपि हि सन्तः शास्त्रेष्वधिक्रियन्ते । शास्त्रविस्तरमधीत्य तेऽपि निष्णाता भवेयुरिति कृपया तेषामपि तत्वेषु परमदार्ढ्यजननाय, तेन च बहूनां संवादेन शास्त्रस्य च परमदार्ढ्याय उत्तरसूत्रैस्तेषामपि प्रत्युत्तरं वदति भगवान् बादरायणः, भाष्यकारश्चेति । स्वानुभव एव चायं पण्डिताचार्यस्य । अत एव भगवत्पादो मायावादपङ्के पतितमपथेन पतन्तमात्मानं नावाजानात् । प्रत्युत सप्ताष्टानि दिनानि वादलीलां विधाय स्वयमसीमया करुणयाऽहो उज्जहारैव ॥

एतं प्रमेयविशेषं ग्राहयितुमेव– **'पूर्ववादिनम्'** इत्याह । न 'पूर्वपक्षिणम्' इति । ये त्वविदिततत्वा अपि तत्वदर्शिभिः सह वादकथया तत्वं जिज्ञासन्ते ते किल पूर्ववादिनः । पूर्वपक्ष एवाऽग्रहवन्तः पूर्वपक्षिणः, ये वैदिकाभासैः शाक्तगाणपत्यादिभिर्दृढं प्रभाविता राजसतामसाः ॥

एवमनिष्णातानां पूर्वपक्षयुक्तिं निगमयति– **प्राचुर्येणान्यत्रेति** । अविदितपरतत्वानां परिचितलौकिक-भाषाणां विदुषामपि कथं मन्त्रेषु सहसा भगवद्बोधः स्यात्? दृश्यन्ते हि विदितचरपदवाक्यानामपि सायणादीनामबोधविजृम्भणम् । आपातार्थप्लवनेन ते पारङ्गताः परं वेदजलधेरभवन् । न प्राभवन् गाढमवगाह्य गूढमर्थरत्नपूगमुपनेतुम् । शब्दस्वभावश्चायम्– यत् परिचितमेव ते बोधयन्ति । नापरिचितं परिचाययन्ति । तेन सञ्जातजिज्ञासाः शास्त्रैः क्रियासमभिहारेण बोध्यन्ते ॥

## वल्लभाचार्यमतविमर्शः

सूत्रेषु सूचितानि च लिङ्गानि निष्णातानां तत्तत्प्रकरणपर्यालोचनया ज्ञायन्ते । येषामथ न ज्ञायेरन् तेषां कृते भगवत्पादेनानुभाष्यन्त इत्याह– **विशेषयुक्तयश्चेति** । एतेन 'सर्वे शब्दास्तल्लिङ्गादित्येकेन सूत्रेण पर्याप्तम् । किं वृथाऽन्यसूत्रैः फलम्' इत्याक्षिपन् वल्लभाचार्योऽपि दत्तोत्तरः । अनधीततत्वप्रदीपानामेषा भ्रान्तिरिति ॥

'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादितल्लिङ्गात् ॥

---

परोवरीयस्त्वादेरनन्यथासिद्धलिङ्गाद् विष्णुरेवाऽकाश इति सिद्धान्तः ॥

'परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
'परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम्' इति सामसंहितायाम् ॥

उच्चत्वेन गीयत इति **उद्गीथः** । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्' इति जगदुत्पादकत्व-मुदीर्य्यमाणमादिशब्दादुपाददीत ॥

---

उभावपि ग्रन्थौ स्वप्रार्थनया प्रबद्धौ भगवत्पादेन, येन तत्वमार्गे वादकथा सुकरा बभूवेति साभिमानमुल्लिखति– **अनुव्याख्यानन्यायविवरणयोरिति** । तथाहि न्यायविवरणे पादार्थः ॥

'नचावयवत्वविरोधः । 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुतेरवयवाद्यभेदात् ॥ ६ ॥ नच 'ब्रह्मेन्द्राग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तं वाचो वीर्यं तपसाऽन्वविन्दत्' इत्यादिशब्दानामन्यविषयत्वम् । श्रुतिसन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः ॥ ७ ॥ अधिभूताध्यात्माधिवेदगतानामपि शब्दानामचेतनजीवान्वयव्यतिरेकनित्यत्वेषु विद्यमानेष्वपि भगवद्विषयत्वमेव । अनन्यथासिद्धलिङ्गैः । 'तावानस्य महिमा ततो ज्यायांश्च पूरुषः' इति शब्दसहितलिङ्गैश्च । सन्दिग्धश्रुतिलिङ्गाभ्यां युक्ताभ्यामप्यसन्दिग्धयोः केवलयोरपि बलवत्त्वात् ॥ ८-१० ॥ नचानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिङ्गानामपि तद्गभगवदपेक्षया युक्तेः' इति ॥

विवृतं चैतदनुव्याख्याने । सङ्क्षिप्य चोक्तं न्यायमालायाम् ॥

**भाष्ये भूताकाशस्येति** । पञ्चभूतेषु प्रथमस्य जडाकाशस्य तदभिमानिनश्च प्राप्तिरिति स्फुटम् । **भूतिमत आकाशस्येति** गाणपत्यानपि कटाक्षयतीव ॥

## श्रुतिलिङ्गाभ्यां विष्णुपरता

नानयोरेकोऽपि पक्षः पुरः स्थातुं क्षमते । किन्तु विष्णुरेवाऽकाशशब्दोक्तः । विष्णोरसाधारणधर्माणामत्र बहुलमुपलम्भात् । आकाशशब्दे लीनं विष्णुरूपमर्थं गमयतीति लिङ्गमुच्यते । तस्यैव लिङ्गं तल्लिङ्गम्, तस्मात् **तल्लिङ्गात्** ॥

परोवरीयस्त्वमेकं लिङ्गम् । उद्गीथत्वमपरम् । अनन्तत्वं चान्यदिति त्रीणि लिङ्गानि । परोवरीयानिति लिङ्गम् । उद्गीथ इत्यनन्त इति श्रुतिर्लिङ्गं च । आदिपदेन सर्वकर्तृत्वम्, सर्वोत्तमत्वम्, सर्वाश्रयत्वं च । तदभिधायिनीं श्रुतिमुद्धरति– **सर्वाणि हवै** । भूतानि **जीवजातानि** । पञ्चभूतग्रहणेऽपि सर्वाणीति भूताकाशव्यावृत्तिः । नह्याकाशादेवाऽकाश उत्पद्यते, किन्त्वात्मन उत्पद्यते । आत्मन इत्यहङ्कारमानिनः शिवात् । पूर्वाधिकरणन्यायेन तदन्तर्यामिणः केशवादित्यर्थः । 'यतो वा इमानि–' इति श्रुतेर्ब्रह्मणो हीदं लक्षणम् । ब्रह्मशब्दश्च, 'विष्णुरेव हि तच्छ्रुतेः । तं ब्रह्मेत्याचक्षते' इति विष्णुरेवेति निर्णीतम् ॥

'एष ह्येभ्यः सर्वेभ्यो भूतेभ्यो ज्यायान्' इति सर्वोत्तमत्वम् । 'सर्वेषां भूतानां परायणम्' इति मुक्ताश्रयत्वं च । भूता इति भूतिमन्तो मुक्ता अपि । 'परमं यो महद् ब्रह्म परमं यः परायणम्' इति च विष्णुसहस्रनामसु । अयनमाश्रयो गतिरिति चैकोऽर्थः । अतोऽब्रवीत् टीकाकारः **गतिराश्रय** इति । एतेन– 'यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति युक्तम् । मृदाश्रयइव घटादिः' इति परभाष्यं दत्तोत्तरम् । नहि मृदो गतिर्घट इति विदन्तो व्याहरन्ति । यत् पुनराश्रयणार्थं गम्यते सा किल गतिः ॥

## परोवरीयःपदार्थः

परोवरीयानित्यस्य प्रमाणवचनेनैवार्थमाह– **परस्मादिति** । **परस्मात्** उ **उत्तमं परो इति प्रोक्तम्** । परस्माद् देवगणात्, जडापेक्षया परस्माज्जीवगणाद्वा उत्तमो ब्रह्मा परो । **ततः परं श्रीतत्वं परोवरम्** । ततोऽप्युत्तम इत्यर्थे ईयसुनि परोवरीयान् परः पुमान् । परममहद् ब्रह्म । तदेव परोवरस्यापीदं नियामकमिति पारोवरीयम् । स्वार्थे कः । आनन्दरूपत्वाद् वा ॥

**उच्चत्वेन** सर्वदेवोत्तमत्वेन **गीयते** वेदेषु ज्ञानिभिश्च **इति** उद्गीथः । अतिशयेन गीत एव गीथः । उरुगाय इत्यर्थः । एतेन 'ज्येष्ठराजम्' इति, 'विप्रतमम्' इति च व्याख्यातम् । जीवगणपतित्वात्

‘विष्णोर्नु कं वीर्य्याणि प्र वोचं
‘यः पार्त्थिवानि विममे रजांसि’ ।
‘परो मात्रया तन्वा वृधान
‘न ते महित्वमन्वश्नुवन्ति’ इत्यादिना तस्य हि तल्लिङ्गम् ॥

---

‘विष्णोर्नु वीर्य्यगणनां कतमोऽर्हतीह
‘यः पार्त्थिवान्यपि कविर्विममे रजांसि ।
‘चस्कम्भ यः स्वरभसा चलितं त्रिपृष्ठं
‘यन्मां निशाम्य सदनादुरु कम्पमानम्’ इति भागवतवचनात् **‘विष्णोर्नु कम्–’** इत्यस्यार्त्थोऽवगम्यते ॥

---

विष्णुरेव हि गणपतिरुच्यते । ‘यो देवानां नामधा–’ इति सर्वनामत्वात् । न क्वापि गणपति-र्विष्णुरिति ।

## ‘विष्णोर्नु’ इति मन्त्रार्थः

कालदेशाभ्यामनन्तत्वमन्यत्रापि दृश्यत इति गुणतोऽनन्त एवानन्त उच्यते । तच्च विष्णोरेव । तथाच श्रुतिरप्याह– **विष्णोर्नु कमिति** । ‘यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः’ (ऋ.सं.१.१५४.१.) इत्युत्तरार्धम् । मन्त्रोऽयं तैत्तिरीयसंहितायाम्, वाजसनेयसंहितायां च पठ्यते । ‘विष्णोर्नु कं वीर्याणि प्रावोचम्’ इति पाठभेदेनाथर्वसंहितायां च । ऋक्संहितायां च षळृचं दीर्घतमस आर्षं त्रैष्टुभं विष्णुदेवत्यम् । तत्रायं प्रथमो मन्त्रः । अनन्तत्वं पूर्वार्ध एवोक्तमिति तावदेवोज्जहार । प्रियं च मध्वस्येदं सूक्तमित्युक्तं पुरस्तादेव । यतो मध्वोऽप्यत्र प्रास्तूयत पञ्चमे मन्त्रे– ‘विष्णोः पदे परमे मध्व उत्सः’ इति । विष्णुधर्मतया ईर्यन्त इति **वीर्याणि** ज्ञानानन्दादयो जगत्स्रष्टृत्वादयश्च गुणाः । ‘न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप’ इति पूर्वोक्ता श्रुतिरप्यत्रोपसङ्गृह्यते ।

मन्त्रार्थस्पष्टत्वाय भागवतवचनमाह– **विष्णोर्नु** (२.७.४०.)। चतुराननवचनमेतत्। पूर्वं तेन दृष्टमेव पश्चाद् दीर्घतमा ददर्श। आथर्वणो मेधातिथिश्च ॥

विष्णोः वीर्याणि गणयितुम्, गणयित्वा सामस्त्येन कथयितुं कः प्रभवति यः पार्थिवान्यपि रजांसि परमाणून् गणयामास। नु इति प्रश्ने। 'को नु गणयेत्? गणयित्वा प्रोच्यात्?' इति। रेणूनां गणनमेवासम्भावितम्। किमुत भगवद्गुणानां गणनमिति। कविरिति मुख्यतश्चतुर्मुखः। 'कविर्यः पुत्रः' इति श्रुतेः। 'तेने ब्रह्म हृदा य आदिकवये' इति स्मरणाच्च। शतानन्दत्वाज्जीवेषु कतमश्च सः। स गणयेत् पार्थिवान् रेणून्। भगवद्गुणान् सोऽपि गणयितुमर्हति किमित्याक्षेपः। नार्हति अनन्तत्वादेव। **कं** क एव। बिन्दुरवधारणे। **प्र वोचम्**, निश्चयेन प्रावोचत्। **विममे मिमीते**। माङ् माने शब्दे च। ननु 'रजांसीति लोका उच्यन्ते' इति यास्को मन्यते। तत् कथं रजांसीति रेणव उच्यन्ते? ननु यास्कनिरुक्तादपि व्यासनिरुक्तं परमं नः प्रमाणम्। यः स्वयं वेदान् विव्यास। स इह 'यः पार्थिवानि रजांसि' इति स्फुटमाह न केवलम्। स एव च रजःशब्दार्थमेवमेवाऽहोपरिष्टादपि– 'भौमान् रेणून् स विममे यो विष्णोर्गणयेद् गुणान्' (भाग.८.६.६.) इति। यः स्वरभसा स्वपदन्यासवेगेन चलितं त्रिपृष्ठं सत्यलोकं **चस्कम्भ** चस्कम्भे स्वस्थाने स्थिरीचकार। अचलतया स्थापयामास। स्कभि प्रतिबन्धे। 'प्रतिबन्धः क्रियानिरोधः' इति क्षीरस्वामी। तदेतदाह– **यो अस्कभायत्**। सप्तलोकेषूच्चतरं सत्यलोकमस्कभायत्। 'छन्दसि शायजपि' (अ.सू.३.१.८४.) इति स्कभेश्छन्दसि शायजादेशे स्कभायतीति रूपम्। **सधस्थं** सहस्थानम्। मुक्तिं गमिष्यन्तः यत्र ब्रह्मणा सह तिष्ठन्ति। किमिति स्थापयामास? **यन्मां** सदने स्थित्वा स्वलोकनाशभयादुरु **कम्पमानं निशाम्य** कृपया। तदेवाऽह– त्रिभिः पदैस्त्रेधा **विचक्रमाण उरुगायस्त्रिविक्रम** इति ॥

अनन्तत्वे पूर्वोक्तां श्रुतिं स्मारयति– **परो मात्रयेति**। सप्तर्चं वसिष्ठस्याऽर्षं त्रैष्टुभम्। 'उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से' इत्युत्तरार्धम्। मन्त्रार्थस्तु जन्माधिकरणे विवृतः। अत्र **परो मात्रयेति** देशतोऽनन्तत्वमाह। **तन्वा वृधानेति** देहतोऽनन्तत्वम्। सोऽप्यनन्तशब्दार्थ इत्यनेनाऽह। नह्याकाशस्य देहतोऽनन्तत्वं नाम सम्भवति। 'आत्मन आकाशः सम्भूतः' इति वचनान्न कालतोऽनन्तत्वमपि। देशतोऽनन्तत्वमपि महाकाशस्यैव। न भूताकाशस्य। तस्य नीलवर्णावच्छेदेन परिच्छिन्नत्वात् ॥

'अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः ।
'प्रोच्यते विष्णुरेवैकः परेषामुपचारतः' इति च ब्राह्मे ॥

'नामानि सर्वाणि यमाविशन्ति–' इति चोक्तम् ॥ ८ ॥

**॥ इत्यष्टममधिकरणम् ॥ * ॥**

---

अन्यत्र प्रसिद्धेः पुनरतिदौर्बल्यं साधयति विष्णोरेव तत्तन्नामत्वेन– **नामानि सर्वाणि यमाविशन्तीत्यादिना** ॥

---

## ब्राह्मवचने वैशिष्ट्यम्

तदेव स्मृतिवचनेन स्फुटमाह– **अनन्त** इत्यादिना । 'अनन्तो हुतभुग् भोक्ता' इति, 'भगवान् भगहाऽऽनन्दी' इति, 'ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः' इति, 'आनन्दो नन्दनो नन्दः' इति च विष्णुसहस्रनामसु । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते । अथच भगवानिति ब्रह्मेति च यो विष्णुरुच्यते स एक एवानन्त उच्यते– 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादौ । स एक एवाऽनन्द उच्यते– 'यदेष आकाश आनन्दो न स्यात्' इत्यादौ । ब्रह्मपदेन चैतदाह– न केवलं सर्वपदैः, सर्वलिङ्गैश्च पदैः । यत्र भगवान् विशेष्यतया विवक्ष्यते तत्र पुँल्लिङ्गपदैः– 'स एषोऽनन्तः' इति । यत्र ब्रह्मेति विशेष्यं तत्र नपुंसकपदैः– 'सत्यं ज्ञानमनन्तं ब्रह्म' इति च स्म हि पठन्ति । एवमानन्देत्यादिविशेषणेष्वपि । 'आनन्दो ब्रह्मेति व्यजानात्' इति वदन्ति । न केवलमानन्दि ब्रह्म । किन्त्वानन्द एव स्वयमित्यर्थः । 'विज्ञानमानन्दं ब्रह्म' इति च । **आदिपदेन** 'उद्गीथ आकाशः' इत्यादिः । नन्वेक एवोच्यत इति कथम्? अन्यान्यप्युच्यन्ते । 'यथाऽऽकाशस्त्वनन्तोऽपि' इत्याकाशोऽप्यनन्त उच्यते । ऋषिरपि गुरुरपि भगवानुच्यते– भगवान् नारद इति, आनन्दतीर्थभगवानिति । जीवा अपि ब्रह्माण्युच्यन्ते– 'ब्रह्माणि जीवाः सर्वेऽपि' इति । चतुर्मुखोऽपि ब्रह्मा, ब्राह्मणजातिरपि, वेदोऽपि, रमाऽपि– 'बृह जातिजीवकमलासनशब्दराशिषु' इति । सत्यमुच्यन्ते । को नेत्याह । **विष्णुरेक एव मुख्यार्थ उच्यते** । यत्र मुख्यार्थोऽनुपपन्नस्तत्रोपचारतोऽ-

मुख्यवृत्त्याऽन्येषां वचनमित्यङ्गीकारान्न काऽप्यनुपपत्तिः । **विष्णुरेव एकः** मुख्यार्थ उच्यत इति वा । मुख्यार्थे सम्भवति नान्येषां ग्रहणं नाम सम्भवति । मुख्यार्थस्योप समीपे चरणमुपचारः । उप अमुख्येऽर्थे चरणं वा । उपनदीतिवत् ॥

## सायणस्य भागवतविरोधः

भागवतवचनोद्धरणेनान्यथा व्याख्यान्तोऽपहस्तिताः । भागवतविरोधादेव । तथाहि सायणः–'हे नराः, विष्णोः वीरकर्माणि, नुकम् अतिशीघ्रम्, प्रवोचं प्रवच्मि । यः विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि विममे विशेषेण निर्ममे' इत्यादि किलानधीतभागवत इव व्याचख्यौ ॥

अत्रायं विशेषः– नु । कम् । इति बह्वृचानां प्रतृण्णम् । भागवतानुगुणं चैतत् । 'नुकम्' इति याजुषाणामार्षम् । तद् यथा 'ईशावास्यम्' इति भागवतानुगुणं प्रतृण्णम् । ईशा । वास्यम् । इति पाश्चात्यं शाकलस्यार्षम् । तदा 'नुकम्' इत्यस्य 'इदानीमपि' इत्यर्थः । एतावत्पर्यन्तं न कोऽपि वक्तुं प्रबभूवेत्यर्थः । तत्सामान्यान्न भविष्यत्यपीति निर्णीयेतेति ॥

## गणपतिर्विष्णुः

ननु वयं गाणपत्याः प्रचक्ष्महे । सर्वमिदं भस्मनि हुतम् । उप्तमूषरे । वयं किल गणपतेरेव सर्वनाममुख्यार्थत्वमाचक्ष्महे । तस्मादिमानि सर्वाणि नामानि लिङ्गानि च भगवतः परब्रह्मणो गणपतेरेव मुख्यनामानि । ननूक्तं ब्राह्मे– 'उच्यते विष्णुरेवैकः' इति । न नो हानिः । गणपतिरेव हि विष्णुशब्दः । आकाशवद् व्याप्तत्वात् । सर्वनामत्वाच्च । तेन 'उच्यते गणपतिरेवैकः' इत्येवोक्तं भवति ॥

प्रयुञ्जते च विपश्चितः– 'शुक्लाम्बरधरं विष्णुम्' इति । गणपतिरेव ह्यत्रोच्यते । 'सर्वविघ्नोपशान्तये' इति स्मरणात् । प्रकर्षेण सन्नं वक्रं वदनमस्येति च तस्यैव लिङ्गमिति । एवं प्रलपन्तं प्रत्याह– **नामानि सर्वाणीति** । ननु विस्मरणशील, अस्योत्तरं पूर्वमेवास्माभिरुक्तम् । किमुक्तम्? **नामानि सर्वाणि यं विष्णुमाविशन्तीति** । ननु सावकाशमेतदित्युक्तम् । दुरुक्तं तत् । यतः '**नामानि सर्वाणि**'

आकाशशब्दः सर्वाधिभूतोपलक्षणार्थः ॥ ❋ ॥

**॥ इत्याकाशाधिकरणम् ॥ ❋ ॥**

इति श्रुतौ विष्णुमाविशन्तीत्युक्तम् । न गणपतिमाविशन्तीति । प्रसिद्धेन ह्यप्रसिद्धं प्रसाध्यते । नाप्रसिद्धेन । विघ्नोपशमश्च विश्वम्भररूपाद् विष्णोरेव । अत एव 'विश्वं विष्णुर्वषट्कारः' इत्याह । नतु विष्णुर्विश्वम्' इति ॥

एवं देवतान्तरस्य सर्वोत्तमत्वं सर्वनामत्वं च वदन्तः सर्वेऽप्यवैदिका अनेनैव निरस्ता वेदितव्याः ॥

**सर्वाधिभूतोपलक्षणार्थ** इति । पिण्डाण्डाद् बहिः ब्रह्माण्डान्तर्वर्ति सर्वमचेतनजातमधिभूतपदेनोच्यते । तत्तद्वाचकानि सर्वाण्यपि पदान्यनेनैव नयेन भगवति समन्वितानि वेदितव्यानि ॥

एवं न केवलमाकाशशब्दः । आकाशवाचीनि गगनमम्बरं खमित्यादीनि सर्वाणि नामानि । तेन 'खं ब्रह्म' इत्यादिश्रुतयोऽपि गदितार्थाः । अत एव सर्वशास्त्रार्थसङ्ग्रहे 'पूर्णानन्दोऽन्तरः खवत्' इत्याहेति सर्वमतिसुन्दरम् ॥ ❋ ॥

## सिद्धान्तानुगुणः खण्डार्थः

तथाचायं प्रकृतखण्डार्थः । नात्र लोकत्रयप्रस्तावः । येनाऽऽकाशशब्दस्य भूताकाशपरता शङ्क्येत । किन्तु देवतावचन एवायम् । तथाहि– का साम्नो गतिरिति, साममानिनोऽग्नेः को देव आश्रय इत्यर्थः । स्वरो गतिरित्युवाच दाल्भ्यः । स्वरमानी वरुण आश्रय इत्यर्थः । वरुणस्य क आश्रय इति । प्राण इति होवाच । अमुख्यप्राणमानी प्राणशक्तिप्रदः सूर्य आश्रय इत्यर्थः । सूर्यस्य क आश्रय इति । अन्नमिति होवाच । अन्नाभिमानी दक्ष आश्रय इत्यर्थः । दक्षस्य क आश्रय इति । आप इति होवाच । अपामभिमानीन्द्र आश्रय इत्यर्थः । इन्द्रस्य क आश्रय इति । असौ लोक इति होवाच । अमुष्य स्वर्गलोकस्य मानी शिव आश्रय इत्यर्थः । शिवस्य क आश्रय इति । अयं लोक इति होवाच । अस्य लोकस्य मानी चतुर्मुख आश्रय इत्यर्थः । चतुर्मुखस्य क आश्रय इति । आकाश इति होवाच । आ समन्तात् कमश्नातीत्यानन्दमयः, ब्रह्मादिष्वग्र्यन्तेषु सन्निधाय स्वयमाकाशते

आकाशयति च तानिति, तेषान्तेषां तत्तत्कर्मकरणायावकाशप्रद इति चाऽकाशनामा नारायण इत्यर्थः । एवं जडतत्वैः साकं तत्तदभिमानिदेवताचिन्तनम्, तासां तारतम्यचिन्तनपूर्वकं तरतमकाष्ठाया नारायणस्य चिन्तनं च भवतीति महानपूर्वार्थलाभः ॥

तदेतत् सप्रमाणमुदितं भगवत्पादेन च्छन्दोगभाष्ये–

'अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः ।
'प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः ॥

'अन्नाभिमानी दक्षश्च शक्रस्त्वबभिमानवान् ।
'द्युवात्मकश्च शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः ।
'क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः' इति निवृत्ते ॥

'अग्नेर्वागात्मकत्वात् । उदकात्मकत्वात् स्वरस्य । 'आदित्य एव प्राणोऽन्नं वै प्रजापतिः' इति श्रुतेः । 'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च ॥

'विशेषज्ञानसम्प्राप्त्यै जानन्तोऽपि हरिं परम् ।
'ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम्' इति ब्रह्मतर्के ॥

'स्वर्गाभिमानिरुद्रं प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम । मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेत् विपतिष्यति ॥

'ब्रह्मैव हि पृथिव्यात्मा विष्णुराकाशनामकः ।
'आदीप्तत्वाद् वरीयांश्च परमो हरिरेव हि' इति सत्तत्वे' इति ॥

'परमो वरीयांश्च' परोवरीयोनामकश्चेत्यर्थः । सामादिपदानामग्न्यादौ निर्वचनं च भाष्य एव निरूपितम्–

'शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः ।
'स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ॥

'उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः ।
'अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः ॥

'स्वो विष्णुस्तद्रतिर्वायुस्तद्वो मुक्तौ सदाशिवः ।
'अतः स्वर्गोऽसुसंस्थत्वादसाविति च कीर्तितः ॥

'सर्वदेवान्तरत्वात्तु ब्रह्माऽयं समुदाहृतः ।
'लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः' इति ब्रह्मतर्के ॥
'आपालनादाप इन्द्रः' इत्यादि ॥ * ॥

॥ इत्यष्टममाकाशाधिकरणम् ॥ * ॥

—०—

## नवममधिकरणम्
### (प्राणाधिकरणम्)
### (१.१.२३.)

**॥ अत एव प्राणः ॥ १.१.२३. ॥**

'तद् वै त्वं प्राणो अभवो महान् भोगः प्रजापतेः ।
'भुजः करिष्यमाणो यद् देवान् प्राणयो नव' इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ॥

---

### तत्वप्रदीपः

**॥ अत एव प्राणः ॥ तद् वै त्वमित्यादेरयमर्थः**– तस्माद्धि त्वं **प्राणोऽभवः** । कस्मात्? **प्रजापतेर्भोगान् करिष्यमाणो नव** **देवान्** तदिन्द्रियस्थान् **प्राणय** इति **यत्** । भुज्यत इत्यानन्दो **भोगः** । नवत्वं पायूपस्थयोरेकीभावेन ।

---

### तत्वचन्द्रिका

#### भर्तृसूक्तमीमांसा

**'तद् वै त्वम्–'** इति विषयवाक्यमुदाजहार । विशयं च सूचयामास । तैत्तिरीयाणामारण्यके तृतीय-प्रघट्टके द्वादशो नारायणानुवाकः पुरुषसूक्तानुवाकापरनामा, यत्र पुरुषसूक्तं पठितम् । तस्मात् नारा-यणानुवाकात् पूर्वतनो होतृहृदयमन्त्राख्य एकादशोऽनुवाकोऽन्तरधिकरणे निरणायि । अथ त्रयोदशश्च उत्तरनारायणानुवाकः । अत्र नारायणपरत्वं स्फुटमिति न विवादावकाशः । अथ तदुत्तरे चतुर्दशे भर्तृसूक्ताख्येऽनुवाके सम्प्रति संशय्यते । तथाहि तत्र चरमो मन्त्रः– तद् वा इति (३.१४.१०.) ।

मन्त्रार्थमाह– **अयमर्थ** इति । प्रजापतिदेहस्थानिन्द्रियाभिमानिनो देवान् त्वमेव **प्राणयः** अचेष्टयः । प्रवृत्तिहेतुरभव इत्येतत् । तेषां स्वतः प्रवृत्त्यसमर्थत्वात् । तस्मात् त्वं प्राणयतीति **प्राणोऽभवः** । अन प्राणने । 'प्राणनं जीवनम्' इति क्षीरस्वामी । 'अनितेः' (अ.सू.८.४.१९.) इति णकारादेशः । 'अण गतौ' इत्यतो वा प्राणयतीति प्राणः । प्रकर्षेण आ समन्तात् नयतीति प्रणेतृत्वाद्वा प्राणः । तदुक्तम्–

'ततः क्रमेण चाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः ।
'निष्क्रान्तेषु नवै पातः शरीरस्याभवत् क्वचित् ॥

'वायावुत्क्रान्त एवैतच्छरीरमपतत् क्षितौ ।
'उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ॥

'तेषां बलपरीक्षार्थं वाय्वादीनां समस्तशः ।
'पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः ॥

'नोत्थानमभवत् तेषु प्रविष्टेष्वपि सर्वशः ।
'वायौ प्रविष्टे तूत्थानं कायस्याऽसीत् तदैव च ।
'उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः' इति ॥

भुज्यन्त इति भुजो विषयभोगाः । तान् **प्रजापतेः करिष्यमाणः** चिकीर्षन् । लृटो हीच्छार्थत्वमिष्यते । तद् यथा– ग्रन्थं करिष्यन् मङ्गलमाचरति । ग्रन्थं चिकीर्षन् मङ्गलमाचरतीत्येतदुक्तं भवति । करिष्यमाणं कर्मेत्याह । चिकीर्षितं कर्मेत्येव तदाह । प्रजापतेराविष्टरूपादृते न विशिष्य पायुक्रियेति **पायूपस्थयोरेकीभावेनेन्द्रियदेवानां** नवत्वमिह विवक्षितम् । अत एव क्वचिन्मुक्ता अपि नवासव उच्यन्ते । त्वं च स्वयं **महान् भोगः** परमानन्दरूपः । अत्र प्राणशब्देन नारायणः मुख्यवायुश्चोच्येते इति सिद्धान्तः । तदप्युक्तम्–

'अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ।
'तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः' इति ॥

प्रजापतेः भुजः करिष्यन्निति च मुख्यतो विष्णावेव सम्भवति । पूर्वपक्षी तु केवलं वायुपर एवायं मन्त्रः, न विष्णुपरः, नहि प्राणशब्दः वायाविव लोकवेदयोर्विष्णौ प्रसिद्ध इति मन्यत इतीयान् भेदः ॥

स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवम् । यतो विष्णुरेव प्राणः ।

---

ननु महान् भोग इति मन्त्रवर्णं सायणोऽन्यथा व्याचख्यौ– 'यद् यदा त्वं भुजो भोगान् करिष्यमाणः सन्, नव देवान् नवच्छिद्रवर्तिनः चक्षुरादीन् दीप्यमानान् पदार्थान् प्राणयः प्रकर्षेण चेष्टितवानसि । तद्वै तदानीमेव त्वं प्राणोऽभवः, प्राणयति प्रकर्षेण चेष्टयतीति प्राणनामकोऽभूः । कीदृशस्त्वम्? प्रजापतेः महान् भोगः अत्यन्तभोगहेतुः' इति । अर्थतः पादव्यवस्था, नाक्षरत इति मीमांसकानां नियमभङ्गभयेनैवं व्याचख्यौ । न नो हानिः । देवपदस्य जडपरत्वमेकमसङ्गतम् । अन्यत् सर्वमस्माकं सम्मतमेव । अस्मिन् पक्षे न केवलं प्रजापतेः, सर्वजीवानामपीन्द्रियप्रेरकत्वं प्राणस्योक्तं भवति । स्वस्य महाभोगत्वं विना प्रजापतेर्महाभोगहेतुत्वं न सम्भवतीति अर्थतः प्राणस्यैव महाभोगत्वमुक्तं भवति । स च प्राणो वायुरिति पूर्वपक्षी । प्रजापतेरपि महानन्दप्रदत्वं प्राणशब्दस्य नारायणपरत्वं गमयतीति सिद्धान्तिनोऽप्यभिमत एवायमर्थः ॥

## वायुरेव भर्तृसूक्तार्थः

अयमाशयः पूर्वपक्षिणः– एकादशेऽनुवाके स्तुतोऽन्तःस्थो नारायण इत्यसाधि । वयमपि तदनुमन्यामहे । ततः परं द्वावनुवाकौ नारायणपराविति मुखत एव ज्ञायते । द्वादशोऽनुवाकस्तु नारायणानुवाक इत्येवोच्यते । यत्र पुरुषसूक्तं भवति । तदुत्तरोऽप्युत्तरनारायणानुवाक इत्येव प्रथितः । यत्र 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति स्फुटं नारायणपरत्वम् । न वयं तत्र विवदामहे । चतुर्दशोऽयमनुवाकस्तु नः सम्प्रति विवादपदम् । तथाहि– अधिभूतं यो वायुः सोऽध्यात्मं प्राण उच्यते । प्राणप्रवेशे जीवनम्, प्राणापगमे मरणमिति च विश्वजनीनम् । तस्माल्लोकतः सर्वत्र शास्त्रे च प्रसिद्धो मुख्यवायुरेवास्मिन् भर्तृसूक्ताख्येऽनुवाके प्रतिपाद्यते । प्राणशब्दस्य मुख्यवायावेव प्रसिद्धेर्निरवकाशत्वात् ॥

**प्रसिद्धेरिति** भाष्यस्यान्योऽप्यर्थः– प्रकरणतोऽपि वायुपरत्वस्यैव सिद्धेरिति । समग्रस्य प्रकरणस्य वायुपरत्वेन विद्वत्प्रसिद्धेरिति च ॥

तथाहि प्रथमर्क्– 'भर्ता सन् भ्रियमाणो बिभर्त्ति । एको देवो बहुधा निविष्टः' (३.१४.१.) इत्याद्या । लोकभर्ता सन्नपि वायुः नारायणेन भ्रियमाण एव सर्वं बिभर्त्ति । यश्चैक एव देवः प्राणापानाद्यात्मना बहुधा निविष्ट इति स्फुटमत्र वायुपरत्वम् । भ्रियमाणत्वसमानाधिकरणं भर्तृत्वं वायोरेव हि स्वरसम् ॥

तथा द्वितीया– 'तमेव मृत्युममृतं तमाहुः । तं भर्त्तारं तमु गोप्तारमाहुः' (३.१४.२.) इत्याद्या । 'स एष मृत्युश्चैवामृतं च' इत्यादिभिः प्राणमेव मृत्युममृतं चाऽहुः । 'अपश्यं गोपामनिपद्यमानम्' इति तमेव गोप्तारमाहुः ॥

तृतीया– 'सद्योजातमुत जहात्येषः । उतो जरन्तं न जहात्येकम् । उतो बहूनेकमहर्जहार । अतन्द्रो देवः सदमेव प्रार्त्थ्यः' (३.१४.३.) इति । सद्योजातं शिशुमपि जहाति । ततो मृतः शिशुरित्याचक्षते । क्वचिज्जरन्तमपि न जहाति । दीर्घायुरयमिति प्रशंसन्ति । क्वचित् एकस्मिन् अहनि बहून् हरति । शिशूंश्च जरतश्च । एवं जीवनहरणकर्मण्यतन्द्रो देवः सदमेव प्रार्त्थ्यः, दीर्घजीवनार्थं सदैव प्रार्थनीय इत्यर्थः । स्फुटान्येतानि वायुलिङ्गानि ॥

'त्वमग्निं हव्यवाहं समिन्थ्से । त्वं भर्ता मातरिश्वा प्रजानाम्' (३.१४.५.) इति पञ्चम्या उत्तरार्धम् । समिन्थ्से समेधयसीत्यर्थः । अग्निसमेधनं च प्रसिद्धं वायुलिङ्गम् । न केवलम्, मातरिश्वश्रुतिश्च ॥

'नमो वामस्तु शृणुतं हवं मे । प्राणापानावजिरं सञ्चरन्तौ' (३.१४.७.) इत्याद्या सप्तमी । अजतीत्यजिरं शरीरं प्रवर्तयितुमन्तः सञ्चरन्तौ प्राणापानाविति ॥

एवं श्रुतिलिङ्गवाक्यप्रकरणानि समग्राणि वायुपराणीति स्फुटं चक्षुष्मताम् । समाख्यावचनानि चैतमेवार्थं संवदन्ते । तेन **'तद्वै त्वं प्राणः–'** इति दशम्यपि ऋक् निश्चप्रचं वायुपरेति प्राणशब्दादेव प्रमितम् । तत् किं वृथा नारायणपरतादुराग्रहेणेति ॥

'ह्रीश्च ते लक्ष्मीश्च–' (३.१३.६.) इति भिन्नप्रकरणपठितत्वान्नात्रान्वेतीत्युक्तम् । तस्मात् **'तद् वै त्वं प्राणः–'** इति मन्त्रस्य वायुपरत्वमनिच्छताऽप्यङ्गीकर्तव्यमित्याह पूर्वपक्षी– **वायुरित्यापततीति** । अनिच्छतोऽपि अनिवार्यतयाऽङ्गीकरणीयत्वप्राप्तिर्ह्यापत्तिः । तदनेन प्रयोगेन समग्रं प्रकरणं स्फुटं वायुपरमिति पूर्ववादिनो विस्रम्भं ध्वनयति । इति प्राप्ते आह सूत्रकारः– **अत एव प्राणः** ॥

**अत एव, 'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे' इत्यादितल्लिङ्गादेव ॥ ९ ॥**

**॥ इति नवममधिकरणम् ॥ * ॥**

---

**अङ्कं श्रिता श्रीः । वक्षसि लक्षणभूता लक्ष्मीः । अहोरात्रे पुरुषकालौ पार्श्वस्थौ ।**

---

भाष्यकारस्तु पूर्वसूत्रान्वितमिदं सूत्रमिति प्रथममेव पपाठ । पठित्वा भाष्यं पपाठ ॥

## विष्णुरेव सूक्तमुख्यार्थः

सत्यं पूर्ववाद्युक्तमनुवाकोऽयं वायुपर इति । किन्तु **एवं** तदुक्तप्रकारेण केवलवायुपरः **नच** नैव । किन्तु एवं च नैवं च । मुख्यवृत्त्या विष्णुपरः, तदनन्तरं वायुपरश्च । तदाह– **यतो विष्णुरेव मुख्यतः प्राणः** । समन्वयात् गतिसामान्याच्च । कुतः? **अत एव** । तल्लिङ्गादेव । **'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे'** (३.१३.५.) **इत्यादितल्लिङ्गादेव** ॥

इदमुक्तं भवति– प्रकरणार्थतया वायोः प्रतिपाद्यत्वेऽपि समग्रस्य प्रपाठकस्य, समग्रस्याऽरण्यकस्य, समग्रस्य यजुषः समन्वयनयेनैकार्थ्यं तावदभ्युपेयम् । तेन उत्तरनारायणाख्ये पूर्वानुवाके पठितो विष्णुरेवात्र मुख्यत उच्यत इत्यायातम् । पूर्वप्रकरणपठितश्च विष्णुरेव । **'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'** इति प्रकटविष्णुलिङ्गादिति ॥

## माध्यन्दिनानां पाठः

ननु कोऽयमपूर्वः पाठः? तैत्तिरीयास्तु 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे' इति ह्रीशब्दं पठन्ति । वाक्यद्वयं विश्लिष्य च पठन्ति । नतु श्रीशब्दं पठन्ति । नापि वाक्यद्वयं सन्दधति । सत्यं वेदपाठी भवान् । किन्तु तैत्तिरीयारण्यकमात्रपर्याप्तं ते पठनम् । शाखान्तरमपि पठ । यतः काण्वाः श्रीशब्दं पठन्ति, संहिततया च पठन्ति– **'श्रीश्च ते लक्ष्मीश्च पत्न्या अहोरात्रे पार्श्वे'** इति । काण्वाः शाकटायनस्य मतेन वकारं लोपयित्वा पठन्ति । अलोपयित्वा भगवत्पादः पपाठ–**'श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे'** इति । सर्वत्रैवं मूलकोशपाठः । माध्यन्दिना एवं पठन्ति । तेन तैत्तिरीयसंवादिनं

माध्यन्दिनानां पाठमाचार्य उज्जहार । तेन श्रुतीनां गतिसामान्यं दर्शितं भवति । **'ह्रीश्च ते–'** इति श्रुतेः समाख्ययाऽर्थः स्फुटीकृतो भवति । सूत्राणां च बहुशाखानिर्णायकत्वं नाम विश्वतोमुखत्वं निदर्शितं भवति । अत एवोक्तमनुव्याख्याने– 'बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः' इति ॥

एवं तैत्तिरीयाः भर्तृसूक्तानुवाकमपि पादसंहिताक्रमेण पठन्ति– 'यद् वै त्वं प्राणो अभवः । महान् भोगः प्रजापतेः । भुजः करिष्यमाणः । यद् देवान् प्राणयो नव' इति । नैवमाचार्यः पपाठ । किन्तु श्लोकार्धसंहिताक्रमेण पपाठ– **'यद् वै त्वं प्राणो अभवो महान् भोगः प्रजापतेः । भुजः करिष्यमाणो यद् देवान् प्राणयो नव'** इति । उक्तोत्तरमेतत्– तदात्वे तैत्तिरीयाणामपि पादसंहितापाठक्रमो नाऽसीदिति, शाखान्तरं वा स्यादिति ॥

## अङ्के श्रीः– वक्षसि लक्ष्मीः

ननु श्रीरिति लक्ष्मीरिति चैकैव । तत् कथं पत्न्याविति । स्थानभेदाद् रूपभेद इत्याह– **अङ्कं श्रिता श्रीः** । ननु वक्षसि लक्षणभूतैव श्रीरिति युक्तम् । श्रीवत्स इति हि वदन्ति । न लक्ष्मीवत्स इति । सत्यमन्यासूपासनास्वेवम् । अस्यां पुनरङ्कं श्रितैव श्रीः । ह्रीरिति श्रुत्यन्तरसंवादात् । अङ्कं श्रितैव हि ह्रीर्भवितुमर्हति । अङ्कं श्रिता हि जिह्रीयात् । न वक्षसि लक्ष्मभूता । तेन **लक्षणभूता लक्ष्मीरि**-त्येवोचितम् । लक्ष्यते हृदि रोमावर्तरूपेण चिह्नितेति लक्ष्मीः । लक्षणं हि चिह्नमाहुः । लक्ष्मेति च । विष्णुस्तुतावप्येवमेवाऽह पण्डिताचार्यः– 'लक्ष्म्या वक्षः श्रितायाः'(१८) इति । 'श्रियाऽध्यासितवामाङ्कः' इति नृसिंहाष्टोत्तरशतनामसु । 'उपगूढं श्रियैकया' इति च भगवत्पादप्रयोगः । अङ्कं श्रिता ह्युदरमुपगूहति ॥

## अहोरात्रशब्दार्थः

**अहोरात्रे पार्श्वे** इत्यस्फुटार्थम् । अतस्तदपि विष्णुलिङ्गमिति द्योतयंस्तदर्थमाह– **अहोरात्रे पुरुषकालाविति** । ननु भोः, अर्थ उक्तः । अथापि नाधिगतः । **अहोरात्रे** इति **पुरुषकालावुच्येते** इत्यधिगतम् । पुरुषकालाविति कावुच्येते इति नाधिगतम् । यत् केचिद् व्याचक्रुः– 'अहोरात्रे तदभिमानिसूर्यचन्द्रौ' इति, तन्नेत्यधिगतम् । नहि तौ क्वापि पुरुषकालपदगदितौ विदितौ । नहि कोऽपि प्रसिद्धं

पदमप्रसिद्धेन पदेन परिचाययति । नापि तयोर्भगवदुभयपार्श्वगतत्वेनोपासना प्रसिद्धा । 'चक्षोः सूर्यः' इति, 'चन्द्रमा मनसः' इति च हि पठन्ति । कौ तर्हि पुरुषकालाविति । तिस्रोऽत्र विधाः सम्भवन्ति– अङ्के वक्षसि च श्रीलक्ष्म्यौ पत्न्यौ । पार्श्वे पुनरहोरात्रे पत्न्याविति? के एते पत्न्यौ? स्वयमुपरिष्टाद् वक्ष्यति पण्डिताचार्यः– 'प्रकृतिः पुरुषः काल इति भूश्रीदुर्गाः' इति । तेन रूपान्तरेण पार्श्वे स्थित्वाऽपि सेवमानाऽक्षरपुरुषाभिधा श्रीरेव पुरुषः । स्थितिहेतुत्वात् साऽहरित्युच्यते । जगत्कालनी रात्रिसूक्तप्रतिपाद्या दुर्गैव कालः, रात्रिश्च । सुप्रसिद्धा चेयमुपासना पीठपूजायामग्निमण्डले दक्षिणे श्रियं वामे दुर्गां चानुसन्दधते । अहश्च रात्रिश्च अहोरात्रे । समासान्तोऽच् । द्वे श्रीरूपे इति सूचनायैव । समाहरणं पुंस्त्वं च नाऽश्रितम् । तदिदमपि विष्णुलिङ्गम् । अत एव तदन्तमुज्जहार भाष्यकारः ॥

## पुनरर्थद्वयम्

अथच **अहोरात्रे पार्श्वस्थितौ पुरुषकालौ** पुत्रौ । पुरुष इति पुरुषमानी जीवनहेतुत्वादहःशब्दितः प्राणः । काल इति संवत्सरमानी चतुर्मुखः । संहर्तृत्वाद् रात्रिशब्दितश्च । तदिदमप्युक्तम्–'ब्रह्मवायु-शिवाहीशविपैः शक्रादिकैरपि । सेव्यमानः' इति ॥

अथच पुरुषे स्थित्वा जीवनहेतुत्वात् प्राणः पुरुषः । अपनयतीति मृत्युहेतुत्वादपानः कालः, रात्रिश्च । तदुक्तं महैतरेयोपनिषदि– 'अहरेव प्राणो रात्रिरपानः' इति । तदिदं सर्वमपि विष्णोरेव लिङ्गमिति । प्रथमं व्याख्यानमेव पण्डिताचार्यसम्मतमिति भाति ॥

## माध्यन्दिनमन्त्रार्थः

इयं माध्यन्दिनानां पुरुषसूक्ताध्यायस्य द्वाविंशी कण्डिका– '**श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे** नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण' इति ॥

तैत्तिरीयाः किञ्चिदिवान्यथा पठन्ति– '**ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे** । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण' (३.१३.१९.) इति । उभयविधोऽपि पाठोऽत्रानुसन्धेय इत्याचार्याशयः ॥

अयं माध्यन्दिनीयमन्त्रार्थः– मन्त्रस्य पूर्वार्धे पञ्चविंशतिरक्षराणि । एकान्नविंशतिरुत्तरार्धे 'इषाण अमुम्' इति विश्लेषेण । संहत्य चतुश्चत्वारिंशदक्षराणीति त्रिष्टुप् छन्दः । सूर्यनारायणो देवतेति

'हरिं हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम्' इत्यादिकमादिशब्द आदापयति । सर्वाद्ध्यात्मोलक्षणार्त्थः प्राणशब्दः ॥ * ॥

॥ इति प्राणाधिकरणम् ॥ * ॥

माध्यन्दिनानां सम्प्रदायः । नारायण ऋषिः पुरुषो देवतेति शौनकभाष्ये ।श्रीश्चेत्यादि व्याख्यातम् । नक्षत्राणि ते रूपम् । तवैव तेजसा भासमानत्वादिति व्याचक्षते । अथच यानियानि नक्षत्राणि रक्षकान्तररहितानि तवावताररूपाणि मत्स्यादीनि तानि सर्वाण्यपि ते स्वरूपमेव । न मात्रयाऽपि भेदः । 'नेह नानाऽस्ति किञ्चन' इति श्रुतेः । 'अश्विनौ द्यावापृथिव्यौ तव व्यात्तं मुखमिव । 'अश्विनौ द्यावापृथिव्यौ इमे हीदं सर्वमश्नुवाताम्' इति श्रुतेः' इति व्याचक्षते । अथच सर्वेषां रूपाणां भगवत्स्वरूपत्वेऽपि अश्विनौ रामकृष्णाख्यावतारौ व्यात्तं भारतरामायणादिषु विस्तरेण वर्णितं रूपम् । 'रामकृष्णौ तथाऽश्विनौ' इति स्मरणात् । हे इषाण सर्वेषामीशान, इष्णन् निरन्तरं नः श्रेय इच्छन् भव । इष आभीक्ष्ण्ये । अमुं स्वर्गं मे इच्छन् भव । सर्वस्य परिपूर्णस्य ते लोकं वैकुण्ठाख्यं मे इच्छन् भव । आदरादिषाण इति त्रिः सम्बोधनमिति प्राचीनम् । अमुं स्वर्गलोकमिषाण इच्छ इत्यर्वाचीनाः । तत्पक्षे इष्णन्' इतिवत् 'इषाण' इत्येतदपि इषधातोः क्र्यादेः इष आभीक्ष्ण्ये इत्यस्येदं रूपम् ॥

तैत्तिरीयाणां पाठे– मम भक्तस्यास्य इष्टं स्यादिति मनिषाण मनसा प्रीतिपूर्वमिच्छ । अमुं साधकलोकं मनिषाण । सर्वं परिपूर्णं मोक्षं मनिषाणेत्यर्थः ॥

इदमुक्तं भवति– **'श्रीश्च ते–'** इत्यत्र ते इति युष्मच्छब्देन परामृष्टः श्रीपतिरेव उत्तरानुवाके **'तद् वै त्वम्'** इति पुनरुपसंहारे परामृश्यते । तेन प्रकरणयोरुपासनाभेद एव नोपास्यभेदः । तत्र पत्नीसाहित्येन भगवानुपासितः । अत्र तु प्राणाख्यपुत्रसाहित्येनेति ॥

## 'हरिं हरन्तम्' इति श्रुत्यर्थः

अतस्तदुत्तरप्रकरणे पञ्चदशोऽनुवाके गतोऽपि मन्त्रः आदिपदेन सङ्गृह्यत इत्याह– **हरिं हरन्तमिति** । पञ्चदशोऽनुवाके मृत्युसूक्ताख्ये प्रथमो मन्त्रोऽयम् । द्वादशोऽनुवाके 'जगृहे पौरुषं रूपमादौ लोकसिसृक्षया'

इत्युक्तस्य सृष्ट्यर्थं गृहीतपुरुषरूपस्य नारायणस्योपासना । त्रयोदशे सभार्यस्याव्याकृतगृहस्थस्य नारायणस्योपासना। चतुर्दशे सपुत्रस्य प्राणनाथस्य नारायणस्य। पञ्चदशे सपुत्रपौत्रस्य प्राणरुद्रान्तर्यामिणो नृहरिरूपिणो नारायणस्योपासनेति सर्वमतिसुन्दरम् । तथाचायं समग्रो मन्त्रः– **हरिं हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम्** । ब्रह्म सरूपमनु मेदमागात् । अयनं मा विवधीर्विक्रमस्व' इति । अयमर्थः– **'नृहरिम्'**, हिरण्यकशिपुं **हरन्तम्**, सर्वे ब्रह्मवायुरुद्रादयो **देवा अनुयन्ति । विश्वस्य** वायोरीशानम् । समस्तजगतश्च । **मतीनां** ज्ञानिनां श्रेष्ठम् । सरूपमेकार्थं ब्रह्म वेदवाङ्मयं मामनुकूल-तयाऽऽगच्छतु । हे मृत्यो नरसिंह, अयनं ज्ञानमार्गं मा विवधीः । यथा दैत्यहनने तथा मद्दुरितहनने विक्रमस्व । हरिरिति वायुरप्युच्यते । विशेषतो हनुमान् । असुरान् हरन्तम् । विशेषतो लङ्कागतान् राक्षसान् हरन्तमनुयन्ति देवाः कपिरूपाः । तदुत्तरो मन्त्रः– 'मा छिदो मृत्यो मा वधीः–' इत्यादी रुद्रपरोऽपि । टीकायामित्यादिकमित्यादिपदेन समग्रं पुरुषसूक्तम् ॥

इदमुक्तं भवति– श्रुतिर्हि लिङ्गाद् बलवती । तत् कथं प्राणश्रुत्या बलवान् पूर्वपक्षः श्रीपतित्वलिङ्गेन प्रतिहन्यत इति माऽतिशङ्कि । लिङ्गानां बहुत्वान्निरवकाशत्वाच्च । न केवलमेतावत् । बलवतो लिङ्गस्य हरिश्रुत्या च योगे बलवत्तरत्वात् । नच हरिरिति वायौ सावकाश इति वाच्यम् । प्राणशब्दस्य नितरां विष्णौ सावकाशत्वात् । 'ईशानः प्राणदः प्राणः'(वि.सं.२१), 'अच्युतः प्रथितः प्राणः' (४८), 'वैकुण्ठः पुरुषः प्राणः' (५७) इत्यादिना विद्वद्रूढेश्च । श्रीपतित्वलिङ्गसमेधिताया हरिश्रुतेर्निरवका-शत्वाच्चेति । नृहरिं शरभरूपेण हरन्तं शिवमिति शैवानां व्याख्यानं तु सर्वशास्त्रविरुद्धं बालिश-मित्युपेक्ष्यम् ॥

## समग्रस्य भर्तृसूक्तस्य विष्णुपरता

अनेन 'भर्ता सन् भ्रियमाणो बिभर्ति' इत्यादिः समग्रोऽनुवाको गदिताभिप्रायः । सर्वभर्ता सन्नपि भक्तैर्हृदि भ्रियमाणः । न केवलम्, विश्वान्तःस्थितत्वाच्च भ्रियमाणः । 'ईशावास्यमिदम्' इति श्रवणात् । बहिर्व्याप्तत्वात् भर्ता । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति श्रवणात् । 'तमेव मृत्युममृतं तमाहुः' इति च स्फुटं बन्धमोक्षप्रदत्वम् । 'स एष मृत्युश्चैवामृतं च' इत्यैतरेयी

श्रुतिः । 'स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा' इति चर्ग्वेदसंहितायाम् । 'वायुश्च तदनुज्ञया' इति चान्यत्र । 'सद्योजातमुत जहात्येषः–' इति च प्राणापानगतः स एव करोति–

'स एव जीवनकरो यदाऽपानेन संयुतः ।
'प्राणं नियमयत्यस्मिन् शरीरे पुरुषोत्तमः ॥

'शरीराद् बहिरेतौ तु यदा निःसारयत्यजः ।
'तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ।
'प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः' इत्यादेश्च ॥

'त्वमग्निं हव्यवाहम्–' इति, 'त्वं भर्ता मातरिश्वा' इति च स्फुटमन्तर्यामिवचनम् । जगन्निर्मातरि ब्रह्मणि वायौ च स्वयमयं श्वयति गच्छतीति च मातरिश्वा । एवं प्राणापानाविति च द्विरूपो भगवान् ॥

**सर्वाध्यात्मोपलक्षणार्थ** इति । पिण्डाण्डगतं सर्वं चेतनाचेतनजातमध्यात्ममुच्यते । मुख्यत्वात् प्राणशब्दसमन्वयः । तेन प्राणापानादीनि सर्वाणि वायुवचनानि, चक्षुःश्रोत्रादीनि हस्तपादादीनि च सर्वाणीन्द्रियवचनानि, कण्ठाद्यवयववचनानि, त्वगादिधातुवचनानि तत्तदभिमानिवचनानि च पदानि भगवति समन्वितया अनुसन्धेयानीत्युक्तं भवति ॥

यत्तु परभाष्येषूक्तम्– 'कतमा सा देवतेति प्राण इति होवाच । सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' इतीदमस्याधिकरणस्य विषयवाक्यमिति । तत्पक्षे पूर्वाधिकरणेन गतार्थं व्यर्थमिदमधिकरणमापद्यते । उभयत्रापि हि सृष्टिसंहारहेतुत्वं ब्रह्मलिङ्गमाम्रेड्यत इति यत्किञ्चिदेतत् ॥ ※ ॥

**॥ इति नवमं प्रणाधिकरणम् ॥ ※ ॥**

——०——

## दशममधिकरणम्

### (ज्योतिर्ग्गायत्र्यधिकरणम्)

(१.१.२४-२७.)

'यो वेद निहितं गुहायाम्' इत्युक्तम् । तच्च गुहानिहितम्–

'वि मे कर्ण्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत् ।
'वि मे मनश्चरति दूरआधीः किंस्विद् वक्ष्यामि किमु नू मनिष्ये' इति जोतिरुक्तम् ॥

तच्च ज्योतिरग्निसूक्तत्वात् प्रसिद्धेश्चाग्निरेवेति प्राप्तम् । अत आह–

---

### तत्वप्रदीपः

**अत आहेति** भाष्यस्यायमर्त्थः– इति पूर्वपक्षः प्राप्त इति यदत उत्तरं सूत्रमाह भगवान् बादरायण इति । अस्माकं तु भाष्यार्त्थमात्रान्वेषणपरिखिन्नात्मनामनवरतं भाष्यानुवादेऽप्यद्ध्यासितालस्यानाम् 'अत आह' इत्यभिसूत्रं भाष्यानुकरणेऽपि प्रतिवाक्यमन्य एवाभिप्रायो निश्चेतव्यः । अतः पूर्वपक्षप्राप्तेः परिहारार्त्थं सूत्रमुदाहृत्य तस्य भाष्यमाह भगवानाचार्य्य इति । सूत्रग्रहणं पुनरत्र तद्भाष्यव्याचिख्यासितस्यागृहीतप्रतीकस्य सन्निधापकमिति भवति निरवद्यम् ॥

## तत्वचन्द्रिका

**'यो वेद निहितं गुहायाम्'** इत्युक्तम्, तैत्तिरीयोपनिषदि चतुर्दशेऽनुवाके । तेन विष्णोरेव गुहानिहितत्वमित्युक्तम्, 'मान्त्रवर्णिकमेव च' इति, 'अस्मिन्नस्य च–',इति सूत्रयोर्बादरायणेन । अस्माभिश्च स्फुटमुक्तं तद्भाष्ये । तच्च ज्योतिरित्युक्तं मन्त्रान्तरे– **'ज्योतिर्हृदय आहितं यत्'** इति वाक्यशेषेण । सोऽयं मन्त्रः (ऋ.सं.६.९.६.) अग्निसूक्ते पठ्यत इति ज्योतिरग्निरेवेति **प्राप्तम्** । अग्निसूक्तमिति हि वैदिकाः पठन्ति, न विष्णुसूक्तमिति । ज्योतिःशब्दस्य लोकेऽग्नावेव **प्रसिद्धेश्च** । न केवलं लोके । किन्तु वेदेऽपि । 'विद्धि त्वमेतं निहितं गुहायाम्' इत्यादिना काठकेऽपि अग्नावेव **प्रसिद्धेश्च** । स्वर्ग्याग्निर्हि तत्रोच्यते । **तस्मादग्निरेव ज्योतिरिति** प्रकरणात् समाख्यातश्च **प्राप्तम्** । अतस्तैत्तिरीयेऽपि अग्निरेवोच्यत इति प्राप्तम् । **मन्दमनीषाणां मनसि** यत एवं विपरीतज्ञानं **प्राप्तम्, अतस्तदुत्तररूपमुत्तरं** सूत्रमाह करुणया भगवान् बादरायणः– **ज्योतिश्चरणाभिधानात्** ॥

### पण्डिताचार्यस्य सौजन्यातिशयः

अत आहेति वचनस्य भाष्येऽन्योऽर्थः । स्वोक्तावन्योऽर्थ इत्याह– **अत आहेति भाष्यस्येति**, पूर्वप्रयोगेष्वप्ययमेवार्थोऽनुसन्धेय इत्यतिदिशन् । **उत्तरं** प्रत्युत्तररूपम्, **उत्तरमुपरितनं सूत्रमाह** । भाष्यार्थमात्रमन्विष्य तदन्तमलब्ध्वा परिखिन्नानाम् । खिद परितापे । परितापोऽनलम्बुद्धिः । अधिगतानामपि सर्वेषामर्थानां भाष्यानुवादपूर्वकं विवरीतु**मध्यासितालस्यानाम्** । अधि आसितं वृथाऽऽत्मन्यारोपितम् । कोऽय**मन्योऽभिप्राय** इत्यत आह– **अतः पूर्वपक्षप्राप्तेरिति** । अनधिगतसमग्रबादरायणभावानां साक्षात् तत्पदव्याख्यानेऽनधिकारादित्यर्थः । के वयं भाष्यकारकरावलम्बादृते स्वयं बादरायणहृदयमवगन्तुम्? **सूत्रग्रहणं पुनरत्र** स्वकृतायां टीकायाम् । **अगृहीतप्रतीकस्य** प्रतीकग्रहणपूर्वकं भाष्येऽव्याख्यातस्येत्यर्थः ॥

एतेन गुरावादरातिशयमात्मनो व्यञ्जयति । सौजन्यातिशयं चाऽऽत्मनि । तदेतदुक्तम्– 'विद्या ददाति विनयम्' इति । तेन ज्ञानलवदुर्विदग्धानां दुर्मतान्धानामनधिकारं चाऽहास्मिन् शास्त्रे । स्वप्रतिष्ठादुर्मदान्धानामपि ॥

## ॥ ज्योतिश्चरणाभिधानात् ॥ १.१.२४. ॥

---

**॥ ज्योतिश्चरणाभिधानात् ॥** अस्मिन्नन्तर्भेदाधिकरणे गायत्रीविचारस्य बहुलयुक्तिसन्दब्धत्वेन महाविचारत्वाज्ज्योतिर्विचारोऽवान्तरोऽवगन्तव्यः । एकं चेदमधिकरणम्– उत्तरानुबद्धत्वात् प्रथमविचारस्य । एतन्नान्तरीयत्वात् तस्य । अत एव चानुवर्त्तयति प्रथमविचारमुत्तरत्र **'अग्निगायत्र्यादि–'** इति भाष्ये ॥

---

एतेनैतदप्याह– अवतरणिकावाक्यस्य द्वयी गतिः– 'इत्याह' इति, 'इत्यत आह' इति । स्वाभिप्रायगर्भं वचनम् 'इत्याह' इत्याचक्षते । पूर्ववादिशङ्कायाः प्रतिवचनगर्भं वचनम् 'इत्यत आह' इत्याचक्षत इति ॥

### अन्तर्भेदाधिकरणत्वसमर्थनम्

अन्तर्मध्ये समन्वेतव्यानां भेदादवान्तरभेदो यत्र तदन्तर्भेदाधिकरणम् । अन्तर्गतो भेदो यत्रेति वा । इदमेकमधिकरणमिति सर्वेषां भाष्यकाराणामैककण्ठ्यम् । अन्तर्भेदाधिकरणत्वं पुनरपूर्वं समस्त-वेदप्रवचनाचार्येण भगवत्पादेनैवाऽविष्कृतं बाह्वृच्यवेदस्थमग्निसूक्तं विषयवाक्यतयोदाहरता ॥

**महाविचारत्वादिति** । ज्योतिर्विचार एकेन सूत्रेण । ततस्त्रिभिर्गायत्रीविचारः । बहुलाश्च तत्र युक्तयः । अतः सोऽत्र मुख्यो विचारः । तत्पूरकत्वाज्ज्योतिर्विचारोऽवान्तरः । ननु किमनेनावान्तरभेदव्यायामेन? पृथगधिकरणद्वयमित्येवाभ्युपेयतामित्यत आह– **एकं चेदमधिकरणमिति** । ऐकाधिकरण्यं सम्प्रदायागतं सर्वव्याख्यातृसम्मतं च । गायत्रीविचारेणानुबद्धो हि ज्योतिर्विचारः । गायत्र्येव ज्योतिरिति पूर्वपक्षोत्थापनार्थत्वात् प्रथमसूत्रस्य । तन्निषेधाय चोत्तरं सूत्रम्– **इति चेन्नेति** । नह्यधिकरणारम्भ एव निषेधमुखानि सूत्राणि प्रायो भवन्ति । तस्मात् पूर्वसूत्रसापेक्षं हीदमुत्तरसूत्रम् । पूर्वविचारं विनोत्तरविचारस्यानुत्थानात् । नन्विदमधिकरणभेदेऽपि सेत्स्यति । पूर्वाधिकरणसापेक्षं ह्युत्तराधिकरणं भवति । स्यादेतदेवम् । यदि ज्योतिर्विचारः पर्यवसितः स्यात् । न चात्र तथा । उत्तराधिकरणेऽपि ज्योतिर्विचारस्यानुवर्तमानत्वात् । भाष्यकारसम्मतिं चात्राऽह– **अत एवेति** । यदि ज्योतिःसूत्रस्योत्तर-

ननु किमनेनान्तर्भेदप्रतिपादनप्रयासेन? यावताऽत्र प्रथमसूत्र एव च्छन्दोगोपनिषदं ज्योतिरभिधायिनीमुदाहृत्याप्रकीर्ण्णमेकमधिकरणमुत्प्रेक्षितुमुचितमौपनिषदानामिति । मैवम् । अग्निसूक्तमुदाहृत्य मन्त्रगोचरं विचारमारचयता परमवैदिकेनाऽचार्य्येण निखिलोऽपि वेदसमन्वयो विचारितो भवतीति भूयानयं लाभः । अपरथा पुनरुक्तिदोषं चावादिष्म । क्लिष्टकल्पनायां षड्विधत्वस्यागतिकत्वं वा स्यात् ।

---

सूत्रैरैकाधिकरण्यं नाभविष्यत् तदा गायत्र्यादिशब्दार्थरूप इत्येवावक्ष्यत्, न तु **अग्निगायत्रीत्यादि** । तस्मादेकमधिकरणमिदं चतुःसूत्रमिति भाष्यकृदभिमतमिति स्थितम् ॥

## उपनिषन्मात्रसीमितप्रज्ञाः

नन्वथापि च्छन्दोगवाक्यमेव ज्योतिःसूत्रेऽपि विषयवाक्यमित्यभ्युपगमे स्वरसमैकाधिकरण्यं भवति परभाष्येष्विव । तथाहि च्छन्दोगोपनिषदि– 'गायत्री वा इदं सर्वम्' इत्युपक्रम्य आम्नायते– 'अथ यदतः परो दिवो ज्योतिः' इति । तस्मादेकेनैव विषयवाक्येनैकाधिकरणत्वं सेत्स्यति । किं श्रुत्यन्तरान्वेषणप्रयासेन । सर्वे प्रतनाः व्याख्यातारस्तथैव च व्याचख्युरिति किमयं मुरारेस्तृतीयः पन्थाः? इति परेषामाक्षेपमनुवदति– **ननु किमनेनेत्यादिना** । **औपनिषदानामिति** पूर्वपक्षिणः परिहसतीव । उपनिषद्वचनमात्रमेव सूत्रविषय इति मन्यमानाः स्वयमनधिगतनिखिलवेदमन्त्रा अपरिशीलितब्राह्मणारण्यका उपनिषन्मात्रसीमितप्रज्ञा अनभिज्ञा एवमपलपन्तीति । निखिलवेदार्थनिर्णयाय प्रवृत्तस्य ब्रह्मसूत्रस्य न युक्तमेवं स्वाज्ञानेन सीमाबन्धनम् । तस्मादन्तर्भेदाधिकरणपक्षे महानर्थलाभः । **पुनरुक्तिदोषं चावादिष्मेति** । एवमौपनिषदानां पक्षे 'ज्योतिश्चरणाभिधानात्' इत्यनेन 'भूतादिपादव्यपदेशोपपत्तेः' इति सूत्रस्य पुनरुक्तिदोषश्च स्यादिति पूर्वमेवावादिष्म आनन्दमयाधिकरणे– 'ज्योतिश्चरणाभिधानादित्यत्र पादाभिधानादिति हि पुनरुक्तिदोषनिर्भयेन मायिनाऽभिहितम्' इति । न केवलं मायिना, तत्पुच्छावलम्बिभिरपरैरपि भाष्यकारैः । अपिच तत्पक्षे 'पादाभिधानात्' इत्येव सूत्रं स्यात् । तेन 'पादोऽस्य सर्वा भूतानि' इति श्रुत्यानुगुण्यं च स्यात् । अल्पाक्षरत्वं च स्यात् । न तु 'चरणाभिधानात्' इत्यनल्पाक्षरेण श्रुत्यननुगुणेन सूत्रेणेति नायं पक्षः विपश्चितां समाजे भ्राजते । तथाहि मायिभाष्यम्–'ज्योतिरिह

ब्रह्म ग्राह्यम् । कुतः? चरणाभिधानात् पादाभिधानादित्यर्थः' इति । 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात्' इति रामानुजीयं भाष्यम् । कुत एवमश्रौतमलघु च पदं सूत्रकार उपादत्तेति तैर्वक्तव्यं भवति । एतेनान्येऽपि भाष्यापदेशा व्याख्याता वेदितव्याः । अपि चात्रोक्तं चतुश्चरणत्वमन्यत्, 'पादोऽस्य–' इति समाख्याश्रुत्युक्तं चान्यदिति सेयमसङ्गतिमाला तेषां कण्ठभूषायते ॥

## अस्वरसा कल्पना

**क्लिष्टकल्पनायामिति** । तथाहि च्छन्दोगोपनिषदि पठ्यते– 'सैषा चतुष्पदा षड्विधा गायत्री' इति । षड्विधत्वं च पूर्वमुदितम्– 'गायत्री वा इदं सर्वं भूतम् । वाग् वै गायत्री । इयं वाव सा येयं पृथिवी । इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् । इदं वाव तद् यदिदमस्मिन्नन्तःपुरुषे हृदयम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः' इति । तेन वाग्-भूत-पृथिवी-शरीर-हृदय-प्राणभेदेन षड्विधा गायत्रीति मायिनां मतम् । तथाहि च्छन्दोगोपनिषदि मायावादभाष्यम्– 'गायत्री षड्विधा वाग्भूत-पृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति' इति । व्याचख्यौ चाऽनन्दगिरिः– 'वाग्भूतपृथिवी-शरीरहृदयप्राणभेदात् षड्विधां गायत्रीमनुचिन्त्याजहल्लक्षणया तदवच्छिन्नब्रह्मत्वं तदनु चिन्तयेत्' इति ॥

एवं स्थिते पुनः– 'भूतादिपादव्यपदेशोपपत्तेः' इति सूत्रस्य मायावादभाष्यम्– 'इतश्चैवमभ्युपगन्तव्यमस्ति पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मेति । यतो भूतादीन् पादान् व्यपदिशति । भूतपृथिवीशरीरहृदयानि हि निर्दिश्याऽह– 'सैषा चतुष्पदा षड्विधा गायत्री' इति । नहि ब्रह्मानाश्रयणे केवलस्य च्छन्दसो भूतादयः पादा उपपद्यन्ते' इति ॥

सेयं विदुषां श्रवणायापि क्लिष्टा, अस्वरसतयाऽर्थतश्च क्लिष्टा दुष्टा च कल्पना– यद् वाग्भूतपृथिवीशरीर-हृदयप्राणावच्छेदेन षड्विधत्वम् । वाक्प्राणयोः प्रहाणेन तेषामेव चतुर्णां पादत्वमिति । अद्भुतं व्याख्यानकौशलम् । चतुर्णां तावत् पादत्वेन विधया गतिरुक्ता । षण्णां पुनः किन्त्वेन चातुर्विध्यम्? का गतिः? अगतिकैव गतिः । तदेतदुक्तम्– **क्लिष्टकल्पनायां षड्विधत्वस्यागतिकत्वं वा स्यादिति** । सकृदुक्तानामेव केषाञ्चिद् व्यस्य पादत्वम्, समस्य विधात्वमिति द्वैविध्यकल्पना चेयं स्वमनीषामात्रमूलेति क्लिष्टा च दुष्टा च । प्रमाणविरोधाच्च । तं चोपरिष्टाद् वक्ष्यामः ॥

विष्णुरेव ज्योतिः । कर्ण्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान–' इत्यादिना कर्ण्णादिविदूरः ॥ * ॥

---

**विष्णुरेव ज्योतिः । कर्ण्णादीनां तद्विरुद्धचरणाभिधानात्** । तथाहि श्रुत्यर्थः– **कर्ण्णौ मे विरुद्धं पतयतः, चक्षुश्च मनश्च** विरुद्धं **चरति**, तेषामत्यन्तविदूरत्वेनेदं ज्योतिः स्थितम् । अत **आ** समन्ताद् दूरस्थबुद्धिरहं **किं वक्ष्यामि, किं मनिष्ये** वेति । हृदयस्थं हीदं ज्योतिरुच्यते । तद्दर्शनविरुद्धं चरणम् । उक्तं च गीतासु मनश्चरणस्य तत्वनिष्ठा-

---

अत्रापि रामानुजीयं भाष्यं चक्षुषी निमील्य मायावादभाष्यमेवानुसरति–'भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्पदा–' इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते' इति ॥

### 'विमे'श्रुत्यर्थः

॥ **ज्योतिश्चरणाभिधानात्** ॥ निरस्तः परावसुः । इदमिहार्वावसोः सदने सत्त्वा सूत्रार्थं विमिमृक्षामः । **'वि मे कर्णा–'** इति श्रुत्युक्तं **ज्योतिर्विष्णुरेव** । कर्णादीनां चरणाभिधानादिति सूत्रोक्तं हेतुवचनं **कर्णादीनां विचरणाभिधानादिति** भाष्ये विवृतम् । तत्रोपसर्जनस्यार्थमाह– **तद्विरुद्धचरणाभिधानादिति** । कर्णादीनामिति कर्णचक्षुर्मनसां मुखतः । वाचश्चार्थात् । **'किं स्विद् वक्ष्यामि'** इतिश्रवणात् । 'दूरआधीः' इति बुद्धेरपि **विदूरचरणाभिधानादि**त्युपस्कर्तव्यम् । अथ मन्त्रार्थमाह– **तथाहीति** । ऋग्वेदे षष्ठमण्डले नवमं सूक्तम्– 'अहश्च कृष्णमहरर्जुनम्' इत्यादिकं सप्तर्चम् । भरद्वाजस्यार्षम्, त्रिष्टुप् छन्दः । वैश्वानरोऽग्निर्देवतेति याज्ञिकानां सम्प्रदायः । तत्रेयमृक् षष्ठी । **मे** भरद्वाजस्येति साधकसामान्यस्योपलक्षणम् । पतयतः पततश्चरत इत्येतत् । कर्णाभ्यामेव हि भगवद्गुणश्रवणमिति तस्य प्राथम्यम् । औपनिषदं हि पुरुषं तमाचक्षते । विपरीतं श्रुत्वाऽन्यानपि विपरीते पथि पातयत इति सूचनाय पतयत इत्याह । 'आधिक्येऽधिकम्' इति सूत्रात् । अन्यान्यपीन्द्रियाणि विपथे पातयत इति वा । **चक्षुश्च विरुद्धं चरति** कामिन्यादिषु । मनश्च । **यत्** यस्मात् **इदं** हृदयगुहायां निगूढत्वेन

विरोधित्वम्– ‘चञ्चलं हि मनः कृष्ण–’ इति । स्पष्टत्वाय **विचरणाभिधानादित्युक्तम्** । मातृत्वादिन्द्रियं मात्रा, श्रोत्रादिवत् । तदतीतः **‘परो मात्रया’** इत्युक्तः ॥ ✻ ॥

स्थितं **ज्योतिः वि** विदूरं श्रोत्रादीनामगम्यत्वेन **आहितम्**, आत्मानमाच्छाद्य स्थितम् । **‘दूरऽआधीः’** इत्येकं पदमिति प्रतृण्णवादिनो वदन्ति । तदनुगुणतया तस्य ‘आ+दूर+धीः’ इत्यन्वितार्थमाह–**आ समन्तादिति** । **किं वक्ष्यामि किं मनिष्ये** वा? अवाङ्मनसगोचरं हि तत् । ‘यतो वाचो निवर्तन्ते अप्राप्य मनसा सह’ इति श्रुतेः । विरुद्धं श्रुत्वा किमविरुद्धं **वक्ष्यामि? उ** इति विकल्पे । **नु** इति प्रश्ने । **किं मनिष्ये वा?** किमविरुद्धं मनसा चिन्तयामि ध्यायामि वेति । उक्तार्थे भगवद्वचन-संवादमाह– **चञ्चलं हीति** । तदधीनं चक्षुःश्रोत्रयोरपि चापलमिति । चरणाभिधानादिति सूत्रपदं चरतीति मन्त्रवर्णानुगुण्यायाल्पाक्षरत्वाय च । विरुद्धचरणमपि चरणमेव हि । एवं धातुपिहितमर्थमुपसर्गः स्पष्टयतीत्येतावदेव । अत आह– **स्पष्टत्वाय विचरणाभिधानादित्युक्तमिति** ॥

‘ज्योतिश्चरणाभिधानात्’ इत्यष्टाक्षरेण सूत्रेण– ‘अष्टाक्षरप्रतिपाद्यं नारायणाख्यं ब्रह्मैव ज्योतिरित्याह, ‘नारायणपरो ज्योतिः’ इति मन्त्रवर्णादिति ॥

### ‘मात्राः’ इतीन्द्रियाणि विषयाश्च

कर्णादिविदूरत्वं विष्णोः, ‘यच्चक्षुषा न पश्यति’, ‘यच्छ्रोत्रेण न शृणोति’, ‘यन्मनसा न मनुते । तदेव ब्रह्म’ इति, ‘न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः’ इति च तलवकाराणां श्रुतौ, ‘यतो वाचः–’ इति तैत्तिरीयश्रुतौ च प्रसिद्धमेवेति आदिपदेनैताः श्रुतीरुपादायापूर्वां काञ्चन श्रुतिमाह– **स हि परो मात्रया तन्वा वृधानेत्यादिनेति** (ऋ.सं.७.९९.१.) । ननु परिमाणातीतत्वं ह्यस्य मन्त्रस्यार्थः । उदाहृतश्चास्मिन्नर्थे पूर्वमाकाशाधिकरणे जन्माधिकरणे च । सत्यमुदाहृतः । जन्माधिकरणोक्ता-दप्यधिकमर्थान्तरं ग्राहयितुमाकाशाधिकरणेऽप्युदाजहार । अनेकार्थाः श्रुतयो भवन्तीति करुणया शिष्यान् ग्राहयन्नत्र पुनरपूर्वमर्थान्तरं बुबोधयिषुरत्राप्युदाजहार । तदर्थान्तरं स्फुटमाह टीकाकारः– **मातृत्वादिन्द्रियं मात्रेति । श्रोत्रादिवदिति** । श्रोतृत्वाच्छ्रोत्रम्, पातृत्वात् पात्रम्, शास्तृत्वाच्छास्त्रमिति यथा । प्रयोगश्च ‘हिरण्मयेन पात्रेण–’, ‘संविच्छास्त्रं परं पदम्’ इत्यादिः । वक्ष्यति चात्रैव– ‘शास्त्रदृष्ट्या तूपदेशः–’ इति ॥

## लिङ्गजिज्ञासा

ननु मातृत्वादिन्द्रियं मात्रं स्यात् । श्रोत्रमितिवदेव । कथं मात्रा? अस्त्यत्र किञ्चिद् गुह्यम् । अभिमानिगतं लिङ्गमभिमन्यमानेषूपचर्यत इति तत्वम् । तदिदं शब्दस्वभाव इत्याचक्षते वैयाकरणाः । अत एव शब्दादयो विषयाः मात्रा इति स्त्रीलिङ्गपदेनोच्यन्ते । स्त्रियो हि तद्देवताः सुपर्णी वारुणी पार्वती च । छन्दांसि च गायत्री उष्णिगिति स्त्रीलिङ्गपदेनोच्यन्ते । स्वाहासञ्ज्ञादयो हि देवदयितास्तद्देवताः । यत्र स्त्रीपुंसयोरुभयोरपि देवतात्वविवक्षा तत्र नपुंसकपदेन व्यवहारः । यथेन्द्रियाणि श्रोत्रं चक्षू रसनमित्यादि । यदि तत्र विशिष्याभिमानिनीनां विवक्षा तदा स्त्रीलिङ्गं भवति । यथा श्रुतिरिति दृगिति वागिति बुद्धिरिति । अभिमानिविवक्षायां पुम्पदेन । यथा कर्णाविति । एवं यत्र देवभार्या इन्द्रियमानिन्य इष्यन्ते, सभार्याणां देवानामिन्द्रियमानित्वात्, तदा इन्द्रियाणि मात्रा इत्युच्यन्ते । तदेतत् 'मातृत्वात्' इति पदेनैव टीकाकृत् सूचयाम्बभूव । मातरइव प्रमां जनयतीति । तेन मातरश्च ताः । प्रमानिर्मातारश्च ते । इमा इन्द्रियदेवताश्छन्दोमानिन्योऽपि– स्वाहा, सञ्ज्ञा, रोहिणी, शचीति । तेन च्छन्दोऽतीतत्वमप्युदितं भवतीति ॥

अथ च विवक्षाभेदेन हि प्रयोगा भवन्ति । यत्र देवपदं विशेष्यम्, तत्र कर्णः कर्णाभिमानी देव इत्यर्थः । यत्र देवतापदम्, तत्र धीः धीमानिनी देवतेत्यर्थः । यत्र दैवतपदम्, तत्र चक्षुः चक्षुर्मानिदैवतमित्यर्थः । ननु कथं देवानामपि त्रिलिङ्गता? यदा पौरुषवचनम्, तदा देवाः । यदा विशिष्टशक्तिवचनम्, तदा देवताः । विशिष्टशक्तिमन्तो देवा इत्यर्थः । यत्र ततोऽपि मुख्यत्वम् तदा दैवतम् । तद् यथा– देवतानां च दैवतम् । शक्तिशालिष्वपि मुख्यो देव इत्यर्थः । इममर्थविशेषमविवक्षित्वा पर्यायपदत्वेन कोशकाराः पठन्ति । स्थूलोऽयं व्यवहारः । नहि देवभाषायामेकार्थं पदद्वयं क्वचिद् भवति ॥

भगवद्भिरुद्धगतिमन्ति च मुख्यत इमानीन्द्रियाणि– श्रुतिर्दृष्टिर्वाग् बुद्धिरिति । तस्माच्च युक्तमुक्तम्– इन्द्रियं मात्रेति । मात्रयेति समुदायवचनम् । तृतीया पञ्चम्यर्थे । 'पञ्चसु तृतीया' इति सूत्रात् । तदतीतस्तदगोचरः ॥

## ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्प्पणनिगदात् तथाहि दर्शनम् ॥ १.१.२५. ॥

'अथ यदतः परो दिवो ज्योतिर्द्दीप्यते–' इत्युक्तस्य ज्योतिषः, 'गायत्री वा इदं सर्वम्–' इति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न । तथा चेतोऽर्प्पणार्त्थं हि निगद्यते ।

---

**॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्प्पणनिगदात् तथाहि दर्शनम् ॥ 'अथ यदतः परो दिवो ज्योतिर्द्दीप्यते'** इत्यत्र ज्योतिरुच्यते । तस्मिन् ब्राह्मणे गायत्रीशब्देनोपक्रमः कृतः । तस्य चानुपसञ्जातविरोधित्वेन बलवत्त्वात् ज्योतिश्शब्दस्य तद्विषयत्वोपपत्तिः । 'तेजो वै ब्रह्मवर्चसं गायत्री' इति श्रुतेः । अतोऽत्रापि न विष्णुर्ज्योतिरिति पूर्वपक्षः ।

---

कुतः **परो मात्रया? तन्वा** देहेनापि **वृधान** अपरिच्छिन्न । परिच्छिन्नानीन्द्रियाणि कथमपरिच्छिन्न-मीयुः ॥

मन्त्रोऽयं विष्णुसूक्तगत इति नास्य विष्णुपरत्वे प्रतिवादिनोऽपि विप्रतिपत्तिः । 'न ते विष्णो–' (७.९९.२.) इति चोत्तरो मन्त्रः ॥ * ॥

छन्दोगोपनिषदस्तृतीयाध्यायस्य द्वितीयं ब्राह्मणं तावत्– **'गायत्री वा इदं सर्वम्–'** इति गायत्रीशब्देन उपक्रम्य, **'अथ यदतः परो दिवो ज्योतिः–'** (छं.३.२.७.) इत्यादिना ज्योतिःशब्देन उपसंह्रियते ॥

### गायत्री चाग्निः स्यात्

तदेतदाह भाष्यकारः– **अथेत्यादिना** । **इत्युक्तस्य** इत्युपसंहारवाक्योक्तस्य । आरम्भ इत्युपक्रमः । उपक्रमेऽपि गायत्रीपदेनैव वाक्यारम्भः **समारम्भः** । तस्मात् समग्रं ब्राह्मणं गायत्रीपरमिति स्थितम् । उपसंहारवाक्ये श्रूयमाणं ज्योतिरपि उपक्रमानुगुण्याय गायत्र्याख्यं ज्योतिरेवेति उपक्रमपराक्रमवादिनो वदन्ति ॥

तथाहि श्रूयते– 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च । वाग् वै गायत्री वाग् वा इदं सर्वं भूतं गायति च त्रायते च । या वै सा गायत्री इयं वाव सा येयं पृथिवी । अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयते । या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । यद्वै तत्पुरुषे शरीरमिदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे हृदयम्, अस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । सैषा चतुष्पदा षड्विधा गायत्री' (३.२.१.) इति । ततो भूतादिपादव्यपदेशाख्यं समाख्यानम्– 'तदेतदृचाऽभ्यनूक्तम्– तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति' (३.२.२.) इति ॥

## समग्रा श्रुतिश्छन्दःपरा

अयमिह पूर्ववादिसम्मतो मन्त्रार्थः– गायत्री वा इदं सर्वम् । सर्वच्छन्दसां मूलत्वात्, सर्ववेदमातृत्वात्, प्रणवव्याख्यानरूपत्वाच्च गायत्र्येव सर्वं वाङ्मयम् । यथा ब्रह्म मन्त्रवेद्येषु प्रधानं तथा गायत्री मन्त्रेषु प्रधानम् । गायत्र्येव यदिदं किञ्च पञ्चभूतनिर्मितं भूतजातं तदपि गायत्री । वाचा हि ज्ञायते सर्वं भूतम् । गायत्री च वाक्षु मातेव प्रधानतमा । तस्माद् वाग् वै गायत्री । वाचा हि तन्त्या सर्वं भूतजातं बद्धम् । वाग् वै इदं सर्वं गायति शब्दयति गौरयमश्वोऽयं पुरुषोऽयमिति । त्रायते च– 'किं ते भयम् । वयं ते रक्षकाः स्मः । मा भैषीः' इति रक्षकपुरुषस्य वाचा, मातुरिव बालः, भयान्निवृत्तस्त्रातो भवति । सेयं गायत्री पृथिवीवत् । यथा पृथिवी सर्वभूतानामाश्रयत्वेन मातृस्थानीया एवं गायत्री सर्ववाङ्मयस्य मातेव । पृथिवीं कोऽपि नातिशीयते नातिवर्तते । एवं गायत्रीं श्रैष्ठ्ये कोऽपि मन्त्रो नातिवर्तते ॥

यथा पृथिव्यां पुरुषस्य साधकजीवस्य पुरुषार्थसाधनं शरीरं सारः, तथा मन्त्रेषु गायत्री सारः । तस्माद् गायत्री पुरुषशरीरमिव । अस्मिन् सर्वे प्राणाः सर्वाणि भूतानि प्रतिष्ठितानि । तथा गायत्र्यां सर्वे मन्त्राः । शरीरं नातिवर्तन्ते प्राणाः । गायत्रीं मन्त्राः ॥

शरीरस्य सारः सन्देहः । हृत्पुण्डरीकम् । सर्वसार इत्येतत् । तथा गायत्री सर्वसारः । हृदये हि प्राणाः सेन्द्रियाणि भूतानि सर्वाणि । तथा गायत्र्यां सर्वे मन्त्रा इत्यादि पूर्ववत् ॥

सैषा बह्वृचानामष्टभिरक्षरैस्त्रिपदाऽपि गायत्री याजुषाणां मते षड्भिरक्षरैश्चतुष्पदा। बह्वृचा अपि चतुष्पदां क्वचित् पठन्ति– 'इन्द्रः शचीपतिः । बलेन पीडितः । दुश्च्यवनो वृषा । समित्सु सासहिः' इति । तदेवं गायत्रीमन्त्रविशेषेण प्रस्तुत्य तत्सामान्यात् गायत्रीच्छन्दोमात्रप्रशंसयोपसंहरति। समाख्यावाक्येन च चतुष्पात्त्वेन परमपुरुषसाम्यमभिधाय गायत्र्याः परममन्त्रत्वं द्रढयति ॥

तमेव गायत्र्या विभूतिविस्तारम्– 'या वै सा गायत्री–' इत्यादिना ब्राह्मणशेषेणाभिधायान्ते तामेव विभूतिमुपसंहरति– 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यस्मिन्नन्तः पुरुषे ज्योतिः । तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद् दृष्टं श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद' (३.२.८.) इति ॥

अन्तः पुरुषे हृदयं गायत्रीति पूर्वमुक्तम् । हृदये यज्ज्योतिः साऽपि गायत्रीत्यनेनोच्यते गायत्र्याः सर्वसारताबोधनाय। यद्धृदयगतं ज्योतिस्तदेव सर्वोपरिगतं ब्रह्माख्यं ज्योतिरिति गायत्रीमेव परब्रह्मत्वेन ध्यायेदित्यर्थः । युक्तं च ज्योतीरूपत्वं गायत्र्याः । **'तेजो वै ब्रह्मवर्चसं गायत्री'** इति श्रुत्यन्तरे तस्या एव तेजस्त्वेनोपास्यत्वविधानात् ॥

तस्मात् समग्रं ब्राह्मणं गायत्रीपरम् । न विष्णुपरमिति प्राप्ते प्राह सूत्रकार इत्याह भाष्यकारः–
**छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् ॥**

## सूत्रे साङ्ख्यम्

अत्र छन्द इति गायत्र्येवेति साङ्ख्येन सूचयति । चतुर्विंशत्यक्षरा गायत्री । चतुर्विंशत्यक्षरं हि सूत्रम् । गायत्रीति च्छन्दसोऽभिधानम् । अतस्तत्प्रकरणपठितं ज्योतिःपदमपि च्छन्दस एवाभिधानम् । एवमाद्यन्तयोश्छन्दोभिधानात् मध्यमपि छन्दस एवाभिधानं निरूपणीयमित्यायातम् । तस्मात् समग्रे प्रकरणे छन्दस एवाभिधानात् विस्तरेण निरूपितत्वात् नास्मिन् प्रकरणे विष्णोरभिधानमिति । **तस्मान्न विष्णुरिति** भाष्यस्यायमर्थः– तस्मात् गायत्रीपदेन प्रसिद्धस्य छन्दस एवाभिधानौचित्यात् नास्यामुपनिषदि ज्योतिःशब्देन विष्णुरुक्तः । यस्मादस्यामुपनिषदि न ज्योतिरिति विष्णुरुक्तः, तस्मात्

अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्प्पणार्थं हि निगद्यते ॥

---

**अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्प्पणार्थं हि निगद्यत** इत्यस्य स्वपदवर्ण्णनरूपस्य भाष्यस्यायमर्थः– अग्न्यादितेजश्शब्दानां गायत्र्यादिच्छन्दश्शब्दानां चार्थस्वरूपत्वेन निरूपणीयो विष्णुरेवेति बुद्ध्यवतरणार्थं हि तच्छब्दैर्न्निगद्यते ॥

---

'**वि मे कर्णा–**' इति मन्त्रेऽपि न विष्णुरुक्त इति । तर्हि किमुच्यते? गायत्री स्यात् । अग्निरेव वा स्यात् । सर्वथा न विष्णुरिति पूर्वपक्षिणो हृदयम् ॥

सूत्राक्षराणि व्याचष्टे– **तथा चेतोर्पणार्थं हि निगद्यते** । निगदादिति पञ्चम्यर्थः हीति । अग्निस्थो विष्णुरेवाग्निशब्दमुख्यार्थ इति चेतसि अर्पणार्थमनुसन्धानार्थं संहितायामग्निसूक्तमित्याद्युच्यते । '**अग्निगायत्र्यादि–**' इत्यादिपदेन अग्निपर्यायाः सर्वे तेजःशब्दाः । एवमुपनिषदि ज्योतिर्मयो नारायणः गायत्रीच्छन्दःप्रतिपाद्यो न केवलम्, किन्तु गायत्र्यादिसर्वच्छन्दःशब्दप्रतिपाद्य इति चेतोऽर्पणार्थं गायत्रीपदेन निगद्यते ॥

**स्वपदवर्णनरूपस्य भाष्यस्येति** । 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति हि भाष्यलक्षणज्ञाः प्राज्ञा मन्यन्ते । एतेनैव सूत्राद् व्यावृत्तिर्भाष्यस्य । स्वपदवर्णनं च द्वेधा भवति– स्ववचनेन प्रमाणान्तरवचनेन चेति । प्रमाणान्तरवचनेन प्रायः सर्वत्र । अत्र तु स्ववचनेनैव स्वपदानि वर्णयामासेत्यर्थः । एतेन वाचालत्वं परभाष्येषु दोष इति सूचयामास ॥

## गायत्रीशब्दार्थः

चेतोऽर्पणार्थमित्यस्य तात्पर्यमाह– **बुद्ध्यवतरणार्थमिति** । चेत इति मनःसामान्यमुच्यते । तत्तु निर्णयपर्यन्तमिह विवक्षितमिति बुद्धीत्याह । अवतरणमनुसन्धानं निरन्तरचिन्तनं ध्यानमित्येतत् । चेतसः बुद्धेः सर्वात्मना भगवत्यर्पणमिति ध्यानशब्दार्थं चानेनाऽह । **तथाहि दर्शनं श्रुतिः– गायति च त्रायति** चेत्यादि । ज्ञानिनां ध्यानजं दर्शनं चैतदित्याह– तथाहि ददृशुः परावरदृशः । यद्यपि च्छन्दोगानामुपनिषदि

## तथा हि दर्शनम्– ‘गायति च त्रायति च’ इत्यादि ॥

---

**कथमन्यविषयतया प्रसिद्धानामन्यस्यैव मुख्यार्थत्वमित्यत आह– तथाहि दर्शनं गायति च त्रायति चेति ।**

---

‘गायति च त्रायते च’ इति पठन्ति । अतः समाख्याश्रुत्यन्तरपाठोऽयमिति वदन्ति । नैवं पण्डिताचार्यः प्राह । नान्यः पन्था निर्णयाय विद्यते । अतः स्यादपि ‘त्रायति’ इत्येव भाष्यसम्मत औपनिषदः पाठः । त्राणं च निजाश्रितजनस्य भूत्या इति परस्मैभाषा । अयमर्थः– भगवान् हयग्रीवरूपेण निरन्तरं गायति वेदान् । त्रायते च जगदिति गायत्री । मन्त्रगतो भगवान् हयशीर्षवान् स्त्रीरूप इति ददृशुः । तेन स्त्रीलिङ्गम् । अनेन निर्वचनेन च्छन्दोव्यावृत्तिः । नहि च्छन्दः स्वयं गायति । किन्तु गायन्तं त्रायते । भगवान् मुख्यतस्त्रायते गायन्तम्, स्वयं च गायति ब्रह्मणे । अथ त्रायते च ब्रह्माणम् । ‘यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै’ इति हि श्रुतिः । प्रहिणोति गायति विदधाति त्रायते चेत्यर्थः । दधातिं पोषणे च हि पठन्ति । ‘तेने ब्रह्म हृदा य आदिकवये’ इति च भागवते ॥

> ‘तन्निःसृतत्वाद् वेदानां गायकस्त्राति चाखिलम् ।
> ‘अतो गायत्रिनामाऽसौ वासुदेवः परः पुमान्’ इति सत्तत्वे ॥

त्रातीति प्रतनं धातुरूपम् । ‘त्राहित्राहि जगन्नाथ’ इत्यादिप्रयोगदर्शनात् । अतः अखिलं त्राति त्रायत इत्यर्थः । ‘आधिक्येऽधिकम्’ इति सूत्रात् । यद्यपि स्त्रीरूपः । अथापि परः पुमान् । रूपाणामत्यन्ताभेदात् । य एव हयग्रीवः स एव हि वासुदेव इति ॥

### निगदशब्दार्थः

निश्चितमसन्दिग्धं गदनं निगदनम् । उपासनानिगमनार्थं गदनं निगदनम् । निर्वचननिदर्शनेन गदनं च निगदनम् । एतन्निदर्शनेनान्यत्राप्येवं चेतोऽर्पणीयमिति गदनं च निगदनमिह विवक्षितम् ॥

---

'इयं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते' इत्यादिकमादिशब्दाद् द्रष्टव्यम् ।

---

भाष्ये 'इत्यादि' इत्यादिपदोपात्तं श्रुतिभागमाह– **इयं वाव सेत्यादि** । अत्र गायत्र्या यत् षड्विधत्वमुक्तम्, तदपि विष्णुपरतानिगदनमेव । नहि गायत्रीच्छन्दस उक्तं षड्विधत्वमस्ति । 'षड्विधा प्रतिपादं षडक्षरा' इत्यर्थकथनं स्वकपोलकल्पनैव । नहि तथा गायत्रीपरमार्थविद ऋषयो निगदन्ति । नापि षडक्षरपादत्वं प्रसिद्धगायत्र्यां समस्ति । तथाहि– 'इदं वाव' इत्यतः पूर्वतनं च वाक्यमत्रोपसङ्ग्रहीतव्यम्– 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च । वाग् वै गायत्री । वाग् वा इदं सर्वं भूतम्' इति ॥

## उपनिषदि भूतशब्दार्थः

तथाचायमर्थः– महतो मन्त्रस्य महद् रहस्यमिदमुपासनमिति उपनिषदध्यायकान् जागरयन् किञ्चिदिव गुह्यभाषयाऽऽह– यदिदं भूतं प्रभूतं परिपूर्णं मत्स्यादिरूपं तत् सर्वं गायत्री वै, गायत्रीपदवाच्यो भगवानेव । पादत्वेन परिगणितसर्वभूतगतं च रूपम् । प्रादुर्भूतं च सर्वमवताररूपं भूतम्–

'यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् ।
'तदिदं भगवान् विष्णुः सर्वान्तःस्थित एव च' इति,
'भूमा भूतमिति प्रोक्तः पूर्णत्वात् पुरुषोत्तमः ।
'अनन्यापेक्षमुद्रिक्तं सर्वस्य च नियामकम् ।
'यद्यत् तत्तद् विष्णुरेव नान्यदेतादृशं क्वचित्' इति सत्तत्वे ॥

भूतिमत्त्वाच्च भूतम् । 'अस्य महतो भूतस्य निःश्वसितमेतत्' इति श्रुतिः । 'एको विष्णुर्महद् भूतम्' इति च स्मृतिः । अत एव प्रसिद्धो गायत्रीमन्त्रोऽपि दशभिः पदैर्दशावतारान् स्तौति । चतुर्विंशतिभिरक्षरैः चतुर्विंशतिमूर्तीः । ण्यमिति द्वे अक्षरे णयौ त्रिविक्रमवामनयोरभिधायिके । त्रिभिः पादैः जाग्रत्स्वप्नसुषुप्तिप्रदानि रूपाणि विश्वतैजसप्राज्ञाभिधानानि । समष्ट्या तुरीयम् । अङ्गन्यासाक्षरैः नारायणादीनि पञ्चरूपाणीत्याद्यवगन्तव्यम् ॥

## स्त्रीरूपो भगवान्

स एव गायत्रीनामा भगवान् वाचि संस्थितः, वचनाद् वाङ्नामा हयग्रीवमूर्तिः । इयं वाव सा परदेवता पृथिवीस्थिता पृथुत्वात् पृथिवीनामा । अस्यां हीदं सर्वं जगज्जातं प्रतिष्ठितम् । गायत्रीसंस्थित एव सर्ववाङ्मये संस्थितः । वाङ्मयगत एव वाङ्मयेन व्यवहर्तुर्जीवजातस्याधिष्ठाने पृथिव्यां संस्थितः । एतां न कश्चिदतिशीयते सर्वात्मना नातिशेत इत्येतत् । स एव शरीराख्ये जीवस्वरूपे स्थितः, शंरूपत्वाद् रतिरूपत्वादीरणाच्च शरीरनामा । 'यस्याऽत्मा शरीरम्' इति च श्रुतिः । अथ जीवस्वरूपस्य हृदयगतः हृद्ययनात् हृदयनामा । तत्र गायत्रीगतं स्त्रीरूपम् । अतः स्त्रीलिङ्गनाम्ना निर्देशः । भूतमिति मत्स्यादयः पुंरूपाः मोहिनी च स्त्रीरूपा । तस्माद् भूतमिति नपुंसकोक्तिः । वाचि संस्थिता हयशीर्षा स्त्री । पृथिवीसंस्था च स्त्री । स्त्रीजीवे स्त्रीरूपम् । पुंजीवे पुंरूपम् । अतः शरीरमिति नपुंसकपदम् । एवं हृदयगतमपि स्त्रीषु स्त्रीरूपम् । पुंसु पुंरूपम् । तस्माद्धृदयम् । तदेवं गायत्री, भूतम्, वाक्, पृथिवी, शरीरम्, हृदयमिति षड्भिर्विधाभिः तत्तद्गतत्वेन तत्तत्पदमुख्यार्थत्वेन च भगवति चेतोऽर्पणार्थं ह्येवं निगद्यते– **षड्विधा गायत्रीति** । गायत्रीनामा भगवान् षोढा चेतोऽर्पणेन षड्विध उच्यत इत्यर्थः ।

सेयं गुह्यभाषा संम्यगुद्घाटिता भाष्योदाहृते सत्तत्ववचने–

'स एव भगवान् विष्णुर्वाङ्नामा वाचि संस्थितः ।
'वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः ॥

'स एव पृथिवीनामा पृथिव्यामपि संस्थितः ।
'विष्णौ हि पृथिवीसंस्थे जगत् सर्वं प्रतिष्ठितम् ॥

'नातिशेते च तं कश्चित् स हि सर्वाधिको हरिः ।
'पृथुत्वात् पृथिवीनामा स एवान्तःशरीरगः ॥

'शरित्वादीरणाच्चैव शरीरं भगवानजः ।
'पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः ॥

'सर्वच्छन्दोऽभिधो ह्येष सर्वदेवाभिधोऽप्यसौ ।
'सर्वलोकाभिधोऽप्येष तेषां तदुपचारतः' इति वामने ॥ ✻ ॥

---

'पृथुत्वात् प्रथितत्वाच्च पृथिवी विष्णुरुच्यते' । अग्रणीत्वादगनेतृत्वाददनाच्चाग्निः । ऊषणकरत्वादुष्णिक् । स्वेच्छानुरोधेन स्तोभनादनुष्टुप् । त्रिभिर्वेदैः स्तूयत इति त्रिष्टुप् । छन्द्यत्वाच्छन्द इत्येवं द्रष्टव्यम् ॥ ✻ ॥

---

'योऽसौ जीवे स्थितो विष्णुः शरीरमितिनामकः ।
'शन्त्वाच्च रतिरूपत्वादीरणाच्च स एव तु ॥

'जीवचैतन्यरूपस्य हृदयेऽपि व्यवस्थितः ।
'अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः ॥

'गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः ।
'द्वितीयश्चैव मत्स्यादिर्भूतनामाऽवतारगः ॥

'तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः ।
'चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः ॥

'जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः ।
'पञ्चमस्तद्धृदिस्थस्तु षष्ठो हृदयनामकः ।
'गायत्रीनामको विष्णुरेवं षड्विध उच्यते' इति ॥

तत्र तावद् दिङ्मात्रदर्शनाय पृथिवीनाम्नश्चेतोऽर्पणक्रममाह– **पृथुत्वात् प्रथितत्वाच्चेति** । प्रथत इति पृथिवी । तस्यैव द्वेधा विवरणम्– **पृथुत्वात् प्रथितत्वाच्चेति** । अन्यत् सर्वं छन्दोगभाष्यादवगन्तव्यम् ॥

## अधिकरणत्रयसारः

गायत्रीवचनं सर्वच्छन्दसामुपलक्षणमित्याह भाष्ये वामनवचनेन– **सर्वच्छन्दोभिधो ह्येषः** । अत एव सूत्रकारोऽपि गायत्र्यभिधानादित्यनुक्त्वा छन्दोऽभिधानादित्याह । अग्निसूक्तमित्यादिव्यपदेशस्य गतिमाह– **सर्वदेवाभिधोऽपीति** । लोकानां छन्दसां च सन्निहितत्वात् तद्वं भगवन्तम्, 'एषः' इत्याह । देवानां विप्रकृष्टत्वात् **'असौ'** इत्याह । **सर्वलोकाभिध** इत्यनेन 'अस्य लोकस्य का गतिः' इत्याकाशाधिकरणार्थोऽपि सङ्गृहीतः । **सर्वदेवाभिध** इत्यनेनान्तरधिकरणार्थोऽपि ॥

**तेषां** छन्दसां देवानां लोकानां च **तत्** तदभिधत्व**मुपचारतः** । मुख्यार्थस्योप समीपे चरणमुपचारः । योगार्थसामग्र्यं विनाऽपि लोकप्रसिद्धिमात्रेण व्यवहरणमित्यर्थः ॥

## लोकवेदपदानां निर्वचनम्

सर्वलोकभिध इत्यस्योदाहरणं टीकायाम्– **पृथिवी विष्णुरुच्यत** इति । तस्याः षड्विधासु प्रस्तुतत्वात् प्रथमनिर्देशः । देवेष्वग्नेः ज्योतिःसूत्रे प्रस्तुतत्वात् तदनन्तरम् । अग्रे नीयत उपासकैरित्यग्निः । तदुक्तम्– 'अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत्' इति । अग्रे नयतीत्यग्निः । अगं नयतीत्यग्निः । स्वयमगमङ्गं च नयतीत्यग्निः । अत्तीत्यग्निः ॥

गायत्रीशब्दार्थः श्रुतावेवोक्तः । अत उष्णिगादिचेतोर्पणक्रमं निगदति– **ऊषणकरत्वादित्यादि** । दाहकारणत्वादित्यर्थः । ऊषयतीत्युष्णिक् । ऊष रुजायाम् । **स्तोभनात्** असतां क्रियानिरोधात् । ष्टुभु स्तम्भे । 'स्तम्भः क्रियानिरोधः' इति क्षीरस्वामी । लोकानां स्वेस्वे कर्मणि निरोधनाद् वा । अनुष्टोभत इत्यनुष्टुप् । अनुष्टोभयतीति वा । 'उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति–' (अ.सू.८.३.६५) इति षत्वम् । बृहतीति स्फुटम् । पञ्चरूपत्वाद् दशरूपत्वाच्च पङ्क्तिरिति च । पङ्क्तिरथ इतिवत् । अतस्त्रिष्टुप्शब्दार्थमाह– **त्रिभिरिति** । वैयाकरणास्तु 'त्रिभिः स्तोभते' इत्येवनिर्वदन्ति । जगति ततत्वाज्जगतीति च स्फुटम् । भगवतः स्त्रीरूपाण्येतानि । छन्दांसि हि मुख्यतः स्त्रीदेवत्यानि ॥

**छन्द्यत्वात्** छन्दः । छदि संवरणे । छन्द्यते संवृतो भवतीति छन्दः । अभिप्रेयते सर्ववेदार्थत्वेन ज्ञानिभिरिति वा छन्दः । 'छन्दो वशेऽप्यभिप्राये' इति मेदिनी । इत्येवम्प्रकारेण सर्वमधिवेदपदजातं

'तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति–

**॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १.१.२६. ॥**

---

॥ **भूतादिपादव्यपदेशोपपत्तेश्चैवम्** इति सूत्रं योजयति– **तावानस्येत्यादिना** । प्रसिद्धार्थानां सूत्राणामपृथग्भाष्यकरणं यत् तल्लाघवाय । एषा हि श्रुतिः 'सैषा चतुष्पदा षड्विधा गायत्री' इति पूर्वप्रस्तुताया गायत्र्याः षड्विधत्वमुक्तमनूद्य चतुष्पादत्वं विधाय तत्र प्रमाणमेतामृचमाह– 'तदेतदृचाऽभ्यनूक्तं तावानस्य' इति । अनया ह्यृचा गायत्र्या भूतादयश्चत्वारः पादा व्यपदिश्यन्ते । न च तस्याश्छन्दस्त्वे तदुपपद्यते । उपपद्यते च

---

भगवत्परं द्रष्टव्यम् । महैतरेयोपनिषदुक्तरीत्या मण्डलादिनामानि, मण्डलर्षिनामानि, अनुवाकाध्यायाष्टक-सूक्तवर्णपदाक्षरादिनामानि चार्थचिन्तनपूर्वकं भगवत्यनुसन्धेयानीति ॥ ❋ ॥

## प्रतिसूक्तमोङ्करणमनार्षम्

॥ **भूतादिपादव्यपदेशोपपत्तेश्चैवम्** ॥ **'तावानस्य–'** इत्यादिः सामसंहितायां पुरुषसूक्तपाठः । तमेव च्छन्दोगानामुपनिषदपि पपाठ । **सूत्रं योजयतीति** । सूत्रं स्वभाष्येण योजयति यथोभे मिलिते एकं वाक्यं निष्पादयत इत्यर्थः । **अपृथग्भाष्यकरणमिति** । भाष्यवाक्यस्य सूत्रेण सहैकवाक्यतासम्पादन-मित्यर्थः । लाघवाय भाष्यस्याप्यल्पाक्षरत्वाय, अर्थग्रहणसौलभ्याय च । यथा पूर्वमीक्षत्यधिकरणे 'साक्षी चेता केवलो निर्गुणश्चेति श्रुतत्वाच्च' इति । प्रायः सर्वत्र सूत्रमुपन्यस्य व्याचष्टे । नात्र तथा । किन्तु सूत्राभिप्रेतं मन्त्रं पठित्वा सूत्रमुपन्यास लाघवाय । परस्ताद् भाष्यकरणेऽपि तद् वाक्यं पूर्वमाकृष्या-न्वित्यैव हि व्याख्येयम् । तद् वरं पूर्वं भाष्ययोजनं लाघवादित्यर्थः । यत्र क्वचिद् व्यत्यस्य पाठः, तत्र कारणान्तरं भवति । ततश्च भाष्यगताऽऽनुपूर्वी च महार्थगर्भितेत्युक्तं भवति ॥

एतेनाऽद्यन्तयोः सूत्रस्य नियतमोङ्कारं पठन्तो निरस्ताः । मध्य ओङ्कारेण व्यवधाने भाष्यस्य सूत्रेणा-पृथक्करणायोगात् । स्वयमेव चोङ्कारं विरहय्य पाठाच्च– **'भूतादिपादव्यपदेशोपपत्तेश्चैवमिति सूत्रम्'**

विष्णुत्वे । 'पुरुष एवेदम्–' इत्यृचा यद् विष्णोः सर्वेशानत्वमुक्तं तद्धि तावत् 'तावान्' इति परामृश्यते । नच तावानेव केवलमस्य महिमा, किन्तु ततोऽपि ज्यायानयं पुरुषः ।

---

इति । अत एव भगवत्पादोऽपि न्यायविवरणे– 'अथातो ब्रह्मजिज्ञासेति' इति प्रतीकं जग्राह । नहि ग्रन्थादौ क्वापि प्रथमपदं विहाय प्रतीकग्रहणं दृष्टम् । 'अथशब्दो मङ्गलार्थः' इति च भाष्ये । वाक्यारम्भे हि मङ्गलाचरणं न द्वितीयेन । अत एव पद्मनाभतीर्था अप्याहुः सन्न्यायरत्नावल्याम्– 'ओङ्कारः पृथगुच्चारितो वेदितव्यः । नाथशब्दवत् सूत्रोपनिबद्धः' इति । पृथगुच्चारणमपि प्रथमसूत्र एव नोत्तरसूत्रेष्वपि । 'स्रवत्यनोङ्कृतं ब्रह्म' इति वचनस्य ग्रन्थारम्भमात्रविषयत्वात् । अत एव सम्प्रदायविदो हृषीकेशतीर्थादयोऽपि अनोङ्कृतान्येवोत्तरसूत्राणि लिलिखुः । सम्प्रदायप्रदस्य भगवत्पादस्य श्रीमुखादेव हि ते साक्षाद् विदितसम्प्रदायाः । तस्मादशास्त्रीयोऽयमनार्यसम्मतश्च सम्प्रदायः, यत् प्रतिसूत्रमाद्यन्तयोरोङ्कारेण सम्पुटीकरणं नाम । अत एव सूत्रेणैकवाक्यतया भाष्यं पपाठ । तद् यथा– 'तद्धेतुव्यपदेशाच्च, को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति' इति । अन्ते पठने कारणं तु तत्रैवोक्तम् । एवं स्थितेऽप्यहो बभ्रमुरेव पण्डितम्मन्याः प्रतिसूत्रमोङ्कारमाम्रेडयन्तः ॥

## पुरुषसूक्तस्य भेदपरं शौनकभाष्यम्

**तदुपपद्यत** इति । नहि प्रसिद्धा गायत्री चतुष्पदा । नापि भूतादयस्तस्याः पादाः । अतः विष्णुपरत्वेन मन्त्रवर्णस्यार्थमाह– **पुरुष एवेदमित्यृचेति** । यदिदं वर्तमानं सर्वम्, यच्च भूतम्, यच्च भव्यं भविष्यच्च तस्य सर्वस्य न केवलम्, अमृतत्वस्य च स एवेशान इति मुक्तामुक्त**सर्वेशानत्वमुक्तम्** । तथाहि शौनकीयं भाष्यम्– 'स एव पुरुषः इदं वर्तमानकं सर्वम्, यच्च भूतमतीतम्, यच्च भव्यं भविष्यत्, तस्य कालत्रयस्येशानः । न केवलं कालत्रयस्येशानः । उत अमृतत्वस्यापि मोक्षस्यापि । उतशब्दोऽपिशब्दार्थे' इति ॥

यदिदं भूतं भव्यं च तत् सर्वं पुरुषे नारायण एवाऽश्रितमिति वा । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति वचनादधीनस्य जगतः पुरुषाभेदेनोपदेश इति तु प्रसिद्धोऽर्थः । 'सप्तसु प्रथमा' इति च । तस्मात् सप्तम्यर्थे 'पुरुषः' इति प्रथमा । 'पुरुषे' इत्येव वा प्रतृण्णम् ॥

‘सुवर्ण्णं कोशं रजसा परीवृतं देवानां वसुधानीं विराजम् ।
‘अमृतस्य पूर्ण्णां तामु कलां वि चक्षते पादं षड्ढोतुर्न्न किला विवित्से’
इति श्रुतेः पाद इति चैकदेशपरिमितं चतुर्भागबल इतिवद् भिन्नं च ॥

---

अस्य ह्येकः पादः सर्वाणि भूतानि, त्रयोऽनन्तासनवैकुण्ठक्षीराब्धिषु दिवि स्थितेषु द्योतमानेषु । त्रयाणां पादानां समुदायः त्रिपात् । स्वरूपांशत्वात् तत् **‘अमृतम्’** इत्युक्तम्, भिन्नांशविवक्षया भूतपादोक्तिः—

‘त्रिभिः स्वरूपपादैश्च भिन्नेनैकेन चैव हि ।
‘गायत्रीनामको विष्णुश्चतुष्पात् सम्प्रकीर्त्तितः ॥

‘भिन्नपादः सर्वजीवास्तस्य सादृश्यमात्रतः ।
‘स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः’ इति सत्तत्वे ॥

---

## सूत्रस्यार्थान्तरम्

भूतानीत्येकः पादः आदिर्येषां ते भूतादिपादाः । तेषां ‘अमृतं दिवि’ इति संसाराद् व्यपगतत्वेनोपदेशाच्चेत्यर्थः । चकारेण षड्विधत्वोपदेशाच्च तथा चेतोऽर्पणनिगदाच्च । **सर्वाणि भूतानीति** । चतुर्दशभुवनान्तःपतितानि सर्वाणि जीवजातानि । एतत्सूचनायेव चतुर्दशाक्षरं सूत्रं प्रणिनाय ॥

**सर्वाणि भूतान्येकः पाद** इत्यन्वयः । पादत्वं ह्यत्र विधेयम्, न सर्वभूतत्वम् । अथवा ‘चतुष्पदा गायत्री’ इत्यत्रोक्तो य एकः पादः, तस्य सर्वभूतत्वं विधीयत इति यथाश्रुत एवान्वयः ॥

के ते त्रयः पादाः? मुक्तस्थानेषु वैकुण्ठादिषु स्थितानि । दिवीत्यस्य ‘स्थितेषु’ इत्यध्याहारमाश्रित्यार्थमाह— **दिवि स्थितेषु** त्रिषु नित्यलोकेष्विति । दिवीति समुदायवचनत्वमाश्रित्य **दिवि द्योतमानेषु** वैकुण्ठादिषु स्थितं रूपत्रयमित्यर्थान्तरम् ॥

उपनिषद्भाष्ये भगवत्पादोदाहृतसत्तत्ववचनेनैव मन्त्रार्थं विवृणोति— **त्रिभिरिति** । **स्वरूपपादैः** परस्परं मूलरूपेण चाभिन्नरूपैरित्यर्थः । **भिन्नः पादः** चित्त्वेन **सादृश्यमात्रतः** पाद इत्युच्यत उपचारतः ।

पादशब्दस्यार्थं विवृणोति– **सुवर्ण्णं कोशमित्यादिना** । सुवर्ण्णमयमण्डकोशम्, सत्वरजस्तमोभिः परिवृतम्, देवानां द्रव्यनिधानस्थानम्, विशेषेण राजन्तम्, षड्ढोतुर्विष्णोः कलां विचक्षते ॥

**अमृतस्येति** षष्ठी तृतीयार्थे, अमृतेन पूर्णामित्यर्थः । एकवचनं समुदायापेक्षया, 'अमृतस्यैष सेतुः' इतिवत् । **न किल षड्ढोतुः** पादत्वं स **विवित्से** अविन्दत ॥

---

ननु पाद इति चतुर्थो भाग उच्यते लोके । अत्रापि 'चतुष्पदा' इति स एवार्थो विवक्षित इति प्रतीयते । किन्तु नायमर्थोऽत्र युज्यते । तेन भिन्नपादत्वमप्यौपचारिकमिति ज्ञायते । तस्मादिह पादशब्दार्थं श्रुत्यन्तरेणाऽह भाष्यकारः– **सुवर्णं कोशमिति** । तैत्तिरीयारण्यके तृतीयप्रश्ने होतृहृदयमन्त्राख्य एकादशेऽनुवाके पठितोऽयं मन्त्रः । षड्ढोतृहृदयमन्त्रेषु प्रथमः (३.११.८.) अनुवाकोऽयं अन्तरधिकरणे विष्णुपरतया निर्णीत इति तत एवोल्लिलेख । इत उत्तर एव नारायणानुवाकः । यत्र पुरुषसूक्तं भवति । तत एव च 'पादोऽस्य विश्वा भूतानि' इत्यृगत्र समुद्धृता ॥

## होता नारायणः

अथचाधीतपूर्वाधिकरणानामनुवाकनामैव विष्णुपरतां गमयति– होतृहृदयमन्त्रानुवाक इति । हृत्पुण्डरीकगोविषयहोता नारायणो हि होतृहृदयनामा । अत्रैव च षड्विधस्य भगवतः एकं रूपं हृदयाख्यं जीवहृदयगतम् । 'हृदयं ब्रह्मेत्यारुणयः' इति चैतरेयी श्रुतिः । जीवहृदये स्थित्वा विषयानिन्द्रियेषु जुहोति स्वयं शुभविषयानत्तीति होता । हु दानादनयोः । अत एव तं हृषीकेशमाहुः । उक्तं चाग्निनारायणीये– 'होतारं रत्नधातमम्' इति । अत्रापीदं समसाधि 'अन्तस्तद्धर्मोपदेशात्' इति, 'ज्योतिश्चरणाभिधानात्' इति च । तत्रैव हृदयत्वं चोक्तम्– 'ज्योतिर्हृदय आहितं यत्' इति । तदेवं होतृत्वे भगवत्यवगते बहुविधं होतृत्वमारण्यकेनोच्यते । दशहोतृत्वं पूर्वमुक्तम् । अत्र षड्ढोता नारायणः प्रस्तूयते ॥

मनसा सह षडिन्द्रियैर्विषयान् जुहोतीति षड्ढोता । षडिन्द्रियाणि विषयेषु जुहोतीति षड्ढोता । षड्भिरिन्द्रियैः शुभविषयानत्तीति षड्ढोता । तदिदमपि विष्णुलिङ्गमिति ज्ञापयन्निमं मन्त्रमुज्जहार ॥

एतदुक्तं भवति– उदकादिनवावरणावृतं महतां देवानां वसुनिधानं हैमाण्डकोशं मुक्तजनेन व्याप्तं विष्णोः कलामात्रं वदन्ति पुरुषसूक्तागमाः पादवचनेन । न किलात्र पादशब्देनाङ्घ्रिं वदन्ति । नापि चतुर्थांशम्, किं तर्हि? एकदेशमात्रम् । एकदेशमात्रमित्येकदेश-परिमाणपरिमितमुच्यते, न तत्स्वरूपैकेदश इति । यथा मैत्रचतुर्भागबलश्चैत्र इत्युक्ते न मैत्रबलादेव चैत्रस्य चतुर्थांशो विवक्षितः । अपि तु तच्चतुर्थांशपरिमितं भिन्नं च ततश्चैत्रबलमिति । एवमिहापि शक्तिविवक्षया विष्णुशक्त्येकदेशपरिमितशक्ति-र्म्मुक्तामुक्तविश्वसमुदाय इत्यभिप्रायः ॥

## विश्वतोमुखं भाष्यम्

अपिचात्र गायत्रीसंस्थितस्य विष्णोः षड्विधत्वमुच्यते– 'चतुष्पदा षड्विधा गायत्री' इति । अत्र च षड्ढोतृत्वमुच्यते– 'पादं षड्ढोतुः' इति । एकार्थमिदं पदद्वयम् । तदर्थमेव चेममेव मन्त्रमुज्जहार । तथाहि– षट्सु स्थानेषु षड्भिर्नामभिः भूतपृथिव्यादिभिः हूयत इति षड्ढूतः । षड्ढूत एव षड्ढोतोच्यते पा-रोक्ष्येण । तेन गायत्र्याः षड्विधत्वस्य समाख्यामन्त्रश्चायम् । तदिदमद्भुतं विश्वतोमुखत्वं भाष्यस्य ॥

## सुवर्णकोशीयश्रुत्यर्थः

अथ सुवर्णमिति मन्त्रार्थमाह– **सुवर्णमयमित्यादिना** । **सुवर्णमयं** ब्रह्माण्ड**कोशम्** । 'तदण्डमभवद् हैमम्' इति स्मरणात् सुवर्णप्रचुरम् । उपयुक्तवस्तुनिधानस्थानं कोशः । **रजसेति** गुणत्रयोपलक्षणम् । रजःप्रधाना सृष्टिरिति तस्य मुखतो ग्रहणम् । सात्विकान् सत्वं रञ्जयति । राजसान् रजः । तामसांस्तम इति सर्वाण्यपि हि रजांसि । कोश इत्युक्तमेव स्फुटमाह– **देवानां वसुधानीम्** । शब्दस्वाभाव्यात् स्त्रीलिङ्गता राजधानीतिवत् । धानीति धारिणी । भूदेवत्या च सा । सुवर्णमित्युक्तमेव स्फुटमाह– **विराजम्** । 'सहस्रांशुसमप्रभम्' इति हि वर्णयन्ति । 'तस्माद् विराडजायत' इति विष्णोरेव हि तदुत्पत्तिः । ब्रह्मादिभिस्तृणगुल्मान्तैश्चेतनविशेषै राजन्तमिति च । षड्ढोतृत्वलिङ्गादेव च विष्णुमन्त्रोऽयमिति ज्ञायत इत्याह– **षड्ढोतुर्विष्णोरिति** । 'ब्रह्मणा हुतम्' इति हि गीतासु । अर्थस्तूक्तः । अथच षट्सु ऋतुषु षड्विधान् भोगान् जीवाय जुहोतीति च षड्ढोता । तथाह्युत्तरो मन्त्रः– 'येनर्तवः पञ्चधोत

**स हि पुरुषसूक्ताभिधेयः–**
**'यज्ञेन यज्ञमयजन्त' इति यज्ञशब्दात् । 'यज्ञो विष्णुर्देवता' इति हि श्रुतिः ॥**

---

स्यादेतदेवम्, यद्यस्यामृचि विष्णुरभिधीयते, न तु तत्र प्रमाणमित्यत आह– **स हि पुरुषसूक्ताभिधेय** इति ॥ ❋ ॥

---

क्लृप्ताः उत वा षड्धा मनसोत क्लृप्ताः । तं षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति' (३.११.९.) इति । वसन्तादिषु षड्विधान् भोगान् सृष्ट्वा स्वयमत्तीतिच षड्ढोता । तदुक्तमुत्तरानुवाके पुरुषसूक्ते– 'वसन्तो अस्याऽसीदाज्यम् । ग्रीष्म इध्मः शरद्धविः' (३.१२.६.) इति । सर्वमेतन्मनसि निधाय निरवकाशं विष्णुलिङ्गमिति निर्दिदेश– **षड्ढोतुर्विष्णोरिति** । 'पादोऽस्य सर्वा भूतानि' इति श्रुतौ पादशब्देन केवलं विष्णोः **कलामाचक्षते** । न विश्वस्य चतुर्भागपरिमितत्वम् । कुतः ? यतः स कोशः विष्णोः **पादं न किल विवित्से** । पादमिति भावप्रधानो निर्देश इत्याह– **पादत्वं विवित्से अविन्दतेति** । विद्लृ लाभे । विवित्से विविदे लेभ इत्यर्थः । **नवावरणावृतमिति** उदकतेजोवाय्वाकाशाहङ्कारमहत्तत्वगुणत्रयाख्यैर्नवभिरावरणैरावृतम् । अत्र कोश इति संसारिजीवसमुदाय उच्यते । 'भिन्नपादः सर्वजीवाः' इति सत्तत्ववचने तु सर्वपदेन मुक्ता अपि गृह्यन्ते । अत आह– **अमृतस्य पूर्णामिति** । अत्र षष्ठी तृतीयार्थे । 'सुपां सुपो भवन्तीति वक्तव्यम्' इति हि कात्यायनः । एकवचनं समुदायवचनम् । तेन अनन्तमुक्तजीवैः सहितां देवानां वसुधानीमित्युक्तं भवति । ब्रह्माण्डान्तर्गतं जीवजातं देवानां हि स्वम् । ननु कलेति च षोडशो भाग उच्यते । नेत्याह– कलेति च न षोडशो भागः । **किन्त्वेकदेशमात्रम्** । यथा मठाकाशोऽनन्ताकाशस्यैका कला । एकदेश इति च न स्वरूपैकदेश उच्यते । **किन्त्वेकदेशपरिमितं भिन्नम्** । यथा **मैत्रचतुर्भागबलश्चैत्र** इति । **मुक्तामुक्तविश्वसमुदाय** इति । अत्र मुक्तपदेन नित्यमुक्ता श्रीरपि गृह्यते ॥

## पुरुषो यज्ञश्च विष्णुः

ननु **'तावानस्य–'** इति पुरुष उच्यते न विष्णुः? नेत्याह– **स हि पुरुषसूक्ताभिधेय** इति भाष्ये । नहि तत्र प्रमाणान्तरापेक्षा । पुरुष इति विष्णुरुच्यत इति प्रसिद्धमेतदिति हिशब्देनाऽह । 'पुरुषो हवै

'तस्मिन् काले महाराज राम एवाभिधीयते ।
'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति च स्कान्दे ॥ ✻ ॥

## ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १.१.२७. ॥

---

नारायणः' इति ह्यामनन्ति । अत एव तं पुरुषोत्तमं वदन्ति । पुरुषोत्तम एव हि मुख्यतः पुरुषपदार्थः । 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति च गीतासु । शिवं तु तत्पुरुषमाहुः । तस्यायं पुरुष इति । न तु निरुपपदं पुरुषम् । पुरुषशब्दस्य विष्णुपरत्वे विवादाभावादेव तस्य विष्णुपरत्वं साधयितुं न पृथक् सूत्रं प्रणिनाय हि ॥

अथाप्यन्तरङ्गं गमकमाह– **यज्ञशब्दादिति** । **यज्ञेन यज्ञं विष्णुमयजन्तेति** किलार्थः । यज्ञं यजनीयां कामपि देवतामिति किं न स्यात्? यो यं यजति स किल तस्य यज्ञः? नैतद् युक्तम् । **'यज्ञो विष्णुर्देवता'** इति श्रुतेः । या वेदोक्ता यजनीया देवता स विष्णुरेव । तस्मात् स एव यज्ञपदार्थ इत्यर्थः । 'यज्ञो वै विष्णुः, यज्ञो वै विष्णुः' इति च तैत्तिरीया असकृदाम्रेडयन्ति । 'यज्ञो यज्ञपतिर्यज्वा' इति च विष्णुसहस्रनामसु । यज्ञनारायण इति च लोकेऽपि तमेव व्याहरन्ति ॥

अस्मिन्नर्थे पुराणसम्मतिं चाऽह– **तस्मिन् काले** । यत्रक्वापि याकाचित् कथा प्रस्तूयते तत्र रामकथैव प्रस्तूयते । रामादन्यः कोऽपि तेषां स्मृतिपथं नाऽजगामैव । सर्वव्यवहारेष्वपि सदा राममेव सस्मरुरिति । उपरिष्टाद् (२.३.४६) वक्ष्यति स्कान्दवचनान्तरं टीकाकारः–

'रामो रामो राम इति सर्वेषामभवत् तदा ।
'सर्वो राममयो लोको यदा रामस्त्वपालयत्' इति ॥

तद् यथा– 'रामो राजा नः,कदा रामं द्रक्ष्यामः, कदा रामेण सह सम्भाषिषीय, सर्वं रामायार्पितमस्तु, रामाद् बिभेति दुःखमपि, दारिद्र्यमपि, अनन्तपारा रामस्य करुणा, रामे सर्वे गुणाः समर्पिताः, हे राम, चिरं पालय मेदिनीम्' इत्यादि । यथा तेषां सर्वा कथा रामकेन्द्रिता तथा पुरुषसूक्तं विष्णुकेन्द्रितमिति ॥ ✻ ॥

'त्रिपादस्यामृतं दिवि' इति पूर्वोपदेशः । 'परो दिवः-' इति पञ्चम्यन्तः पश्चिमः । तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न । त्रिसप्तलोकापेक्षयोभयस्मिन्नप्य-विरोधात् ॥ १० ॥

**॥ इति दशममधिकरणम् ॥ * ॥**

---

**त्रिसप्तलोकापेक्षयेति** । त्रिलोकापेक्षया दिवीत्युपदेशः । तस्मादुभयस्मिन्नप्युपदेशे वस्त्वेकत्वा-विरोधः । सर्वाधिज्योतिषाधिवेदपदोपलक्षणार्थौ ज्योतिर्गायत्रीशब्दौ ॥ * ॥

**॥ इति ज्योतिर्गायत्र्यधिकरणम् ॥ * ॥**

---

**॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥** उत्कृष्टं देशनमुपदेशः । न केवलमालङ्कारिकमौपचारिकं वा वचनमित्यर्थः । उभयस्मिन्नप्युपदेशे भेदात् परस्परं विरोधात् दिवीति दिव इति, तत एवोभयोरुपदेशयोर्भेदात् भिन्नविषयत्वात्, दिवीति पुरुषसूक्तोदितो विष्णुः 'दिवः परः' इत्यत्र न प्रतिपाद्यते, ततश्च ज्योतिर्न विष्णुरिति चेत्, नैवं वक्तुं युक्तम् । उभयस्मिन् सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे विवक्षाभेदेन विरोधाभावात् । यथा अट्टालक आसीनं यजमानम्, गृह आस्ते इत्याहुः, गृहस्योपरि प्रासाद आस्त इत्यप्याहुः, कस्तत्र विरोधः?

तदेतत् सर्वं विवृतमुपनिषद्भाष्योदाहृते प्रमाणवचनेऽपि-

'स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ।
'नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ॥

'अनन्तशयनं चैव तथाऽनन्तासनं हरेः ।
'बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः ॥

'चित्प्रकृत्यात्मनि ततो दिवीति कथिते श्रुतौ ।
'लोकत्रयविवक्षायां परतो लक्षयोजनात् ॥

'स्थानद्वयं तद् विज्ञेयं ततस्ते दिवि संस्थिताः ।
'दिवः परश्च भगवान् सप्तलोकविवक्षया' इति ॥

त्रिलोकविवक्षायां भूमेरुपरि लक्षयोजनपरिमितो भागोऽन्तरिक्षलोक उच्यते । तत उपरितनः सर्वोऽपि द्युलोकः । ततस्ते त्रयो लोकाः, त्रयो वा भगवद्रूपविशेषा दिवि संस्थिता उच्यन्ते । यदा देवलोकपर्यन्तो द्युलोकः तदा भगवान् दिवः पर इति चोच्यत इत्यर्थः ॥

भागवते चैतद् भाषितम्–

'पादोऽस्य सर्वभूतानि पुंसः स्थितिविदो विदुः ।
'अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु' (२.६.१८) इति ॥

यस्य या स्थितिस्तां वेत्तीति स्थितिवित् । तस्य पुंसः परमपुरुषस्य । अथवा वस्तुस्थितिं विदन्तीति स्थितिविदः तत्वज्ञानिन एवं विदुः जानन्तीति । भाष्ये तूभयसाधारणमुक्तम्–'सर्वस्य यथावत् स्थितिविदः' इति । अथापि 'सर्वस्य' इति पदेन सर्वज्ञं भगवन्तं कटाक्षयतीव ॥

'स्वरूपांशो विभिन्नांश इति द्वेधांऽश इष्यते ।
'अनन्तासनवैकुण्ठपद्मनाभा हरिः स्वयम् ।
'जीवा इमे विभिन्नांशा धर्माधर्मादिसंयुताः' इति वामनवचनं तात्पर्ये ॥

धर्मो भगवान् । धर्मसंयुताः मुक्ताः । ये न धर्मसंयुता अमुक्तास्ते । आदिपदेन दुःखाज्ञानादि-संयुताः । पञ्चदशकलाभिः संयुता बद्धा इत्येतत् ॥

## भागवतस्यानन्ततीर्थीयं विवरणम्

'त्रिमूर्धा सन् हरिर्धत्ते द्युत्रयं मूर्धभिस्त्रिभिः ।
'अनन्तासनवैकुण्ठनारायणपुराणि तु ।
'बहुलक्षोच्छ्रितेष्वेषु स वसत्यमृतो हरिः' इति च मात्स्यवचनम् ॥

अत्रानन्ततीर्थीयं व्याख्यानम्– 'स्थितिविदः सर्वपदार्थानां याथात्म्यविदो ज्ञानिनः सर्वाणि भूतानि जीवाः, अस्य पुंसः परमपुरुषस्य पादः भिन्नांश इति विदुः । अमृताख्यः अनन्तासनः अनन्तासने

तिष्ठति । क्षेमाख्यो वैकुण्ठो वैकुण्ठे । अभयाख्यः पद्मनाभः क्षीराब्धौ' इति । 'अमृतमनन्तासनम् । क्षेममिति वैकुण्ठः । अभयमिति श्वेतद्वीपः' इति यादवेन्द्रतीर्थीयम् । अमृताख्यं क्षीराब्धौ श्वेतद्वीपगं पद्मनाभमेव अनन्तशयन इत्यप्याहुः । 'अनन्तशयनं चैव तथाऽनन्तासनं हरेः' इति हि सत्तत्वे । 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति च गीतासु ॥

## समग्रो ज्योतिःश्रुत्यर्थः

तथाच 'यदतः परो दिवो ज्योतिः–' इत्युपसंहारवाक्यस्यार्थो भाष्यकृतैवाभिहितस्तद्भाष्ये सत्तत्ववचनेनैव–

'योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरि स्थितः ।
'स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा ॥
'उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च ।
'पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः ॥
'प्राणसंस्थः स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः ।
'स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव सा ततः ॥
'स प्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा ।
'कर्णौ विधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् ।
'मुक्तो भूत्वा भवेद् यस्मादुपासीतैव तं ततः' इति ॥
'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।
'अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरेः ॥
'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।
'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।
'दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ॥
'पृथिव्यां ब्रह्मणो मेरौ जयन्ते त्वन्तरक्षिगम् ।
'तृतीयं सत्यलोके च सदनं त्रिविधं स्मृतम् ।
'तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परे' इति च सत्तत्ववचनम् ॥

तथाचायं सूत्रनिर्णीतो मन्त्रार्थः– यदतो दिवः परस्तात् ज्योतिर्नारायणाख्यं दीप्यते । तत् सर्वतः सर्वलोकेभ्यः पृष्ठेषु उच्चेषु, विश्वतः ब्रह्मणः, अर्थात् ब्रह्मसदनेभ्यश्च त्रिभ्यः पृथिवीस्थान्मेरुसदनात्, अन्तरिक्षगताद् वैजयन्ताज्जयन्तापरनाम्नः, सत्यलोकाच्च पृष्ठेषु उपरि स्थितेषु, स्वयं सर्वोत्तमेषु, अत एव नास्त्यन्यो लोक एभ्योऽप्युत्तम इत्यनुत्तमेषु लोकेषु स्थितम्, इदं वाव तज्ज्योतिः, यदिदमस्मिन्नन्तः पुरुषे । यदस्मिन् शरीरे संस्पर्शेनोष्णिमाऽनुभूयते सा नारायणस्यैवानुभूतिः । यतः स उष्णिमा न शारीराग्नेः । तस्मिन् प्राणाग्निः स्थितः । 'प्राणाग्नय एवैतत्पुरे जाग्रति' इति श्रवणात् । तस्मिंश्चाग्नि-नारायणाख्यं ज्योतिः । अन्ततस्तस्यायमुष्णिमा प्राणाग्निद्वारा बाह्याग्नौ प्रतिफलितः सन्नस्माभिर-नुभूयते । अहो धन्यास्ते य एवं भगवदुष्णिमानमनुभवन्तो मोदन्ते । मुक्तौ च दिव्यचक्षुष्मन्तो भविष्यन्तः । अथच यः कर्णावपिधाय शृण्वतो घोषः श्रूयते प्राणेन क्रियमाणा विष्णुस्तुतिः सा । तं च घोषं निनदमिव समुद्रघोषमिव शृण्वन्ति । यश्च नदथुर्मेघध्वनिस्तमिव, अग्नेः प्रज्वलतो धगधगिति ध्वनिमिव च शृण्वन्ति । अहो धन्यास्ते य एवं भगवत्स्तुतिमनुभवन्तो मोदन्ते । मुक्तौ च स्वावरैः स्तूयमानाः कीर्तिमन्तो भविष्यन्तः ॥

तथाचात्र भूर्भुवः सुवरिति लोकत्रयविवक्षायां भूमेर्लक्षयोजनोच्छ्रितं भुवआख्यमन्तरिक्षम् । तत उपरितनः सर्वोऽपि लोकः सुवराख्यो द्युलोक उच्यते । तस्माद् भगवतस्त्रयोऽपि लोका दिवि भवन्ति । तदिदमुक्तं पुरुषसूक्ते– **'त्रिपादस्यामृतं दिवि'** इति ॥

यदा भूर्भुवःस्वर्महर्जनस्तपस्सत्यमिति सप्तलोकविवक्षा तदा अन्तरिक्षादुपरि इन्द्रसदनान्तो लोकः स्वर्लोको द्युलोक इति चोच्यते । ततस्तत उच्चा विष्णुलोका दिवः परे इत्युच्यन्त इति न कोऽपि विरोध इति ॥

## सूत्रस्यार्थान्तरम्

अथच सूत्रस्यार्थान्तरम्– दिवीत्यस्य द्युलोक इति नार्थः । किन्तु द्योतमाने लोके इत्यर्थः । दिवः परे द्योतमाने लोके इत्यर्थकरणेन उभयस्मिन्नप्यविरोधात् । इदमप्युक्तं टीकायाम्– **'श्वेतद्वीपानन्तासन-वैकुण्ठेषु दिवि द्योतमानेषु'** इति ॥

एतदप्युक्तमुपनिषद्भाष्ये–

'अनन्तशयनं चैव तथाऽनन्तासनं हरेः ।
'बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः ।
'चित्प्रकृत्यात्मनि ततो दिवीति कथिते श्रुतौ' इति ॥

एवं **'भूतादि–'** इति पूर्वसूत्रस्याप्यर्थान्तरं सूचयामास भाष्यकारः स्वयमुपनिषद्भाष्ये सत्तत्ववचनेनैव–

'परं ब्रह्मेति भगवान् सर्वगः सम्प्रकीर्तितः ।
'स एव जीवस्य बहिर्हृदयाकाश आस्थितः ॥

'योऽयं हृदयगः सोऽयं जीवान्तर्व्याप्य संस्थितः ।
'व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः ।
'एवं हृदि चतुष्पात्त्वं वासुदेवस्य कीर्तितम्' इत्यादि ॥

एतन्मूलभूता चेयमुपनिषत्– 'यद् वै तद् ब्रह्मेतीदं वाव तद् योऽयं बहिर्धा पुरुषादाकाशः । यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव स योऽयमन्तः पुरुष आकाशः । यो वै सोऽन्तःपुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशः । तदेतत् पूर्णमप्रवर्ति । पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद' इति ।

## अपरः पादशब्दार्थः

**'पादोऽस्य सर्वा भूतानि–'** इति समाख्यासमनन्तरमेवेयं श्रुतिः पठ्यते । तस्मादियमपि प्रकारान्तरेण चतुष्पात्त्वमवबोधयति । तथाहि– विश्वा परिपूर्णानि विश्वस्मिन् भूतानि व्याप्तानि सर्वगतानि रूपाणि पुरुषादीनि तानि भगवदुपासनायामेकः पादः । तदिदमुक्तम्– 'यद् वै तद् ब्रह्म' इति । त्रिपात् त्रीणि रूपाणि दिवि, आकाश इत्यर्थः । एको हार्दाकाशगतः । द्वितीयः जीवस्वरूपगतः । तृतीयः स्वरूपहृदयगतः । प्रथमं सर्वगतं रूपम् । द्वितीयमणु । तृतीयमणीयः । तुरीयमणिष्ठमिति । तदेतच्चतुर्विधमपि ब्रह्म गुणपूर्णम् । न प्रवर्त्यते केनापीति अप्रवर्ति स्वतन्त्रम् ॥

## तदपि सूत्रारूढम्

इदमपि चतुष्पात्त्वं सूत्रारूढमधिगम्यते । भूतं प्रभूतं सर्वगतं ब्रह्म आदिर्येषां ते भूतादयः । हृदयाकाशादयः । एवं चतुर्णां पादानां व्यपे वासुदेवे देशनाच्च स एव गायत्रीनामा । न च्छन्दः । नहि च्छन्दस ईदृशं चतुष्पात्त्वं सम्भवति । भूतं चतुर्दशभुवनेष्वन्तर्बहिश्च व्याप्तमिति सूचयन्निव चतुर्दशभिरक्षरैः सूत्रं प्रणिनाय । तदेवं विश्वतोमुखानि सूत्राणि भवन्ति साङ्ख्यमयानि सङ्ख्यावतां चित्तहरणानि ॥

एवमधिज्योतिषाणि चन्द्रादित्याग्निविद्युन्नक्षत्रादिवाचीनि पदानि अधिवेदानि छन्दोवाचीनि चोक्तानि उष्णिगादीनि तथा अतिजगत्यादीनि, अनेनान्तर्भेदाधिकरणेन समन्वितानि वेदितव्यानि ॥

चन्दतीत्याह्लादकत्वाच्चन्द्रः । चन्दति रमते च वा । सर्वस्याऽदिः, ज्ञानानन्दरूपत्वात् त्यश्चेत्यादित्यः । 'तीत्यानन्दः समुद्दिष्टो येति ज्ञानमुदाहृतम्' इति स्मरणात् । विद्योतत इति विद्युत् । नास्य क्षत्रान्तरं नियामकमिति नक्षत्रम् । न क्षीयन्त इति नक्षाणि नाशरहितानि । तान्यप्यनेनैव नित्यत्वेन त्रायन्त इति वा । 'नित्यं नित्यात्मना यतः' इत्यादेः । जगतीमतिगत इति अतिजगतीत्याद्यवगन्तव्यमित्यलम् ॥ ✲ ॥

॥ इति दशमं ज्योतिर्गायत्र्यधिकरणम् ॥ ✲ ॥

—o—

## एकादशमधिकरणम्

## (प्राणानुगमाधिकरणम्)

## (१.१.२८-३१.)

'प्राणो विष्णुः' इत्युक्तम् । तत्र 'ता वा एताः शीर्षञ् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' इत्यत्र प्राणस्य विष्णुत्वं न विद्यते । इन्द्रियैः सहाभिधानादित्यत आह–

**॥ प्राणस्तथाऽनुगमात् ॥ १.१.२८. ॥**

'तं देवाः प्राणयन्त', 'स एषोऽसुः स एष प्राणः', 'प्राण ऋच इत्येव विद्यात्', 'तदयं प्राणोऽधितिष्ठति' इत्याद्यनुगमादत्रापि प्राणो विष्णुरेव ॥

---

### तत्वप्रदीपः

अतीतप्राणाधिकरणे प्रवर्त्तनस्वातन्त्र्यस्य प्राणशब्दप्रवृत्तिहेतोर्विष्णौ भावाद् विष्णुरेव प्राण इत्युक्तम् । अत्र पुनः विष्णावसम्भाव्यैर्विशेषलिङ्गैः प्राणशब्दस्य मुख्यप्राणप्रसिद्धिरेव बलवती स्यादित्याशङ्क्य तेषां लिङ्गानां विष्णावेव सम्भवमुपलम्भयितुमयमारम्भः ॥

विष्णुस्तासु श्रित इति ताः श्रियः ॥

---

### तत्वचन्द्रिका

ननु प्राणो विष्णुरिति पुरस्तादेवोक्तम्– **'अत एव प्राणः'** इति । तत् किं बहून्यनुक्तानि पदानि परित्यज्य प्राण एवाऽम्रेड्यते?

अभ्युपगम्य समाधत्ते– सत्यमुक्तं भवता । यद्यपि **प्राणो विष्णुरित्युक्तं** पुरस्तादेव । प्राणशब्दो मुख्यतो विष्णुवचन इत्युक्तम् । मुख्यतः प्राणशब्दवाच्यो विष्णुरित्युक्तमिति वा । अथापि पुनराम्रेड्यते । असाधारणकारणसद्भावात् । तदेव कारणमाह भाष्ये– **तत्र ता वै** ॥

**तत्र** प्राक् समन्वितेषु नामसु प्राणनाम्नस्तावत् सर्वत्र मुख्यतो विष्णुपरत्वं **न विद्यते** । तत्र श्रुतिपठितेषु प्राणनामस्विति वा । कुतः? यतः **'ता वा एताः शीर्षञ् छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः'** इत्यत्र महैतरेयोपनिषदि प्रथमप्रघट्टकस्य षष्ठाध्याये पठिते मन्त्रे (१.६.४.) **प्राणस्य विष्णुत्वं न विद्यते** । तदपि कुतः? चतुर्मुखस्य शिरसि गतै**रिन्द्रियैः सहाभिधानात्** ॥

इदमुक्तं भवति– अतीतप्राणाधिकरणे यदुक्तम्– 'यद् देवान् प्राणयो नव' इति चतुराननशरीरमारभ्य सकलसाधनशरीरेषु सर्वेन्द्रियाभिमानिदेवताप्रणयनं नाम प्रवर्तनस्वातन्त्र्यं तद् विष्णावेव सूपपादम् । अत एव तं हृषीकेशमुशन्ति । सहैव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रीलक्ष्मीपतित्वलिङ्गं च । तेन विष्णुरेव प्राण इति । भवतु नाम तत्र तथा । अत्र पुनरिन्द्रियमानिभिः सह प्राणः पठ्यते– **'ता वा एताः शीर्षञ् श्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः'** इति । शीर्षण्यानि पञ्चेन्द्रियाणि मुखत उक्तानि । सर्वप्राणिषु गतानां सर्वेन्द्रियाणामुपलक्षणमेतत् । नहीन्द्रियैः सह पठितस्य इन्द्रियप्रवर्तकस्य चैक्यं शक्यं वक्तुम् । तस्मादत्र प्रणयनस्वातन्त्र्यरूपाद् योगादपि लोकप्रसिद्धिरूपा रूढिरेव बलीयसीत्यनिच्छताऽप्यङ्गीकरणीयम् ॥

तैत्तिरीये स्यान्नाम प्राणस्य विष्णुत्वम् । किन्तु **अत्र** ऐतरेये **प्राणस्य विष्णुत्वं न विद्यते** । तस्मात् वेदेषु सर्वत्रापि प्राणशब्दस्य विष्णुपरत्वं **न विद्यते** । तेन प्राणशब्दश्च विष्णावेवेति समन्वयप्रतिज्ञा गता । तामेतां शङ्कां परिहर्तुं पुनरधिकरणारम्भ इति ॥

## अतिदेशोऽयम्

इदमुक्तं भवति– अत्र पुनः पूर्वपक्षी यानि विष्णावसम्भावितानि विशेषलिङ्गानीति मन्यते तेषामपि विष्णावेव सावकाशत्वमुपपादयितुमयमारम्भः । एवमन्यत्रापि यत्र क्वापि विष्णावसम्भावितानीव विशेषलिङ्गानि दृश्यन्ते तत्राप्यनयैव दिशा विष्णुपरत्वमनुसन्धेयमिति ग्राहयितुमिदमन्त्यप्राणाधिकरणं निदर्शनं भवतीति । अत एव सर्वोपसंहाररूपत्वादन्ते निवेशनम् । एतेन प्रथमप्राणाधिकरण-

समनन्तरमेवायमाक्षेपः कर्तव्य आसीदिति शङ्का परास्ता वेदितव्या । अत एव न्यायविवरणे सामान्यत एवोपसञ्जहार– 'नचानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेः' इति । अन्यथा– 'प्राणश्रुतिलिङ्गादेः' इति, 'प्राणश्रुतिगतलिङ्गादीनामपि' इति चावक्ष्यत् ॥

नन्वेवं विष्णोरसम्भाव्यैर्लिङ्गैरन्यत्रैव प्रसिद्धिप्राप्त्या चतुर्थचरणे वक्तव्यमेतत् । न भोः । पूर्वप्राणाधिकरणे विष्णुपरतायाः समर्थनात् । तदभ्युपगमेनैवात्र पूर्वपक्षप्रवृत्तेः । तेनात्र ऐतरेयश्रुतिगतप्राणशब्दस्यैवान्यथा-सिद्धत्वमुच्यते । न सर्वत्र ॥

ननु तर्हि उभयत्रप्रसिद्धतया तृतीयचरणप्रवेशः स्यात् । न स्यात् । प्राणशब्दस्य लोकत उभयत्र प्रसिद्ध्यभावात् । तथाच यत्र लोकतः प्रसिद्धिः स एव मुख्यार्थः । यत्र मुख्यार्थबाधस्तत्रान्यपरतेति हि पूर्ववादी मन्यते । तद्यथा परभाष्ये– 'आकाशशब्दो भूताकाश एव मुख्यः । अथापि मुख्यार्थबाधे सत्युपचारेण ब्रह्मपरता' इति सिद्धान्तः । एवमन्यत्रापि । तदेतदाह टीकाकारः– **प्राणशब्दस्य मुख्यप्राणप्रसिद्धिरेव बलवती**ति । योगाद् रूढिर्हि बलीयसी । न हि योगोऽस्तीति दर्दुरोऽपि पङ्कजपदगदितो भवति । ततश्च यत्र मुख्यार्थोऽनुपपन्नस्तत्र प्रणयतीति योगमात्राश्रयणेन विष्णुपरतेति भावः । विद्वद्रूढिं न पूर्ववादी मन्यते ॥

## सर्वनाम्नामुपलक्षणम्

एवं चात्र प्राण इति निदर्शनमात्रम् । पूर्वत्र प्रस्तुतानां सर्वेषामप्याक्षेपोऽयम् । तथा च 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्यत्र विष्णुपरत्वेऽपि न सर्वत्र विष्णुपरता । 'आत्मन आकाशः सम्भूतः' इत्यत्र भूताकाशपरतैव । भूतैः सहाभिधानात् । 'गायत्री छन्दसां माता' इत्यत्र च्छन्दः-परतैव । छन्दोभिः सहाभिधानात् । 'अग्निनाऽग्निः समिद्ध्यते' इत्यत्र भूताग्निपरतैव । भूताग्निना सहाभिधानात् इत्यादि । तद्गतभगवद्रूपापेक्षया सर्वत्रापि भगवत एव मुख्यार्थतेति सर्वोपसंहारः । तदेतदुक्तं भगवत्पादेनैव– 'तद्गभगवदपेक्षया युक्तेः' इति । अधिभूताध्यात्मादिषु प्राणस्य मुख्यत्वात् तस्य मुखतो ग्रहणम् । यदि प्राणोऽपि विष्णुरेव का कथाऽन्येषामिति कैमुत्यं चानेनाऽह ॥

## श्रुतेरूढ्यर्थताबोधनं प्राणाधिकरणहृदयम्

ननु मुख्यार्थपूरकतया क्वचित् पदानाममुख्योऽर्थस्तत्त्ववादिभिरिष्यते । तदिदं प्रथमाधिकरण एव स्फुटमुदितं भगवत्पादेन–

'उग्रो रुद्रः । प्रसिद्धत्वात् सूचितत्वाच्चार्थस्य । नचाविरोधे प्रसिद्धः परित्यज्यते' इति ॥

यथा– 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यते । मध्ये वामनमासीनं विश्वे देवा उपासते' (का.उ.२.२.३.) इति । अत्र प्राणापानाविति वायुरूपे एव । विश्वे देवा इति ब्रह्माद्याः सर्वे देवा एव । अन्यथा सर्वदेवोत्तमत्वं भगवतोऽनुदितं स्यात् । नैतावता समन्वयभङ्गः । महातात्पर्यानुकूलत्वात् । तत् कोऽयं पुनरपि प्राणसमन्वयरोमन्थः?

अस्त्यत्र कश्चिद् विशेषः । महातात्पर्यनिर्वाहायास्ति पदानाममुख्यार्थता । क्वचिद् वाक्यानामपि । यथा– 'ब्रह्मा देवानां प्रथमः सं बभूव' (आथ.उ.१.१.१.) इति । अथापि समग्रं सूक्तं प्रकरणं वा नान्यपरमिष्यते । अत एव पूर्वप्राणाधिकरणे भर्तृसूक्तस्योभयार्थत्वं साधितम्– मुख्यवृत्त्या वायुपरम्, परममुख्यवृत्त्या नारायणपरम् । एवमैतरेयेऽपि समग्रः प्राणसंवादखण्डः नान्यपर इष्यते इति साधनीयम् । तस्य विष्णुपरत्वं परममुख्यवृत्त्या । प्राणपरत्वं च मुख्यवृत्त्या । एवममुख्यवृत्त्या नासिक्यवायुपरत्वं च । एवम्, 'त्रयोऽर्थाः सर्ववेदेषु' इत्यपूर्वार्थनिदर्शनार्थमेवायं पादान्तेऽधिकरणराज इति सर्वं सुन्दरम् ॥

## इन्द्रियेषु श्रीशब्दनिर्वचनम्

अयं श्रुत्यर्थः– ता एता वै शीर्षन् शिरसि आश्रिताः श्रियः पञ्च निधयः । 'शीर्षंश्छन्दसि' (अ.सू. ६.१.६०) इति शिरःशब्देन समानार्थं शीर्षन्निति च्छान्दसं पदान्तरम् । श्रियइव श्रियः । सम्पदइव । ज्ञानसाधनत्वात् । यया भगवद्दत्तया श्रिया जन्मत एव पुरुषः श्रीमानुच्यते, श्रीमतीति योषा । नतु परस्तादाहृतेन धनेन । न केवलमुपचारतस्ताः श्रियः । मुख्यतश्च श्रिय इत्याह– **विष्णुस्तासु श्रित इति ताः श्रिय इति** । श्रयति सन्निधत्ते तासु विष्णुरिति ताः श्रियः । 'शीर्षन् शिरसि श्रिताः । अत एव श्रयणाच्छ्रियः' इति विग्रहणं तु पुनरुक्तप्रायमिति नाऽश्रितम् । अत्र सर्वत्र विष्णोः श्रयणमेव प्रस्तुतम् । 'स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः' इत्यादेः । अतस्ता विष्णुं श्रिता इति च न व्याख्यातम् । अत्र श्रयतिः स्थित्यर्थ इति तास्विति सप्तमी । प्राणे विष्णुः स्थित इत्यत एव न प्राणो विष्णुरिति वक्तुं शक्यमिति । नहि स्थाता च स्थानं चैकं भवितुमर्हति । नहि स्वस्कन्धे स्वयमेवाऽरुह्य नृत्यतीति साम्प्रतम् ॥

भगवतः सन्निधानविशेषादेव हि ताः साधकस्य सम्पदो बभूवुः । येन प्राणानुग्रहेण सार्थकं जीवन्, वाचा भगवन्महिमानं वर्णयन्, मनसा तद्रूपं मन्वानः, श्रोत्रेण तत्कथाः शृण्वानः, अन्तर्बहिश्च

भगवन्तमेव पश्यति । चक्षुरिति श्रोत्रमिति सूर्याचन्द्रमसौ । मन इति वागिति मृत्युञ्जयधनञ्जयौ । प्राण इति मुख्यः प्राणः । अथच मित्रो यमो वरुणः कुबेरश्चन्द्र इति दिगीश्वराः पञ्चापि श्रोत्रमानिनः । चन्द्रस्तेषु प्रधानः । सुपर्णशेषशङ्करा इन्द्रश्च मनोमानिनः ॥

## नात्रान्तर्यामिपरता

ननु तासु विष्णुः श्रित इत्यन्तरधिकरणन्यायेनैवात्रापि विष्णुरित्यायातम् । किं पुनर्युक्त्यन्तरगवेषणेन? तेन नेदमधिकरणान्तरमारम्भणीयम् । मैवम् । नात्रान्तर्यामिग्रहणं शक्यम् । **इन्द्रियैः सहाभिधानात्** । तेनेन्द्रियमानिन एवात्र मुख्यत उच्यन्त इति ज्ञायते ॥

ननु सहाभिधानं न दोषः । चक्षुरादिपदान्यपि हि भगवत एवाभिधानानि । तथाच चक्षुरादिभिः प्राणान्तैः सर्वैरपि पदैस्तदन्तःस्थो विष्णुरेवोच्यते । सर्वेषामध्यात्मपदानामपि भगवन्नामत्वस्य पूर्वमेव निर्णीतत्वात् । नैतद् युक्तम् । उत्तरवाक्यविरोधात् । समग्रप्रकरणविरोधाच्च । पूर्वोत्तराविरोधेन हि प्रकरणार्थो निर्णेतव्यो भवति । तथाह्युत्तरवाक्यम्– 'ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति' इति । समाख्या चात्र भवति– 'ते चेमे प्राणा अहंश्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति' इत्यादि च्छन्दोगोपनिषदि । षट्प्रश्नादिष्वप्येवम् । नच भगवद्रूपाण्येवाहंश्रेयसि व्यूदिर इति वक्तुं साम्प्रतम् । 'उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः' इति विष्णोस्तटस्थत्ववचनविरोधश्चान्यथा । तदेतत् सर्वम्– 'नचानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः' इत्यादिपदेन सञ्जग्राह न्यायविवरणे भगवत्पादः ॥

## विष्णावेव प्राणश्रुतिः

**अतः** अगतार्थत्वादस्य विचारस्य इदमधिकरण**माह** । तत्र तावत् प्रथमं **सूत्रमाह** भगवान् बादरायणः– **प्राणस्तथाऽनुगमात् ॥** अत्र **'प्राणस्तथा'** इति योगविभागेनैकं वाक्यम् । ततः समग्रं सूत्रमपरं वाक्यम् । तथाहि– पूर्वप्राणाधिकरणे 'तद् वै त्वं प्राणः–' इति तैत्तिरीयवचने यथा प्राण इति मुख्यतो विष्णुरेव, तदनन्तरं वायुश्च एवमत्रापि तथा इन्द्रियान्तर्गतो विष्णुरेव मुख्यार्थः । ततो वायुश्चेन्द्रियमानीति । कुत एतदुच्यते? **प्राणस्तथाऽनुगमात्** । यथा सर्वत्र प्राणशब्दः विष्णोरसाधारणधर्मैः सहाभिधानात् विष्णावेव मुख्यतस्तथाऽत्रापि 'चक्षुः श्रोत्रं मनो वाक् प्राणः' इति प्राणशब्देन तत्तु विष्ण्वाख्यं ब्रह्मैव मुख्यत उच्यते । सर्वत्र विष्णुपरतया प्रयुक्तप्राणशब्दानुगमादनुवर्तनादत्रापीति । तथैव तदनन्तरं मुख्यवायुश्चेति । एवं सर्वत्र वेदेषु विष्णोरनन्तरं प्रायो वायोरपि प्रतिपाद्यत्वमनुसन्धेयमिति सूचनायैवोपसंहारसूत्रे **'प्राणस्तथा'** इत्याह । अन्यथा **'प्राणोऽनुगमात्'** इत्येवावक्ष्यत् ॥

**।। प्राणस्तथाऽनुगमात् ।। तं देवाः प्राणयन्त ज्ञानसम्प्रदायप्रवर्त्तनेन–**

**'तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।**
**'शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम्' इत्यैतरेयसंहितायाम् ।।**

अयमर्थः– प्राणशब्दो विष्णावेव मुख्य इति पूर्वप्राणाधिकरणे निरणायि । अस्यामप्युपनिषदि सर्वत्र विष्णुपर एव प्राणशब्दः पठ्यते । एवं स्थिते अत्रैकत्र प्राणशब्दो वायुपर इति न युक्तं वक्तुमिति । प्रायपाठविरोधात् ।।

## न वाक्यप्रकरणादिविरोधः

ननु इन्द्रियैः सहाभिधानं बाधते । न बाधते । यदा चक्षुरादीनामिन्द्रियत्वविवक्षा तदा प्राण इति श्वासमानी प्राण उच्यते । ततोऽपि मुख्यतः सर्वेन्द्रियमानी पञ्चात्मा प्राण उच्यते । परममुख्यतस्तु सर्वेन्द्रियमानिगतस्तेषां नियन्ता पञ्चात्मा भगवानुच्यत इत्यङ्गीकारात् । तदुक्तं न्यायविवरणे– 'अन्यगतलिङ्गादीनामपि तद्गभगवदपेक्षया युक्तेः' इति ।।

ननु तर्हि कथमहमुक्थमस्मीति व्यवदन्त? प्राणरूपाणां नारायणरूपाणां वा तदसम्भवात् । न भोः । तदा व्यवादयन्त अहिंसयन्तेति णिचा निर्वाहसम्भवात् । स्वातन्त्र्यस्नेहयोरन्तर्णीतणिचं हि स्मरन्ति । 'कृत्वा विवाहं तु', 'जज्ञे पुत्रानकल्मषान्' इत्यादिवत् । यथा कश्चिद् गृहपतिराह– 'मया सस्वेदसेकं निर्मितमिदं निकेतनम्' इति । 'बाध्यबाधकतां गतः' इति च भागवते । स एव विजयते । स एव हि लीलया विजीयते ।।

## ऐतरेयेऽपि सर्वत्र विष्णुपरता

अत्र पठितान् विष्णुपर्यन्तान् प्राणशब्दान् शृङ्गग्राहिकया दर्शयति–**तं देवाः प्राणयन्ते**त्यादिना । प्राणसंवादानन्तरं तस्मिन्नेव प्रकरणे पठ्यते– 'तं देवाः **प्राणयन्त** । स प्रणीतः प्रातायत । प्रातायीती३ तत् प्रातरभवत् । समागादिती३ तत् सायमभवत् । अहरेव प्राणो रात्रिरपानः । वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रम् । स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत् तदुक्तं भवति' (मऐ.उ.१.६.४.) इति ।।

'विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।
'स एव सर्ववेदोक्तस्तद्रथो देह उच्यते' इति स्कान्दे ॥

---

कथं देवा भगवन्तं प्रणयन्ति? आह– **ज्ञानसम्प्रदायप्रवर्तनेन** । तमिति कम्? स्फुटं प्रमाणवचनमाह– **तस्मादित्यादि** । **तस्मात्** पूर्वप्रस्तुताद् **वायोः** । **वायुना उदितं** नारायणं ते **देवाः शिष्यप्रशिष्यादिष्वनयन्** । शिष्या इत्यृषयः । प्रशिष्या इति पितरः । आदिना मनुष्याः । तेन नयनमित्युपदेशद्वारा बोधनम् । मुख्यतो भगवन्तं नारायणमनयन् । तदनु वायुमपि । 'वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः' इत्युत्तरवचनात् । स प्रणीतः प्रततो भूत्वा नारायणः प्रगे सन्निहितः प्रातर्नामाऽभवत् । तदनु वायुरपि प्रातरभवत् । प्राणनारायणौ जीवचिता सङ्गतौ चाभूताम् । तेन समयेते इति सायन्नामानौ । अह्नि प्राणे च गतस्तन्नामा भगवान् बभूव । प्राणश्चाहरभिमानी तन्नामा बभूव । रात्रावपाने च गतस्तन्नामा भगवान् बभूव । अपानात्मा वायुश्च रात्रिमानी तन्नामा बभूव । वागग्निगतौ प्राणनारायणौ तन्नामानौ । चक्षुरादित्यगतौ तन्नामानौ । एवं चन्द्रमसि मनसि च गतौ दिक्षु श्रोत्रे च गतौ तत्तन्नामानौ । भगवान् स्वेच्छया नियन्तुं गतः । वायुस्तु तदाज्ञया तत्तदभिमानित्वेनेति भेदः । स एष प्राणनारायणाभ्यामध्यात्मं प्रहितानां देवानां संयोगः । अत इमाः केवलं देवता उच्यन्ते । न केवलमिमाः । भगवदधीनत्वेन वायुरपि केवलं देवतैव । अथापि रुद्रादिभ्योऽधिकत्वेनाधिदैवतमिव । नारायणाख्यं ब्रह्मैव केवलं सर्वाधिकत्वान्मुख्यतोऽधिदैवतम् । नित्यमाविर्भूतज्ञानरूपत्वादिति सर्ववेदैरुक्तं भवतीति सूत्रानुगुणो मन्त्रवर्णार्थः ॥

नन्वत्रोभयोः समानं प्राणपदगदितत्वमुच्यते । नत्वेकत्र मुख्यमपरत्रामुख्यमिति शङ्कमानाय भाष्यकारः स्फुटं वचनमुदाहरति– **विष्णुमेवानयन् देवाः** । अनेन विष्णुरेव श्रुत्युक्तः प्राण इत्यवसीयते । एवकारेण नान्येषां मुख्यतः प्रणयनमित्याह । अमुख्यतः प्रणयनं त्वनुमन्यते । वायुमप्यनयन्नित्यैतरेयसंहितावचनात् । विष्णुमेव प्राधान्येनानयन् । तदनु तदधीनतया प्राणं चेत्यर्थः । एवकारः सर्वत्रान्वेतीति स्फुटम् । **विष्णुमेव** प्राधान्येन **भूतिमुपासते** । तदधीनतया प्राणं च । **स एव सर्ववेदोक्तः** । तदसाधारणनामानि विहाय प्रायस्तदधीनतया वायुरपि । देहस्तस्यैव मुख्यो **रथः** । तदनु प्राणस्यापीति । एतेन सौत्रस्तथाशब्दो विवृतः ॥

'स एषोऽसुः' असनशीलत्वात्–

'असनाद् भगवान् सोऽसुः सर्वस्यापि जनार्दनः ।
'प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते' इति च ॥

**'स एषोऽसुः–'** इति खण्डान्तरस्थं वचनम् । तथाहि समग्रा श्रुतिः– **'स एषोऽसुः स एष प्राणः** स एष भूतिश्चाभूतिश्च । तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुः । तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति । अभूतिरित्यसुरास्ते ह पराबभूवुः । भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद' (महै.उ.१.६.६.) इति ॥

स एवासुः स एव प्राणः स एव भूतिश्चाभूतिश्चेति सर्वं सावधारणम् । **'विष्णुमेव भूतिमुपासते'** इति स्कान्दवचनात् ॥

## असुशब्दार्थः

अस्यतीत्यसुः । असु क्षेपणे । क्षेपणमिति प्रेरणमुच्यते । क्षिप प्रेरणे । सर्वप्रेरकत्वादसुः । ताच्छील्यार्थोऽयमुः प्रत्यय इत्याशयेनाऽह– **असुरसनशीलत्वादिति** । प्रमाणवचनाच्चैतदवसीयत इत्याह– **असनाद् भगवान् सोऽसुः सर्वस्यापि** । 'दुष्टनिरसनादसुः' इति व्याख्यानं तु प्रमाणवचनाननुगुणम् । सर्वस्याप्यसनमिति प्रेरणमेव हि पदार्थः । अन्यथा सर्वस्य दुष्टस्येत्यध्याहर्तव्यं भवति । एतेन 'दैत्यनिरसनादसुनामा' इति व्याख्यानमपि दत्तोत्तरम् । अथापि **'जनार्दनः'** इत्यर्थान्तरमपि सूचितमिव । दुर्जनानामर्दनात् निरसनादसुरिति । अथापि मुखत उक्तं निर्वचनं त्यजन्तः शोच्या एव । ण इत्यानन्दः । स एव दुःखासम्भिन्न आण उच्यते । प्रकृष्टः सर्वाधिको निरवधिक आणः प्राणः । तदेतदाह– **प्रकृष्टेति** । प्र+आ+नन्द इति च्छेदः । प्रकृष्टो णोऽस्येति वा । समासान्त आदिपदवृद्धिः । प्रणयतीति प्राण इतिवत् । प्रणीयत इति प्राण इतिवत् । प्रकर्षेण अनन्त्यनेनेति अर्थान्तरसूचनार्थं चेदं दैर्घ्यम् । अण गतौ । प्रकर्षेण अणति गच्छतीति सर्वगतश्च प्राणः । तदेतत् सर्वमसाधारणं भगवति । एवमनेकार्थत्वाय निर्वचने वर्णागमविपर्ययादयो भवन्ति । तदुक्तम्– 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति । स च शब्दस्वभाव इति वैयाकरणाः । अर्थविशेषलाभायेति तत्ववादिनः । लोके क्वचिद् व्यवहारतश्च । यथा द्वितीयो वरो देवरो भवति । क्वचिन्निगूहनाय । यथा इदन्द्रं सन्तमिन्द्रमाहुः ॥

**'प्राण ऋच इत्येव विद्यात्'** प्राणवाचकत्वेन वर्त्तन्ते ऋच इत्येव विद्यात् ।

प्राणशब्दानुगमात् इति सूत्रानुगुण्याय **'स एषोऽसुः स एष प्राणः'** इति पठितम् । तस्य विष्णुपरत्व-समर्थनाय 'एष भूतिश्चाभूतिश्च' इत्यादिकं पठनीयम् । तदेतत्– **'विष्णुमेव देवा भूतिमुपासते'** इति स्कान्दवचनेनावगम्यते । **देवा एव भूतिमुपासते** । तेन 'अभूतिरित्यसुराः' इति च गदितार्थम् ।

## भूतिशब्दार्थः

भवति ज्ञानैश्वर्यादिसमृद्धिरनयेति सतां भूतिः । स्वयं च भवनं भूतिः । पूर्णज्ञानैश्वर्यादिरूपः । उभयथाऽपि देवा उपासाञ्चक्रिरे । ते ह ज्ञानैश्वर्यादिमन्तो बभूवुः । अधिकभूतित्वादभूतिः । न भूतिरसतामिति चाभूतिः । न भवत्यनयेति वा । अस्माकमभूतिदोऽयं स्वयमभूतिरूपश्चेत्युपास्य असुराः पराबभूवुः । देवानां प्रधानो वायुरद्यापि सुप्तेषु स्थित्वा भूर्भूरित्येव भगवन्तं स्तौति । भूतिरेव हि भूर्नाम । य एवमुपास्ते स आत्मना परमात्मप्रसादेन ज्ञानादिपूर्णो भवति ॥

तस्य द्विषन् भूतिप्रतिरोधी निरयदः पापसञ्चयश्च परा भवति नश्यति । भ्रातृव्यो भ्रातृवत् सहैव स्थितो यो द्वेष्टि । 'व्यन् सपत्ने' (अ.सू.४.१.१४५.) इति भ्रातुर्व्यन् । **'प्राण ऋच इत्येव विद्यात्'** इति च प्राणशब्दानुगमात् प्राणो विष्णुरिति विद्यात् । **स विष्णुरेव सर्ववेदोक्त** इति हि स्कान्दे ॥

## प्राणे ऋचः

प्रथमप्रघट्टके द्वौ प्राणशब्दानुगमौ दर्शितौ **'तं देवाः प्राणयन्त'** इति, **'स एषोऽसुः स एष प्राणः'** इति च । अथ द्वितीयप्रघट्टके प्रथमाध्याये गतं प्राणशब्दानुगममाह– 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव **प्राण ऋच इत्येव विद्यात्'** (२.१.२.) इति ॥

सर्वा ऋचः । अस्य वचनस्य बाह्वृच्यगतत्वात् तासां प्रथमं ग्रहणम् । न केवलमृच एव, सर्वेऽपि वेदाः, न केवलं वेदा एव, सर्वाण्यपि गीर्वाणवाणीपदानि, सर्वाण्यपि मनुष्यभाषापदानि न केवलम्, मृगपक्ष्यादिरुतान्यपि, सर्वे समुद्रादिघोषा अपि एकैव व्याहृतिः । एकविषयमेव व्याहरणम् । प्राणे विषय एव । तस्मात् विशिष्य सर्वा ऋचः प्राणविषया एवेति विद्यात् । तदेतदाह– **प्राणे ऋच इत्येव विद्यात् । प्राणवाचकत्वेन वर्तन्ते ऋच इत्येव विद्यादिति** । प्रथमं विष्णुविषयास्तदनन्तरं

मुख्यप्राणविषयाश्चेत्यर्थः । उभयार्थविवक्षयैव विष्ण्वादिपदान्यपहाय प्राणपदमुपादत्त । परोक्षप्रियत्वाच्च देवानाम् । तथाहि भाष्यवचनम्–

> ‘प्राणशब्दश्च मुख्यतो विष्णौ वर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति । ‘प्राणस्य प्राणः’ इति श्रुतेरुभयोरपि प्राणशब्दः सिद्ध एव । ‘अयं वाव शिशुर्योऽयं मध्यमः प्राणः’ इति वायोर्विशेषणादुत्तमः प्राणो विष्णुरिति च सिद्धम्’ इति । ‘अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च’ इति च ।

ब्रह्माण्डवचनं चात्र संवदते–

‘द्वावात्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ ।
‘अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ॥
‘तदन्ये चेतनाः सर्वे प्राणाश्चाऽत्मान एव च ।
‘अज्ञानाभिभवस्पृष्टास्तस्मात् ते ह्यधमाः श्रुताः ॥
‘मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।
‘सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः ॥
‘अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।
‘श्रीरप्यखिलशब्दोक्ता विष्णुवन्नतु मुख्यतः ॥
‘तस्मादमितनामानावपि तौ मितनामवत् ।
‘श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ॥
‘अनन्तनामवत्त्वाच्च सोऽनन्तगुण ईरितः ।
‘पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते’ इति ॥

बृहत्संहितायां च–

‘मुख्यतः सर्वनामा तु विष्णुरेको नचापरः ।
‘तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः ।
‘अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते’ इत्यादि ॥

---

**तदयं प्राणोऽधितिष्ठतीति** । तद् रथरूपं शरीरं **प्राणोऽधितिष्ठतीत्यर्थः** । इत्यादिषु वाक्येषु यथा प्राणो विष्णुः स्यात् **तथा** प्राणशब्दानुगमाद् विष्णुरेव **प्राणः** ॥

---

## तद्रथो देह उच्यते

द्वितीयप्रघट्टकस्य द्वितीयाध्याये गतं प्राणशब्दमन्त उद्धरति– **'तदयं प्राणोऽधितिष्ठति'** । इयमिह समग्रा श्रुत्यानुपूर्वी–'अथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता **तदयं प्राणोऽधितिष्ठति'** (२.२.७.) इति ॥

अथ देवरथ उच्यते । उपासकानां देहाख्यः रथः देवयोः प्राणनारयणयोः । वाग्देवतोमा उद्धिरश्वनियन्त्रणरज्जुः । 'ಕಡಿವಾಣ' इति भाषायाम् । उद्धियति धारणेन नियमयतीति उद्धिः । धि धारणे । वाचा हि गतिर्नियम्यते । श्रोत्रे तन्मानिनौ रोहिणीचन्द्रमसौ पक्षयोः स्त इति पक्षसी रथपार्श्वगतावश्वौ । चक्षुषी सञ्ज्ञासवितारौ युक्ते रथमध्ये युक्तावश्वौ । चतुरश्वो ह्ययं रथः । इन्द्रियापेक्षया पक्षसी युक्ते इति नपुंसकत्वम् । मनोमानी शिव उद्धेः सङ्ग्रहीता सारथिरिति । तदित्यविभक्तिको निर्देशः । परमे व्योमन्निितिवत् । तमेतं रथं प्राणः प्रकृष्टानन्दरूपत्वात् नारायणः मुख्यवायुश्चाधितिष्ठत इति । यद्वा सामान्ये नपुंसकम् । अत आह– **तद् रथरूपं शरीरम्** इति ॥

मन्त्रार्थश्च गारुडेन विवृतस्तद्भाष्ये–

'यत्स्यन्दनं वहन्त्येते देवा भार्यासमन्विताः ।
'अधिदैवे तथाऽध्यात्मे जीवदेहात्मकं रथम् ॥

'स सूर्यः सूर्यभार्या च चक्षुर्द्वयसमास्थितौ ।
'वहतोऽश्वात्मकौ देहं नारायणरथात्मकम् ॥

'सोमश्च रोहिणी चैव दक्षवामश्रुतिस्थितौ ।
'उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः ॥

'उद्धारणार्थमेतेषामुमा वाचि समास्थिता ।
'नागाकारैव रश्मित्वमगमद् वैष्णवे रथे ॥

'मनसि स्थितः शिवश्चात्र मनोनामा महाबलः ।
'अभवत् सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम् ॥

'प्रकृष्टानन्दरूपत्वात् प्राणाख्यावधितिष्ठतः ।
'तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ' इति ॥

यत्स्यन्दनं यस्य पूर्वोक्तस्य केशवस्य स्यन्दनम् । समास्थितौ सममास्थितौ सम्यगास्थितौ च । नहि द्वयोरेकस्य विषमत्वे रथस्य समगतिः सम्भवति । मनसि स्थितत्वान्मनोनामा । महाबलत्वाच्च मनोनामा । महतोऽपि देवान् नमयतीति । अश्वस्येव मुखमनयोरस्तीत्यश्विनामानौ । एतेन प्राणशब्दसमन्वयेनाश्विशब्दसमन्वयोऽपि गदितो भवत्यानुषङ्गिकतया ॥

## गुर्वर्थदीपिकायां प्रक्षेपः?

एतेन 'वागुद्धिरित्यत्रोद्धिपदेनाश्वबन्धनाय रथाग्रे रचितदारुविशेषः कथ्यते । पक्षसी पार्श्वस्थे रथचक्रे' इति गुर्वर्थदीपिकवचनं प्रक्षिप्तमिति भाति । स्फुटं भाष्योदाहृतप्रमाणविरोधात् ॥

भाष्ये इत्याद्यनुगमादिति । ऐतरेये इत्यादिषु प्रकरणेषु विष्णुवाचकस्यैव प्राणशब्दस्यानुगमादनुवर्तनादित्यर्थः । आदिपदेन 'सर्वं हीदं प्राणेनाऽवृतम्' इत्यादिः स्फुटविष्णुवचना प्राणश्रुतिः, चक्षुरादीनां पञ्चानामपि विष्णुत्ववादिनी–'स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणः । तं ब्रह्मगिरिरित्याचक्षते' इति श्रुतिश्च गृह्यते ॥

तथाह्युक्संहितावचनम्–

'..................स एष भगवान् गिरिः ।

'गिरणात् सर्वभूतानां चक्षुर्नामाऽस्य दर्शनात् ।
'सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः ॥

'प्राणनामा प्रणेतृत्वात् तमेनं गुणपूर्तितः ।
'गरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम्' इति ॥

**ब्रह्मशब्दानुगमाच्च ॥ ❊ ॥**

---

**'एतद् ब्रह्मैतत् सत्यम्', 'तं प्रपदाभ्यां प्रापद्यत', 'अः इति ब्रह्म' इत्यादि ब्रह्मशब्दानुगमाच्च विष्णुरेव प्राणः ॥ ❊ ॥**

---

**गिरतीति गिरिः । गॄ निगरणे । गरणं गिलनं भक्षणमित्येतत् ॥**

एतेनेन्द्रियैः सहाभिधानं दत्तोत्तरम् । एवं भूतैः सहाभिधानमाकाशस्य, छन्दोभिः सहाभिधानं गायत्र्याः, त्रेताभिः सहाग्नेरित्यादि चेति सर्वोपसंहारोऽयमधिकरणराजः । तदुक्तम्– 'अन्यगतलिङ्गादीनामपि तद्ग-भगवदपेक्षया युक्तेः' इति ॥

सौत्रतथाशब्दलब्धमर्थमाह भाष्ये– **अत्रापीति** । यथा तैत्तिरीये 'तद्वै त्वं प्राणोऽभवः' इत्युक्तः प्राणो विष्णुः, तथाऽत्रापि ऐतरेये 'चक्षुःश्रोत्रं मनो वाक् प्राणः' इत्यत्रापि **प्राणो विष्णुरेव** । यथा चैतरेय एवं 'तं देवाः प्राणयन्त' इत्यादिषु क्रियासमभिहारेणोक्तः प्राणो विष्णुः, तथा प्राणशब्दानुगमात् 'चक्षुः श्रोत्रम्–' **इत्यत्रापि प्राणो विष्णुरेव** मुख्यत उक्त इति ॥

## वासुदेवो ब्रह्म

न केवलं प्राणशब्दानुगमात्, **ब्रह्मशब्दानुगमाच्च** प्राणो विष्णुरेव । तमेव ब्रह्मशब्दाभ्यासं लेशतो दर्शयति टीकाकारः– **एतद् ब्रह्मैतत् सत्यमित्यादिना** । 'एष पन्थाः, एतत् कर्म, **एतद् ब्रह्म, एतत् सत्यम्'** (महै.उ.१.६.१.) इत्युपनिषदुपक्रमवाक्यम् । चतूरूपो नारायणो ह्यत्रोपक्रम्यते । तथाहि भाष्य ऋक्संहितावचनम्–

'एष एव सदा पन्था भगवान् पुरुषोत्तमः ।
'नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ।
'ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः' इति ॥

पथन्तेऽनेनैवेनमिति पन्थाः स्वप्राप्तिहेतुः । पथे गतौ । करोति माति जानाति च सर्वमिति कर्म । सर्वकर्ता सर्वज्ञः पुरुषोत्तमः । कृञ् करणे । मा माने । बृंहतीति ब्रह्म गुणपूर्णो भगवान् । सति

साधुः सत्यम् । 'तत्र साधुः' (अ.सू.४.४.९८.) इति यत् । सतः साधुगुणान् यातीति वा सत्यम् । चतुर्मूर्तिर्हि नारायणोऽत्र प्रास्तावि । तथाहि भाष्यवचनम्– 'ब्रह्म पन्थाः सत्यं कर्मेति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः' इति ॥

तस्यैव पञ्चात्मकस्य नारायणस्य मुख्यवायोश्च पञ्चस्वधिकरणेषु पञ्चविधमुपासनं ग्राहयितुं 'चक्षुः श्रोत्रम्' इत्यादिकं हि प्रवृत्तम् ॥

तं प्रपदाभ्यां प्रापद्यतेति तत्रैव तृतीयखण्डे । **'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्** । यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे । तस्मात् प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनाम् ' (१.६.३.) इति समग्रं वाक्यम् ॥

'तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
'वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ॥
यस्मात् प्रपेदे भगवान् प्रपदा चतुराननम् ।
तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ॥
चतुर्मुखाकारवतां नृणां पादतळोपरि ।
प्रपदाख्या वर्ततेऽतो नतु पश्वादिनां क्वचित्' इति च प्रमाणवचनम् ॥

अत्रैव चोपरि पठ्यमानम्– 'उदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ताइ' इति वचनं चोपसङ्गृह्यते ॥

'सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः ।
'उदरे ते परं ब्रह्म वासुदेवमुपासते ।
'हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ॥
'उदरस्थं च हृद्गं च ते उभे ब्रह्म तत् परम् ।
'एकमेव यतस्तस्मादुभये ह्यपि तद्विदः' इति च ॥

'ब्रह्मा हैव ताइ' इति सांहितं दैर्घ्यं परब्रह्मत्वविवक्षया । ब्रह्म+ह+एव+ते इति प्रतृण्णम् । ताइ इति स्वरस्पर्शविभागश्च भगवद्रूपयोर्द्वित्वं केवलमैश्वर्यादेव न वास्तवमिति ज्ञापयितुम् ॥

**'अः इति ब्रह्म । तत्राऽगतमहमिति' (२.२.७.) इति द्वितीयप्रघट्टकस्य द्वितीयाध्यायान्ते । तत्र भाष्यम्–**

'अः इति ब्रह्म पूर्णं वस्तूच्यते । तत्राऽगतमहमिति । तत्र अकारस्य पूर्णवाचित्वे, अहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान् नारायणः । अहमेक एव हि परिपूर्णः । अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति' इति । 'अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम्' इति । 'मुक्तेभ्यः प्रळये लीनेभ्यश्च वस्तुभ्यः सर्वदा विभिन्न एव भगवानिति दर्शयितुं च अः इति पृथग् वचनम्' इति च ॥

तत्र अकारवाच्ये ब्रह्मण्येव वाचकत्वेनाऽगतमहमिति पदं चेत्यपि विवक्षितम् । अ इति हूयत इत्यहमिति ॥

**इत्यादिपदेन–** 'अयं पुरुषो ब्रह्मणो लोकः' (१.६.३.) इति, 'तं ब्रह्मगिरिरित्याचक्षते' (१.६.६.) इति च गृह्यते ॥

'कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः ।
'आवासस्थानमुद्दिष्टः–' इति भाष्ये प्रमाणवचनम् ॥

तेन पञ्चात्मकं विष्णवाख्यं ब्रह्मात्र प्रतिपाद्यत इति स्थितम् । तस्माच्च विष्णुरेव प्राणः ॥

## आत्मशब्दानुगमाच्च

अथच ब्रह्मणो यः शब्दः आत्मेति तदनुगमाच्च प्राणो विष्णुः । तथाहि श्रूयते–'यो हवा आत्मानं पञ्चविधमुक्थं वेद यस्माद्धीदं सर्वमुत्तिष्ठति स सम्प्रतिवित्'(महै.उ.२.२.१.), इति, 'तस्य य आत्मानमाविस्तरां वेद' (२.२.२.) इति, 'आत्मा वा इदमेक एवाग्र आसीत्' (२.३.१.)इत्यादि च ॥

पञ्चविध आत्मा पञ्चात्मा नारायण इति स्फुटम् । य आत्मानं परमात्मानं शिलावृक्षमनुजादिष्वाविर्भावतारतम्येन वेद स तस्य विष्णोः अतिप्रियत्वात् तदीय इत्यर्थः । 'ज्ञानी त्वात्मैव मे' इति

## ॥ न वक्तुरात्मोपदेशादिति चेदद्ध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥
## ॥ १.१.२९. ॥

'प्राणो वा अहमस्म्यृषे' इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति बह्वद्ध्यात्मसम्बन्धो ह्यत्र विद्यते ॥ ✻ ॥

---

**॥ न वक्तुरात्मोपदेशादिति चेदद्ध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥** विश्वामित्रस्य बृहतीसहस्रवक्तुरर्थे वक्तेन्द्र आत्मानं प्राणमुपदिशति– **'प्राणो वा अहमस्म्यृषे'** इत्यादिना । तस्मादिन्द्र एवात्र प्राणशब्देन प्रतिपाद्यत इति चेन्न । **बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ।**

---

हि गीतासु । 'ज्ञानी प्रियतमोऽतो मे' इति च । आत्मा वै नारायण एक एव इदमग्रे प्रळय आसीत् । तेन प्राणो विष्णुरित्यवसीयत इति ॥ ✻ ॥

**॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥** अत्र भाष्यम्– **'प्राणो वा अहमस्म्यृषे'** (महै.उ.२.१.३.) **इत्यात्मोपदेशात्'** इति ॥

तथाहि महैतरेय्यामुपनिषदि द्वितीयप्रघट्टकस्य प्रथमाध्याये समग्रस्तृतीयः खण्डः–

'विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद । स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच । ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे द्वितीयं शंसेति । स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच । ऋषे प्रियं वै मे धामोपागाः । स वा ऋषे तृतीयं शंसेति । स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच । ऋषे प्रियं वै मे धामोपागाः । वरं ते ददामीति । स होवाच त्वामेव जानीयामिति । तमिन्द्र उवाच । **प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि** । प्राणो ह्येष य

एष तपति । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि । तस्य मेऽन्नं मित्रं दक्षिणम् । तद् वैश्वामित्रम् । एष तपन्नेवास्मीति होवाच' ॥

अहरिति अहर्निर्वर्त्यो यज्ञ उच्यते । अत्र महाव्रतं नाम पञ्चविंशमहः । प्रायणीयम्, चतुर्विंशम्, पृष्ठ्यषळहम्, अभिप्लवषळहम्, अभिजित्, स्वरसामत्र्यहम्, विषुवत्, विश्वजित्, छन्दोमत्र्यहम्, दशमं चेत्यह्नां चतुर्विंशतिः ब्राह्मणे प्रोक्ता । पञ्चविंशमिदमहः 'अथ महाव्रतम्' इत्यादिनाऽऽरण्यकेन प्रस्तुतम् । तत्र महाव्रताख्ये यज्ञे माध्यन्दिनसवने होत्रा शंसनीयं बृहतीसहस्रमयं निष्केवल्याख्यं शस्त्रं चाहरित्युच्यते । अत्यन्तं भगवत्प्रियत्वेनाहेयत्वात् । शंसु स्तुतौ । शंसन्त्यनेनेति शस्त्रम् । अप्रगीतमन्त्रसाध्या स्तुतिः ॥

## 'उपनिषससाद' इत्येके

अत्र 'निषससाद' इति त्रिसकारं धातुं पठन्ति पारायणिकाः । 'सदेर्लिट् छान्दसं त्रित्वं षत्वं तु सदिरप्रतेः' इति षड्गुरुशिष्यः । 'अधिकः सकारश्छान्दसः' इति सायणः । प्रायश्चित्वं लिपिकृत्-प्रमादः । 'त्वामेव' इति पठितव्ये 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इति, 'शरणं प्रपद्ये' इति पठितव्ये 'तां पद्मिनीमीं शरणमहं प्रपद्ये' इत्यादिवत् । तस्मात् 'निषसाद' इत्येव श्रौतः पाठ इति भाति । क्वचिदव्युत्पन्ना लिपिकृतोऽपि छान्दसा भवन्ति ॥

## षड्गुरुशिष्यस्य व्याख्यानम्

अनधिगतखण्डार्थाः केचित् खण्डमेतमन्यथाऽन्यथा व्याख्यन् । तथाहि षड्गुरुशिष्यः स्वटीकायां मोक्षप्रदायाम्—

'महर्षेः कस्यचित् यज्ञे वर्तमाने महाव्रते ।
'शंसिष्यन्तं तृचाशीतिं विश्वामित्रं शतक्रतुः ॥

'होतारं ब्राह्मणो भूत्वाऽभ्येत्यान्नमयाचत ।
'स ज्ञात्वा ज्ञानदृष्ट्येन्द्रं ददाम्यन्नं शुभं महत् ॥

'तृचाशीत्याख्योक्थमिति ध्यात्वोवाच ददामि ते ।
'इहाऽस्यतामिति प्रोच्य तृचाशीतिं तदंशकम् ॥

‘शशंस विश्वामित्रोऽत्र त्वभेदोंऽशस्य चांशिनः ।
‘अशीतिष्वेवान्नदृष्टिविधानाद् बहुशः पुनः’ इत्यादि ॥

अस्मिन् पक्षे प्रथमं बृहतीसहस्रं शशंसेति आद्यां गायत्रीं तृचाशीतिं शशंस । द्वितीयं बृहतीसहस्रमिति द्वितीयां बार्हतीं तृचाशीतिम् । तृतीयं बृहतीसहस्रमिति तृतीयामौष्णिहीं तृचाशीतिमिति ॥

‘त्वामेव जानीयाम्’ इत्यादेरेवमर्थमाह–

‘इदानीमिन्द्ररूपेण स्थितं त्वां परमार्थतः ।
‘ज्ञातुमिच्छामि साक्षात्तु तन्ममोपदिश प्रभो ॥

‘प्रणयतीति प्राणः । एतेन आदित्यरूपेण वपुषा विष्टः प्रविष्टः । तस्य मे सर्वा दिशः प्रविष्टस्य मम मित्रं प्रियकरम् ॥

‘दक्ष उत्साह इत्यस्मादिनस्तद्धि बलप्रदम् ।
‘विश्वस्मिन्नागतं मित्ररूपेणेत्यात्वमण् तथा ।
‘वैश्वामित्रं तु तज्ज्ञानं यदुक्तं ते मया मुने ॥

‘योऽसौ साक्षात्कृतः सर्वैस्तपत्यास्थाय मण्डलम् ।
‘तं प्राणं त्वमृषे विद्धि ब्रह्मेदममृतं त्विदम्’ इत्यादि ॥

प्राण एवेन्द्रः । प्राण एव चाऽदित्यः । तस्मादिन्द्र एवाऽदित्यः । अन्ततः इन्द्रः प्राण आदित्य इत्येतत् त्रिकममृतं ब्रह्मैवेति ज्ञानं मोक्षप्रदमित्येतत् तदुक्तं भवति ॥

## सायणीयं व्याख्यानम्

सायणस्तु किञ्चिदिवान्यथा व्याख्यत्–

‘कदाचिन्महाव्रताख्ये कर्मणि विश्वामित्रो महर्षिर्होता सन्नेतन्महाव्रताख्यमहः शंसितुमुपक्रमं करोति । तदानीमिन्द्रोऽन्नार्थी संस्तं विश्वामित्रमुपनिषससाद उपेत्य समीपे स्थितवान् । अधिकः सकारश्छान्दसः । स च विश्वामित्र इन्द्रस्याभिप्रायं ज्ञात्वा तवान्नभूतमेव तन्मन्त्रजातमितीन्द्रस्याग्रे कथयित्वा बृहतीछन्दस्कं मन्त्रसहस्रं शंसित्वा तेनेन्द्रस्य प्रियं स्वर्गरूपं स्थानं प्राप्तवान् ॥

'विश्वामित्रं प्रतीन्द्र एवमुवाच । महर्षे, त्वं मदीयान्नबुद्ध्या शंसित्वा मदीयं प्रियं स्थानं प्राप्तवानसि । स त्वं शस्त्रं पुनरपि द्वितीयं शंसेति । अन्यत् पूर्ववत् । बृहतीसहस्रशब्देनात्र प्रथमपर्याये गायत्री तृचाशीतिर्विवक्षिता । द्वितीयपर्याये बार्हती । औष्णिही तृचाशीतिस्तृतीये । इन्द्रो हि यथोक्तप्राणमध्यात्मध्यानेन तत्साक्षात्कारं प्राप्य स्वानुभवसिद्धं सर्वात्मत्वमुपदिश्य सर्वात्मनः स्वस्य तृचाशीतिरूपं यदन्नं तन्मित्रादिविशेषणैः प्रशसंस । लौकिकमित्रवत् प्रीतिजनकत्वादन्नस्य मित्रत्वम् । अभिवृद्धिहेतुत्वाद् दक्षिणत्वम् । 'दक्ष वृद्धौ' इति धातुः । विश्वामित्रेण सम्पादितत्वाद् वैश्वामित्रम् । आदित्यरूपेण सर्वदा लोके तपन्नेवास्मीति ध्यानदृष्टिसिद्धं स्वकीयं रूपमिन्द्रः प्रोवाच' इति ॥

## द्वयमप्यपव्याख्यानम्

अनयोः कतरत् साधु? नोभयमपि । बहवोऽत्र दोषा भवन्ति । इन्द्रो ब्राह्मणरूपेणाऽगत इति षड्गुरुशिष्यः । इन्द्ररूपेणैवेति सायणः । अनयोरुभयोराख्यानयोः कतरद् वास्तवमिति निर्णेतव्यम् । नोभयत्रापि प्रमाणसंवादं पश्यामः । केवलं प्रज्ञावादोऽयम् । न केवलम्, आचार्योदाहृतप्रमाणविरुद्धश्च ॥

अथच आरण्यकारम्भ एवेन्द्रकृतं महाव्रताख्यं कर्म प्रस्तुतम्– 'इन्द्रो वै वृत्रं हत्वा महानभवद् यन्महानभवत् तन्महाव्रतमभवत् तन्महाव्रतस्य महाव्रतत्वम्' (ऐ.आ.१.१.१.) इति । तत् पूर्वप्रस्तुतं महाव्रतं परित्यज्य कस्यचिदृषेर्यज्ञ इति निर्मूलं व्याख्यानम् । श्रुतपरित्यागोऽश्रुतस्वीकारश्चास्य स्याताम्; प्रमाणविरोधश्च ॥

बृहतीसहस्रं त्रिः शशंसेति स्फुटमुच्यते मूले । तदेकदेशं तृचाशीतित्रयं शशंसेति उन्मूलं व्याख्यायते सत्यपि प्रमाणविरोधे । अपिच शस्त्रभागत्वात् तृचाशीतित्रयं शंसनीयमेव होत्रा । तत् किं वृथा शंस शंसेति प्रचोदयति । अथचैवं तृचाशीतित्रयस्यैव शंसने न्यूनं शस्त्रशंसनं स्यात् । अवशिष्टं शस्त्रभागं किमिति न पपाठ । सकृदेव पठनेन 'प्रियं धामोपागाः' इति स्वर्गप्राप्तिः फलमुदितम् । द्वितीयादिशंसनेऽपि तावदेव फलमिति व्यर्थं त्रिः शंसनं स्यात् । शस्त्रभागत्वेन वक्तव्यत्वादुच्यते चेत् व्यर्थं त्रिः फलकथनम् । समग्रस्य महाव्रतस्य हि फलं स्वर्गप्राप्तिस्तत्पक्षे । जडं मन्त्रजातं प्रियकर-

त्वान्मित्रमिति त्वद्भुतं व्याख्यानम् । मित्रत्वं हि चेतनधर्मः । मित्रत्वव्यापकं हि प्रियत्वम् । नतु प्रियत्वव्यापकं मित्रत्वम् । अहो व्यवहारभाषायामपि भ्रमन्तो वेदान् व्याचिख्यासन्ति । षडपि गुरवः परमार्थं नाऽविरकुर्वन्नेव । नहि कोऽपि भाषाशास्त्रवित् 'प्रियमिदमशनं मे मित्रम्' इति व्याहरत्यनुन्मत्तः ॥

## ब्रह्माण्डोक्तं श्रुतिव्याख्यानम्

आदौ तावत् खण्डोक्त इतिहासो यथावत् ज्ञातव्यः । ततः प्रमेयनिर्णयार्थं सूत्रप्रवृत्तिः । अनधिगतखण्डार्थैः कथिता कथा निर्मूलेत्यवगतम् । कथं तर्हि निर्णयः? प्रमाणवचनैरेव । नहि कस्यापि स्वरुचिरितिहासनिर्णयनी भवति । अतो ब्रह्माण्डवचनं प्रमाणमुज्जहार भगवत्पादः स्वकीयभाष्ये । तेन परव्याख्यानं प्रमाण-विरोधादेव निरस्तं च, स्वव्याख्यानं समर्थितं च भवतीति–

'वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये ।
'महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः ।
'भृगुरध्वर्युरभवद् ब्रह्मा ब्रह्माऽभवत् स्वयम् ॥

'उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः ।
'सादस्यमकरोत् तत्र तदन्येऽन्येऽपि चर्त्विजः ॥

'बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम् ।
'वायुना सह देवेशस्तदा वासवमाविशत् ॥

'आविष्टो विष्णुनाऽथेन्द्रो वायुना सह कौशिकम् ।
'शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः ॥

'ऋक्साहस्रं शशंसात्र यज्ञाङ्गत्वेन भक्तितः ।
'तच्छ्रुत्वा तुष्टिमगमद् केशवो वायुसंयुतः ॥

'द्वितीयवारं शंसेति प्राह तं च जनार्दनः ।
'प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् ॥

'अतिप्रियत्वाद् भगवान् पुनरप्याह कौशिकम् ।
'तृतीयं च शशंसासौ विष्णोरन्नं प्रकल्प्य तत् ॥

'ततोऽतितुष्टो भगवान् ददानि वरमित्यमुम् ।
'ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः ॥

'प्रादाद् द्वितीये सामीप्यं तृतीये पुनरेव च ।
'वरं ददानीत्युक्तः सन् पुनः प्राह जनार्दनम् ॥

'सम्यक् त्वामेव जानीयामिति मोक्षे सुखोच्चताम् ।
'इच्छंस्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः ॥

'सर्वनामाऽहमस्म्येक इति ज्ञानं ममोत्तमम् ।
'यस्मात् सर्वगुणत्वं स्यात् सर्वनामत्व एव तु ॥

'नहि दोषाभिधायीनि विष्णोर्नामानि कानिचित् ।
'अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि ॥

'सर्वोत्तमगुणात्मत्वात् सदा नारायणस्य हि ।
'सर्वोत्तमगुणानेव नामान्याचक्षते हरेः' इत्यादि ॥

हौत्रं होतृत्वं चक्रे निरुवाह । शस्त्रशंसनं हि होतुः कर्म । आहुतिदानमध्वर्योः । तेभ्योऽन्ये ऋषयः अन्ये ऋत्विजः बभूवुः । उक्तानां चतुर्णां प्रधानर्त्विजां सहायका एकैकस्य त्रयस्त्रय इति द्वादश । यदा यस्मात् केशवं केशाख्यकिरणेषु वर्तमानं स्वोपास्यमादित्यगतं बृहतीसहस्रप्रतिपाद्यत्वेन सस्मार तदा तस्मात् देवेशो नारायणः वासवमाविशत् । सः विश्वामित्रः ऋक्सहस्रं शशंस । न तृचाशीतिमात्रम् । प्रथमं यज्ञाङ्गत्वेन शशंस । होतरि प्रीत्यैव शंसेत्युक्तः तत्प्रीत्यर्थमेव द्वितीयवारं शशंस । अतिप्रीत्यर्थं तृतीयवारम् । नतु यज्ञाङ्गत्वेन । द्वितीये स्वपुरप्राप्तिरूपं सामीप्यं द्वितीयं मुक्ति-

स्थानम् । तृतीये पुनरप्यधिकं सामीप्यम्, स्वान्तःपुरप्राप्तिरूपं सामीप्यातिशयम् । सामान्यवचांसि साधारणगुणवचनानि अल्पगुणवचनानि च न भवन्ति । किन्तु असाधारणगुणवचनानि परिपूर्णगुणवचनानि च ॥

## तदनुगुणः सूत्रार्थः

एतेन यदिन्द्रस्य सर्वात्मकत्वपरतया व्याख्यानं तदपि अनेन बादरायणवचनेनैव परास्तम् । अतस्तद्वचनानुसारेणैव सूत्रपदानि व्याचष्टे भाष्यकारः– **प्राणो वा** इत्यादिना ॥

को वक्ता? कस्य वक्ता? कः किमित्युपदिदेशेत्यादि स्फुटं विवृतं टीकायाम् । **वक्तुः** बृहतीसहस्रस्य **वक्तुर्विश्वामित्रस्य** कृते वरं ते ददानीति **वक्ता इन्द्र आत्मानं प्राणमुपदिशति** । सूत्रादौ श्रूयमाणो नञ् 'इति चेत्' इति सूत्रखण्डस्याऽद्यन्तयोः सम्बध्यते– 'आत्मोपदेशान्न विष्णुरिति चेन्न' इति । उभयत्रानुकर्षार्थमेवाऽदौ प्रयोगः ॥

नचायमुपचार इति वक्तुं युक्तम् । बृहतीसहस्रवक्तुर्विश्वामित्रस्यार्थे तदनुग्रहार्थमिन्द्रेण हीदमुपदिष्टम् । तदपि महाव्रते यज्ञे । तेनास्ति श्रोत्रानुकूल्यम् । अस्ति वक्त्रानुकूल्यम् । अस्ति च प्रसङ्गानुकूल्यम् । उत्कृष्टं देशनं ह्युपदेशनम् । उपपन्नाय उपपन्नेन उपपन्नं हि देशनमुपदेशनम् । नहि वञ्चनार्थमुपन्यासः परिहासविजल्पितं वा ॥

## इन्द्र एवोच्यते नोपेन्द्रः

सूत्रे वक्तुरिति तृतीयार्थे च । तदेतदाह– **वक्तेन्द्र** इति । तथाच बृहतीसहस्रवक्तुर्विश्वामित्रस्य कृते वक्तुः वक्त्रा उपदेष्ट्रा आत्मनः **'अहं प्राणो वै'** इति स्फुटं प्राणत्वेनोपदेशात् न प्राणो विष्णुः; किन्तु इन्द्र एव । उपेन्द्रं हि विष्णुमाहुः । युक्तं च तस्य प्राणत्वम् । सूर्यात्मना सर्वा दिशः प्रविश्य सर्वलोकप्रणयनात् । इन्द्रियैः सहाभिधानं च तस्यैव सङ्गतम् । सर्वेन्द्रियमानित्वेनेन्द्रियप्रणयनात् । विशिष्य च पाणिमानित्वेन सर्वकर्मप्रणयनात् । प्रणयतीति हि प्राणः । सूर्यात्मा च चक्षुः प्रणयति । शब्दत एव हि ज्ञायते– इन्द्रसम्बद्धमिन्द्रियमिति । पाणिनिरप्याह– 'इन्द्रियमिन्द्रलिङ्गम्–' (अ.सू.५.२.९३) इति । 'इन्द्रशब्दात् षष्ठीसमर्थात् लिङ्गमित्यस्मिन्नर्थे घचप्रत्ययो भवति' इति जयादित्यः । अभिमन्यमानेन ह्यभिमानिनमनुमिमते । अभिमानिव्यपदेश एव हि वेदे मुख्य इति भवतोऽपि मतमिति ॥

**अयमर्थः– अधिकात्मनः परमात्मनो जीवेषु सम्बन्धबाहुल्यं ह्यस्मिन् वाक्ये विद्यते । नान्यस्य, तस्य स्वातन्त्र्येण सर्वजीवसम्बन्धायुक्तेः । अथवा नात्रेन्द्रः प्रतिपाद्यः । परमात्मसम्बन्धो हि बहुलो ह्यस्मिन् विद्यते ॥ ❋ ॥**

एवं प्राप्ते सिद्धान्तमाह– **न, अध्यात्मसम्बन्धभूमा ह्यस्मिन्**निति । व्याचख्यौ च भाष्ये– **प्राणस्त्वं प्राणः सर्वाणि भूतानीति बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते** । तद् द्वेधा विवृणोति– **अयमर्थ** इत्यादिना ॥

इदमुक्तं भवति– **अस्मिन्** ऐतरेयारण्यके, द्वितीयप्रघट्टकस्य प्रथमाध्याये तृतीयखण्डे, **अस्मिन्** इन्द्रविश्वामित्रयोः संवादे, **अस्मिन्** 'त्वामेव जानीयाम्' इति विश्वामित्रप्रश्नस्य इन्द्रेण दत्त उत्तरे, **'प्राणस्त्वं प्राणः सर्वाणि भूतानि'** इत्य**ध्यात्मसम्बन्धभूमा बह्वध्यात्मससम्बन्धो विद्यते** इति ह्युच्यते, नतु सर्वात्मत्वमुच्यते । अधिक आत्मा अध्यात्मा । अधीश्वर इतिवत् । अध्यात्मनः परमात्मनः यो जीवेषु सन्निधानरूपः सम्बन्धः, तस्य भूमा सकलजीवनिष्ठत्वरूपं बहुत्वं ह्यत्र प्रतिपाद्यते । स्फुटत्वाय भाष्ये **बह्वध्यात्मसम्बन्ध** इत्याह । बहुषु जीवेषु, सर्वजीवेष्वित्येतत्, अध्यात्मनः परमात्मनः सम्बन्धः सन्निधानमित्यर्थः । त्वयि च विश्वामित्रे प्राण एव स्थित्वा त्वां प्रणयति । सर्वेषु भूतेषु च स्थित्वा स एव प्रणयतीति । 'सप्तसु प्रथमा' इति हि स्मरन्ति । 'सुपां सु–' (अ.सू.७.१.३९.) इति पाणिनिरप्याह । 'सुपां सुपो भवन्तीति वक्तव्यम्' इति तदनुक्तं वार्तिककारः पूरयामास ।

नन्विन्द्रस्याप्येतत् स्यात् । न स्यात् । तस्याधिकात्मत्वाभावात् । तदिदमाह– **नान्यस्य** पूर्वपक्षिणा प्रस्तुतस्येन्द्रस्येति । कुतः? **तस्य** बहुष्वात्मस्वेकत्वेन **स्वातन्त्र्येण सर्वजीवसम्बन्धायुक्तेः** । इदमप्याह– **भूमे**ति । अधिकात्मसम्बन्धस्य पूर्णत्वं नाम स्वातन्त्र्यं भूमशब्दार्थः । तस्मात् तद्गतभगवदपेक्षयैवैतत् । तदेतदुक्तं न्यायविवरणे– 'तद्गभगवदपेक्षया युक्तेः' इति । विश्वामित्रादिसर्वजीवगतभगवदपेक्षयेत्यर्थः ॥

### विद्यते=ज्ञायते

तथा **'प्राणस्त्वं प्राणः सर्वाणि भूतानि'** इत्यत्रैव **अस्मिन्** इन्द्रे **अध्यात्मसम्बन्धभूमा** च **हि विद्यते** ज्ञायते, **'प्राणो वा अहमस्म्यृषे'** इति पूर्ववाक्ये । विद ज्ञाने, कर्मणि लट् । अस्यां विवक्षायाम्,

अध्यात्मनः परमात्मनः सम्बन्धभूमा सन्निधानबाहुल्यमित्यर्थः । तदेतदाह भाष्ये–अत्र इन्द्रे बहुः अध्यात्मसम्बन्धोगम्यते, न प्राणस्येन्द्रत्वमिति । अध्यात्मनः सम्बन्धः सदाऽपीन्द्रे विद्यत एव । तथाऽपि बृहतीसहस्रशंसनेन प्रसन्नो भगवान् इन्द्रे विशेषतः सन्निहितो बभूवेति विद्यते ज्ञायत इति ॥

कथमेतज्ज्ञायते– प्राणोऽस्मीत्यनेन प्राणात्मत्वं नोच्यते, किन्तु प्राणस्य सन्निधानातिशय उच्यत इति? एतच्छङ्कापरिहाराय हीत्याह । अस्यार्थस्य प्रमाणसिद्धत्वात्, विद्वद्व्यवहारप्रसिद्धत्वात् । प्राणात्मपक्षे प्रमाणाभावात्, प्रमाणविरुद्धत्वाच्चेति ॥

## अन्नं श्रीर्मित्रम्

अस्मत्पक्षे 'अन्नं मित्रम्' इति च सङ्गतम् । अन्नपदेन तन्मानिन्याः श्रियो ग्रहणात् । श्रीर्मे मित्रमिति इन्द्राविष्टो विष्णुरुवाचेति । एतदप्याह– 'तद्गभगवदपेक्षया युक्तेः' इति । 'प्राणो वा अहम्, अन्नं मित्रम्' इत्यादिकं सर्वं इन्द्रगतभगवदपेक्षयैव युज्यते । नान्यथेति ।

तदेतत् सर्वमुक्तं ब्रह्माण्डे–

'अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा ।
'साऽन्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च ॥

'दक्षभागस्थितेनत्वाद् दक्षिणं नाम सोच्यते ।
'तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा ॥

'यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।
'वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ॥

'विश्वामित्रेण दृष्टत्वाद् वैश्वामित्रं तदीर्यते ।
'इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन् हरिः ॥

'आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् ।
'त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ॥

'अभिप्रायद्वयं ह्यस्ति शक्राविष्टो नचापरः ।
'हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ॥

**॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १.१.३०. ॥**

**शास्त्रमन्तर्य्यामी । 'संविच्छास्त्रं परं पदम्' इति हि भागवते ॥**

---

न चात्रेन्द्रस्वरूपोपदेशः । नापि सर्वात्मत्वोपदेश आशङ्कनीयः । यतः– **शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ 'संविच्छास्त्रं परं पदम्', सर्वज्ञं नियन्तृ च परं पदम्, प्राप्तव्योत्तमम् ॥**

---

'तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मम ।
'द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ॥

'इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
'अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ॥

'प्राणो वा अहमस्मीति नामसन्दर्भमुक्तवान् ।
'विशेषज्ञानसिद्ध्यर्थं नाम्नामुक्तिः परात्मनः ॥

'इन्द्राविष्टः कोऽयमिति शङ्कानुत्त्यर्थमेव च ।
'तपन्नेवास्मीत्यवदत् तपन्तं वेद सोऽपि हि ।
'नारायणं सूर्यगतं गायत्र्योपासको हि सः' इति ॥

गायत्र्योपासक इति गायत्र्याः उपासक इति च च्छेदः । 'सहस्रपादाक्षिशिरोरुबाहवे' इतिवत् सन्धिगर्भः सन्धिः । गायत्र्याः गायत्रीप्रतिपाद्यस्य गायत्रीनाम्नो नारायणस्य गायत्र्या मन्त्रेणोपासको हि स विश्वामित्र इति ॥ ❋ ॥

### तद्गते तद्व्यपदेशः

**॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥** ननु सामानाधिकरण्यमभेदं बोधयति । तदसम्भवे सादृश्यमिति लोकसम्प्रदायः । स यथा वीरो देवदत्त इत्यभेदम् । सिंहो देवदत्त इति सादृश्यम् । यथा वा पुष्पवती

बालेत्यभेदम् । पुष्पवती वल्लरीयं बालेति सादृश्यम् । नात्र सादृश्यस्यावसरः । तस्मादिन्द्रः सर्वात्मकतया स्वात्मानमुपदिशतीत्येव साम्प्रतमिति शङ्कमानं नैवं भ्रमितव्यमित्याह– **नचात्रेति** । अत्र 'प्राणो वा अहमस्म्यृषे' इत्यादिवाक्ये ॥

दृश्यते ह्यन्यत्रापि सामानाधिकरण्यम् । तद् यथा– मञ्चाः क्रोशन्ति । नात्र क्रोशतां मञ्चानां चाभेदः सादृश्यं वा । तद्गतत्वं हि तच्छब्दार्थः । एवमत्रापि तद्गतभगवदपेक्षया तद्व्यवहार इति ॥

ननु भोः पराजितोऽसि । मुख्यार्थानुपपत्तेस्तत्स्थत्वं तत्रोपचर्यते । एवमत्रापि ब्रह्मण्यौपचारिकः प्रयोग इत्यापतति । सोऽयं शाङ्करोऽध्वा । न माध्वः । न भोः । बहिष्ठानाममुख्यः, अन्तःस्थानां मुख्य इत्यभिप्रायान्माध्व एवायमध्वा ॥

## अन्तःस्थितमेव मुख्यार्थः

ननु लोके न तथा प्रयुञ्जते । क एव त एवमाह? अनधीतशाब्दबोधप्रक्रियोऽसि । दाडिमोऽयमिति त्वचमागूर्याऽचक्षते । वस्तुतस्तु तदन्तस्थानि बीजान्याचक्षते । ब्राह्मणोऽयमिति सङ्घातमागूर्याऽचक्षते । वस्तुतस्तु तदन्तः पिहितं चैतन्यमाचक्षते । एवं सर्वत्रापि बाह्यं स्थूलं दृश्यमागूर्य तदन्तस्थं सूक्ष्ममदृश्यं सारमाचक्षते । सर्वान्तस्थो भगवान् । तस्मात् स एव सर्वशब्दाभिधेय इति सूक्तम् । तदेतदाह भगवत्पादः– 'तद्गभगवदपेक्षया युक्तेः' इति ॥

ननु लोके केवलं रूढिबलादेव प्रयुञ्जते । नैतां प्रक्रियां विज्ञायेति । मा विज्ञाय प्रायोजि, मा च विज्ञायि । शास्त्रविदो विद्वांसस्तु विज्ञायैव प्रयुञ्जते । अत एषा विद्वद्रूढिरिति विज्ञा व्याहरन्ति । सैषा शास्त्रदृष्टिरित्याह– **शास्त्रदृष्ट्या तूपदेश** इति । शास्त्रदृष्टिरियं यच्छास्तुरन्तर्यामिणो दृष्टिरिति । यन्नियम्यवाचकेन नियन्तोच्यत इति । अन्तर्यामीति चान्तर्नियन्तोच्यते । तत्र नियन्तृत्वं पर्याप्तम् । अन्तरित्यवर्जनीयसन्निधिरिति । अस्ति लोकेऽपि तथा व्यवहारः । स यथा– राजा राष्ट्रम् ॥

## अन्तर्यामी नारायणः

अस्ति व्यवहारः । उपचारोऽयम् । न मुख्यः । अस्तु वा बहिर्यामिणि तथा व्यवहारः । अन्तर्यामिणि तु न सर्वथेति **शास्त्रदृष्ट्येत्याह** । शास्तुर्दृष्ट्येत्यर्थः । अन्तर्यामिविवक्षयेति यावत् । तदिदमाह–

**शास्त्रमन्तर्यामी** । 'एष त आत्माऽन्तर्यामी' इत्युक्तो नारायणः शास्त्रमिति पदगदित इत्यर्थः । एतेन 'एष त आत्मा अन्तर्यामी नारायणः' इति शाङ्करभाष्यवचनं च स्मारयति । अन्यथा 'शास्त्रमन्तर्यामि' इत्यवक्ष्यत् । शास्तृत्वात् शास्त्रम् । शास्तीत्यतः ष्ट्रन् । पातृत्वात् पात्रमितिवत् । यथा–'हिरण्मयेन पात्रेण' । श्रोतृत्वात् श्रोत्रमितिवत् । यथा– 'चक्षुः श्रोत्रं मनो वाक् प्राणः' इति । 'सर्वश्रोतृत्वतः श्रोत्रम्' इति हि स्मरन्ति ॥

अन्तर्यामिविवक्षया मुख्यवृत्त्या व्यवहारो न लौकिकः । अत एव 'विद्वद्रूढिर्वैदिका स्यात्' इत्याह । तेन केवलं शास्त्रविदुषां रूढिरियमिति सूचयितुमेव 'शास्त्रदृष्ट्या' इत्याह । अन्यथा 'शास्तृदृष्ट्या' इत्येवावक्ष्यत् । तदिदमाह भगवत्पादः– 'तद्गभगवदपेक्षया युक्तेः' इति ॥

अत्र प्रयोगसंवादमाह– **'संविच्छास्त्रं परं पदमिति हि भागवते'** स्वयं सूत्रकृदेव प्रायोक्षीदिति । तथाहि भागवते भगवन्तं बादारायणं प्रति नारद उवाच–

'स्वप्नो मायाऽग्रहः शय्या जाग्रदाभास आत्मनः ।
'नामरूपक्रियावृत्तिः संविच्छास्त्रं परं पदम्' (१.६.१७.) इति ॥

## भागवतवचनार्थः

अयमर्थः– स्वप्नो नाम आत्मनः परमात्मनः माया । जाग्रदयमिति मोहजननी काचिदनिर्वचनीया सृष्टिमहिमा । तथाहि श्रूयते– 'न तत्र रथा न रथयोगा न पन्थानः । रथान् रथयोगान् पथः सृजते' इति । स्मरन्ति च 'सन्ध्ये सृष्टिराह हि' इति । अथच, आत्मनः जीवस्य मायया ईश्वरेच्छया बाह्यपदार्थानामग्रहः स्वप्नः । जाग्रत्स्वप्नयोरग्रहः शय्या निद्रा । अक्षिस्थाद् विश्वनामकात् परमात्मनः सकाशादात्मनः जीवस्य पञ्चेन्द्रियाभासः, अहं द्रष्टेत्यादिस्वातन्त्र्यभ्रमो जाग्रत् । स च व्यवहारो नामरूपक्रियावृत्तिः नामरूपक्रियाभिः सहैव प्रवर्तत इति । त्र्यात्मकं हि बाह्यं जगत् । त्र्यात्मकः सर्वोऽपि व्यवहारः । चैत्रो मैत्र इति, इन्द्रश्चन्द्र इति नाम । युवा दर्शनीय इति, वज्रपाणिः शशाङ्क इति रूपम् । जागर्ति बिभर्तीति, वृत्रं हन्ति तमो हन्तीति क्रिया । वस्तुतस्तु नामरूपक्रियासु वर्तमानः तत्तच्छक्तीः प्रबोधयन् परमात्मैव स्वतन्त्रः । यतः **संविच्छास्त्रं परं पदं** चित्रं तद् भगवत्पदमित्युत्तर-श्लोकेनान्वयः ॥

अन्तर्य्याम्यभिप्रायेणैवायमुपदेशः ।

भाष्योद्धृतं तुरीयचरणं टीकाकृदेव व्याख्याति– **संवित् सर्वज्ञं शास्त्रं नियन्तृ** इति, **परं पदं प्राप्नव्योत्तमम्-मिति** । लोके तावत् भावार्थेन क्विपा संविदिति संवेदनमुच्यते । इह तु वेत्ता । सर्वं वेत्तीति **संवित् सर्वज्ञम्** । कर्तरि क्विप् । सर्वविदितिवत् । उत्तरानुगुण्याय नपुंसकत्वम् । लोके शासनं शासनसाधनं वा शास्त्रमुच्यते । अत्र तु शास्ति अन्तः स्थित्वा नियच्छतीति **शास्त्रं नियन्तृ** । कर्तरि ष्ट्रन् । लोके तु पदनसाधनं पदम् । अत्र तु पदनीयं पदम् । पद्यन्त एनमिति सञ्ज्ञायां घः । लोके करणाधिकरण-योर्विहितो घः । अत्र कर्मणि । तदेतदाह– **प्राप्नव्योत्तमम्मिति** । मुक्तानां परमा गतिरित्यर्थः । तदेतत् भगवतः पदं स्वरूपं चित्रमिति ॥

## हीति कुशङ्कानिरासः

भाष्ये हिर्हेत्वर्थे । यस्मादेवं भागवते स्मर्यते तस्माद् युक्तं शास्तीत्यर्थे शास्त्रपदम् । अर्वाचीनाः श्लोकमेतमित उत्तरं च न पठन्ति भागवते । तेन न वयमेतं प्रयोगमनुमन्यामहे । किन्तु मन्यामहे प्रक्षिप्तमिति । तत् कथमनेनेष्टसिद्धिः? एतां कुशङ्कामप्यनेन निराह– **इति हि भागवते** । प्रसिद्धं हीदं पद्यद्वयं प्रतनेषु मूलकोशेषु । तेनार्वाचीनैस्तस्यान्तरितताकरणं भ्रान्तिमूलमर्थानवगतिमूलं चेति ॥

सूत्राक्षरार्थमाह– **अन्तर्याम्यभिप्रायेणैवायमुपदेशः** । तुरेवार्थे । अन्तर्यामिदृष्ट्यैव नतु सर्वात्मकत्व-दृष्ट्या । दृष्टिरिति विवक्षाऽभिप्रायः । सामानाधिकरण्यस्यान्तर्यामिपरतामृषयो ददृशुः । ततो मन्त्रम-दर्शन्निति । तादृश्येव चोपदेशपरम्परा । नाभेदोपदेशः क्वापि । नह्यतथ्यवचनमुपदेशो नाम भवति ॥

अन्तर्याम्यपेक्षया सर्वनामत्वे पाद्मवचनसंवादमाह भाष्ये– **तत्तन्नाम्नोच्यते विष्णुरिति** । अत एव हि विष्णुः । विशन्ति सर्वाणि नामान्यमुं वाचकत्वेनेति । उक्तं हि– 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति । कुतस्तत्तन्नाम्ना विष्णुरेवोच्यते? **सर्वशास्तृत्वतः** । अत एव हरिः । सर्वनाम्नां मुख्यार्थं स्वस्मिन्नेव आहरतीति । सर्वत्र स्वतन्त्रः सन् विहरतीति । सर्वेषां स्वातन्त्र्यं

'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वतो हरिः ।
'न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' इति च पाद्मे ॥

'अहं मनुरभवं सूर्य्यश्च' इत्यादिवत् ॥ * ॥

---

**'अहं मनुरभवं सूर्य्यश्च' इत्यादिवामदेववाक्यवत्** । अतः परमात्मेन्द्राविष्टः, **'प्राणो वा अहमस्म्यृषे प्राणस्त्वम्–'** इत्यादिना स्वात्मानं तत्तदन्तर्य्यामिणमुपदिशतीत्यभिप्रायः ॥

---

हरतीति । तदेवोत्तरार्धेन स्फुटमाह– **न क्वापि** । 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' इति हि गीतासु ॥

## वामदेवं वाक्यम्

**वामदेववाक्यवदिति** । वामदेवस्येदं वामदेवं वचनम् । वामदेववत् वामदेवस्येव, वाक्यमिति शेषो वा । **'अहं मनुः–'** इत्यादिकं सप्तर्चं त्रैष्टुभं सूक्तं वामदेवस्य गौतमस्याऽर्षम् ॥

तत्रापि विशिष्याद्यास्तिस्र इन्द्रदेवत्या इन्द्रदृष्टा वेत्याहानुक्रमणिकायाम्–'आद्याभिस्तिसृभिरिन्द्रमिवाऽत्मानमृषिस्तुष्टाव, इन्द्रो वाऽऽत्मानम्' इति । आद्याभिस्तिसृभिरात्मानमेवर्षिरिन्द्राविष्टतया इन्द्रमिव स्तौति । अथवा इन्द्राविष्टो भगवानेव स्वात्मानं तुष्टावेत्यर्थः ॥

## अहम्मुनिरित्यादिमन्त्रत्रयस्य त्रेधाऽर्थः

अत्रापि इन्द्र इति विष्णुर्वायुश्च, यथा बृहतीसहस्रे । तथाच सूक्तस्यास्य त्रयोऽर्थाः । अहमिति स्वान्तर्यामिणमहेयं नारायणमाह वामदेव इत्येकः । अहमिति नारायण एवाऽत्मानमुवाचेति द्वितीयः । वायुरात्मानं नारायणं वोवाचेति तृतीयः । आद्येऽर्थे वामदेवस्य मुनेरार्षम् । द्वितीये भगवतो वामनाख्यस्य वामदेवस्यार्षम् । तृतीये वामस्य हरस्यापि देव इति वामदेवाख्यस्य मुख्यवायोरार्षम् । हरं हि वामं देवमाचक्षते । 'वामं धने हरे पुंसि' इति ह्यभिदधति । तथाचेमा आद्यास्तिस्र ऋचः–

'अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।
'अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥

'अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय ।
'अहमपो अनयं वावशाना मम देवासो अनु केतमायन् ॥

'अहं पुरो मन्दसानो व्यैरं नव साकं नवतीः शम्बरस्य ।
'शततमं वेश्यं सर्वताता दिवोदासमतिथिग्वं यदावम्' इति ॥

(ऋ.सं.४.२६.१-३.) ॥

तत्र वामदेवपरतयाऽर्थस्तावदुच्यते । अहेयगुणत्वात्, अ इति हूयमानत्वात्, मयि स्थितत्वाच्चाहंनामा भगवान् अवबोधरूपत्वान्मनौ स्थितत्वाच्च मनुनामा सन् मन्वन्तरप्रवर्तकोऽभवत् । अथच वैवस्वत-मनौ स्थित्वा योगशास्त्रप्रवर्तकत्वाच्च मनुरभवत् । अथ स एव च तापसनामा मनुरभवत् । स एवाहमहेयो भगवान् सूरिनियमनात् सूर्यनामा सन् सूर्ये स्थित्वा तापकोऽभवत् । जगत्प्रकाशकोऽ-भवत् । मनोर्जनकोऽभवत् । योगस्य प्रथमप्रवर्तकोऽभवत् । तथाहि गीतायाम्–

'इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
'विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्' इति ॥

स एवाहं कक्षीवान् ऋषिर्भवति विप्रः । मयि स्थित एव भगवदनुग्रहपात्रे कक्षीवत्यृषौ विप्रे चास्ति । तस्मादहमपि कक्षीवानृषिरिव भगवतो विशेषानुग्रहपात्रमभवम् । तदुक्तम्– 'सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः' इति । अथच तारतम्यकक्ष्यायामवस्थिता जीवाः कक्षिण उच्यन्ते । तन्नियामकतया भगवान् कक्षीवान् नाम । दैर्घ्यमाधिक्यार्थे । अवधारणार्थे च । अथ कक्षोऽरण्यम् । तद्वन्त आरण्या मृगा कक्षिणः । तदाश्रयो नरसिंहः कक्षीवान्–

'कक्षश्वभ्रे नृसिंहस्य सदाऽवस्थितिकारणात् ।
'द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात्' इति सामसंहितायाम् ॥

'–नृसिंहाख्यः स आरण्याश्रयो मतः' इति च ॥

वानप्रस्थाश्च कक्षिणः । तपस्विन ऋषयश्च । तेषामप्याश्रयः । सर्वज्ञत्वादृषिः । विशिष्टान् प्रति ज्ञानभक्त्यादिभिः पूरयतीति विप्रः । स्वयं च विप्रः सन्नवततार कपिलदत्तव्यासादिः । अहमहेयो भगवानेव कुत्समृषिमृञ्जे प्रेरयति । अहमेवाऽर्जुनेयं न्यृञ्जे । मद्गतो वामदेवनामा भगवानेव आर्जुनेयं परीक्षितं गर्भे द्रौण्यस्त्रविप्लुष्टमृञ्जे ऋञ्जते जीवनार्थं प्रेरयति । जीवयिष्यतीत्येतत् । अहमेव कविरुशना । 'कवीनामुशना कविः' इति हि गीतासु । मद्गत एव दैत्यगुरावुशनस्यपि स्थित्वा तं कविं चकार । तेनाहमपि कविरभवम् । तथा भगवदनुग्रहभरितं मां पश्यत । योऽहेयः स उशना नाम कविः सर्वज्ञः । 'कविर्मनीषी' इति हि श्रुतिः । कं ब्रह्माणं वायुं च वेति जनयतीति कविः । वी प्रजने । अमोघं वष्टीत्युशना सत्यकामः । भगवत्सन्निधानातिशयमात्मन्यनुभवन् आस्वदमानश्चतुर्वारमहमहमित्याह । अहो अहेयो भगवान् मामाविवेशेति । एकस्मिन्नेव नामनि बहुधा गुणानुसन्धानाय च । तथाहि– अजत्वादः । हंसत्वाद् हम् । सर्वतोऽन्यत्वादः । दोषैर्हीनत्वाद् हम् । न जहात्येनं कोऽपि कदाऽपीत्यहम् । 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' इति ह्युक्तम् । हीनत्वाद्धेयत्वाच्च हं जीवजातम् । तन्न भवतीत्यहमित्यादि ॥

अहमयं वामनात्मा भगवान् आर्यायाग्रजायेन्द्राय, उपेन्द्रो हि वामनः– 'अजघन्यो जघन्यजः' इति च भारते, भूमिमददात्, बलिं निगृह्य । अहंनामाऽयमेव दाशुषे यजते मर्त्याय वृष्टिमददात् । 'देवान् भावयताऽनेन ते देवा भावयन्तु वः' इति हि गीतासु । 'तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च' इति च । मद्गत एव वावशाना अपः नदतीः नदीः सर्वासु दिक्षु अनयत् । 'अतः स्यन्दन्ते सिन्धवः सर्वरूपाः' इति ह्याथर्वणे । सर्वत्रास्मच्छब्दयोगादुत्तमपुरुषप्रयोगः । 'अस्मद्युत्तमः' (१.४.१०७.) इति पाणिनिः । शब्दविधिरयं न त्वर्थविधिः । मम वामदेवस्य केतं निकेतनं शरीरम्, ज्ञानं वा, देवा वासुदेवाद्याः पञ्च, प्राणाद्याः पञ्च, अन्ये च तत्वदेवा आयन्नाविशन्निति ॥

अधिकारिषु मन्दानामपि मनुष्योत्तमानां सनोति पुरुषार्थमिति मन्दसानः अहं मयि स्थितो भगवान् शम्बरस्य शं वृणोतीति सुखमिच्छतो जीवस्य याः पुरः मनुष्यापेक्षया अधिकपूर्णा देवताः, नव च नवतीश्च एकोनशतसङ्ख्याकाः ताः साकं सहैव व्यैरम् प्रैरयत् ॥

कास्ता नव च नवतिश्च देवताः? आह भगवत्पाद ऋग्भाष्ये–

‘वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः ।
‘ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम्’ इति ॥

अष्टौ वसवः (८), विष्णुवर्जमेकादशाऽदित्याः (+११=१९), प्रधानवायुना सह पञ्चाशन्मरुतः (+५०=६९), अश्विनौ (+२=७१), बृहस्पतिः (७२), शेषः (७३) गरुडः (७४), अनिरुद्धः (७५), ब्रह्मा (७६), नव प्रजापतयः (+९=८५), त्रय ऋभवः (+३=८८), एकादश रुद्राः (+११=९९) इति शतमेकोनं देवताः । शततममेभिः प्रवेश्यं शरीरमेव । यत् येन प्रेरणेन शततमं साधनशरीरं सर्वतातौ यज्ञार्थं देवतानां प्रवेश्यं वेश्मभूतम्, दिवोदासं दिवः स्वर्गस्य दातृ, अतिथिग्वं सत्कारार्थमतिथीनभिगन्तृ, एतादृशं कृत्वा आवमावदिति ॥

नारायणस्येदं वचनमिति पक्षे तु स्फुटार्थो मन्त्रः । नारायणोऽहं मनुनामा मनावभवम् । सूर्यनामा सूर्येऽभवम् । कक्षीवति चाहमेवास्मि । अहं कुत्समार्जुनेयं प्रेरयामि । अहमेवोशनसि गतश्च । पश्यत मे महिमानम् । वामनो भूत्वाऽहमिन्द्राय भूमिमददाम् । अहं वृष्टिमददां मर्त्याय । अहमपोऽनयं सर्वत्र । सर्वे देवा मम चित्तमनुवर्तन्ते । अहं नव च नवतिं च देवान् प्रेरयामि । साधकस्य शरीरं च रक्षामीति । एवं प्राणपरत्वेऽपीत्यूह्यम् ॥

## सायणीयं व्याख्यानम्

अभेदवादिनस्तु सर्वमेतद् विप्लावयन्ति । तथाहि सायणः–

‘गर्भे वसन् वामदेव उत्पन्नतत्वज्ञानः सन् सार्वात्म्यं स्वानुभवं मन्वादिरूपेण प्रदर्शयन्नाह । अहं वामदेव इन्द्रो वा मनुरभवम् । अहमेव सूर्यश्चास्मि । कक्षीवानृषिरप्यहमेवास्मि । आर्जुनेयमर्जुन्याः पुत्रं कुत्समृषिमहमेव न्यृञ्जे नितरां प्रसाधयामि । कविरुशना अहमेवास्मि । उक्तमुपलक्षणम् । परमार्थदृष्ट्या कृत्स्नमप्यहमेवास्मीत्यर्थः । हे जनाः, मां सर्वात्मकं पश्यत । यूयमप्येवमेव स्वस्वरूपमनुभवतेत्युक्तं भवति ॥

'अहं वामदेव इन्द्रो वा आर्याय मनवे भूमिं दत्तवानस्मि । दाशुषे मर्त्याय सस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकमहमेवाददाम् । अहं वावशानाः शब्दायमाना अप उदकानि सर्वं प्रदेशमगमयम् । वह्न्यादयो देवा मम सङ्कल्पमनुयान्ति ॥

'अहं वामदेव इन्द्रो वा मन्दसानः सोमेन माद्यन् नवसङ्ख्याका नवतिसङ्ख्याकाश्च शम्बरस्यासुरस्य पुरः पुराणि साकं युगपदेव व्यैरमध्वंसयम् । शततमं शतसङ्ख्यापूरणं पुरं वेश्यं दिवोदासनाम्ने प्रवेशार्हमकरवम् । सर्वतातौ यज्ञे अतिथिग्वमतिथीनामधिगन्तारं दिवोदासनामकं राजर्षिं यत् यदा आवमपालयम्, तदा पुरो व्यैरमिति सम्बन्धः' इत्यादि ॥

## असङ्गतभाषी सायणः

उत्पन्नतत्वज्ञानः किमेवं वदिता क्वापि दृष्टः, यद्यनुन्मत्तः । यूयमप्येवमनुभवतेति पुनरुपदिशति । यद्येवमधुना कश्चिद् जल्पेत्– 'अहमेव मनवे भूमिमददाम् । अहमेव शम्बरस्य पुराणि व्यनाशयम्' इति, नूनं न तत्वज्ञानिनं तं मंसीरन् । किन्तु मानसरोगग्रस्तं मत्वा भिषजां निकटं नीयासुः ।

परेषामस्य व्याख्यानस्यासाङ्गत्यं भगवत्पादेनैव स्फुटमाविष्कृतम् । तथाह्यैतरेयभाष्ये–

'शास्त्रदृष्ट्या तूपदेशो वामदेववदिति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरे स्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम्– 'अहं मनुरभवं सूर्यश्च' इत्यादिवत् । नहि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र च 'अहं भूमिमददामार्याय' इत्यादिना प्रवृत्तिरेवोच्यते । नच वामदेवेन मन्वादिकर्म क्रियते कदाऽपि । अतीतार्थश्चायं दृश्यते भूमिमददामित्यादिना । नहि पूर्वं वामदेवेन तानि कर्माणि कृतानि । भगवान् विष्णुर्हीन्द्राय भूमिमददात् । स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिनियमनादिभिर्मनुसूर्यादिसर्वनामा भवति । यदि भेदस्य पूर्वमपि मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वात् 'अहं मनुरभवम्' इत्यादि सर्वमनर्थकमेव भवति' इति ॥

अपरोक्षज्ञानोत्तरमेवं व्यवहार एव न सम्भवति । सर्वस्य मिथ्यात्वावगमात् । आत्मानमेकमेव पश्यन् कमिह जनम् 'पश्यता मा' इत्याहूय व्याहरति । यदि न जातापरोक्षः, न श्रद्धेयवचनस्तर्हि तत्र-भवान् वामदेवः । अहो जातापरोक्षस्यापि महती भूमिव्यवहारचिन्ता । अपिच सार्वात्म्यानुभवे– 'अहं सर्वमभवम्' इत्येव वक्तव्यम् । किमिति मन्वादीनां त्रिचतुराणामेव विशिष्याभेदो घुष्यते?

अपिचोपरितनसूक्ते स्फुटं भेदमुद्धोषयति स्वयं वामदेवः–

'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
'शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्' इति ।(ऋ.सं.४.२७.१) ॥

## सायणभाष्ये पञ्चभेदकथनम्

अत्रैवं सायणो व्याचख्यौ–

'गर्भ एव सन्नहं वामदेवः एषामिन्द्रादीनां देवानां विश्वानि जनिमानि जन्मानि अन्ववेदम् आनुपूर्व्येणाज्ञासिषम् । परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः । इतः पूर्वं शतं बहूनि आयसीः अयोमयानि अभेद्यानि पुरः शरीराणि मामरक्षन् । यथाऽहं शरीराद् व्यतिरिक्तमात्मानं न जानीयां तथा मामरक्षन्नित्यर्थः । अध अधुना श्येनवत् स्थितोऽहं जवसा वेगेन निरदीयम् शरीरान्निरगमम्' इत्यादि ॥

अहो पूर्वं कृतसार्वात्म्योपदेशो वामदेवः पुनरत्र सञ्जातयथार्थानुभव इव भेदं जुघोष । पश्यतात्र तस्य दर्शनम् । शरीरादात्मनो भेदं पश्यति । आत्मनः देवेभ्यश्च भेदम् । देवानां च परस्परं भेदम् । तेभ्यो परमात्मनो भेदम् । पञ्चापि भेदा अपरोक्षज्ञानानन्तरं वामदेवेनानुभूता इत्येतेन ज्ञायते ॥

## पदपाठभेदः

अत्र द्वेधा प्रतृण्णं भवति– 'अध । श्येनः' इति शाकलसंहितापदपाठः । 'अधः । श्येनः' इत्यैतरेय-पदपाठ इति वदन्ति । तथाहि तत्र सायणः–

'अधः एतस्मादात्मज्ञानोदयादधस्तात् मां वामदेवमायसीः लोहनिर्मितशृङ्खलायमानाः शतं पुरः शरीराण्यरक्षन् । इदानीमविद्यामयात् संसारात् श्येनइव जालं भित्त्वा जवसा निर्गतोऽस्मि' इति ॥

'संसारपाशनिर्गमनादधोऽधः श्येनइव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि' इति शाङ्करं भाष्यम् । षड्गुरुशिष्योऽपि प्राय एतमेव पन्थानमनुपपात ॥

अत्रापि बहवो दोषा भवन्ति । पूर्वं पुर इति शम्बरस्य पुराणीति व्याख्यायि । अत्र पुनः पुरः शरीराणीति । एकस्मिन् प्रकरणे द्विः पठितोऽपि शब्दः समानमेवार्थमवगमयतीति शाब्दः सम्प्रदायः, असति विरोधे । शरीराणामायसत्ववचनम्, अबध्नन्निति वक्तव्ये अरक्षन्निति वचनम्, सर्वमेतत् व्याकुलमिव । अतोऽस्यापि पूर्वोत्तरानुगुणमर्थान्तरं निरूपणीयम् । निरूपितं च भगवत्पादैनैतरेयभाष्ये–

## 'गर्भेनु' श्रुत्यर्थः

'एषामवेदमहमित्यत्रापि जीवभेद एवोक्तः । अन्यथा मम जनिमानीत्येवोच्येत । व्यर्थता चैषामित्यादिविशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रिया-विशेषणम् । जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामित्यर्थः । तस्मादहं मनुरभवमित्यादावहेयगुणं भगवन्तमेवाहंशब्दो वक्ति । सर्वान्तरत्वात् तस्मिन्नेवाभव-मित्युत्तमपुरुषशब्दोऽपि सर्वो वर्तते' इति ॥

'ता एव देवताः शतं पुर आयसीर्ज्ञानिन्यो विशेषतः । अय पय गताविति धातोः । मानुषान-पेक्ष्य पूर्णत्वात् पुरः । विष्णुर्मुख्यत एव पूर्णः । नच शरीरैर्जीवो रक्षितः । मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः । शमस्य विद्यत इति शी विष्णुः । पूर्णानन्दत्वात् । स एव ज्ञानत्वाद् यश्चेति श्यः । सोऽस्य जीवस्येन इति श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । निरदीयम्, निष्क्रम्यातीतोऽस्मि गर्भवासम्' इति च ॥

तथाचायं मन्त्रार्थः– गर्भे एव सन्नहं मम देहेन सह जातानां देवानां क्षेत्रज्ञस्य विष्णोः तत्वमानिनां देवानां च विश्वानि जनिमान्यपि गर्भवासजनितदुःखाद्यभावेनाहम् अहेयं यथा स्यात् तथा अवेदमजानाम् । विद ज्ञाने लङ् ॥

**तस्मान्नात्रेन्द्रस्य स्वरूपोपदेशः । नापि सर्वात्मत्वोपदेशश्चाऽऽशङ्कनीयः । अहन्त्वमादि-शब्दानामन्तर्य्यामिणि वृत्तेर्द्दर्शितत्वात् । 'सप्तसु प्रथमा' इति सूत्राच्च ।।**

'विष्णुर्हि परमो देवः । तेनैव सर्वेऽपि देवा जीवदेहजनने जायन्त एव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः । स्वातन्त्र्यं च विष्णोः' इति भगवत्पादवचनम् ।।

ता एव, या मया सह जाताः शतं पुरः सुखादिपूर्णा देवताः मामरक्षन् । आ अयन्त इत्यायसीः विशेषतो ज्ञानशालिन्यः । कथं शतम्? एकोनं शतं पूर्वोक्तम्– नव नवतीरिति । ता एव विष्णुना नायकेन सह शतं देवताः । अध नवमासं गर्भवासानन्तरम्, श्येनः सन् मम स्वामिनमन्तर्यामिणं मनसा स्मरन्, ज्ञानसामर्थ्यादेव तरसा निरदीयम् । मातुरुदरान्निष्क्रम्य गर्भवासमत्यायम् । दीयतिरत्ययार्थ इत्यलम् ।।

**'वामदेववत्'** इति सूत्रखण्डस्य फलितमर्थमाह– **अहं मनुरित्यादि** । वामदेववाक्ये यथा तथाऽत्रापि इन्द्र आविष्टः परमात्मा– 'प्राणनामाऽहं त्वय्यस्मि, सर्वेषु भूतेषु चास्मि' इति तत्तदन्तर्यामिणं स्वात्मानमुपदिशति । उपक्रान्तमुपसंहरति– **तस्मादिति** । **अत्र** इन्द्रविश्वामित्रसंवादे ।।

ननु कथं वामदेववदिति सिद्धवत्कृत्य भाषसे । उभयसम्मतं हि दृष्टान्तमाचक्षते । न वयं वामदेववाक्यमन्तर्यामिपरमङ्गीकुर्मः । व्याख्यातं चास्माभिः सार्वात्म्योपदेशपरतया । तस्माद् विषमोऽ-यमुपन्यासः– **वामदेववदिति** । अस्यापीदमेवोत्तरम्– **तस्मादिति** । ननु नाहमेवं बभाषे । किन्तु भगवान् बादरायण एवमभाषिष्ट सूत्रे । **तस्मात्** भगवता बादरायणेनास्य वाक्यस्य अन्तर्यामिविवक्षया दृष्टान्तत्वेनोल्लेखात् **अत्र** वामदेववाक्येऽपि **नेन्द्रस्य स्वरूपोपदेशः, नापि सर्वात्मत्वोपदेशः** । कुतः? सूत्रविरोधादेव । सूत्रकारं हि मूलगुरुं मन्यते भवानपि । तत् कथमुत्सूत्रं भाषेथा इति ।।

सर्वत्रान्तर्यामिपरत्वे सुकरं प्रकारमाह– **सप्तसु प्रथमेति सूत्राच्च** । यथा– ब्रह्मण्यहमस्मि । ब्रह्मणोऽह-मस्मि, ब्रह्मणाऽहमस्मि, तेन त्वमसि, तस्मात् त्वमसि, तस्य त्वमसि, तस्मिंस्त्वमसीत्यादि । यो नेच्छति विभक्तिव्यत्ययम्, तन्मते सूत्रमिदं निर्विषयमापद्येत ।।

तथा च ब्रह्माण्डे–

'यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वाऽपि कौशिकः ।
'अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ॥

'जानीयां त्वामिति प्राह तस्मा आह स केशवः ।
'इन्द्राविष्टः प्राणनाम तथाऽन्याश्चाभिधाः प्रभुः ॥

'प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ।
'अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि ॥

'ततो वेत्तेति च त्वं स पूर्णत्वात् सर्वनामकः ।
'सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्त्तितः ॥

---

अन्तर्यामिणि सर्वशब्दानां वृत्तिप्रकारं च सूत्रकारवचनेनैवाऽह– **ब्रह्माण्डे** चेति । केशेषु सूर्यकिरणेषु वर्तत इति केशवः विश्वामित्रोपास्यो नारायणः । तदानीं पुरोवर्तिनीन्द्र आविष्टः । प्राण इति **स्वनाम अन्या अभिधा** देवतानामानि च । तथा **अन्याः** आख्याताद्याश्च तदभिधा यथा स्युः । स एव हि तथा कथने प्रभुः । 'नान्यो मद् वेद कश्चन' इति हि भागवते । ऐतरेये मुखत उक्तानि पदानि निराह– **प्रकृष्टेत्यादिना** । प्रकृष्टः अनन्तः ण आनन्दो यस्य । प्रकृष्ट आनन्द एव वा । प्रकृष्टः दुःखासम्भिन्न आनन्दो मुक्तानां यस्मादिति च । एतदप्याह– प्रकृष्टमानन्दं रूपयतीति प्रकृष्टानन्दरूप इति । प्रकृष्ट आनन्दरूप इति च । प्रकृष्टमानन्दरूपं यस्येति च । असनात् सर्वस्यान्तःस्थित्वा प्रेरणात् **अस्** । असु क्षेपणे, क्षेपणमिति प्रेरणम् । मिनुते तत्तद्योग्यतां ज्ञात्वा तदनुगुणं वर्तयतीति **मि** । डु मिञ् प्रक्षेपणे । तत्तदुचितस्थाने निक्षिप्य तन्तं प्रेरयतीति वा ॥

**प्राणो वा अहमस्मीति** विवृतम् । **प्राणस्त्वमित्येतत्** निर्वक्ति– सर्वत्र ततः, सर्वस्य वेत्ता चेति । तनोतीति तत् वेत्तीति वम् । सर्वगतश्च सर्वज्ञश्च । तत्+वम् इति स्थिते, आद्याक्षरलोपे च त्वम् । **'प्राणः सर्वाणि भूतानि'** इत्येतन्निर्वक्ति– **पूर्णत्वात्** । 'सर्वं पूर्णमिहोच्यते' इति हि यजुःसंहितायाम् ।

'प्रभूतत्वाद् भूतनामा सर्वरूपप्रभूततः ।
'बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः ॥

'सर्वैश्वर्य्यस्वरूपत्वादेष इत्यभिधीयते ।
'स एव सूर्य्यसंस्थः सन् लोकांस्तपति केशवः' इत्यादि ॥

महैतरेयोपनिषद्भाष्येऽपि भगवान् भाष्यकृदेवानयोरर्थविशेषं स्पष्टीचकार–

'अद्ध्यात्मसम्बन्धशब्देनाऽवेशो हि विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वप्यन्तर्य्यामिरूपेण सम्बन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धो ह्यद्ध्यात्मसम्बन्धः । न हि स्वात्मनः स्वस्य सम्बन्धो भवति । यद्यद्ध्यात्ममत्रोच्यत इति विवक्षितं तर्ह्यद्ध्यात्मभूमेत्येव स्यात् । सम्बन्धशब्दो व्यर्त्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः– 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति । शास्तुरन्तर्य्यामिणो विष्णोः सर्वशरीरे स्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम् । 'अहं मनुरभवं सूर्य्यश्च' इत्यादिवत् । न हि मनुसूर्य्यादिर्भवति

---

बहुरूपत्वात्, सर्वरूपेष्वपि पूर्णत्वात् सर्वाणीति बहुवचनम् । सरन्ति सर्वे गुणा अत्रेति सर्वम् । प्रकृष्टं भवति स्मेति प्रभूतं सर्वोत्तमम् । प्रभूतत्वाद् भूतम् । बहुरूपत्वात्, सर्वरूपेष्वपि प्रभूतत्वात् भूतानीति बहुवचनम् । स्त्रीपुमात्मकत्वात् उभयदोषविधुरत्वात् नपुंसकलिङ्गता च । 'प्राणो ह्येष य एष तपति' इत्यस्यार्थमाह– **सर्वैश्वर्यस्वरूपत्वादेषः** । अत्रैक एतच्छब्दः ।अपर एषशब्दः । आ+ ईष्टे+इत्येषः । 'विष्णोरेषस्य प्रभृथे हवर्भिः' इति प्रयोगात् । 'देवस्यैषः स्वभावोऽयम्' इति च ॥ अथ भाष्यवचनान्येवाविकलमुद्धरति– **अध्यात्मेत्यादिना प्रवृत्तिरेवोच्यत** इत्यन्तेन ॥

## ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविद्ध्यादाश्रितत्वादिह तद्योगात् ॥ १.१.३१. ॥

'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' इति जीवलिङ्गम् ।

---

वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र च 'अहंभूमिमददामार्य्याय' इत्यादिना प्रवृत्तिरेवोच्यते'– इत्यादि सविस्तरम् ॥

'अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः ।
'अस्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः' इति ब्रह्मवैवर्त्ते ॥ ✻ ॥

**॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविद्ध्यादाश्रितत्वादिह तद्योगात् ॥ 'तावन्ति शतसंवत्सरस्य'** इति जीवलिङ्गम् । 'शतायुर्वै पुरुषः' इति श्रुतेः । 'तावन्ति पुरुषायुषः–' इति चास्ति ॥

---

### सर्वेषां भगवानहम्

**अहेयत्वादिति** । स्वात्मा तु स्वस्यैकस्याहेयत्वादहम् । विष्णुस्तु सर्वान्तरत्वात् सर्वस्याप्यहेय इति मुख्यतोऽहम् । यदा युष्मदस्मच्छब्दौ आन्तरं जीवचैतन्यं वदतस्तदा असीति अस्मीति मध्यमोत्तमपुरुषयोः प्रयोगो भवति । भगवांस्तु जीवचैतन्यादप्यान्तरः । तस्मात् तमेव पुरुषोत्तमं मध्यमोत्तमावपि पुरुषौ प्रतिपादयत इति सर्वं चतुरश्रम् ॥ ✻ ॥

**॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥** ननु यदुक्तमानखमाशिखं समग्रा श्रुतिर्विष्णुमेव प्रतिपादयतीति । तत इन्द्रियपदान्यपि तद्गतभगवदपेक्षया योजनीयानीति । नैतद्युक्तम् । असङ्गतमेतद् यद् विष्णोरन्यत् किमपि नोच्यते श्रुतिष्विति । तथाह्यैतरेये पठ्यते–**'तावन्ति**

**शतसंवत्सरस्याह्नां सहस्राणि भवन्ति'** (३.१.४) इति । तदेतत् **जीवलिङ्गम्** । 'शतायुर्वै पुरुषः' इति श्रुतेः । शतं संवत्सराः पुरुषायुषमिति हि सर्वोऽपि व्यवहरति । शासति च श्रुतयः– 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति । आशंसन्ति च– 'जीवेम शरदः शतम्' इति ॥

## त्रिंशतमिति त्रिंशदुच्यते

तथाहि समग्रा श्रुतिः– 'तद् वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । **तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति'** (२.१.३.) इति ॥

प्रथमप्रघट्टक उक्तरीत्या अन्यान्यच्छन्दसो मन्त्रग्रामस्य संयोजनेन बृहतीसहस्राख्यं शस्त्रं सम्पन्नम् । षट्त्रिंशदक्षरा हि बृहती । तस्मादस्य सम्पन्नस्य बृहतीसहस्रस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । षट्त्रिंशतमिति सोरम् इति व्याचक्षते । वस्तुतस्तु त्रिंशतमिति त्रिंशत्पर्यायः । 'प्रत्येकशस्त्रिंशत-दासिदासकान्' (म.ता.नि.२२.६.) इति भगवत्पादवचनम् । त्रिशब्दस्य त्रिन् । दशतः शः । ततस्तः प्रत्ययः । अक्षराणां षट्त्रिंशत्सहस्राणि भवन्ति । तावन्त्येव च पुरुषायुषस्य शतसंवत्सरस्याहोरात्राणां सहस्राणि भवन्तीत्यर्थः । तदिदं जीवानामायुषो वचनम् । तस्मादस्यां श्रुतौ न केवलं विष्णुः, किन्तु जीवस्य जीवनमरणे अपि प्रस्तूयेते इत्यस्येदं लिङ्गं गमकं भवति ॥

अन्यच्च स्फुटतरं वचनमुपरिष्टात्– 'तद्वा इदं बृहतीसहस्रं सम्पन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । **तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति'** (२.२.७.) इति चास्ति ॥

पुरुषायुषगतानां दिवसानां बृहतीसहस्रगतानामक्षराणां च समसङ्ख्यत्वेनोपासनं च ह्यत्र विधीयते । अन्ततः जीवोपासनमेवैतत् । तस्माद् विष्णुरेवोच्यत इति गतम् ॥

नचात्रापि पुरुषगतभगवदपेक्षया योजनीयमिति शक्यं वक्तुम् । नहि नारायणस्य शतं वर्षाण्यायुः । स हि कालतोऽनवच्छिन्नः । यस्तु परमं शतं वर्षाण्येव जीवति ततो म्रियते स शतायुरुच्यते । 'शतायुर्मरणं चैव कालिकं पारमावृतिः' इति ह्यभिदधति । तस्मात् **'पुरुषायुषः–'** इति निश्चितं जीववचनम् ॥

## प्राणसंवादादि मुख्यप्राणलिङ्गम् ।

---

**प्राणसंवादः, तन्निर्गमे शरीरपातस्तत्प्रवेशे शरीरोत्थानमिति मुख्यप्राणलिङ्गम्– 'ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रमाम–' इत्यादिनोच्यते ॥**

---

अपिचात्र स्वरव्यञ्जनयोर्विभागे द्वासप्ततिः सहस्राणामक्षराणि । तावन्ति पुरुषदेहे नाडीनां सहस्राणि भवन्ति । ततश्च पुरुषनाडीसमसङ्ख्याक्षरत्वेन बृहतीसहस्रस्योपासनं चात्र विधीयते । नह्यप्राकृतशरीरस्य परमपुरुषस्य धमनयो नाम सम्भवन्ति । तस्मादपि पुरुषायुष इति निश्चितं जीववचनम् । तस्मात् समग्रं बृहतीसहस्रं जीवसङ्गतत्वेन चिन्तनीयम्, न विष्णुसङ्गतत्वेनेत्यायातम् ॥

यदपि चोक्तं पुरस्तात्– प्राणसंवादादि तद्गतभगवदपेक्षया युक्तमिति तदपीदानीं गतम् । यदि जीवः प्रतिपाद्यते किमिति न जीवोत्तमः? किमिति प्रतीयमानं सहजमर्थमपहाय सर्वत्र बृथाऽन्तर्यामिपरता-प्रतिपादनप्रयासेन? किमिति पृष्ठतो व्यावृत्याऽनीतेन पाणिना नासा निबद्ध्यते? तदिदमाह– **मुख्य-प्राणलिङ्गमिति** । प्राणा इतीन्द्रियाणि जीवाश्च । इन्द्रियाभिमानिषु चायं मुख्यो जीवोत्तमश्चेति । अपिचानया संवादवाचोयुक्त्या इन्द्रियाभिमानिषु प्राणस्य प्रधानत्वं प्रतिपिपादयिषितम् । यदि चात्र मुख्यवायुर्नोच्यते तस्य मुख्यप्राणत्वमेव नोदितं स्यात् । तदिदमाह– **मुख्यप्राणलिङ्गमिति** । मुख्यप्राणस्य मुख्यप्राणत्वे लिङ्गम् ॥

**प्राणसंवादादीति** । आदौ प्राणानां विवादः । अन्ते 'त्वमस्माकं तव स्मसि' इति संवादः । संवादफलक एवायं विवाद इति संवादं मुखत आह । विवादोऽपि न विवादाय । किन्तु संवादायैवेति । प्राणज्यैष्ठ्यं जानन्तः संवदमाना एव प्रीत्या लोकशिक्षायै व्यवदन्तेत्यर्थः । आदिशब्दोक्तं तस्य मुख्यत्वमेव विवृणोति– **तन्निर्गमे शरीरपातः, तत्प्रवेशे शरीरोत्थानमिति** ॥

नचैतौ निर्गमप्रवेशौ सर्वगते विष्णौ स्वरसतः सम्भवतः । ननु रूपविशेषेण सम्भवतः? तदाऽपि न सम्भवतः । तस्य तटस्थतया पृथक्स्थित्युक्तेः । तस्माद् विष्णुरेवोच्यत इति गतम् । न गतमित्याह–

तस्मान्नेति चेन्न । अन्तर्बहिः सर्वगतत्वेनेत्युपासात्त्रैविध्यात्, इहाऽश्रितत्वाच्च– 'स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत', 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्', 'एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः' इत्यादिना ॥

---

**तस्मान्न** विष्णुरत्रोच्यत **इति चेन्न** । उपासात्रैविध्यस्य विद्यमानत्वात् । **'स एतमेव सीमानं विदार्य्य–'** इत्यादिनाऽन्तःप्रवेशवचनादन्तरुपासनं गम्यते । सीमा शिरोमध्यम् । 'द्वाः' सुषुम्नानाडी । तस्मात् तस्यैव जीवमुख्यप्राणलिङ्गे, तद्भगवदधीनत्वात् तयोः । **ततमं** तततमम् । 'समाने लोपः' इति सूत्रात् ॥

---

**इति चेन्नेति** । कुतो न गतम्? शृणु सावधानमना मनाक् । न वयं मुख्यप्राणो नोच्यत इत्यवादिष्म । किन्त्ववादिष्म परममुख्यवृत्त्या विष्णुरेवोच्यत इति । तेन तदनन्तरं मुख्यवृत्त्या मुख्यप्राणोऽप्युच्यते ॥

## जीवमुख्यस्य प्राणस्य लिङ्गात्

एवं शतायुः पुरुष इत्यपि मुख्यतो मुख्यप्राणस्यैव लिङ्गम् । ब्रह्मवाय्वोरेव हि नियतं शतायुष्ट्वम् । अन्येषामनियतान्यायूंषि भवन्ति । शतं वर्षाणि केचित् जीवन्ति । केचित् पूर्वमेव म्रियन्ते । गर्भ एव म्रियन्ते । बाल्ये वा यौवने वा । ननु यस्तु चिरं जीवति स शतं वर्षाणि जीवति । नैतदपि नियतम् । ततोऽधिकमपि जीवन्ति । विंशत्युत्तरशतजीविनो हि बहवः श्रूयन्ते । अद्यापि हि दृश्यन्ते शताधिकजीविनः । यदि कश्चिच्छतं वर्षाणि जीवति मुख्यप्राण एवान्तःस्थित्वा जीवयति । नहि कस्यापि स्वेच्छाधीनमायुः । तस्मात् तदप्यन्ततो मुख्यप्राणलिङ्गमेव । तदेतदेकवचनेनाऽह– **जीवमुख्यप्राणलिङ्गादिति** । जीवमुख्यस्य प्राणस्य लिङ्गादिति चार्थः ॥

जीवमुख्यस्यापि प्राणनान्नारायण एव जीवमुख्यप्राणः । स एव मुख्यतः सर्वोत्थापकः । तदेतदुक्तं 'तद्भगवदपेक्षया युक्तेः' इति । तदेतत् स्फुटमुदितं भागवततात्पर्ये (३.२७.७१.) कापिलेयवचनेन–

'अंशेन सुप्तो ब्रह्मा तु अंशेन निरगात् तथा ।
'स्वदेहाद् वायुसहितो विष्णुना च जगत्प्रभुः ॥

'तमुत्थापयितुं देवास्तानृते त्रीन् महाबलान् ।
'नाशक्नुवन्नेकसंस्थास्ततस्ते त्वाविशंस्त्रयः ॥

'उदतिष्ठद् ब्रह्मदेहस्तदा तेषां प्रभावतः ।
'विशेषेण हरेरेव प्रभावेन श्रियःपतेः ॥

'चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः ।
'प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयम्' इति ॥

'ब्रह्मा तु' इति विशेषार्थस्तुः । ब्रह्मदेहोऽयमिति व्यवहारविशेषार्थं ब्रह्मा स्वदेहे सुप्त इव निर्व्यापारतया स्थितः । विष्णुना च अंशेन अन्तर्यामिरूपेण देहे स्थितः, रूपान्तरेण सहितो निरगात् । 'विशेषेण हरेरेव प्रभावेन' । यतः स ब्रह्मवाय्वोरपि जनन्याः श्रियः पतिः । तद्गतो ब्रह्मगतः । तयोः ब्रह्मवाय्वोरीशः । स तु स्वयं स्वतन्त्रः । 'रुद्रान्तानां देवानां निर्गमात् प्रवेशाच्च विराट् न पपात नोदतिष्ठच्च । यदा चैत्यश्चित्ताभिमानी ब्रह्मा वायुश्च, तत्प्रेरकः क्षेत्रज्ञाख्यो विष्णुश्च ब्रह्मदेहं प्राविशन् तदैवोदतिष्ठत्' इति प्राचीनम् ॥

कथं परममुख्यवृत्त्या विष्णुपरत्वम्? **उपासात्रैविध्यस्य विद्यमानत्वात्** । कथम्? **अन्तर्बहिः सर्वगतत्वेनेति** । अस्तु नाम । प्रकृते किमायातम्? इहापि ऐतरेय्यामात्मोपनिषदि तस्योपासात्रैविध्यस्य **आश्रितत्वाद्** विवक्षितत्वादित्यर्थः । अत्र सूत्रे **'इति च इत् न'** इति च प्रतृण्णम् । इदित्यवधारणे । चकार उत्तरान्वयी । तदाह भाष्ये– **इहाऽश्रितत्वाच्चेति** । एवं तद्योगादित्यत्राप्यन्वेति– **तद्योगाच्च पुरुषाणामिति** । तदप्युक्तं भाष्ये– **तत्तदुपासनायोग्यतया च पुरुषाणामिति** । उपासना ध्यानरूपा । सर्वस्मादुपरि मनसोऽसनं प्रेरणमुपासनम् । उपरि आसना निरन्तरमवस्थानमुपासना । **'ण्यासश्रन्थो युच्'** (अ.सू.३.३.१०७) इति युच् । तथा ह्यन्तरुपासनं श्रूयते– **'स एतमेव सीमानं**

**विदार्यैतया द्वारा प्रापद्यत** । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्नाः । अयमावसथोऽयमावसथोऽयमावसथ इति' (२.३.३.) इति ॥

कोऽत्र सीमा? का च द्वाः? भाष्ये न स्फुटमनयोरर्थं टीकाकार आह– **सीमा शिरोमध्यम्** । **द्वाः सुषुम्नानाडी** । मोक्षकाले जीवगमनार्थं विदारणाद् विदृतिः । नन्दनस्य भगवत इदं वासस्थानमिति तदेव नान्दनम् । 'पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान्' इति भाष्यम् ॥

अयमर्थः– स भगवान् चतुर्मुखस्य सीमानं शिरोमध्यं विदार्य एतया सुषुम्नाख्यया द्वारा तद्देहं प्रविश्य अवस्थात्रयं प्रचोदयामास वायुना सह । तस्य अवस्थात्रयप्रचोदनार्थं पुनरत्र त्रय आवसथाः । स्वयमत्र विष्णुराप्नोतीति स्वप्ना इत्युच्यन्ते त आवसथाः– दक्षिणाक्षि कण्ठो हृदयमिति । तमेवाऽवसथमङ्गुलिनिर्देशेन दर्शयति– **अयमावसथोऽयमावसथोऽयमावसथ इतीति** । अत्रान्तःप्रवेशवचनादन्तरुपासनं गम्यते । एतद्दृष्टान्तेन सर्वदेहेष्वन्तरवस्थात्रयप्रेरकत्वेनोपास्यो विष्णुस्तदनु वायुश्चेति । तथा ह्यैतरेयसंहितायाम्–

'सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा ।
'विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् ॥

'स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा ।
'तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना ॥

'इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः ।
'मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः ॥

'अग्न्यादयस्ततः पश्चात् प्रविष्टास्तन्नियोजिताः ।
'प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः ॥

'बिभर्ति देहं तेनैव मूर्ध्नाऽऽविष्टेन चेष्टयन् ।
'नारायणो वासुदेव इति द्वेधा व्यवस्थितः ।
'मूर्ध्नाऽऽविष्टो वासुदेवस्तस्य चाऽवसथास्त्रयः ॥

'अक्षिकण्ठहृदित्येव त एव स्वप्ननामकाः ।
'आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः ॥

'अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः ।
'दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः ॥

'सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः ।
'तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः' इत्यादि ॥

## आवसथशब्दार्थः— सुषुम्नाशब्दार्थः

'षकारः प्राण आत्मा' इति चेष्टयितृत्वात् षः । सर्वचेष्टयितृत्वाद् विषः । सर्वगामित्वमिह वैशिष्ट्यम् । 'णकारो बलम्' इति विशिष्टबलतो विणः । ताच्छील्ये उः । विषणुरेव विष्णुः । दिवौकसां मया कर्मसु स्वतन्त्रत्वे दत्ते मह्यं विष्णुरित्यभिधा न युक्ता स्यात् । एतेन दत्तस्वातन्त्र्य-वादिनो दत्तोत्तराः । अग्न्यादयः वागाद्यभिमानितया । प्रपदाभ्यां प्रविष्टेन तेनैव नारायणाख्येन रूपेण देहं बिभर्ति । मूर्ध्ना प्रविष्टेन वासुदेवाख्येन रूपेण चेष्टयन् । आवसथः भोगान् भुञ्जानो यत्र वसति । आवासः थमन्नं च यत्रेति । 'उपसर्गे वसेरथः' इति तु वैयाकरणाः । दक्षिणाक्षि च कण्ठश्च हृच्च एतेषां समाहारः अक्षिकण्ठहृत् । प्राण्यङ्गत्वादेकवद्भावः— 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (अ.सू.२. ४.२.) इति । अनिरुद्धादिरूपेण क्रमशः । जाग्रदवस्थाप्रेरकोऽनिरुद्धोऽक्षिगतः । स्वप्नदाता प्रद्युम्नः कण्ठे । सुषुप्तिदः सङ्कर्षणो हृदि । प्रपदाभ्यां प्रविष्टो नारायणोऽपि मूर्धन्येव सुषुम्नायां व्यवस्थितः । सुम्नमिति सुखमुच्यते, स्वित्यामनन्तीति । सु दुःखासम्भिन्नमनारतं सुम्नं सुखमनया निर्गतानामिति सुषुम्ना ब्रह्मनाडी । वैयाकरणास्तु सुषुम्नां सुषुम्णामाहुः । अनार्षमिदम् । तेन 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति प्रायेणेति वक्तव्यम् । इति पञ्चात्मनो भगवतोऽन्तरुपासनम् ॥

प्रपदाभ्यां प्रविष्टस्य नारायणस्यान्तरुपासनप्रकारविशेषं चानेनैव वचनेन सूचयाञ्चकार । तथाहि श्रुतिः— 'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् । यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे । तस्मात्

प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत् । तावूरू अभवताम् । उरु गृणीहीत्यब्रवीत् । तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत् । तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मेत्यारुणयः । ब्रह्मा हैव ताइ । ऊर्ध्वं त्वेवोदसर्पत् । तच्छिरोऽश्रयत । यच्छिरोऽश्रयत तच्छिरोऽभवत् । तच्छिरसः शिरस्त्वम् । ता वा एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः । श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद' (महै.उ.१.६.३.) इति ॥

## तं प्रपदाभ्यामिति श्रुत्यर्थः

वासुदेवादिचतूरूपोपासनं शिरआदि हृदयान्तं पूर्वमुक्तम् । तदिदं पादादि केशान्तमुपासनं भगवतो नारायणस्य प्रस्तूयते । तथा ह्यृक्संहितायाम्–

'तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
'वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ॥

'यस्मात् प्रपेदे भगवान् प्रपदा चतुराननम् ।
'तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ॥

'चतुर्मुखाकारवतां नृणां पादतळोपरि ।
'प्रपदाख्या वर्ततेऽतो नतु पश्वादिनां क्वचित् ॥

'अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।
स्थित ऊरू च तावास्तामूरूर्ध्वागमनाद्धरेः ॥

'किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
'वायुमाहोरु गरणं कुर्वत्र स्थित इत्यपि ॥

'उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
'तत् स्थानमुदरं नाम पुनराह जनार्दनः ॥

‘उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
‘तथाऽकरोत् स वायुश्च तदुरोऽभूदुरुत्वतः ।
‘उरोमध्ये च हृदयं तत्र वासो हरेः सदा ॥

‘सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः ।
‘उदरे ते परं ब्रह्म वासुदेवमुपासते ॥

‘हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ।
‘उदरस्थं च हृत्स्थं च ते उभे ब्रह्म यत् परम् ।
‘एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ॥

‘तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।
‘स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ॥

‘तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।
‘शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक्पृथक् ॥

‘अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रिकः ।
‘वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ॥

‘श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।
‘एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः ।
‘उपासते सदा विष्णुं परमात्मानमच्युतम्’ इति ॥

## ऋक्संहितावचनार्थः

तदिदं सपरिवारस्य नारायणस्यान्तरुपासनम् । पुरतीति पुरुः । प्रथमं जातः । पुर अग्रगमने । सरति जानातीति सः । पुरुषाकारत्वाच्च पुरुषः । तदिदमुक्तम्– **तमिमं प्रथमज्ञानिपुरुषमिति** । पुरुषाकारत्वेऽपि कश्चिद् विशेषमाह– चत्वार्याननान्यस्येति । ज्ञानिषु प्रथमत्वात् प्रवचनचतुरं चाऽननमस्य । वासुदेवाभिधं चतुराननजनकं ब्रह्म, पुरा वासुदेवात्मना मूर्धन्यनाड्यां प्रवेशात् पूर्वम्, प्रपदयोः प्राप नारायण-

रूपेणेत्युपस्कर्तव्यम् । 'नारायणो वासुदेव इति द्वेधा व्यवस्थितः । मूर्ध्नाऽविष्टो वासुदेवः' इति पूर्व-वचनादिदमवसीयते । प्रपेदे आभ्यामिति प्रपदे । कथमेक उभाभ्यां प्रपेदे? वामनारायणः दक्षनारायण इत्युभाभ्यां रूपाभ्याम् । न केवलं पशूनाम् । वृक्षाणां मूलमपि शफ इत्युच्यते । अतः पश्वादिना-मित्याह । 'शफं मूले तरूणां स्याद् गवादीनां खुरेऽपि च' इति ह्यभिदधति । शफमिति नपुंसि पठन्ति कोशेषु । अनार्षं तत् । 'पुण्डरीकं सिताम्भोजम्' इतिवत् । वानरादीनां सत्यपि पादाग्रे न प्रपदत्वोक्तिः । तेषामुपासनानधिकारात् । उपासनार्थं हीदमुच्यते, न केवलं निर्वचनचापलाय । उपासनस्य च मनुष्याधिकारत्वात् । कथमथ शफाः खुराः? कण्टकादिनिवारणेन शक्ताः फणितुं गन्तुमेभिरिति शफाः पशूनाम् । फण गतौ । जलमापीय शक्ताः फलितुमेभिरिति शफा वृक्षाणाम् । फल निष्पत्तौ । खुरन्ति कण्टकादीनाहत्य छित्त्वा चलन्त्येभिरिति खुराः । खुर च्छेदने । चतुर्मुखाकारवताम् । सङ्ख्यायामेव भेदः । नत्वाकार इत्यर्थः । ऊरू ऊर्ध्वगमनात् । अप्रगृह्य प्रयोग-श्छान्दसः । तेनानियता प्रगृह्यसञ्ज्ञेत्याह । यत्र स्फुटप्रतिभासः प्रग्रहस्तत्राप्रगृह्यापि प्रयोगोऽनुमन्यते । यथा– 'कृत्वा भाष्यानुभाष्येऽहम्' इति । उरु गरणं गिलनम् । भुक्तावस्थानम् । उदरम्– उर्वित्यस्य उदादेशः । गरणमरं बभूवाऽद्यन्तलोपेन । तेन उरुगरणम्, उद्गरणम्, उदरमिति । उदरं ब्रह्मेति सप्तम्यर्थे प्रथमेत्याह– **उदरे ते परं ब्रह्मेति** । हृत् अयत इति हृदयं ब्रह्म । तदेतदाह– **हृत्स्थमेव परं विष्णु-मिति** । 'ताइ' इत्यस्यार्थः 'ते उभे' इति । ब्रह्मा' इत्यस्यार्थः 'ब्रह्म तत् परम्' इति । दैवतैरिन्द्रिया-भिमानिभिः सह । विष्णुरत्र शिश्रायेति शिरः । विशेषतः पाञ्चरात्रिकः । सामान्यतः सकलपौरुषेयवेद-सम्बद्धः । तदन्ये च पादगुह्याद्यभिमानिनो जयन्तदक्षाद्याः ॥

फलितमाह– **तस्मादिति** । **तस्मात्** जीवानां मुख्यप्राणस्य चान्तःस्थत्वेन भगवत एवोपास्यत्वात् **जीवमुख्यप्राणलिङ्गे** अपि **तस्यैव** अन्तःस्थितभगवत एव । **तद्भगवदधीनत्वात् तयोर्लिङ्गयोः** । एतदप्युक्तं न्यायविवरणे– 'तद्भगवदपेक्षया युक्तेः' इति ॥

## ऐतरेयश्रुत्यर्थः

तथाचायं जीवलिङ्गवचनस्य सिद्धान्ताभिमतोऽर्थः–

षट्त्रिंशदक्षरा हि बृहती । तेन बृहतीसहस्रस्य षट्त्रिंशत्सहस्राण्यक्षराणि भवन्ति । षट्त्रिंशत्सहस्राणि स्वराः । तावन्त्येव च व्यञ्जनानि । तावन्ति च शतसंवत्सरात्मकस्य पुरुषायुषस्याहोरात्राणां सहस्राणि

'महिदासाभिधो जज्ञ इतरायास्तपोबलात् ।
'साक्षात् स भगवान् विष्णुर्य्यस्तन्त्रं वैष्णवं व्यधात्' इति च ब्रह्माण्डे ॥

तत्तदुपासनायोग्यतया च पुरुषाणाम्–

'एवं स भगवान् विष्णुर्म्महिदासाभिधः प्रभुः ।
'जानन्नित्योदितज्ञानादाह देवीमिदं वचः' इति चैतरेयसंहितायाम् ॥

**तत्तदुपासनायोग्यतया च पुरुषाणाम् ।**

भवन्ति । तत्र स्वरगतानि विष्णो रूपाण्येवाहस्सु भवन्ति । व्यञ्जनगतानि रात्रिषु । एवमुपासनेन शतवर्षहरिध्यानफलमाप्नोति पूरुषः, अजीवन्नपि शतं समाः । मुख्यतश्च शतायुषश्चतुर्मुखस्येदं पूर्णं फलम् । अन्योऽपि यथासम्भवमेवं जिजीविषेच्छतं समाः । तदिदमहोरात्रगतानामक्षरगतानां च भगवद्रूपाणामुपासनमिति बहिरुपासनम् । तान्येव द्वासप्ततिसहस्रनाडीगतानीत्युपासनमन्तरुपासन-मिति । प्राणसंवादादि च ब्रह्मशरीरान्तरुपासनमिति ॥

त्रिविधोपासकानामप्यन्तरुपासनमवश्यं करणीयमेवेति तत् प्रथमत उक्तम् । अथ विशिष्टानां सर्वगतत्वोपासनमाह– **स एतमेव पुरुषम्** । ततममिति किमुच्यते? ततततमम् । कथम्? **'लोपः समाने' इति सूत्रात्** । समानेऽक्षरे आम्रेड्यमान एकस्य क्वचिल्लोपो भवति । यत्र नापार्थावकाशः । यथाऽत्र ततततममिति वक्तव्ये ततममित्याह । यथावा 'गुहाशयायां निहिताः' इतिवक्तव्ये गुहाशयामित्याह । क्वचिन्न भवति यत्रापार्थावकाशः । यथा पापपाटनपटुः । नात्र पापाटनपटुरिति शक्यं वक्तुम् । तेनेदं सर्वगतत्वस्योपदेशनं भवति । स भगवान् एतमेव पुरुषमवतारगतं स्वरूपं ततततमं सर्वगतमपश्यदिति मन्त्रार्थः ॥

## महिदासत्वेन बहिरुपासनम्

अथ मनुष्याणां विशिष्य बहिरुपासनमाह– **एतद्ध स्म वै** । तथाहि समग्रा श्रुतिः–

'आपा इत्याप इति । तदिदमाप एव । इदं वै मूलमदस्तूलम् । अयं पितैते पुत्राः । यत्र ह क्व च पुत्रस्य तत् पितुः । यत्र वा पितुस्तद्वा पुत्रस्येत्येतत् तदुक्तं भवति । **एतद्ध स्म वै तद् विद्वानाह**

**महिदास** ऐतरेय आऽहं मा देवेभ्यो वेदा ओ मद् देवान् वेदेतःप्रदाना ह्येत इतःसम्भृताः' (मह़ै.उ. १.६.६.) इति ॥

तथाचायमुपनिषद्वचनार्थ ऋक्संहितायाम्–

'आप इत्येव देवानां ब्रह्मादीनां कथं भवेत् ।
'नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम् ॥

'आप इत्येव नामैषां भवतीत्याह स प्रभुः ।
'इदं मदाख्यं यद् ब्रह्म ह्याप इत्यभिधीयते ॥

'आपूर्णत्वाद् गुणैः सर्वैस्तन्मूलमखिलस्य च ।
'तूलभूतं तदन्यत्तु पिता ह्येष जनार्दनः ॥

'पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत् ।
'स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात् परमेशितुः ॥

'तन्नामाऽप इति ह्येतद् ब्रह्मरुद्रादिनां भवेत् ।
'यथा यदव इत्येव रघवः कुरवस्तथा ॥

'पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात् सुतस्य हि ।
'यथा पितामहाद्याश्च पितरो नाम कीर्तिताः ॥

'तथाऽपि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः ।
'आप इत्येव सर्वेषां देवानां प्रददौ हरिः ॥

'स्वकीयमेवमन्यानि पृथक्पृथगदात् प्रभुः ॥
'नारायणादिनामानि ददौ नान्यस्य केशवः ॥

'एवं स भगवान् विष्णुर्महिदासाभिधः प्रभुः ।
'जानन्नित्योदितज्ञानादाह देवीमिदं वचः ॥

'देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा ।
'मत्पर्यन्तं तथा व्याप्तिं देवानामपि सर्वशः ।
'मयि देवास्तेषु चाहमिति विद्धि वरानने ॥

'मयैव हि प्रदत्तानि पदानि ब्रह्मपूर्वकाः ।
'अधितिष्ठन्ति सत्ताद्या अपि तेषां मदाज्ञया ।
'ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे' इति ॥

## ऋक्संहितावचनार्थः

'आपाः इति' इति प्लुतस्वरः प्रश्नार्थः । कः कं पप्रच्छ? आह– महिदासं लक्ष्मीः पप्रच्छ । न स्वावरं कश्चन पप्रच्छ । किन्तु स्वपतिमेवेत्याह– जनार्दनम् । किं पप्रच्छ? आप इति देवानां नाम कथं भवेदिति पप्रच्छ– 'आपा इति?' इति । ननु वाग्देवता सा वागर्थौ स्वयं जानत्यपि किमिति पप्रच्छ? जनार्दनं स्वपतिमनुकुर्वाणा पप्रच्छ । स किल दुर्जनानर्दयति मोहजननेनेति इयमपि दुर्जनमोहाय लीलया पप्रच्छ । महिदासः किमाह– युक्तं देवानां 'आप इति' नामेत्याह । इदं मदाख्यं ब्रह्म आप एवेत्यात्मानं निर्दिश्याऽह । कथमापः? सर्वगुणैरापूर्यत इत्यापः । बहुरूपत्वाद् बहुवचनम् । तत् मदाख्यं ब्रह्म मूलं सर्वस्य । यतः पिता । ब्रह्मादिकमन्यद् देवजातं तूलमिव, पुत्रत्वात् । यद्यपि पिता, अथापि इतरपितृविलक्षणः । यतः स्वपुत्रानेव संसारेऽर्दयति, प्रळयेऽर्दयति संहरति च । ननु तूलसादृश्यात् मूलमिति वृक्षमूलवदिति किं न स्यात्? न स्यात् । कुतः? स्वतन्त्रत्वात् जगन्नाथत्वाच्च । पिता हि पुत्रपोषणे स्वतन्त्र इव भवति । पुत्रस्तु तत्तन्त्रः । कुतः? तेन प्रसूतत्वात् । तदेतदाह– सुतस्य हीति । षु प्रसवैश्वर्ययोः । सौति स्म । न वृक्षमूलं वृक्षपोषणे । पिता हि पुत्राणां नाथ उच्यते । न वृक्षमूलं वृक्षनाथ इत्याचक्षते । नापि मूलस्य वृक्षनाम भवति । अत्र तु परमेश्वरस्य पितृत्वात् पितुर्नाम पुत्राणामपि ब्रह्मादीनां स्यात् । इयांस्तु विशेषः । भगवतो बहुरूपत्वादेकस्यैव बहुवचनान्तं नाम । देवानां तदयोगादाप इति समष्ट्या देवा उच्यन्ते । तत्र बहुवचनान्तमेव दृष्टान्तमाह– यथा यदवः रघवः कुरव इति । यदुः रघुः कुरुरिति पुरातनानां राज्ञां नाम । तदेव तद्वंशीयानां बहुवचनान्तं

समष्टिनाम भवति । यदुः पिता यदवः पुत्राः इति । एतेन 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (अ.सू.२.४.४६२.) इति सूत्रप्रवृत्तेर्मूलमुक्तं भवति । वैयाकरणानामविदितमेतत् ॥

विपरीतं च क्वचिद् भवतीत्याह– पुत्रनाम पितुश्च स्यात् । ननु तदा सर्वोऽपि वाग्व्याहारो व्याकुलश्चाव्यवस्थितश्च स्यात् । न स्यादित्याह– तथाऽपीति । यत्र निर्वचनसामग्र्यं सा मुख्यवृत्तिः । तथाच सर्वैर्गुणैः पूर्णत्वात् आप इति भगवतो मुख्यनाम । आ ईषत् पूर्णा इति अमुख्यवृत्त्या देवानां समष्टिनाम । अन्यानि च ब्रह्मरुद्रादिनामानि व्यष्टितया पृथक्पृथग् ददौ । नैतावता सर्वाणि पितुर्नामानि पुत्राणां भवन्तीत्याह– नारायणादिनामानि । यथा केशव इति । कं चेशं च वर्तयतीति केशवः । तन्न शक्यं केशयोस्तदन्येषां वा दातुम् । श्रुतौ आ इति आप्तिरुच्यते । आप्तिरिति व्याप्तिः । आप्नोतीति आ । आप्लृ व्याप्तौ । अभिव्याप्तिवचनश्चायम् । तदेतदाह– देवपर्यन्तमा व्याप्तिमिति । ओ, आ+उ इति च्छेदः । उ इति रमां प्रति सम्बोधनम् । अयि स्त्रीणामुत्तमे इति । तदिदमुक्तम्– विद्धि वरानने इति । चार्थे च । अथो इति अहो इति यथा । मत् आ मत्पर्यन्तं व्याप्तान् देवांश्च वेद । किमुक्तं भवति? मयि देवास्तेषु चाहमित्युक्तं भवति । मयि आश्रिता देवाः । तेषु चाहमन्तर्यामीति । आश्रितत्वमेव स्फुटमुच्यते– इतःप्रदानाः । इतः मदाख्यात् ब्रह्मणः स्वस्वपदप्रदानं येषां त इतःप्रदानाः । मत्त एव बलज्ञानादिदानेन सम्यग् भृताश्चेति । किं वदे? वदतिमुभयतोभाषं वदति काशकृत्स्नः । व्यक्तवाचां समुच्चारणे (अ.सू.१.३.४८.) वा ॥

## द्वौ महिदासौ

नन्वैतरेय इति कश्चनर्षिः । कथं तस्य विष्णुत्वेनोपासनमित्यन्यथोपासकानां शङ्कापङ्कमपाकरोति सूत्रकृद्वचनेनैव– **महिदासाभिधो जज्ञे** । **साक्षादित्य**नुपचारतः । न बलरामादिवदावेशादिना । **इतराया** विशालभार्यायाः । **व्यधात्** नारदायोपदिदेश । **ब्रह्माण्डे च उक्तम्** । **अन्यत्र च** । तथाहि ब्राह्मे च–

'अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि ।
'महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवदत्' इति ॥

‘केषाञ्चित् सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।
‘केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः’ इति ब्राह्मे ॥

‘अग्नौ क्रियावतां विष्णुर्य्योगिनां हृदये हरिः ।
‘प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्’ इति च ॥ ११ ॥

**॥ इत्येकादशमधिकरणम् ॥ * ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते**
**श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाद्ध्यायस्य**
**प्रथमः पादः ॥**

---

‘ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् ।
‘यत् प्रापुर्वैष्णवा नान्ये यद्दते न सुखं परम्’ इति च ॥

‘विष्णोरपरिवारत्वदृष्ट्या देवान्तरार्चनात् ।
‘महिदासो देवऋषिः पातु मां विष्णुरव्ययः ।
‘तदनर्पितकर्मभ्यस्तदस्मरणतस्तथा’ इति तन्त्रभागवते ॥

अथापि ननु कश्चिदस्ति इतोऽन्यो मानुष ऋषिः । यथा देवकीसुतः कृष्णोऽन्य एवर्षिः । तथाहि पठन्ति–

‘महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।
‘कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरातनाः’ इति ॥

यथा छन्दोगोपनिषदुक्तो देवकीसुतः कृष्णोऽन्यस्तथा ऐतरेयोपनिषद्गतो महिदास ऐतरेयोऽप्यन्य एव स्यादिति शङ्कामैतरेयसंहितासंवादेनैव परिहरति टीकाकृत्– **एवं स भगवान् विष्णुः** ॥

अयमर्थः– त्रिविधोपासनायोग्यतया पुरुषाणां च त्रैविद्ध्यात्, उपासनात्रैविध्यमिहाऽश्रितं युज्यते । मनुष्याणां प्रायो बहिः, गन्धर्वादीनामन्तः, देवानां सर्वगतत्वेन । तस्माद्विष्णुरेव प्राण इति सिद्धम् ॥ ✻ ॥

॥ इति प्राणानुगमाधिकरणम् ॥

॥ इति तत्वप्रदीपे ब्रह्मसूत्रभाष्यटीकायां प्रथमाध्यायस्य प्रथमः पादः ॥

—o—

## ऋक्संहितैव ऐतरेयसंहिता

नन्विदमृक्संहितावचनमित्यैतरेयभाष्य उक्तम् । उक्तम्, किं तेन? ऐतरेयसंहितावचनमिति पण्डिताचार्य उवाच । तेनापि किम्? गुरुशिष्यौ विप्रतीपवचनौ स्याताम् । न स्याताम् । ऋक्संहितेति प्रबन्धनाम । ऐतरेयसंहितेति परिच्छेदनामेति न कोऽपि विरोधः । बाह्वृच्यस्य वेदस्यार्थनिर्णयनी ऋक्संहिता । तदेकदेशो बह्वृचानामुपनिषदर्थनिर्णयनी ऐतरेयसंहिता । ऋक्संहिताया एव वा ऐतरेयसंहितेति नामान्तरम् ॥ ✻ ॥

## न सर्वेषामेकविधोपासना

किमित्युपासात्रैविध्यमाश्रीयते? आह– **तद्योगात्** । चकारोऽत्राप्यन्वेतीत्युक्तं तद्योगाच्चेति । तदाह भगवत्पादः–**तत्तदुपासनायोग्यतया च पुरुषाणामिति** । तत्तदुपासनायोग्यत्वात् साधकजीवानामित्यर्थः ॥

**तद्योगात्** योग्यतामपेक्ष्य **पुरुषाणां च त्रैविध्यात्** । केषाश्चिदित्युक्तं स्फुटमाह– **अयमर्थ** इति । **प्राय** इति सर्वत्रान्वेति । सर्वेषां बिम्बोपासनस्य नियतत्वात् । गन्धर्वाणामृषीणां च मध्यमाधिकारिणां **प्रायोऽन्तः** । अथापि चाऽदित्ये चाग्नौ चर्ष्यादीनामप्यस्ति । प्राधान्येन व्यपदेशा भवन्ति । उत्तमाधिकारिणां **देवानां सर्वगतत्वेनेति** । मूले देवानामुत्तमाधिकारिणां प्रथमनिर्देशः । टीकायां तु मनुष्याधिकारत्वाद् विपर्ययेण निर्देशः ॥

अधिकारविभागं पुनः स्फुटं दर्शयति— **अग्नौ क्रियावताम्** । **इति** च नरसिंहपुराणे (६२.५.) । **क्रियावतां** कर्मप्रधानयोगानां मनुष्याणाम**ग्नौ** बहिः । येषां विशेषतः विधिनिषेधप्रक्रिया । क्वचिदृषीणां देवानामप्यग्नौ । यथाऽत्रैवेन्द्रविश्वामित्रयोर्महाव्रते । अग्निं हृदय आरोप्य स्थितानां सन्न्यास**योगिनां** ध्यान**योगिनां हृदये** मानसप्रतिमायाम् । तत्रापि **अप्रबुद्धानां प्रतिमासु** उपास्यः । **विदितात्मनां** ज्ञानयोगिनां **सर्वत्रो**पास्य इति । विदिता आत्मानोऽणव इति परमात्मा सर्वगत इति येषां ते देवाः स्वरूपाच्छादिकायाः परमाच्छादिकायाश्चाप्रतिकूलत्वात् विदितात्मान इति शम् ॥

अत्रैकादशाधिकरणानि एकत्रिंशत्सूत्राणीति (१.१.११.३१.) अविभाज्यया सङ्ख्यया भगवद्रूपाणामविभक्ततां सूचयन्तीवेति किमपीदं सङ्ख्याकौशलम् ॥ * ॥

इति श्रीब्रह्मसूत्राणां
योऽपूर्वोऽर्थो भाष्यतत्वप्रदीपयोः ।
आविष्कृतः कृपया तमेतमाचार्यगोविन्दो
विववार यथामति प्रथमेऽध्याये प्रथमपादगतम् ॥ * ॥

**॥ इत्येकादशं प्राणानुगमाधिकरणम् ॥**

**॥ इत्याचार्यगोविन्दस्य कृतिषु तत्वचन्द्रिकायां ब्रह्मसूत्राणां प्रथमाध्याये प्रथमपादस्य विवरणं समाप्तम् ॥**

——o——

# आयत्यां प्रतिष्ठानद्वारा प्रकटयितुमुद्दिष्टाः ग्रन्थाः

१. **श्रीमहाभारततात्पर्य्यनिर्ण्णयः** (मूलमात्रम्)

२. **श्रीमध्वविजयः** (मूलमात्रम्)

३. **श्रीविष्णुतत्वनिर्ण्णयः** (श्रीपद्मनाभतीर्थभट्टारककृतया श्रीनारायणपण्डिताचार्य्यकृतया च टीकया सहितः)

४. **दूषणत्रयम्** (श्रीपद्मनाभतीर्थभट्टारककृतया टीकया सहितम्)

५. **अनुव्याख्यानन्यायमाला-न्यायविवरण-सम्बन्धदीपिका** (श्रीशङ्करार्य्यकृता)

६. **उषाहरणम्** (श्रीत्रिविक्रमपण्डिताचार्य्यविरचितं महाकाव्यम् आचार्य्यगोविन्दकृतया टीकया सहितम्)

७. **पारिजातहरणम्** (श्रीनारायणपण्डिताचार्य्यविरचितं यमककाव्यम् आचार्य्यगोविन्दकृतया टीकया सहितम्)

* * *

भगवान् बादरायणः सर्वशास्त्रोत्तमं ब्रह्म-
मीमांसाशास्त्रं प्रणिनाय। अथ तदर्थावि-
ष्करणाय स्वस्य प्रियतमं शिष्यं श्रीमध्वं
भाष्यकरणाय नियुयोज। आचार्यमध्वश्च
स्वस्य प्रियतमं शिष्यं त्रिविक्रमपण्डितं
भाष्यहृदयाविष्करणाय टीकां वितनितुं
नियुयुजे। सेयं त्रिपुटी गुरुशिष्ययोः,
त्रयीव वेदानां त्रिवेणीव गङ्गासरस्वती-
यमुनानां समगमदेकत्र सम्पुटेऽस्मिन्।
अहो भाग्यवन्तः सङ्ख्यावन्तः, सकाशं
तत्रभवन्तं स्वयमागत्य प्रकटीभूतेऽस्मिन्
सारस्वते त्रिवेणीसङ्गमेऽपि स्वच्छन्दं निम-
ज्जत। मिलतु मानसं सरोऽपि सताम्।
भवत्वपूर्वश्चतुर्वेणीसङ्गमः।



₹ १०००/-
…पायनप्रतिष्ठानम् (रि)